अत्रेतिहासमाचक्षते—

वृत्रस्ततान तन्वेमाल्लोकांस्तत्तमसा वृताः ।
सर्वेऽन्धबुद्धयोऽभूवं स्तदेंद्रस्तं जघान च ॥
तदीयतमसो नुत्यै दिविसूर्यमरोहयत् ।

इंद्रः आप्रलयभाविने दर्शनाय सूर्यं आरोपितवान् दिवि । किंच गौः वज्रः अद्रिः मेघः । वज्रैः मेघं प्राणेभ्यः अपगमितवान् हतवान् वा । ईर वधे । गौः उदकं वा । उदकहेतोः मेघं हंति हतवान् ॥ ३

इंद्र वाजेषु नोऽव सहस्रप्रधनेषु च ।
उग्र उग्राभिरूतिभिः ॥ ४

इंद्र युद्धेषु अस्मान् रक्ष बहुप्रकृष्टधननिमित्तेषु । चकारात् अल्पधननिमित्तेषु च । यः त्वं उग्रः अप्रसह्यः अन्यैः सः त्वं अप्रसह्यैः पालनैः नः अव ॥ ४

इंद्रं वयं महाधन इंद्रमर्भे हवामहे ।
युजं वृत्रेषु वज्रिणम् ॥ ५

महत्संग्रामे अल्पसंग्रामे च वयं इंद्रं आह्वायामः सहायम् । वृत्रेषु संग्रामव्यतिरिक्तेष्वपि च शत्रुषु वज्रायुधं इंद्रं सहायं आह्वयामः ॥ ५

स नो वृषन्नमुं चरुं सत्रादावन्नपा वृधि ।
अस्मभ्यमप्रतिष्कुतः ॥ ६

स इंद्रः अस्मदर्थं वर्षितः । सर्वार्थवर्षणं अपि मधुच्छंदोऽर्थं एव । ततः नो वृषन् इति आमंत्रणम् । अमुं मेघम् । सत्रादावन् सत्यसततयोः दातः अपवृधि मेघं अपगतावरणं कुरु । अस्मदर्थं अप्रतिगतः । स्कु आप्रवणे । आप्रवणं आगमनम् । युद्धस्थं त्वां अन्यः कश्चन न प्रत्यभियुक्तपूर्वः । यस्त्वं अप्रतिष्कुतः सः त्वं चरुं अपावृधि ॥ ६

तुंजेतुंजे य उत्तरे स्तोमा इंद्रस्य वज्रिणः ।
न विंधे अस्य सुष्टुतिम् ॥ ७

तुंज दाने । दाने दाने वृष्टेर्वा धनस्य वा । पूर्वेभ्यः पूर्वेभ्यः प्रकृष्टतराः मदीयाः स्तोमाः ये तैरपि न लभे अहं अस्य वज्रवतः इंद्रस्य सुष्टु स्तुतिम् । वृष्टधनदाने दाने

पूर्वस्मात् पूर्वस्मात् प्रकृष्टतराः स्तुतयः इंद्रगुणान् अशेषान् प्रकाशयितुं असमर्थाः। तेनाहं सुष्टु स्तुतिं न विंधे न स्पृशामि । विंध स्पर्शने वा । दानतुष्टस्यापि मम स्तुतयः अशक्ताः किं पुनरस्य ॥ ७

वृषा यूथेव वंसगः कृष्टीरियर्त्योजसा ।
ईशानो अप्रतिष्कुतः ॥ ८

वृषा वर्षिता वननीयगमनो वृषभो यथा गोयूथानि तद्वत् कृष्टीः यष्टॄन् शत्रून् वा नॄन् प्रतिगच्छति स्वबलेन सर्वेश्वरः अप्रत्यागतः ॥ ८

य एकश्चर्षणीनां वसूनामिरज्यति ।
इंद्रः पंच क्षितीनाम् ॥ ९

यः एक एव नृणां धनानां च ईष्टे इंद्रः पंचानां नृजातीनां गंधर्वपितृयक्षनर-देवानां स इंद्रः एषां ईष्टे ॥ ९

इंद्रं वो विश्वतस्परि हवामहे जनेभ्यः ।
अस्माकमस्तु केवलः ॥ १०

हे यजमानः युष्मदर्थं इंद्रं सर्वेभ्यः परिहवामहे अन्येभ्यो मनुष्येभ्यः । केवल इति प्रथमा षष्ठ्यर्थे । अस्माकमेव केवलानां अस्तु स्तुत्यो यष्टव्यः च ॥ १०



एंद्र सानसिं रयिं सजित्वानं सदासहम् ।
वर्षिष्ठमूतये भर ॥ १

* आ इत्युपसर्गः भर इत्यनेन आख्यातेन संबध्यते । हे इंद्र सानसिं वन षण संभक्तौ । संभजनीयम् । रयिं धनम् । सजित्वानं सहभूतानां अपि शत्रूणां जेतारम् । सदासहं षह मर्षणे अभिभवे छंदसि । सर्वदा अभिभवितारम् । वर्षिष्ठं वृद्धतमं अत्यंत-बहुम् । ऊतये तर्पणाय अस्माकम् । आभर आनय । देहीत्यर्थः ॥ १

* इतः परं यत्सानोः (ऋ. वे. १. १०. २.) इति ऋचः प्राक् मया आश्रीयमाणे कोशे सायणभाष्यमेव दृश्यते न तु स्कंदस्वामीयं भाष्यं इति अयं खंडः अनन्तशयनसंस्कृतग्रंथावल्यां मुद्रितात् ग्रंथात् आदाय प्रायेण किंचित् यथायोग्यं परिष्कृत्य अत्र मुद्र्यते ॥

नि येन॑ मुष्टिहत्यया नि वृत्रा रुणधा॑महै ।
त्वोता॑सो॒ न्यर्व॑ता ॥ २

किं कुरुथ उच्यते । नि येन । नि इत्युपसर्गश्रुतेः योग्यक्रियापदाध्याहारः । नियतेन येन धनेन मुष्टिहत्यया । हंतिः गत्यर्थः मुष्टेः गमनेन उपांशुपराद्दानेन इत्यर्थः । वृत्रा शत्रून् । निरुणधामहे अपकर्तुं प्रवृत्तान् निवारयामः । त्वोतासः त्वया पालिताः संतः । अथवा न्युपसर्गाभ्यासात् तत्संबंधिनः रुणधामहै इत्याख्यातस्य अभ्यासः । अभ्यासे भूयांसं अर्थं मन्यन्ते यथा अहो दर्शनीय अहो दर्शनीय इति (नि. १०. ४२.) सुष्ठु निवारयाम इत्यर्थः । कीदृशेन अर्वता अश्वनाम एतत् । सामर्थ्यात् अंतर्णीत-मत्वर्थः अर्ववता अश्वसंसक्तेन । अथवा अवतेः गतिकर्मणः एतद्रूपम् । आत्मनि गतेन स्वायत्तेन इत्यर्थः ॥ २

इंद्र॒ त्वोता॑स॒ आ व॒यं वज्रं॑ घ॒ना द॑दीमहि ।
जये॑म॒ सं यु॒धि स्पृधः॑ ॥ ३

इंद्र त्वोतासः त्वया पालिताः वयं त्वद्धस्तात् वज्रं घना घनं सुदृढं हंतारं वा शत्रूणाम् । आददीमहि गृह्णीयाम । गृहीत्वा जयेम सं सम्यक् जयेम । युधि युद्धे । कान् स्पृधः स्पर्धितॄन् । अथवा स्पृध इति संग्रामनाम । तं करोति स्पृधयति । ण्यंतात् क्विप् । स्पृधः संग्रामकारिण इत्यर्थः ॥ ३

व॒यं शूरे॑भि॒रस्तृ॑भि॒रिंद्र॒ त्वया॑ यु॒जा व॒यम् ।
सा॒स॒ह्याम॑ पृत॒न्य॒तः ॥ ४

वयं शूरेभिः शूरैः आत्मीयैः मनुष्यैः । अस्तृभिः स्तृणातिः सामर्थ्यात् हिंसार्थः अहिंसितैः हे इंद्र त्वया च युजा सहायेन । वयं सहयोगलक्षणतृतीयार्थे व्यत्ययेन प्रथमैषा पृतन्यतः इत्यनेन संबध्यते । अस्माभिः सह पृतन्यतः संग्रामं कर्तुं इच्छतः । सासह्याम अत्यर्थं पुनः पुनर्वा अभिभवेम ॥ ४

म॒हाँ इंद्रः॑ प॒रश्च॒ नु म॑हि॒त्वम॑स्तु व॒ज्रिणे॑ ।
द्यौर्न प्र॑थि॒ना शवः॑ ॥ ५

इंद्रः महान् शरीरेण परश्च उत्कृष्टश्च सर्वतो गुणैः । नु इति पदपूरणः । महित्वं महत्त्वं च । एतत् सर्वदा अस्तु । वज्रिणे इंद्राय । इत्येतत् इंद्राय आशास्महे । द्यौः

ना नशब्द उपरिष्टादुपचारः सर्वत्र उपमयाम् द्युलोक इव च। प्रथिना प्रथिम्ना विस्तीर्णत्वेन । शवः इंद्रस्य बलं सेनालक्षणम् । यथा द्यौः विस्तीर्णा तद्वत् विस्तीर्णं इत्यर्थः ॥ ५

समोहे वा य आशत नरस्तोकस्य सनितौ ।
विप्रासो वा धियायवः ॥ ६

समोह इति संग्रामनाम । वाशब्दः समुच्चये । परापेक्षया च समुच्चयः। ये संग्रामेषु च आशत व्याप्नुवन्ति। कं प्रकरणात् इंद्रम् । केन सामर्थ्यात् स्तुतिभिः। इंद्रं स्तुवंति इत्यर्थः। नरः मनुष्याः। तोकस्य अपत्यनामैतत् अपत्यस्य च। सनितौ संभक्तौ लाभे। विप्रासः मेधाविनः। वा धियायवः वाशब्दः परस्तात् द्रष्टव्यः धियायवो वा प्रज्ञाकामाश्च इत्यर्थः । किं तेषां इति साकांक्षत्वात् वाक्यस्य निराकांक्षीकरणार्थं ते यथास्वं अभिलषितं लभंते इति वाक्यशेषः। अथवा समोहे वा य इत्यत्रैव यच्छ्रुतेः योग्यार्थक्रियाध्याहारः तच्छब्दाध्याहारः च । संग्रामे ये इंद्रं स्तुवंति ते आशत व्याप्नुवन्ति मनुष्याः । किं सामर्थ्यात् यज्ञम् । कुत्र तोकस्य सनितौ विप्राः धियायवश्च प्रज्ञाकामाश्च ॥ ६

यः कुक्षिः सोमपातमः समुद्रइव पिन्वते ।
उर्वीरापो न काकुदः ॥ ७

यः इंद्रस्य अवयवभूतः कुक्षिः आकारैकदेशः। सोमपातमः अतिशयेन सोमानां पाता। यच्छब्दश्रुतेः तच्छब्दः अध्याहार्यः। सः समुद्र इव पिन्वते। पिन्विरिह सेचने कर्मणि चायं व्यत्ययेन । यथा नदीभिः समुद्रः तद्वत् पिन्वते सिच्यते अस्माभिः। केन सामर्थ्यात् सोमेन । उर्वीः आपः न । द्वितीयेयं उपमा । तृतीयार्थे चात्र प्रथमा। बह्वीभिः अद्भिः इव च । काकुदः काकुदं तालु इत्या चक्षते । व्यत्ययेन चात्र पुल्लिंगता । यथा तृषितस्य कस्यचित् बह्वीभिः अद्भिः तालु सिच्यते तद्वत् च इत्यर्थः। केचित्तु वारुणं काकुदं अत्र उपमानं इत्याहुः । तद्धि अतिशयेन बह्वीभिः अद्भिः सिच्यते। वरुणस्य अपां अधिदैवतत्वात् ॥ ७

एवा ह्यस्य सूनृता विरप्शी गोमती मही ।
पक्वा शाखा न दाशुषे ॥ ८

एवशब्दः एवं इत्यस्य अर्थे पक्वा शाखान इत्येतस्माच्च परः द्रष्टव्यः । हिश-ब्दस्तु पदपूरणः । अस्य इंद्रस्य सूनृता सर्वकामधुक् । इंद्रस्य स्वभूता धेनुः सूनृता अत्रोच्यते । सा विरप्शी । रप लप व्यक्तायां वाचि इत्यस्य क्रियाशब्दः अयम् न महन्नामैतत् मही इति अन्यस्य अत्र महन्नाम्नो विद्यमानत्वात् । सूनृतासामानाधिकर-ण्यात् च । अस्य स्त्रीप्रत्ययान्तत्वात् । विरप्शिने वज्रिणे (ऋ. वे. ६. ३२. १.) इत्यादि प्रयोगदर्शनाच्च इन्प्रत्ययान्तस्य महन्नामसु पाठात् । विरपणशीला शब्दकारिणी । गोमती । अथाप्यस्यां ताद्धितेन कृत्स्नवत् निगमा भवन्ति (नि. २. ४.) इत्येवं पयः अत्र गोशब्देन उच्यते । गोभिः श्रीणीत (ऋ. वे. १. ४६. ४.) इति यथा । पयस्वती । मही महती । पक्वा शाखा न एव । पक्वानि फलानि यस्याः सा शाखा एव पक्वा इत्युच्यते । नशब्दश्च उपमार्थीयः । अन्यत्र उपमानोपमेयगतधर्मप्रतिनिर्देशार्थयोः यथा एवं इत्येतयोरपि अर्थे वर्तते । अग्निर्न ये (ऋ. वे. १०. ७८. २.) यथा अग्निः एवं भ्राजसा रुक्मवक्षसः (ऋ. वे. १०. ७८. २) इत्यर्थः । इह तु एवशब्दस्य श्रुतत्वात् यथाशब्दमात्रार्थे । उपमानोपमेययोश्च सूनृताशाखयोः साधरणधर्मापेक्षत्वात् तत्सं-बंधयोग्यपदाध्याहारः । यथा पक्वा शाखा रसबिंदुं क्षरति । किं सामर्थ्यात् पयः सर्वकामान् । पयस्वती हि सा सर्वकामधुक् । कस्मै क्षरति दाशुषे । षष्ठ्यर्थे एषा-चतुर्थी । दाशुषः यजमानस्य अर्थाय । अथवा सूनृता गर्जितलक्षणा वाक् । गोमती माध्यमिकाः आपः अत्र गावः उच्यंते । यस्य गा अन्तरश्मनः (ऋ. वे. ६ ४३. ३.) इति यथा । तद्वती । सा च पक्वा इव शाखा क्षरति । किं सामर्थ्यात् पयः दधते ॥ ८

एवा हि ते विभूतय ऊतय इंद्र मावते ।

सद्यश्चित्संति दाशुषे ॥ ९

एव इति एवमर्थे प्रकृते सूनृतापेक्षः च । हि इति पदपूरणः । यथा सूनृता एवं ते त्तव स्वभूताः विभूतयः ऐश्वर्याणि । ऊतयः पालनानि च हे इंद्र । मावते सद्यश्चित् संति दाशुषे । माशब्दः अत्र माछंदः प्रमाछंदः (तै. सं. ३. ४. ७. १.) इति छंदःशब्दसामा नाधिकरण्यात् छंदोविशेषवचनः । तद्वान् । मत्सदृशो वा । व तुप् प्रकरणे युष्मदस्मद्भ्यां छंदसि सादृश्य उपसंख्यानं (वा. ५. २. ३१.) इति । मावते दाशुषे इति च उभयत्र तादर्थ्ये चतुर्थी । चिच्छब्दः एवार्थे । छंदोविशेषवतः मत्सदृशस्य वा यजमानस्य अर्थाय । संति भवंति यदैव मत्सदृशो यजमानः स्वार्थाय अर्थयते तदैव तदर्था भवन्ति ॥ ९

एवा ह्यस्य काम्या स्तोम उक्थं च शंस्या ।

इंद्राय सोमपीतये ॥ १०

अस्मीयः स्तोमः उक्थं च स्तोत्रं च शस्त्रं च शंस्या आ समाप्तेः शंसनीये। किमर्थम् अस्मै एव इंद्राय सोमपीतये सोमाप्त्युत्तरकालं कथं अयमिंद्रः सोमं पिबेत् इत्येवमर्थं इत्यर्थः॥　　१०

इंद्रेहि मत्स्यंधसो विश्वेभिः सोमपर्वभिः।
महाँ अभिष्टिरोजसा॥　　१

हे इंद्र आ इहि आगच्छ। आगत्य च मत्सि मंदस्व तृप्यस्व। अंधसः अंधइत्यन्ननाम। तृतीयार्थे चेयं षष्ठी। अन्नेन। कतमेन। विश्वेभिः सोमपर्वभिः सर्वैः सोमविशेषैः। यानि त्वदर्थं अभिषुतानि सोमाख्यस्य अन्नस्य पर्वाणि तैः सर्वैः इत्यर्थः। अथवा सोममयानि पर्वाणि येषां ते सोमपर्वाणः देवाः। यो हि यदाहारो भवति तस्य तन्मयानि पर्वाणि भवन्ति। सोमाहाराश्च देवाः। सहयोगलक्षणा चात्र तृतीया। तृप्यस्व सोमलक्षणेनान्नेन सर्वैः सोमाहारैः देवैः सह इत्यर्थः। किं कारणं उच्यते। यस्मात् महान् त्वं वीर्येण शरीरेण वा। अभिष्टिः अभ्येषणशीलश्च शत्रूणां अभियष्टव्यो वा। केन हेतुना। ओजसा बलेन बलवत्वात् इत्यर्थः। अथवा यः त्वं महान् अभिष्टिश्च सः मत्सि इत्येवं यच्छब्दतच्छब्दौ अध्याहृत्य एकवाक्यता योज्या॥　　१

एमेनं सृजता सुते मंदिमिंद्राय मंदिने।
चक्रिं विश्वानि चक्रये॥　　२

आ इत्युपसर्गः सृजत इत्याख्यातेन संबंधयितव्यः। ई इति पदपूरणः। एनं सोमं आसृजत। सृजतिरत्र दानार्थः *आ इत्येष वि इत्येतस्य स्थाने। अध्वर्यूणां चायं प्रैषः। दत्त यूयं अध्वर्यवः। सुते द्वितीयार्थे सप्तमी इयम्। अभिषुतम्। अथवा सुते इति स्वार्थे एव सप्तमी। सृजतिस्तु प्रक्षेपणार्थः। प्रक्षिपत एनं सोमं अस्मिन् ग्रहचमसस्थे सोमे। पुनः अभ्युन्नयत इत्यर्थः। कीदृशं मंदिं तर्पयितारम्। कस्मै इंद्राय। संप्रदाने तादर्थ्ये वा चतुर्थी इयम्। इंद्राय दत्त इंद्राय वा अभ्युन्नयत। कीदृशाय मंदिने तर्पयित्रे तर्पयितव्याय वा। कीदृशं चक्रिम्। ताच्छील्ये अयं किन्। स्वकार्यकरणशीलम्। कीदृशाय विश्वानि चक्रये सर्ववृष्ट्यादिकर्मकरणशीलाय॥　२

* अनन्तशयन ग्रन्थावल्या मुद्रिते ग्रंथे (केव) लोऽपि (दविद्वि? वि) सृजतीत्युच्यते इति वाक्यं दृश्यते। तदसमीचीन मिति इदं वाक्यं निरुक्तटीकायाः मया आद्रियते।

मत्स्वा सुशिप्र मंदिभिः स्तोमेभिर्विश्वचर्षणे ।
सचैषु सवनेष्वा ॥ ३

मत्स्व मोदस्व स्तूयस्व वा इत्यर्थः। हे सुशिप्र। शिप्रे हनू नासिके वा (नि ७-१७) सुहनो सुनस वा । कीदृशैः मंदिभिः मोदयितृभिः स्तावकैः वा । कैः स्तोमेभिः स्तवनैः । हे विश्वचर्षणे । पश्यतिकर्मायम् । सर्वस्यापि द्रष्टः । सचा सह। केन सामर्थ्यात् स्तावकैः मरुद्भिः । क एषु सवनेषु । सवनं इति यज्ञनाम। एतेषु यज्ञेषु प्रातः-सवनमाध्यंदिनतृतीयसवनेषु वा । आकारः पदपूरणः ॥ ३

असृग्रमिंद्र ते गिरः प्रति त्वामुदहासत ।
अजोषा वृषभं पतिम् ॥ ४

असृग्रं सृष्टवान् अहम् । हे इंद्र ते तव गिरः स्तुतीः । ताश्च सृष्टाः सत्यः प्रति त्वां उदहासत । ओहाङ् गतौ । स्वर्ग्यवस्थितं त्वां प्रति इतो लोकादूर्ध्वं गताः। अजोषाः सेवितवान् असि। कीदृशं त्वां उदहासत । वृषभं वर्षितारम् । पतिं स्वामिनं सर्वस्य ॥ ४

सं चोदय चित्रमर्वाग्राध इंद्र वरेण्यम् ।
असदित्ते विभु प्रभु ॥ ५

संचोदय प्रेरय चित्रम् । अर्वाक् अस्मान्प्रति । अस्मभ्यं देहि इत्यर्थः । किं राधः धनम् । हे इंद्र । कीदृशं वरेण्यं वरणीयं अत्यंतोत्कृष्टम् । किं कारणं उच्यते । असत् इत् । लडर्थे अयं पंचमो लकारः । इच्छब्दोऽपि यस्मदर्थे । अस्ति यस्मात् । ते तव विभु प्रभु विभूतं च प्रभूतं च धनम् । यावता कार्यं साध्यते तत् विभु । ततोऽतिरिक्तं प्रभु । यस्मात् अत्यन्तप्रभूतधनः असि इत्यर्थः ॥ ५

अस्मान्त्सु तत्र चोदयेंद्र राये रभस्वतः ।
तुविद्युम्न यशस्वतः ॥ ६

अस्मान् सुष्ठु तत्र चोदय हे इंद्र । राये धनार्थम् । क सामर्थ्यात् यत्र गते धनं लभ्यते । कीदृशान् रभस्वतः । क्षिप्रं इत्यर्थः । तुविद्युम्न । तुवि इति बहुनाम । द्युम्नं धनं वा यशो वा अन्नं वा । बहुधन बहुयशः बह्वन्न वा । यशस्वतः । यशः इति अन्ननाम । हविर्लक्षणेन अन्नेन अन्नवतः । यष्टॄन् इत्यर्थः ॥ ६

सं गोम॑दिंद्र वाज॑वद॒स्मे पृ॒थु श्रवो॑ बृ॒हत् ।
वि॒श्वायु॑र्धेह्यक्षि॑तम् ॥ ७

सं इत्युपसर्गः धेहि इत्याख्यातेन संबन्धयितव्यः । गोमत् । गावः यस्मिन् संति तत् गोमत् । गोभिः सहितम् । हे इंद्र । वाजवत् अन्नेन च सहितम् । अस्मे अस्मभ्यम् । पृथु विस्तीर्णं प्रभूतम् । श्रवः धननामैतत् । धनम् । बृहत् महत् सारवत् । विश्वायुः । आयुः जीवितम् । तेन च सर्वेण सहितम् । संधेहि सम्यक् देहि । अक्षितं अहिंसितं केनचिदपि हिंसितुं अशक्यम् ॥ ७

अ॒स्मे धे॑हि॒ श्रवो॑ बृ॒हद्द्यु॒म्नं स॑ह॒स्रसा॑तमम् ।
इंद्र॒ ता र॑थि॒नीरिषः॑ ॥ ८

अस्मभ्यं देहि । किं श्रवः बृहत् । श्रवः अत्र कीर्तिः उच्यते । कीर्तिं महतीम् । द्युम्नं धननाम अत्र । धनं च । कियत् सहस्रसातमं सहस्रसंख्यानां अतिशयेन संभक्तृ । बहुसहस्रसंख्याकं इत्यर्थः । न च केवले कीर्तिधने किं तर्हि । हे इंद्र ताः रथिनीः इषः । तच्छब्दश्रुतेः योग्यार्थसंबन्धः यच्छब्दः अत्राध्याहर्तव्यः । या वयमर्थयामहे या अन्येभ्योऽपि स्तोतृभ्यो धत्से ताः । रथिनीः रथसहिताः इषः अन्नानि ॥ ८

व॒सोरिन्द्रं॒ वसु॑पतिं गी॒र्भिर्गृ॒णंत॑ ऋ॒ग्मिय॑म् ।
होम॒ गंता॑रमू॒तये॑ ॥ ९

वसोः इति षष्ठीनिर्देशात् अर्थाय इति शेषः । धनस्य अर्थाय । इंद्रं वसुपतिं धनानां स्वामिनम् । गीर्भिः स्तुतिभिः । गृणंतः स्तुवंतः । ऋग्मियम् । ऋच स्तुतौ । अर्चना ऋक् । संपदादित्वात् क्विप् । तद्वंतम् । स्तुतियोग्यं इत्यर्थः । होम आह्वयाम स्वयज्ञे गंतारं यज्ञं प्रति ऊतये सोमेन तर्पणाय । अथवा वसोः इति वसुपतीत्येतदपेक्ष्यैव । वसुपतिशब्दस्तु यद्यपि वसूनां पतिः वसुपतिः इत्येवं व्युत्पद्यते तथापि अत्र स्वामिनं आह । धनस्यैव स्वामिनम् । तद्यथा । प्रवीणशब्दः प्रकृष्टो वीणायां इत्येवं व्युत्पद्यते । अथ च प्रवीणो व्याकरणे प्रवीणो वीणायां इति च प्रयोगदर्शनात् प्रकृष्टमात्रं आह न वीणायां एव प्रकृष्टम् । वसोः वसुपतिं धनस्य स्वामिनं इंद्रं आह्वयाम ऊतये पालनाय आत्मनः ॥ ९

सुतेसुते न्योकसे बृहद्बृहत एदरिः । १०
इंद्राय शूषमर्चति ॥

सुते सुते अभिषुते सोमे । न्योकसे । ओकः नियतवासस्थानं एतत् नियतं यस्य सोम एव नान्यत् सः न्योकाः । सर्वत्र चात्र बलविशेषणत्वात् षष्ठ्यर्थे चतुर्थी । न्योकसः नियतसोमाख्यस्थाननिवासस्य स्वभूतम् । बृहत् महत् । बृहते महते । महतः शरीरेण वीर्येण वा आ इत् इति पूरणौ । अरिः ईश्वरः । स्तुत्युच्चारणे समर्थः इत्यर्थः । इंद्राय इंद्रस्य । शूषं बलम् । अर्चति स्तौति । स्तोता आत्मानमेव परोक्षरूपेण प्रथमपुरुषेण प्रतिनिर्दिशति । अहं स्तौमि इत्यर्थः । अथवा न्योकसे बृहते इंद्राय इति स्वार्थे एव तादर्थ्ये चतुर्थी । सुते सुते इत्यनेन च संबध्यते । इंद्रार्थं अभिषुते सोमे महत् बलं स्तौति । कस्य । सामर्थ्यात् संनिधेश्च इंद्रस्य ॥ १०

---

गायंति त्वा गायत्रिणोऽर्चंत्यर्कमर्किणः ।
ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे ॥ १

गायंति । गायतिरर्चतिकर्मा । स्तुवंति । त्वा गायत्रिणः । गायत्रं साम तद्वंतः उद्गातारः । न च ते एव केवलाः । किं तर्हि । अर्चंति स्तुवंति । अर्कं देवं त्वाम् । अर्किणः । मंत्रः अत्र अर्क उच्यते तद्वंतः होतारः अपि । ब्रह्माणः । ब्रह्मा एक ऋत्विक् । तत्पुरुषांस्तु ब्राह्मणाच्छंस्यादीन् अपेक्ष्य इदं बहुवचनम् । ब्रह्माणः अपि त्वा । हे शतक्रतो बहुकर्मन् बहुप्रज्ञ वा । उत् वंशं इव येमिरे । यथा कश्चित् वंशं उद्यच्छेत् एवं उद्यच्छंति उत्क्षिपंति । उच्छ्रयंति इत्यर्थः । वीर्यवृद्धिश्च उच्छ्रयः अभिप्रेतः । स्तूयमाना हि देवताः वीर्येण वर्धंते । सर्वे ऋत्विजः स्वैः स्वैः स्तोत्रैः त्वां स्तुवंति इति समस्तार्थः ॥ १

यत्सानोः सानुमारुहद्भूर्यस्पष्ट कर्त्वम् ।
तदिंद्रो अर्थं चेतति यूथेन वृष्णिरेजति ॥ २

यदभ्रं सानुः समुच्छ्रितप्रदेशः उच्चात् गिरिशिखरात् अन्यदुच्चतरमारोहति । स्पश प्रतिबंधने । कर्त्वं कर्म । वृष्टिर्हि अभ्रनिरुद्धा । तदायत्तानि सर्वकर्माणि । तानि बहु प्रतिबध्नाति । तद्बधार्थं इंद्रो ज्ञात्वा मरुद्भिःसह वर्षिता गच्छति । अर्थं गमनशीलं नश्वरं इति स्मृत्वा । अथवा एजृ कंपने । परोक्षे णिच् । उदकशोधनार्थं धूनयति । २

युक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा ।
अथा न इंद्र सोमपा गिरामुपश्रुतिं चर ॥ ३

युक्ष्व नियोजय । प्रलंबकेसरौ आत्मीयौ अश्वौ स्वरथेषु । वृषु सेचने । रेतः-सेचनसमर्थौ तरुणौ । कक्ष्या रज्जुः यया अश्वोरसि पर्याणं बध्यते । तत्पूरयितारौ । मांसपूर्णशरीरौ । अथ अस्माकं इंद्र सोमानां पातः । स्तुतीनां श्रुतेः समीपं चर । अव्ययं विभक्ति (पा. २-१-६) इत्यादिसूत्रेण समासः उपकुंभवत् । यत्रस्थः अस्मत्स्तुतीः शृणोति तत्र आगच्छ ॥ ३

एहि स्तोमाँ अभि स्वराभि गृणीह्या रुव ।
ब्रह्म च नो वसो सचेंद्र यज्ञं च वर्धय ॥ ४

एहि । आख्यातबहुत्वे पूर्वं पूर्वं क्त्वार्थे प्रायो बहुत्र । स्वृ गतावत्र । न शब्दोपतापयोः । आगत्य अस्मत्स्तुतीः अभिगच्छ । अथवा अस्मत्स्तुतीः एत्य अस्मान् अभिशब्दय । आगच्छत स्तोतारः । आगतोऽहम् । स्तुत । किमतःपरं आध्वे इति । अभिस्वृत्य च । अभिः प्रतौ । प्रतिगिरं कारय । अध्वर्यूणां शस्त्रं शब्दय । स्तुतिलक्षणं ब्रह्म च अस्माकं हे धनवन् इंद्र सह यज्ञं समापय । स्तुतियज्ञयोः हि समाप्तिरेव वृद्धिः । अथवा वसो वसिष्ठ प्रशस्य ॥ ४

उक्थमिंद्राय शंस्यं वर्धनं पुरुनिष्षिधे ।
शक्रो यथा सुतेषु णो रारणत्सख्येषु च ॥ ५

इंद्रस्य अर्थाय उक्थं शंसनीयम् । इंद्रस्य वर्धनम् । बहूनां शत्रूणां निषेध्रे निवारकाय निष्कृत्य वा साधयित्रे स्ववशीकर्त्रे । यथा इंद्रः अस्मत्सोमेषु अत्यर्थं रमते । सखित्वेषु च अस्माभिः सह सगुणशंसिनः । सुतेषु सख्येषु च देवता रमति हि । रमेः छांदसं णत्वम् । एतदर्थं रणिर्वा ॥ ५

तमित्सखित्व ईमहे तं राये तं सुवीर्ये ।
स शक्र उत नः शकदिंद्रो वसु दयमानः ॥ ६

तस्मित् उक्तगुणं इंद्रम् । सखित्वं याचामहे । तमेव धनं शोभनं वीर्यं च । सोऽपि शक्रः अस्मभ्यं अदात् ददातु । अथवा शक्रः शक्तः । यस्मात् नः दातुं शक्नोति तस्मादीमहे । इंद्रः यदा यदा वसु दयमानः तदा तदा अस्मभ्यं एतद्ददातु । दय विभागे । लक्षणहेत्वोः क्रियायाः (पा. ३-२-१२६) इति शानच् । स्तोतृभ्यः विभजन् ॥ ६

सुविवृतं सुनिरजमिन्द्र त्वादातमिद्यशः ।
गवामप व्रजं वृधि कृणुष्व राधो अद्रिवः ॥ ७

हे इन्द्र सुष्ठुप्रकाशं सुनिक्षेपं त्वया दत्तमन्नम् । इदानीन्तु गवामात्मीयं गोष्ठं अपावृणु । उत्पादय । आत्मीयात् गोष्ठात् गा आनीयास्मभ्यं देहि । अथवा आपो गावः । व्रजं मेघमुद्घाटय वर्षार्थम् । कृणुष्व धनं हे वज्रिन् । पर्वतविकारत्वाद्वा दारणाद्वा मेघासुरयोरद्रिरिति । तद्वान् । ७

नहि त्वा रोदसी उभे ऋघायमाणमिन्वतः ।
जेषः स्वर्वतीरपः सं गा अस्मभ्यं धूनुहि ॥ ८

द्यावापृथिव्यावुभे अपि त्वां शत्रून् घ्नन्तं न व्याप्नुतः । एनयोः सकाशात्तन्वा वीर्येण वा त्वं महत्तरोऽसि । किंच आदित्यरश्म्याहृताः सर्वसाधका वा अपः जयसि । वृष्टिलक्षणा अपः अस्मभ्यं सम्यक् पातय । ८

आश्रुत्कर्ण श्रुधी हवं नू चिद्दधिष्व मे गिरः ।
इन्द्र स्तोममिमं मम कृष्वा युजश्चिदन्तरम् ॥ ९

आभिमुख्येन श्रोतारौ कर्णौ यस्य स त्वं शृणु आह्वानम् । श्रुत्वा क्षिप्रं मत्स्तुतीः मनसि स्थापय । याज्यापुरोनुवाक्यादि गिरः वा । हे इन्द्र इमं शस्त्रलक्षणं स्तोमम् । श्रुत्वा कुरुष्व । युजः सहायाः । अन्तरं सन्निकृष्टतमम् । कुत्सो वा विष्णुर्वा मरुतो वा इन्द्रस्य सहायाः ॥ ९

विद्मा हि त्वा वृषन्तमं वाजेषु हवनश्रुतम् ।
वृषन्तमस्य हूमह ऊतिं सहस्रसातमाम् ॥ १०

यस्माज्जानीमस्त्वां अतिशयेन वर्षितारं संग्रामेष्वार्तानामाह्वानस्य श्रोतारम् । तस्मात् वृषन्तमस्य अतिशयेन वर्षितुस्ते पालनं प्रार्थयामहे । स्तोतृसहस्रसंभक्तितमाम् ॥ १०

आ तू न इन्द्र कौशिक मन्दसानः सुतं पिब ।
नव्यमायुः प्र सू तिर कृधी सहस्रसामृषिम् ॥ ११

हे इन्द्र क्षिप्रमस्मदीयं सोमं पिब । कौशिकशब्दे कथा —

इषीरथसुतो राजा कुशिकः कामयन् सुतम् ।
इन्द्रतुल्यं तदर्थत्वात् ब्रह्मचर्यं चचार च ॥
गाधी नामेन्द्र एवास्य पुत्रत्वं गतवान् किल ।

इति कौशिकत्वम् । अथवा कुशिभिर्बद्धस्य द्रष्टा दोग्धा वा कौशिकः । तथाहि चरकाध्वर्यवः —

पृश्नेस्तदास्याश्चत्वारः सा देवेभ्यो दुह त्रिभिः ॥
एकोऽनुबद्धः कुशिभिस्तं दृष्ट्वा दुग्धवान् हरिः ॥

इति वा कौशिकः । मदि स्तुतिमोदनयोः । स्तूयमानो मोदयमानो वा । सुतं पिब । नव्यं स्तुत्यं अन्नं देहि । अथवा नवं जीवितं सुष्ठु प्रवर्धय । प्रतिरतिर्वृद्धौ । कुरु धनसहस्राणां संभक्तारं ऋषिम् मधुच्छन्दोनामानम् ॥ ११

परि॑ त्वा गिर्वणो॒ गिर॑ इ॒मा भ॑वन्तु वि॒श्वतः॑ ।
वृ॒द्धायु॒मनु॒ वृद्ध॑यो॒ जुष्टा॑ भवन्तु॒ जुष्ट॑यः ॥ १२

हे गिर्वणः स्तुतिसंभक्तः त्वां अस्मदीया इमा गिरः परिगृह्णन्तु सर्वतः । वृद्धान् शत्रून् प्रति गन्तारम् । अनुः । सुष्ठौ सुष्ठु वृद्धाः । ताः तव प्रिया भवन्तु प्रीणयित्र्यः । जुषी प्रीतिसेवनयोः ॥ १२

---

इन्द्रं॒ विश्वा॑ अवीवृधन्त्समु॒द्रव्य॑चसं॒ गिरः॑ ।
र॒थीत॑मं र॒थीनां॒ वाजा॑नां॒ सत्प॑तिं॒ पति॑म् ॥ १

जेता नामोत्तमं सूक्तं
माधुच्छन्दस उक्तवान्.

इन्द्रं विश्वा गिरः अवीवृधन् अवर्धयन् वर्धयन्तु वा । व्यच व्याप्तौ । समुद्रस्येव व्याप्तिर्यस्य तं सर्वव्यापिनम् । स्तुतयः । सारथिः योद्धा वा रथी । अन्यरथीसकाशादतिशयेन रथी । अन्येषां रथिनां रथिनं वा । अन्नानां स्वामिनम् । सतां पालयितारम् ॥ १

स॒ख्ये त॑ इन्द्र वा॒जिनो॒ मा भे॑म शवसस्पते ।
त्वाम॒भि प्र णो॑नु॒मो॒ जेता॑रम॒प॑राजितम् ॥ २

हे इन्द्र तव सख्ये वर्तमाना वयं हविष्मन्तः त्वां हविषा यजामः । त्वत्प्रसादात् कुतश्चिदपि मा भैष्म । बलस्य स्वामिन् पातः वा । न च मुधैव प्रार्थना । किं तर्हि त्वां प्रकर्षेण पुनःपुनः अभिष्टुमः । पौनःपुन्ये च यङो लुक् । शू णां जेतारं तैरपराजितं च ॥ २

पूर्वीरिन्द्रस्य रातयो न वि दस्यन्त्यूतयः ।

यदी वाजस्य गोमतः स्तोतृभ्यो मंहते मघम् ॥ ३

चिरन्तन्यः इन्द्रस्य रातय दानानि । विः उपे । नोपक्षीयन्ते । पालनानि च । यद्यपि वाजमन्नं गोभिः सहितम् । अमि ङस् । स्तोतृभ्यो धनं ददाति । मघं रयिः । मही दाने । अन्नधने अन्येभ्योऽपि दत्वा नोपक्षीयन्ते अस्य प्रभूतत्वात् ॥ ३

पुरां भिन्दुर्युवा कविरमितौजा अजायत ।

इन्द्रो विश्वस्य कर्मणो धर्ता वज्री पुरुष्टुतः ॥ ४

असुरपुराणां भेत्ता पुरन्दर इत्युक्तः । युवा तरुणः । कविर्मेधावी । अपरिमितबलः । जन्मप्रभृति ईदृशः । इन्द्र इन्द्रियदः परमैश्वर्यदः वा । सर्वस्य कर्मणो धारयिता । सर्वाणि कर्माणि वृष्ट्यायत्तान्येव । सा इन्द्रायत्ता । अतएव वज्री वज्रवान् बहुभिःस्तुतः ॥ ४

त्वं वलस्य गोमतोऽपावरद्रिवो बिलम् ।

त्वां देवा अबिभ्युषस्तुज्यमानास आविषुः ॥ ५

त्वं हे अद्रिवः वलस्य मेघस्य गोमतः उदकवतः । त्वं उदकवतो मेघस्य बिलं उदकविनिर्गमनद्वारं अपावृणोः । लटि वा । त्वामिति । ऐतरेयब्राह्मणेनोक्तम् इन्द्रो वै वृत्रं हनिष्यन् ऐ ब्रा इति नवाभिर्वाक्यैः । त्वां देवा अबिभिवांसः । जसि शस् । वृत्रश्वासादभीताः । त्वरमाणाः । तुज त्वरणे । अन्वगच्छन् । वृत्रं जिघांसन्तं त्वां मरुत अभीताः क्षिप्रमन्वगच्छन् ॥ ५

तवाहं शूर रातिभिः प्रत्यायं सिन्धुमावदन् ।

उपातिष्ठन्त गिर्वणो विदुष्टे तस्य कारवः ॥ ६

हे शूर तव सोमदानैर्हेतुभूतैः प्रत्यागमं स्यन्दितारं सोममाभिमुख्येन स्तुतीर्वदन् । स्यन्दू आस्रवणे । हे इन्द्र त्वं स्तोतृभ्यः प्रभूतं ददासि । तस्मादहं च तोमं

स्तुतीश्चावदन् त्वां प्रत्यागच्छामि स्म । न च केवलोऽहं अन्ये ऋत्विजः ऋषयो वा स्तुतिभिः उपातिष्ठन् । स्तुतिसंभक्तः । किंच विदुः ते तस्य त्वां तम् । अभि ङस् । अन्येऽपि स्तोतारः तं त्वा विदुः । यस्त्वं एवमुक्तगुणः ॥ ६

मायाभिरिन्द्र मायिनं त्वं शुष्णमवातिरः ।
विदुष्टे तस्य मेधिरास्तेषां श्रवांस्युत्तिर ॥ ७

हे इन्द्र त्वं प्रज्ञाभिः अतिसन्धानप्रज्ञायुक्तं शुष्णनामानमसुरं हतवान् । अवतिरतिः वधे । यश्च ईदृशोऽसि तं त्वां यज्ञवन्तो विदुः । अस्मदीया ऋत्विजः पुत्रादयो वा त्वन्माहात्म्यात् ज्ञानाभियुक्तानां तेषां अन्नधनकीर्तीः ऊर्ध्वं वर्धय उत्तरोत्तरं वर्धय । ७

इन्द्रमीशानमोजसाभि स्तोमा अनूषत ।
सहस्रं यस्य रातय उत वा सन्ति भूयसीः ॥ ८

इन्द्रं सर्वस्य प्रभवन्तं बलेन हेतुना अस्मदीयाः स्तोमा अभिष्टुवन्त । यस्य बहु दानानि सहस्रादपि बहुतरा वा । यः स्तोतृभ्यः असंख्यदाः ॥ ८

---

अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् ।
अस्य यज्ञस्य सुक्रतुम् ॥ १

अग्निं मेधातिथिः काण्वः ।

अग्निं दूतमित्याग्नेयम् । सन्देशकारी दूतः । अग्निं देवान् प्रति संदेशेन अनुगन्तारं अर्थयामहे । अग्निनाधिष्ठितो मर्त्यो होता हौत्रं कर्तुं शक्नोति । एतदर्थं च देवानां आह्वातारं वा । विश्ववेदसं सर्वधनं सर्वप्रज्ञं वा अस्य प्रकृतस्य यज्ञस्य सुकर्माणं सुप्रज्ञं वा । एतादृशं होतारं वृणीमहे ॥ १

अग्निमग्निं हवीमभिः सदा हवन्त विश्पतिम् ।
हव्यवाहं पुरुप्रियम् ॥ २

यावान् कश्चिदग्निः तं सर्वमाह्वानैः सर्वदा आह्वयन्ति यष्टारः । नृणां स्वामिनं हविषां वोढारं बहूनामिष्टम् ॥ २

अग्ने देवाँ इहा वह जज्ञानो वृक्तबर्हिषे ।
असि होता न ईड्यः ॥ ३

अग्ने देवानिह यज्ञे आनय । जायमानः अस्मद्भक्तिं जानन् वा । सद्य एव यजमानस्यार्थाय । यस्मादस्माकं होतासि ईड्यः । आस्तीर्णं बर्हिर्येन स वृक्तबर्हिः ॥ ३

ताँ उशतो वि बोधय यदग्ने यासि दूत्यम् ।
देवैरा सत्सि बर्हिषि ॥ ४

तान् उशतः यज्ञगमनं कामयमानान् अमुष्य यजमानस्य यज्ञे गन्तव्यमिति चेतय । येषां दूतकर्म प्रतिपद्यसे तान् विबोधय । ङसः शसो वात्र यदितिलुङ्कि यान् येषां यत् । आगतैर्देवैः सह उपविशास्मिन् यज्ञे ॥ ४

घृताहवन दीदिवः प्रति ष्म रिषतो दह ।
अग्ने त्वं रक्षस्विनः ॥ ५

घृताहवन आहुतिलक्षणं घृतं आहूयते यस्मिन् स त्वं दीप्तिमन् प्रतिदह । कान् दह । मां हिंसतः । रिष दाहे हिंसायां च । रक्षःसंबन्धि क्रौर्यं च रक्षः । तद्वतः । अत्यन्तक्रूरानित्यर्थः ॥ ५

अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा ।
हव्यवाड् जुह्वास्यः ॥ ६

पादस्तत्र द्विदेवतः ।

निर्मन्थ्याहवनीयार्थः । निर्मन्थ्येनाग्निना आहवनीयाग्निः सम्यक् दीप्यते। मेधावी यजमानगृहस्वामी सदातरुणः । अग्निर्हि उपशान्तोऽपि धनं प्राप्य पुनस्तरुणो भवति । तेनोपपन्नं सदातरुणत्वम् । हविषां वोढा जुहूर्मुखं जुहूरास्यस्थानीया यस्य । यथा ना मुखेन अत्ति तद्वज्जुह्वा अग्निः॥ ६

कविमग्निमुप स्तुहि सत्यधर्माणमध्वरे ।
देवममीवचातनम् ॥ ७

आत्मन एवायमन्तरात्मन उपप्रैषः । यथा—

मृडं मृडय मानसे

इत्यादिर्लोके । कविं हे अन्तरात्मन् मेधाविनं क्रान्तं वा अग्निं उपस्तुहि । सत्यकर्माणं यज्ञे दातारं दीप्तं वा । स्तोतृहिंसितॄणां नाशयितारम् चात । नाशने ॥ ७

यस्त्वाम॑ग्ने ह॒विष्प॑तिर्दू॒तं दे॑व स॒पर्य॑ति ।
तस्य॑ स्म प्रावि॒ता भ॑व ॥ ८

हे अग्ने यस्त्वां हविषः स्वामी अस्मदादिर्यजमानः प्रेष्यं दातः दीप्त वा परिचरति तस्य प्रकर्षेण रक्षिता भव ॥ ८

यो अ॒ग्निं दे॒ववी॑तये ह॒विष्माँ॑ आ॒विवा॑सति ।
तस्मै॑ पावक मृडय ॥ ९

यः अग्निः भवन्तम् । वीङ् भक्षणे गतौ च । देवानां हविर्भक्षणाय देवान् प्रति गमनाय वा । हविःसंयुक्तो यजमानः आभिमुख्येन परिचरति । तं हे शोधयितः सुखय । विवासा परिचर्यायाम् । मृड सुखने ॥ ९

स नः॑ पावक दीदि॒वोऽग्ने॑ दे॒वाँ इ॒हा व॑ह ।
उप॑ य॒ज्ञं ह॒विश्च॑ नः ॥ १०

यं त्वामस्तौष्म स त्वं अस्मदर्थाय हे शोधयितः दीप्तिमन्नग्ने । देवान् नः यज्ञ-हविषोः समीपे इहानय नः ॥ १०

स न॒स्तवा॑न॒ आ भ॑र गाय॒त्रेण॒ नवी॑यसा ।
र॒यिं वी॒रव॑ती॒मिष॑म् ॥ ११

अस्माभिस्तूयमानः आहर । स्तवनेन नवतरेण अन्यैरकृतपूर्वेण । धनं पुत्रवन्तं अन्नं च आनय नः ॥ ११

अग्ने॑ शु॒क्रेण॑ शो॒चिषा॒ विश्वा॑भिर्दे॒वहू॑तिभिः ।
इ॒मं स्तोमं॑ जुषस्व नः ॥ १२

अग्ने आत्मना शुक्लवर्णेन ज्वलतात्मना सर्वाभिर्देवाह्वानैः इमां स्तुतिं सेवस्व अस्मत्स्वभूताम् । त्वं श्रुत्वा सर्वान् देवान् श्रावयित्वा आह्वय इत्यर्थः ॥ १२



सुसमिद्धो न आ वह देवाँ अग्ने हविष्मते ।
होतः पावक यक्षि च ॥ १

आप्री सूक्तानि दश । तेषामाद्यमिदम् । अस्मिन्निव देवताक्रमं सर्वत्र । शुनकात्रिवसिष्ठवा यश्वदृष्टानां द्वितीया नाराशंसी । मेधातिथिर्दीर्घतमसोस्तृतीया । सा नैवान्येषाम् ॥ इध्यतेऽसाविति इध्मः । समिन्धनसंबद्धः । सुसमिद्धः सुष्ठु दीप्तोऽग्निः । हे अग्ने देवानस्मत्स्वभूताय आनय । हविष्मते यजमानाय । केवलेनावहनेनैव नालम् । हे होतः पावक यज च । हौत्रं कुर्वित्यर्थः ॥ १

मधुमन्तं तनूनपाद्यज्ञं देवेषु नः कवे ।
अद्या कृणुहि वीतये ॥ २

हे तनूनपात् । आपस्तन्वः अन्तरिक्षे विस्तृतत्वात् । तासां पौत्रः । कस्मादिति । अद्भ्य ओषधिवनस्पतयो जायन्ते । तेभ्योऽग्निर्जायते । तस्मात्तनूनपादग्निः । हे तनूनपात् नः यज्ञं देवसमीपं नय । मधुमन्तं स्वादवन्तम् । देवेष्विति समीपार्थो॥ गङ्गायां घोष इति वत् । मेधाविन् अद्य कुरु नय कामाय भक्षणाय वा। यज्ञं देवाः कथं कामयेरन् हवींषि वा भक्षयेयुः इत्यर्थं तत्समीपकरणम् ॥ २

नराशंसमिह प्रियमस्मिन्यज्ञ उप ह्वये ।
मधुजिह्वं हविष्कृतम् ॥ ३

नराशंसः नरैः शंस्यते इति । तं नराशंसं इह नृलोके प्रियं नृणामिष्टं अस्मिन् यज्ञे उपह्वये । स्वादेषु हविष्षु जिह्वा यस्य तं नित्यं मृष्टानां हविषां भक्षयितारम् । जिह्वा वाग्वा । मध्वी जिह्वा यस्य । होतृत्वादग्निः देवतानां स्तावकः । तस्मान्मधुवक्त्वाम् । हविषां कर्तारम् । ३

अग्ने सुखतमे रथे देवाँ ईळित आ वह ।
असि होता मनुर्हितः ॥ ४

ईळुपात्तस्तुतिसंबन्धः । हे अग्ने निरतिशयसुखे । टापि ङिः । सुखतमेन रथेन देवान् अस्माभिः स्तुतः आवह । यस्मात्त्वं होतासि मनुना प्रजापतिना निहितः स्थापितः । मनुष्येषु निहितो वा । मनुष्येभ्यो हितो वा ।

क्षितिर्मनायुर्वनुषो मनुष-

इति मनुः ॥ ४

स्तृणीत बर्हिरानुषग्घृतपृष्ठं मनीषिणः ।
यत्रामृतस्य चक्षणम् ॥ ५

अस्तृणन् दर्भान् । आनुषगिति नामानुपूर्व्यस्य । आनुपूर्व्येण । घृतपृष्ठम् । विस्तृतबर्हिषो ह्युपरि हविर्लक्षणं घृतं साद्यते । तेन घृतपृष्ठत्वम् । घृतमुदकं वा । प्रोक्षणीभिरद्भिरभिप्रोक्षितम् च । घृतस्पृष्टमेव पृष्ठम् । हे मेधाविनोऽध्वर्यवः । यत्र बर्हिषि सादितस्य अमृतसदृशस्य हविषो दर्शनम् । यत्र सादितं हविः दृश्यते। अग्निर्वा अमरणत्वादमृतः । तस्य यत्र दर्शनम् । सामीप्ये त्रल् । यत्समीपे अग्निर्दृश्यते ॥ ५

वि श्रयन्तामृतावृधो द्वारो देवीरसश्चतः ।
अद्या नूनं च यष्टवे ॥ ६

विश्रयन्तां विवृता भवन्तु । ऋतावृधः यज्ञस्य वर्धयित्र्यः ।
ऋतं मघो देवतातिः ।
यज्ञगृहद्वारो वा ज्वाला वाग्नेः । तास्तस्य द्वारभूताः । दाऽयः दीप्ता वा । असज्यमानाः । सश्च संगे । नूनं चार्थे । समुच्चयद्वित्वात् अद्य इत्यस्य सहचारित्वाच्च पुराशब्दः अध्याहार्यः । इदानीं च पूर्वस्मिंश्च काले यष्टुम् ॥ ६

नक्तोषासा सुपेशसास्मिन्यज्ञ उप ह्वये ।
इदं नो बर्हिरासदे ॥ ७

नक्ता रात्रि । उषा आपररात्रिकं ज्योतिः । ते नक्तोषसा । सुरूपे ।
रूपं वर्चो मतिः पेशः ।
इति । अस्मिन् यज्ञे उपह्वये । अम् जसि । नः अस्य बर्हिषः आसदनाय अत्र बर्हिषि उपवेष्टुम् ॥ ७

ता सुजिह्वा उप ह्वये होतारा दैव्या कवी ।
यज्ञं नो यक्षतामिमम् ॥ ८

यौ सर्वैर्नृभिराहूयेते सुवाचौ शोभनजिह्वावयवौ वा । देवानां होतारौ पार्थिवमध्यमौ अग्नी मेधाविनौ आहूतौ । तौ आगत्यास्माकं यज्ञं होतृत्वेन अवस्थाय यजतां इमम् ॥ ८

इळा सरस्वती मही तिस्रो देवीर्मयोभुवः ।
बर्हिः सीदन्त्वस्रिधः ॥ ९

इळा सरस्वती । मही भारती अस्या महत्वात् । तिस्रो देवीः सुखस्य भावयित्र्यः बर्हिषि सीदन्तु क्षयवर्जिताः ॥ ९

इह त्वष्टारमग्रियं विश्वरूपमुप ह्वये ।
अस्माकमस्तु केवलः ॥ १०

त्वष्टा देवतक्षा अग्निर्वा । त्विषेरुपधाया अकारो देवतायामनिट्त्वं च । इह यज्ञे त्वष्टारं मुख्यं बहुरूपम् । अतिशयमहाभाग्ययोगादस्ति देवानां बहुरूपत्वम् । उपह्वये । उपहूतः सन् अस्माकमेव केवलमस्तु स्तुत्यो यष्टव्यश्च ॥ १०

अव सृजा वनस्पते देव देवेभ्यो हविः ।
प्र दातुरस्तु चेतनम् ॥ ११

हे वनस्पते देव देवेभ्यो हविर्देहि । दातुः तस्य यजमानस्य प्रकर्षेणास्तु ज्ञानम् ॥ ११

स्वाहा यज्ञं कृणोतनेन्द्राय यज्वनो गृहे ।
तत्र देवाँ उप ह्वये ॥ १२

स्वाहाकारसंबन्धादुत्तमप्रयाजदेवता स्वाहाकृतयः । आगूर्य पञ्चमे स्वाहामुं स्वाहामुम् (आ. श्रौ १. ५. २४) इत्याश्वलायनः । याश्च तत्र यक्ष्यन्ते ताः स्वाहाकृतयः । स्वाहाशब्दो होमप्रदाने वा । सुहुतशब्दपर्यायो वा । यज्ञे । अम् कौ । यक्ष्यमाणाभ्यो देवताभ्यः होमप्रदानं सुहुतं वा हविः उत्तमप्रयाजाख्ये यज्ञे कुरुत अध्वर्यवः । क कुर्मः । इन्द्रार्थं यष्टुः यज्ञगृहे । तत्र अहमपि यष्टव्यान् देवान् उपह्वये ॥ १२

---

एभिरग्ने दुवो गिरो विश्वेभिः सोमपीतये ।
देवेभिर्याहि यक्षि च ॥ १

इदं सूक्तं बहुदेवतम् । हे अग्ने एभिः सर्वैर्देवैः परिचर्या स्तुतीश्च प्रति सोमपानार्थं आयाहि । यज च आगतान् देवान् ॥ १

आ त्वा कण्वा अहूषत गृणन्ति विप्र ते धियः ।
देवेभिरग्न आ गहि ॥ २

आह्वयन्ति त्वां कण्वपुत्राः मेधाविन ऋत्विजो वा । आत्मनि गुणेषु च जम्मू पुत्रपौत्रादयः । हे मेधाविन्नग्ने तव कर्माणि प्रज्ञा वा गृणन्ति । स त्वं देवैरागच्छ ॥ २

इन्द्रवायू बृहस्पतिं मित्राग्निं पूषणं भगम् ।
आदित्यान्मारुतं गणम् ॥ ३

इन्द्रवायू । आचि रूपम् । मित्रा इति आच्छूत्वात् वरुणश्च गृह्यते । मित्रावरुणौ इत्यर्थः । अनया ऋचा उक्तान् देवान् सोमपानार्थमाह्वयामि स्तौमि वा ॥ ३

प्र वो भ्रियन्त इन्दवो मत्सरा मादयिष्णवः ।
द्रप्सा मध्वश्चमूषदः ॥ ४

व इति तादर्थ्ये चतुर्थी । इन्द्रवाय्वादयः पूर्वया ऋचा उक्ताः । युष्मदर्थे संभ्रियन्ते सोमाः । प्रः समि । स्वार्थे चेत् प्रह्रियन्ते आहवनीयं प्रतिप्राप्यन्ते । हृग्रहोर्भः (वा. ८. ४. ३२. १.) इति भत्वम् । मदि तृप्तौ हर्षग्लपनयोश्च । तृप्तिकराः हर्षयितारः । द्रप्साः रसरूपाः रसवन्तः वा । यत् द्रवं नातिकठिनं तादृशा वा । मध्वः स्वादाः । अधिषवणचर्मणि सादिनः ॥ ४

ईळते त्वामवस्यवः कण्वासो वृक्तबर्हिषः ।
हविष्मन्तो अरंकृतः ॥ ५

ईळते त्वामग्ने सोमेन आत्मपालनतर्पणकामाः । अग्नेर्वा । कण्वाः व्याख्यातः । स्तीर्णबर्हिषः उपकल्पितहविष्काः पर्याप्तकारिणः ॥ ५

घृतपृष्ठा मनोयुजो ये त्वा वहन्ति वह्नयः ।
आ देवान्त्सोमपीतये ॥ ६

घृतपृष्ठाः । घृ क्षरणदीप्त्योः । दीप्तपृष्ठाः । बलवतामश्वानां दीप्तिमत् पृष्ठं भवति हि । मनसा ध्यातमात्राः ये स्वयं युज्यन्ते ते त्वां वहन्ति अश्वाः ।

दधिक्रा वह्निवाय्यतौ

इति अश्वनाम । तैरावह देवान् सोमपानाय ॥ ६

तान्यज॑त्राँ ऋता॒वृधोऽग्ने॒ पत्नी॑वतस्कृधि ।
मध्वः॑ सुजिह्व पायय ॥ ७

यान् आवह तान् यष्टव्यान् यज्ञोदकसत्यवर्धयितॄन् हे अग्ने सपत्नीन् कुरुष्व। एषां पत्नीरपि आवह। स्वादुं सोमं पायय। हे सुवाक् सुधेन वा। मधोरेकदेशो वा॥७

ये यज॑त्रा॒ य ईड्या॒स्ते ते॑ पिबन्तु जि॒ह्वया॑ ।
मधो॑रग्ने॒ वष॑ट्कृति ॥ ८

ये यष्टव्याः ये स्तुत्याः ते तव जिह्वया पिबन्तु। अग्निर्वै देवानां मुखम् (ऐ० ब्रा० ७. १६. ७.)। ते अग्नेरेव जिह्वया पिबन्ति न आत्मीयया। जिह्वा वाग्वा। त्वया पिबतेत्युक्ते। मधोः सोमैकदेशं वा स्वादुं सोमं वा अग्ने वषट्कारकाले॥ ८

आकीं॒ सूर्य॑स्य रोच॒नाद्विश्वा॑न्दे॒वाँ उ॑ष॒र्बुधः॑ ।
विप्रो॒ होते॒ह व॑क्षति ॥ ९

आकीं आङर्थेऽयं निपातः। सूर्यसंबन्धिनः दीप्तात् द्युलोकाद्वा आदित्यमण्डलाद्वा विश्वान् देवान् उषःकाले बोध्यन्ते ये यागगमनार्थं तान् मेधावी होता इह यज्ञे आवहतु। लोटि लेट्॥ ९

विश्वे॑भिः सो॒म्यं मध्वग्न॒ इन्द्रे॑ण वा॒युना॑ ।
पिबा॑ मि॒त्रस्य॒ धाम॑भिः ॥ १०

विश्वेभिः सर्वैः सह सोममयं मधु। सोमरसोऽत्र द्रवत्वात् मृष्टत्वाच्च मधु। तत्पिब अग्ने इन्द्रवायुमित्रैः। धाम तेजःस्थाननामजन्मानि वा। एतैर्युक्तेन इत्यर्थः।१०

त्वं हो॒ता मनु॑र्हि॒तोऽग्ने॑ य॒ज्ञेषु॑ सीदसि ।
सेमं नो॑ अध्व॒रं य॑ज ॥ ११

यस्त्वं होता प्रजापतिनिहितः नृषु वा हितः नृभ्यो वा हौत्रं कर्तुं यज्ञेषु निषीदसि। सत्वमस्माकमिमं अध्वरं यज॥ ११

यु॒क्ष्वा ह्यरु॑षी॒ रथे॑ ह॒रितो॑ देव रो॒हितः॑ ।
ताभि॑र्दे॒वाँ इ॒हाव॑ह ॥ १२

युक्ष्वा । रुश दीप्तौ रुच च । तयोरेकतरस्य आङ्पूर्वस्य अरुषीः अग्नेर्वडवाः रोहिन्नाम्न्यः । बलदीप्ताः गन्त्रीर्वा । अरुषति रयतीति । स्वार्थे योज्य हरिवर्णाः ताभिर्देवान् यज्ञे आवह ॥ १२



इन्द्र सोमं पिब ऋतुना त्वा विशान्त्विन्दवः ।

मत्सरासस्तदोकसः ॥ १

ऋतुदेवतम् । आद्यैन्द्री च । हे इन्द्र ऋतुना सह सोमं पिब । पीयमानाः त्वदुदरं आविशन्तु सोमाः तृप्तिकराः तन्निवासाः त्वदुदरग्रहाः ॥ १

मरुतः पिबत ऋतुना पोत्राद्यज्ञं पुनीतन ।

यूयं हि ष्ठा सुदानवः ॥ २

मरुतश्चास्याम् ।

हे मरुतः ऋतुना सोमं पिबत । पोतुः पात्रात् चमसात् । पीत्वा अस्माकं यज्ञं पुनीत । हि यस्मात् यूयं शोभनदानाः । शोभना वा दातारः स्थ । अन्यथा वा अर्थयोजना । यस्माद्यूयं सोमस्य पातारः यज्ञस्य पवितारः स्थ हे सुदानवः तस्मात् पिबत सोमं यज्ञं पुनीत च ॥ २

अभि यज्ञं गृणीहि नो ग्नावो नेष्टः पिब ऋतुना ।

त्वं हि रत्नधा असि ॥ ३

त्वाष्ट्री चेयम् । देवसत्रे त्वष्टा नेष्टा आसीत् किल । तदेपक्षं त्वष्टुर्नेष्टरिति संबोधनम् । हे नेष्टः अस्माकं यज्ञं अभिगृणीहि । अहो शोभनं इति । अथवा ॐ अम् । यज्ञे अस्माकं होतृकर्तृत्वेन अभिष्टुहि इति स्तुवतः अस्मान् यज्ञे प्रयुङ्क्ष्व । हे ग्नावः ।

स्त्रियो योषा योषणा ग्नाः ।

पत्नीयुक्त । नेष्टः ऋतुना सह सोमं पिब । त्वं धनानां दाता असि । यस्मात् पीत्वा च धनं अस्मभ्यं देहि ॥ ३

अग्ने देवाँ इहा वह सादया योनिषु त्रिषु ।

परि भूष पिब ऋतुना ॥ ४

अग्नेयी चेयम् । हे अग्ने दातॄन् दीप्तान् वा यज्ञे आनय । उपवेशय च । योनिस्थानेषु त्रिषु सवनेषु । परिगृहाण च । यथायोग्यं यज च । भूष अलंकारे । परिभूषय मण्डय देवान् स्वयमपि च अलंकुरु । ऋतुना सह सोमं पिब च ॥ ४

ब्राह्मणादिन्द्र राधसः पिबा सोममृतूँरनु ।
तवेद्धि सख्यमस्तृतम् ॥ ५

ऐन्द्री चेयम् । ब्रह्मन्शब्दः ब्राह्मणाच्छंसिनि । स ऐन्द्रः । हे इन्द्र तदीयात् धनात् पात्राद्वा चमसात् ।

राधो बन्धुः सुसगोत्रे ।

इति । पिब सोमं ऋतूनां पश्चात् । तैः पीते यस्मात्तव सखित्वं अहिंसितं अन्यैः कैश्चिदपि । स्थिरसख्यः ॥ ५

युवं दक्षं धृतव्रत मित्रावरुण दूळभम् ।
ऋतुना यज्ञमाशाथे ॥ ६

मैत्रावरुणी चेयम् । युवमिति षष्ठ्याम् । युवयोर्बलं धृतानि सर्वकर्माणि स्वकर्माणि वा याभ्यां तौ धृतव्रतौ ।

ब्रह्म वीर्यं क्रतुर्व्रतम् ।

औटि आच् । सांहितं ह्रस्वत्वम् । सर्वकर्महेतू स्वकरौ च । मित्रावरुणौ । दम्भु हनने । दुर्हणम् । दूढ्यदूणाशदूळभप्रवादा इति दीर्घत्वम् । युवयोर्दक्षं न कश्चिदपि जयति । यौ ईदृशौ स्थः तौ युवां ऋतुना सह यज्ञं व्याप्नुवतः । लोटि लट् । यज्ञे सोमं पिबतम् ॥ ६

द्रविणोदा द्रविणसो ग्रावहस्तासो अध्वरे ।
यज्ञेषु देवमीळते ॥ ७

द्रविणोदाः । चतस्रोऽस्य च । अमि सुः । द्रविणोदसं धनकामाः ।

इन्द्रियं द्रविणं श्वात्रम् ।

इति धनम् । तदिच्छन्ति । सुप आत्मनः क्यच् (पा. ३. १. ८)

स्वेषां द्रविणमिच्छन्ति ।

क्यचि सुक् छान्दसः क्विप् च । क्विपि च आद्युदात्तत्वम् । गृहीताभिषवणग्रावाण ऋत्विजः । रक्षआदिभिरहिंसितेषु । ध्वर हिंसायाम् । यज्ञेषु । अध्वरशब्द-

समस्तज्योतिष्टोमादिवचनः । यज्ञश्च तदवयवभूताभ्यासविशेषवचनः । ज्योतिष्टो मादौ अध्वरे ये अभ्यासविशेषाख्या यज्ञाः तेषु दातारं दीप्तं वा स्तुवन्ति ॥ ७

द्रविणोदा ददातु नो वसूनि यानि यानि शृण्विरे ।
देवेषु ता वनामहे ॥ ८

द्रविणोदा ददातु अस्मभ्यं धनानि यानि श्रूयन्ते । लटि लिट् । कर्मणि कर्तृत्वं च । उत्कृष्टत्वात् प्रभूतत्वाच्च सर्वलोकश्रुतिः तद्धनेषु । देवेभ्यस्तानि हवींषि कृत्वा दद्महे वयमपि । भ्यसि सुप् । देवनिमित्तं तानि संभजाम इति वा । निमित्तात् कर्मसंयोगे (वा. २. ३. ३६. ४) इति सप्तमी । चर्मणि द्वीपिनम् (म. भा. २. ३. ३६) इव । देवान् यष्टुम् ॥ ८

द्रविणोदाः पिपीषति जुहोत प्र च तिष्ठत ।
नेष्ट्रादृतुभिरिष्यत ॥ ९

द्रविणोदाः पिपासति । अज्झनगमां सनि (पा. ६. ४. १६.) इति छान्दसं ईत्वम् । सोमम् । एतत् ज्ञात्वा जुहोत अध्वर्यवः । प्रतिष्ठध्वं च । सोमं हुत्वा आहवनीयदेशात् सदः प्रतिगच्छत । कुतः पिपासति । नेष्टुः पात्रात् । ऋतुभिः सहगच्छत । इषु गतौ । मा विलम्बध्वम् ॥ ९

यत्त्वा तुरीयमृतुभिर्द्रविणोदो यजामहे ।
अध स्मा नो ददिर्भव ॥ १०

यस्मात्त्वां तुरीयं ऋतुभिः सह चतुर्थम् । क्रियाविशेषणं तुरीयमिति । पूर्वास्तिस्रोऽपि द्रविणोदसः । तुरीयया च द्रविणोदः त्वां यजामहे । तस्मादस्मभ्यं धन दाता भव । तस्मादर्थे अध इति ॥ १०

अश्विना पिबतं मधु दीद्यग्नी शुचिव्रता ।
ऋतुना यज्ञवाहसा ॥ ११

आश्विन्येकादशी च । अश्विनौ पिबतं स्वादुं सोमम् । दिव दीप्तौ । अत्यर्थदीप्ताग्निसंबन्धिनौ । कुत एतत् । युवं शक्रा मायाविना (ऋ. वे. १०. २४. ४) इत्यश्विनोररणीमन्थनदर्शनात् दीप्तस्य अग्नेः जनयितारौ । शुद्धकर्माणौ ऋतुना सह पातम् । हे यज्ञस्य अन्तं प्रापयितारौ ॥ ११

गार्हपत्येन सन्त्य ऋतुना यज्ञनीरसि ।
देवान्देवयते यज ॥ १२

आग्नेयी चासौ । गृहपतित्वेन हेतुना हे दातः । षणु दाने । अग्ने ऋतुना यज्ञस्य देवान् प्रति प्रापयिता असि । अतो ब्रवीमि । देवान् कामयमानस्य मम अर्थाय यज ॥ १२



आ त्वा वहन्तु हरयो वृषणं सोमपीतये ।
इन्द्र त्वा सूरचक्षसः ॥ १

ऐन्द्रं त्वनन्तरं सूक्तम् ।

हे इन्द्र आवहन्तु त्वां अश्वा वर्षितारं सोमपानार्थम् । त्वां तव स्वभूताः । सूर्यस्येव चक्षुः येषां ते । ऐन्द्रा अश्वा बलवत्त्वात् सूर्यवद्दीप्तिमन्तः अदृश्यास्तेजोभिः । सूर्यदर्शिनो वा ॥ १

इमा धाना घृतस्नुवो हरी इहोप वक्षतः ।
इन्द्रं सुखतमे रथे ॥ २

यवस्य तण्डुलं धाना तच्चूर्णीकृत् करम्भवान् ।
व्रीहिकथनसंजातं परिवापमधिश्रिते ।
...... .. . .. ... . . ...
पयस्या सैव चामिक्षा तज्जलं वाजिनं मतम् ॥

इमाः। शसन्तत्वात् प्रतिं आहरेत्। घृतप्रस्राविणीः अलंकारेणोपस्तरणाभिघरणैः घृतस्नुवः इमा धानाः प्रति । यज्ञे हि हर्योः ऋजीषं भागो धानाश्च । अत इदं तद्भागेन धानादिभि हर्योः प्रोत्साहनार्थं न देशोपलक्षणम् । इन्द्राश्वौ इह कर्मणि आवहताम् । उप आङि । लेट् लोटि । निरतिशयसुखे रथे तिष्ठन्तमिन्द्रम् । तेनेति वा । टार्थे ङिः॥२

इन्द्रं प्रातर्हवामह इन्द्रं प्रयत्यध्वरे ।
इन्द्रं सोमस्य पीतये ॥ ३

इन्द्रं प्रातः प्रक्रमकाले प्रयति प्रवृत्ते । समाप्यमाने च इति इन्द्रशब्दत्रित्वात् । यज्ञादिमध्यान्तेषु इन्द्रं हवामहे सोमपानार्थम् । इदि परमैश्वर्ये । इन्द्रं परमेश्वरं वा। ३

उप नः सुतमा गहि हरिभिरिन्द्र केशिभिः ।
सुते हि त्वा हवामहे ॥ ४

अस्मत्सोमं हरिभिः उपागच्छ । केशवद्भिः प्रलम्बकेसरैः । यस्मादभिषुते सोमे त्वां वयं हवामहे ॥ ४

सेमं नः स्तोममा गह्युपेदं सवनं सुतम् ।
गौरो न तृषितः पिब ॥ ५

स त्वं अस्मत्स्तोममागत्य इमं यज्ञं सोमं च उपागच्छ । डौ वा अम् । सवने अस्मिन् यज्ञे अस्मत्स्तुतिमुपागहि । सोमं चाभिषुतम् । गौर इति गौरखरवाची । ठाजादावूर्ध्वं द्वितीयादचः (पा. ५. ३. ८३) अनजादौ च विभाषा (म. भा. ५. ३. ८३) इति उत्तरपदलोपः । भीम इव । यथा उदकं तृषितः गौरखर इव । तृषितः पिब ॥ ५

इमे सोमास इन्दवः सुतासो अधि बर्हिषि ।
ताँ इन्द्र सहसे पिब ॥ ६

इमे सोमा दीप्ता. । इन्धी दीप्तौ । स्वया दीप्त्या दीप्ताः सुता बर्हिष उपरि । हे इन्द्र तानात्मबलार्थं पिब ॥ ६

अयं ते स्तोमो अग्रियो हृदिस्पृगस्तु शन्तमः ।
अथा सोमं सुतं पिब ॥ ७

अयं तव स्तोमः प्रधानभूतः त्वद्धृदयस्य स्प्रष्टा अस्तु । लोके हि यद्रोचते तद्धृदयं स्पृशति इति न्यायः । तव रोचताम् । त्वच्चित्तेनावधार्यतां इति वा । सुखतमः अनन्तरं सोमं अभिषुतं पिब ॥ ७

विश्वमित्सवनं सुतमिन्द्रो मदाय गच्छति ।
वृत्रहा सोमपीतये ॥ ८

विश्वम् । अम् डौ । सर्वस्मिन् यज्ञे । सुतं सोमं प्रति इन्द्रो गच्छति । मदाय मदार्थं अभिषुतं प्रति गच्छति इति वा । शत्रुहा सोमपानाय ॥ ८

सेमं नः काममा पृण गोभिरश्वैः शतक्रतो ।
स्तवाम त्वा स्वाध्यः ॥ ९

स त्वं अस्मत्कामं पूरय प्रीणय । गोभिः अश्वैः च । बहुकर्मप्रज्ञ । यं त्वां वयं शोभनप्रार्थना अस्तुमः । सु आध्यानं स्वाधीः । इन्द्रः अस्मत्कामं पूरयेदिति प्रार्थना ॥ ९

---

इन्द्रावरुणयोरहं सम्राजोरव आ वृणे ।
ता नो मृळात ईदृशे ॥ १

ऐन्द्रावरुणमुत्तरम् ।

इन्द्रावरुणयोरहं सम्यक् दीप्तयोः पालनं प्रार्थये । एतत् ज्ञात्वा तौ नः सुखयतः अवःसंपादनेन । मृड सुखने । लोटि लेट् । ईदृशे प्रार्थनाविशेषाद्वर्तमानान् ॥ १

गन्तारा हि स्थोऽवसे हवं विप्रस्य मावतः ।
धर्तारा चर्षणीनाम् ॥ २

गन्तारा गमनशीलौ युवां स्थः । पालनाय आह्वानं मेधाविनो मत्सदृशस्य । धारयितारौ तैस्तैरुपकरणैः नृणाम् ॥ २

अनुकामं तर्पयेथामिन्द्रावरुण राय आ ।
ता वां नेदिष्ठमीमहे ॥ ३

अनुकामं कामनानन्तरमेव अस्मान् तर्पयेथाम्। अनुर्वीप्सायां वा कर्मप्रवचनीयः। कामं काममनु। यदा यदा वयं कामयामहे तदा तदा तर्पयेथाम् । धनेन तस्यैकदेशेन वा । ङस् टार्थः । युष्मद्धनतर्पणप्रार्थनावन्तो वयम् । तौ युवां इष्टत्वात् यत्सान्निकृष्टतमं धनं तद्याचामहे । अन्तिकबाढयोर्नेदसाधौ (पा. ५. ३. ६३) । अतिशायने तमबिष्ठनौ (पा. ५. ३. ५५.) । इति नेदिष्ठम् ॥ ३

युवाकु हि शचीनां युवाकु सुमतीनाम् ।
भूयाम वाजदाव्नाम् ॥ ४

यागकर्मवतामस्माकं सोमलक्षणं हविः युष्मत्कामं यस्मात् ।
क्रतुवीर्योर्जितं शची ।

इति कर्मनाम । अन्तर्णीतमतुप् च । युष्मत्कामं युवाकु । कमेः सुः । युः मिश्रणार्थः वा । वसतीवर्यैकधानाभिरद्भिः श्रयणैर्वा युक्तं हविः । सुमतीनां अस्मत्स्तुतिवचनं च युवाकु । युष्मत्सर्वगुणसंकीर्तनरूपं अस्मत्स्तुतिवचनं युष्मत्कामम् ।

मन अर्चायाम् । द्वावपि युवाकुशब्दौ सोमविषयौ एव । वसतीवर्यादिमिश्रणार्थ एकः । युष्मत्पानकामार्थः अपरः । अथवा अन्यथा अस्य अर्धर्चस्य अर्थयोजना । जसि सुः । पुंसि षण् । भिसि आम् । वयं कर्मभिः शोभनाभिः स्तुतिभिश्च । युष्मत्कामा यस्मात् तस्मादन्नदानानां लब्धारः कर्तारो भवेम । भावेऽयं वनिः ॥ ४

इन्द्रः सहस्रदाव्नां वरुणः शंस्यानाम् ।
क्रतुर्भवत्युक्थ्यः ॥ ५

इन्द्रः सहस्रसङ्ख्याकदानानां वरुणश्च स्तुत्यानां अत्यन्तोत्कृष्टानां कर्ता भवति । वक्तव्यप्रशस्यः ॥ ५

तयोरिदवसा वयं सनेम नि च धीमहि ।
स्यादुत प्ररेचनम् ॥ ६

तयोस्तर्पणेन पालनेन वा हेतुना धनं संभजेमहि । निधीमहि च । उपभोगातिरिक्तं च निखाय स्थापयामः । प्रकर्षेण यदतिरिच्यते तत् प्ररेचनम् । उपभोगान्निधानाच्च अतिरिक्तमपि स्यात् ॥ ६

इन्द्रावरुण वामहं हुवे चित्राय राधसे ।
अस्मान्त्सु जिग्युषस्कृतम् ॥ ७

इन्द्रावरुणौ वामहं हुवे पूजनीयस्य धनस्य अर्थाय । पूजनीयं रायः मह्यं दत्तम् । अस्मान् सुष्ठु जितवन्तः कुरुतम् । अस्मच्छत्रूनपि अस्माभिर्जापयतम् ॥ ७

इन्द्रावरुण नू नु वां सिषासन्तीषु धीष्वा ।
अस्मभ्यं शर्म यच्छतम् ॥ ८

नु क्षिप्रम् । हे इन्द्रावरुणौ क्षिप्रं युवां संभक्तुं इच्छत्सु कर्मसु वर्तमानेभ्यः अस्मभ्यं सुखं गृहं वा दत्तम् ।

उपेतिरर्थे धीः शर्म ।

इति कर्मणि । युष्मद्देवतानि कर्माणि अनुतिष्ठद्भ्यो नः शर्म दत्तम् ॥ ८

प्र वामश्नोतु सुष्टुतिरिन्द्रावरुण यां हुवे ।
यामृधाथे सधस्तुतिम् ॥ ९

प्रकर्षेण युवां व्याप्नोतु शोभना स्तुतिः । हे इन्द्रावरुणौ यां प्रति आह्वयामि । यया वा । टार्थे अम् । यां स्तुतिं फलसिद्ध्या वर्धयथः । सहभूतयोः युवयोः स्तुतिम् । सहस्य सधः । सधमादस्थयोश्छन्दसि (पा. ६. ३. ९६) इति सधस्तुतिम् । सह-स्तुतिं कुर्वन् फलस्य अतिसिध्या पुनः पुनस्तामेव करोति । टार्थे वा अम् । यया सह-स्तुत्या वर्धेते ॥ ९

---

सोमानं स्वरणं कृणुहि ब्रह्मणस्पते ।
कक्षीवन्तं य औशिजः ॥ १

सोमानमितिचाद्यायाः पञ्च ता ब्रह्मणस्पतेः ।

षुञ् अभिषवे । अन्येभ्योऽपि दृश्यन्ते (पा. ३. २. ७५) इति मनिप् । अभिषो-तारं सोमस्य । स्वृ शब्दोपतापयोः । चलनशब्दार्थादकर्मकाद्युच् (पा. ३. २. १४८.) । शब्दयितारं स्तुतीनां यष्टारं स्तोतारं च कुरु मां धनप्रदानेन । सर्वत्र यः शब्द्यते स वा स्वरणः प्रकाशः । सोमाभिषोतारं मां देवमनुष्येषु प्रकाशं कुरु । ब्रह्मणस्पते । कक्षीवन्तं ऋषिं इव । यः उशिक्पुत्रः तमिव । लुप्तोपमा ॥ १

यो रेवान्यो अमीवहा वसुवित्पुष्टिवर्धनः ।
स नः सिषक्तु यस्तुरः ॥ २

यो धनवान् यश्च हिंसितृणां हन्ता अपूर्वाणां अपि धनानां लब्धा लम्भ-यिता वा । अन्तर्णीतण्यर्थत्वात् । स्तोतृभ्यो दाता । सर्वोपकारायाः पुष्टेः वर्धयिता । य एवंभूतः स नः सेवतां त्वम् । एवंगुणः पुत्रो मम जायतां स नः सेवतां च । यः क्षिप्रकारी ।

तुरास्तथैव तूर्यथाः ॥

इति ॥ २

मा नः शंसो अररुषो धूर्तिः प्रणङ्मर्त्यस्य ।
रक्षा णो ब्रह्मणस्पते ॥ ३

अस्माकमाशंसा । देवेभ्यो हविषामदातुः । यो हि न यजते सः यष्टन् विनश्य-तु इत्येवमाशंसति । सोऽस्य शंसः । धूर्तिः । धूर्वतिर्हिंसायाम् । हिंसा । हिंसिता वा । स च मा प्रणशत् । नश व्याप्तौ । असौ अस्मान् मा प्रापदित्यर्थः । अनवग्रहात्

संपर्कार्थो वा । भिसि शस् । सोऽस्माभिर्मा संपर्चीत् । मास्मान् प्रापदित्यर्थः । कस्य अररुषः । एतानि शंसादीनि सन्ति इति । मर्त्यस्य । रक्ष त्वं नः । हे ब्रह्मणस्पते ॥ ३

स घा वीरो न रिष्यति यमिन्द्रो ब्रह्मणस्पतिः ।
सोमो हिनोति मर्त्यम् ॥ ४

चतुर्थ्यां सोम इन्द्रश्च ।

यं मर्त्यं इन्द्रो ब्राह्मणस्पतिः सोमश्च हिनोति । हि गतिवृध्योः । गच्छन्ति वर्धयन्ति वा । स एव विक्रान्तः न हिंस्यते ॥ ४

त्वं तं ब्रह्मणस्पते सोम इन्द्रश्च मर्त्यम् ।
दक्षिणा पात्वंहसः ॥ ५

पञ्चम्यां दक्षिणाधिका ।

यः स्तौति यजते च हे ब्रह्मणस्पते त्वं तं मर्त्यं रक्षतु पापात् सोमः इन्द्रः दक्षिणा च । ५

सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् ।
सनिं मेधामयासिषम् ॥ ६

चतस्रस्सादसस्पत्याः ।

सदः प्रसिद्धं यज्ञगृहम् । तस्य पतिरग्निः । सर्वयज्ञाधिपतित्वादस्य । तं सदसस्पति माग्निं महान्तम् ।

यह्वोऽमात्रोऽद्भुतो ब्रह्मः

इति । यज्ञं अग्न्यायत्तम् । सोमपानार्थिनः इन्द्रस्य तत्संपादनात् प्रियम् । प्रार्थयितव्यं च सर्वस्तोत्राणाम् । सनिं धनदानं प्रज्ञां च ईमहे याचामि । या याच्ञायाम् ॥ ६

यस्मादृते न सिध्यति यज्ञो विपश्चितश्चन ।
स धीनां योगमिन्वति ॥ ७

यस्मात् सदसस्पतिना अग्निना विना यज्ञो न सिध्यति मेधाविनोऽपि यजमानस्य । चन अपि । आम् भिसि । सः कर्मभिः सह संबन्धं व्याप्नोति । इ व्याप्तौ । सर्वयागकर्माणि करोतीत्यर्थः ॥ ७

आर्ध्नोति हविष्कृतिं प्राञ्चं कृणोत्यध्वरम् ।
होत्रा देवेषु गच्छति ॥ ८

अथ कर्मभिः संयुज्यानन्तरं वर्धयति हविष्क्रियाम् । हवींषि सारतो वृद्धानि करोति । देवान् प्रति प्रकर्षगामिनं करोति यज्ञम् । होत्रा इति वाङ्नाम । टार्थे सुः । होत्रया च स्तुत्या देवान् प्रति गच्छति । देवांश्च स्तौतीत्यर्थः ॥ ८

नराशंसं सुधृष्टममपश्यं सप्रथस्तमम् ।
दिवो न सद्ममखसम् ॥ ९

नराशंसं अग्निमेव प्रकृतम् । नृभिः शस्यते इति । अन्या वा देवता । तथाह्याह—

उक्तायाः सादसस्पत्याश्चतस्रः सदसस्पतिः ।
तासामन्त्या ऋगेका सा नाराशंसी प्रकीर्तिता ॥

नराशंसं सुष्ठु प्रगल्भतमं अहमपश्यम् । अतिशयेन सर्वतः पृथुम् । द्युलोकस्येव संबन्धिनं आदित्यम् । सद्म सदनं आदित्यमण्डलम् । तत् मखं महत् यस्य सः सद्ममखा आदित्यः । तमिव ॥ ९

---

प्रति त्यं चारुमध्वरं गोपीथाय प्र हूयसे ।
मरुद्भिरग्न आ गहि ॥ १

आग्निमारुतमुत्तमम् ।

त्यत् तदर्थे । योऽयं अस्माभिः प्रकल्पितः तं यज्ञं प्रति । लक्षणे कर्मप्रवचनीयः प्रतिः । शोभनं ।

गौरन्धः सवनं मदः ।

इति सोमनाम । सोमपानाय प्रकर्षेण आहूयसे । तस्मान्मरुद्भिः सह अग्ने आगहि ॥ १

नहि देवो न मर्त्यो महस्तव क्रतुं परः ।
मरुद्भिरग्न आ गहि ॥ २

न देवो नापि मर्त्यः महः महत् तव सकाशात् । टार्थे अम् । कर्मणा प्रज्ञया वा उत्कृष्टः । त्वत्तः श्रेष्ठो देवमनुष्येष्वपि न कश्चित् । तस्मात् मरुद्भिरग्ने आगहि ॥ २

ये महो रजसो विदुर्विश्वे देवासो अद्रुहः ।
मरुद्भिरग्न आ गहि ॥ ३

ये महत् लोकं अन्तरिक्षं मेघोदकं वा विदुः ।

ऋतं योनिर्नभो रजः ।

इति खे ।

क्षोदः क्षीरं रजः ।

अमि ङस् । सर्वदातारः अद्रोग्धव्याः अद्रोग्धारो वा स्तोतृयष्टॄणां ये । तैर्मरुद्भिरग्न आगहि ॥ ३

य उग्रा अर्कमानृचुरनाधृष्टास ओजसा ।

मरुद्भिरग्न आ गहि ॥ ४

ये अन्येन अप्रसह्याः क्रूराः अर्कं देवमिन्द्रम् ।

आर्चन्नत्र मरुतः (ऋ. वे. १. ५२. १५.)

इति इन्द्रस्य मरुत्स्तुतिसंबन्धदर्शनात् । प्रहर भगवो जहि वीरयस्व (ऐ. ब्रा. (३. २०.) इत्येवमादिभिः अस्तुवन् ।

त्वां देवा अभिष्टुयुषः (ऋ. वे. १. ११. ५.)

इत्यत्रोक्तं तत् । अथवा संवादसूक्तस्तुतिभिर्वा ।

कया शुभा (ऋ. वे. १. १६५ १.)

इत्यादिषु । अनाधर्षिता. अनभिभूतपूर्वाः परबलेन । तैर्मरुद्भिः ॥ ४

ये शुभ्रा घोरवर्पसः सुक्षत्रासो रिशादसः ।

मरुद्भिरग्न आ गहि ॥ ५

शोभनाः घोररूपाः क्रीडासु संग्रामेषु च ।

ये आदित्यस्योपरि दीप्ते दिव एकदेशे स्थाने सप्तमे वायुस्कन्धे देवा अधिवसन्ति तैर्मरुद्भिः ।

सूर्यो वृषाजरो नाकः ।

इति । अधिः उपरौ ॥ ६

य ई॒ङ्खय॑न्ति॒ पर्व॑तान्ति॒रः स॑मु॒द्रम॑र्ण॒वम् ।
म॒रुद्भि॑रग्न॒ आ ग॑हि । ७

ये गमयन्ति शैलान् प्राप्ताः समुद्रं प्रति उदकवन्तम् । ईङ्ख गतौ । तिरः सत इति प्राप्तनामनी । ये महाबलत्वात् समुद्रे पर्वतक्षेपणसमर्थाः । अथवा पर्वतान् मेघान् पृथिवीं प्रति क्षिपन्ति वर्षार्थम् । समुद्रः पार्थिवो हि । तस्मात् पृथिव्येव लक्ष्यते । तैर्मरुद्भिः ॥ ७

आ ये त॒न्वन्ति॑ र॒श्मिभि॑स्ति॒रः स॑मु॒द्रमोज॑सा ।
म॒रुद्भि॑रग्न॒ आ ग॑हि ॥ ८

ये आतन्वन्ति स्वतेजोभिः प्राप्ता अन्तरिक्षं पार्थिवं वा । स्वबलेन च व्याप्नुवन्ति । तैर्मरुद्भिः ॥ ८

अ॒भि त्वा॑ पू॒र्वपी॑तये सृ॒जामि॑ सो॒म्यं मधु॑ ।
म॒रुद्भि॑रग्न॒ आ ग॑हि ॥ ९

अभिरभागे (पा. १. ४. ९१) । त्वां प्रति पूर्वकालप्रवृत्ताय सोमपानाय उत्सृजामि ददामि । अनादिकालप्रवृत्तं यत् पानं तदर्थम् । सोममयं मधु । द्रवत्वसामान्यात् मृष्टत्वाच्च सोमरसः मधु इत्युच्यते । तस्मात् तैर्मरुद्भिः ॥ ९

वलभीविनिवास्येतामृगर्थागमसंहृतिम् ।
भर्तृध्रुवसुतश्चक्रे स्कन्दस्वामी यथामति ॥

प्रथमे प्रथमोऽध्यायः

द्वितीयोऽध्यायः ।

अयं देवाय जन्मने स्तोमो विप्रेभिरासया । १
अकारि रत्नधातमः ॥

आर्भवं प्रथमं सूक्तम् ।

ऋभुर्विभ्वा च वाजश्च त्रयः पुत्राः सुधन्वनः ।

ते रथकारा बभूवुः । अतिशयवद्भिः कर्मभिः देवत्वमीयुः । तेऽत्र साहचर्यात् अन्यतमवचनेनापि सर्वे अभिधीयन्ते । जन्मने इति भूते मनिः । ङे भ्यसि । देवेभ्यो जातेभ्यः ये ऋभवो मनुष्याः सन्तः कर्मकौशलात् देवा जाताः तेभ्यः । स्तुतिः मेधाविभिरस्माभिः ऋग्लक्षणया वाचा ।

मुखमासा मानवा (?) ।

इति आसात्र वाचि । आसा उपासना वा । स्तुतिपरिचर्ययोर्हेत्वोः अकारि । धनानामतिशयेन दाता । ये नो धनानि दास्यन्ति आसातुष्टाः ॥ १

य इन्द्राय वचोयुजा ततक्षुर्मनसा हरी ।
शमीभिर्यज्ञमाशत ॥ २

ये इन्द्रार्थं वचनमात्रयोगिनावश्वौ ध्यानमात्रेण चक्रुः । तक्ष करणे । एकचमसेन चतुरश्चमसान् कृत्वा शमिनः तैर्यज्ञमाप्नुवन् । यज्ञियत्वं प्राप्ता इत्यर्थः । तद्वक्ष्यति—

एकं चमसं चतुरः कृणोतन । ऋ वे. १. १६१. २.

इति ॥ २

तक्षन्नासत्याभ्यां परिज्मानं सुखं रथम् ।
तक्षन्धेनुं सबर्दुघाम् ॥ ३

ये च अश्व्यर्थाय सर्वतोगामिनं सुखं रथं अकुर्वन् । परिः सर्वस्मिन् । अज गतौ । ये च बृहस्पतये अमृतस्य दोग्ध्रीं धेनुमकुर्वन् ।

पयः क्षीरं सबः पक्वम् ॥

बृहस्पतिर्विश्वरूपाम् । ऋ. वे. १. १६१. ६.

इत्यत्र तस्य तत्संबन्धात् । विश्वरूपाव्यपदेशस्य च—

रथं ये चक्रुः सुवृतम् । ऋ. वे. ४, ३३. ९.

इत्यत्र धेन्वा दृष्टत्वाच्च ॥ ३

युवाना पितरा पुनः सत्यमन्त्रा ऋजूयवः ।
ऋभवो विष्ट्यक्रत ॥ ४

ये च युवानौ आत्मीयौ पितरौ पुनः सत्यवचनाः ऋजुकामाः ऋभवः कर्मणा अकुर्वन् । कर्म विष्ट्वी इति वकारलोपः छान्दसः । टार्थे सुः ॥ ४

सं वो मदासो अग्मतेन्द्रेण च मरुत्वता ।
आदित्येभिश्च राजभिः ॥ ५

युष्माकं मदाः संगच्छन्ते । सोममत्ता यूयं संगच्छध्वं इत्यर्थः । तैः मरुत्सहितेन इन्द्रेण आदित्यैः दीप्तैश्च ॥ ५

उत त्यं चमसं नवं त्वष्टुर्देवस्य निष्कृतम् ।
अकर्त चतुरः पुनः ॥ ६

उत अपि च तं चमसं अजीर्णं त्वष्टुर्देवस्य संस्कृतम् । निः समि । परिनिष्ठितं सन्तमित्यर्थः ।

एकं चमसं चतुरः कृणोतन । ऋ. वे. १. १०१. २.

इति देवसन्देशेन अग्नेर्वाचा कृतवन्तः स्थ । चतुरः चमसान् पुनः ॥ ६

ते नो रत्नानि धत्तन त्रिरा साप्तानि सुन्वते ।
एकमेकं सुशस्तिभिः ॥ ७

य ईदृशाः स्थ ते अस्माकं साप्तानि रत्नानि दत्त । मा सकृदेव । पञ्चदशतौ वर्गे वा (पा. ५. १ ६०.) सप्तनोऽच्छन्दसि (पा. ५. १. ६१.) इति साप्ताद्युदात्तत्वं च छान्दसम् ।

छत्रं रथो मणिर्भार्या निधिरश्वो गजस्तथा ।
एतानि सप्तरत्नानि पूर्वेषां चक्रवर्तिनाम् ॥

अथवा रत्नं धनम् । सुवर्णरजतमाणिक्य मौक्तिकादीनि त्रिरावृत्तानि । एकविंशति सुवर्णादिधनप्रकारं दत्त इत्यर्थः । द्विस्त्रिश्चतुरिति कृत्वोऽर्थे (पा. ८. ३. ४३) आङ्ग योग्या वृत्तक्रिया । सुन्वते यजमानाय । येषामेकमेकं प्रशंसादिभिर्युक्तम् । निर्धारणषष्ठीं आनयति एकमेकमिति । अत्यन्तोत्कृष्टमित्यर्थः ॥ ७

अधारयन्त वह्नयोऽभजन्त सुकृत्यया ।
भागं देवेषु यज्ञियम् ॥ ८

कालान्तरेऽप्यात्मनः स्थिरीकुर्वन्तः । वोढारः सर्वकर्मणां ऋभवः सेवितवन्तः । इदानीं लब्धवन्तः कालान्तरे च स्थिरीकृतवन्तः एकचमसचतुष्करणादिकया क्रियया शोभनया । भागं देवानां मध्ये हविर्भागम् । वह्नयः हविर्वोढारः ऋत्विजः वा । आ प्रदानात् आधारयन्त । शोभनं संस्कृतं हविर्भागं ऋभूणां देवानां यज्ञार्हम् । आमि सुप् ॥ ८

---

इहेन्द्राग्नी उप ह्वये तयोरित्स्तोममुश्मसि ।
ता सोमं सोमपातमा ॥ १

ततोऽनन्तरमैन्द्राग्नम् ।

इह यज्ञे इन्द्राग्नी उपह्वये । इत् यस्मात् तयोः स्तुतिं कामयामहे । कर्तुमित्थं तौ सोमं-पिबेताम् । अतिशयेन सोमस्य पातारौ ॥ १

ता यज्ञेषु प्र शंसतेन्द्राग्नी शुंभता नरः ।
ता गायत्रेषु गायत ॥ २

तौ प्रकृतौ यज्ञेषु प्रकर्षेण ऋग्लक्षणाभिः शस्त्रस्तुतिभिः स्तुतौ इन्द्राग्नी शोभ-ध्वम् । मनुष्या ऋत्विजः । ऋत्विक्त्वादेव ते अस्तुवन् । शोभन्ते न तूष्णीमासीनाः ।

दाता राधांसि शुंभसि । ऋ. वे. १. १२. ८.

इत्यत्र दानार्थत्वात् अत्राप्येवं वा । दत्त च ताभ्यां सोमम् । तावेव गायत्रेषु गीयन्ते । शसि वा सुप् । गायत्राणि सामानि गायत । भिसि वा सुप् । सामभिः स्तोत्र-लक्षणैः स्तुत ॥ २

ता मित्रस्य प्रशस्तय इन्द्राग्नी ता हवामहे ।
सोमपा सोमपीतये ॥ ३

मित्रो देवतामात्रोपलक्षणार्थः । तौ देवानां प्रशस्तये । होतृत्वादग्निराहुतो देवान् स्तोष्यतीत्येवमर्थम् । इन्द्राग्नी हवामहे । तौ सोमपौ सोमपानार्थं च हवामहे । उभयवाक्यां इयम् ॥ ३

उग्रा सन्ता हवामह उपेदं सवनं सुतम् ।

इन्द्राग्नी एह गच्छताम् ॥ ४

उग्रौ शत्रूणामुपरि सन्तौ । सदिति प्रशंसायाम् । प्रशस्तौ । उपः कर्मप्रवचनीयः प्रतौ । इमं यज्ञं अभिषुतं सोमं प्रति च । सूयते तदिति सोमलक्षणं हविः । तत्प्रतीति वा । कस्मात् । अतीतपदचतुष्टयं पुनरपि पठ्यते । अर्थभेदात् । स्वार्थ एवोपः तत्र । अत्र पुनः प्रत्यर्थे । इदं सवनमिति च सप्तम्यर्थे तत्र । द्वितीयार्थे अत्र । इह पुनःइन्द्राग्नी एह गच्छतां इति क्रियापदस्य व्यवहितत्वाच्च । पदकाराभिप्रायः पर्येष्यः ॥ ४

ता महान्ता सदस्पती इन्द्राग्नी रक्ष उब्जतम् ।

अप्रजाः सन्त्वत्रिणः ॥ ५

यौ युवां महान्तौ सदसस्पती तौ हे इन्द्राग्नी रक्षांसि हतम् । अस्मन्न्यग्भूतानि कुरुतमिति वा । उब्ज न्यग्भावे हनने च । प्रजावर्जिताश्च सन्तु भक्षयितारः । अद भक्षणे । तृन् च इनिः च । अस्मद्धिंसितारः सन्ततिविच्छिन्नाः सन्तु ॥ ५

तेन सत्येन जागृतमधि प्रचेतुने पदे ।

इन्द्राग्नी शर्म यच्छतम् ॥ ६

ये न अन्येषामपि स्तोतृणां यष्टृणां जागृथः तेन अविसंवादिना स्तोत्रेण स्वसामर्थ्येन वा ममापि जागृतम् । सर्वार्थेष्वप्रमत्तौ भवतम् । सर्वस्य अधि उपरि । प्रकर्षज्ञापनत्वादादित्यमण्डलाख्ये स्वर्गाख्ये वा स्थाने । हे इन्द्राग्नी स्थानं गृहं वा दत्तम् । मम प्रज्ञापनपदप्रापणाय अप्रमत्तौ भवतं इति वा ॥ ६

---

प्रातर्युजा वि बोधयाश्विनावेह गच्छताम् ।

अस्य सोमस्य पीतये ॥ १

तृतीयस्यादिराश्विनः ।

प्रातः यौ अश्विनौ गृह्ययोगेन युज्येते तौ विबोधयेति अन्तरात्मानं प्रेष्यति । अग्निं वा होतृत्वात् । अस्य यजमानस्य यज्ञे गन्तव्यं इति ज्ञापय । विबोधितौ च अश्विनौ इह यज्ञे आगच्छताम् । अस्य आश्विनग्रहाख्यस्य सोमस्य पानाय । १

या सुरथा रथीतमोभा देवा दिविस्पृशा ।
अश्विना ता हवामहे ॥　　　२

यौ सुरथौ अतिशयेन सारथी च उभौ देवौ दिवि गन्तारौ तौ अश्विनौ हवामहे ॥　　　२

या वां कशा मधुमत्यश्विना सूनृतावती ।
तया यज्ञं मिमिक्षतम् ॥　　　३

या वाम् ।

अश्वाजनी कशा चोदः :

इति तोत्रनाम । युवयोः तोत्रौ उदकवती शब्दकारिणी च गर्जित्री च तया अस्मद्यज्ञं गच्छतम् । म्यक्ष गतौ । कशा वाग्वा । या वां वाक् गर्जितलक्षणा जलवती अन्नवती च । सूनृता अन्नं । अस्मिन्पक्षे । न वाक् । सस्यानां जनयित्री । सूनृतं प्रियं वा । श्रवणसुखा । यज्ञं सिञ्चतम् । मिह सेचने । वर्षतम् ॥　　　३

नहि वामस्ति दूरके यत्रा रथेन गच्छथः ।
अश्विना सोमिनो गृहम् ॥　　　४

नहि वां दूरमस्ति दूरेऽपि यत्र रथेन गच्छथः । रथवेगात् शीघ्रमेव गच्छथः । अश्विनौ सोमवतो यष्टुर्गृहम् ॥　　　४

हिरण्यपाणिमूतये सवितारमुप ह्वये ।
स चेत्ता देवता पदम् ॥　　　५

पराश्चतस्रः सावित्र्यः ।

हिरण्मयौ प्रतिदधुः । तस्मात् हिरण्यपाणिरिति स्तुतः (कौ. ब्रा. ६. १३; गो. ब्रा. उ. १.२) इति । तं हिरण्यपाणिं सवितारं तर्पणाय पालनाय वा उपह्वये । तस्मात् स चेत्ता । चिती संज्ञाने । देवतानां स्थानम् । आमि स्तुः । अथवा स एव चेत्ता च देवता च स्थानं च आश्रयो यष्टृणाम् ॥　　　५

अपां नपातमवसे सवितारमुप स्तुहि ।
तस्य व्रतान्युश्मसि ॥　　　६

अपां पुत्रम् । सवितुरुदयो हि जन्म । तच्च साक्षादद्भ्यः । अद्भ्यो वा एष प्रातरुदेति अपः सायं प्रविशति । (ऐ. ब्रा. ४. २०. १४) इति श्रुतेः । अथवा अद्भ्यो

वैद्युतोऽग्निः । अग्नेर्वा आदित्यो जायते इति पौत्रम् । अथवा आपो वा इदमग्र आसन् । अद्भ्यः प्रजापतिरजायत प्रजापतेः सविता । तेन वा । अपां पौत्रं तर्पणपालनाभ्यां सवितारमुपस्तुहि । इति आत्मा अन्तरात्मानं प्रेष्यति । तस्य यागाख्यानि कर्माणि सर्वे वयं कामया महे कर्तुम् । ६

विभक्तारं हवामहे वसोश्चित्रस्य राधसः ।
सवितारं नृचक्षसम् ॥ ७

विभक्तारं यस्य यावद्योग्यं तावत्तस्य प्रदातारं हवामहे । धनस्य भजनीयस्य सिद्धिकरस्य । सवितारं मनुष्याणां द्रष्टारं शुभाशुभानां कर्मणां प्रत्यवेक्षितारम् ॥ ७

सखाय आ नि षीदत सविता स्तोम्यो नु नः ।
दाता राधांसि शुंभति ॥ ८

हे सखायः अध्वर्यवः आनिषीदत । आ अर्वागर्थे । मत्समीपे दानार्थं निषीदत । यस्मात् सविता स्तोतव्यः क्षिप्रमस्माकम् । यस्मात् दाता सविता धनानि ददाति । अथवा दाता यजमानः सोमलक्षणानि धनानि संस्कारैः शोभितवान् । अभिषवणादिभिः संस्कृतवान् । अन्तर्णीतण्यर्थश्च भूते लट् ॥ ८

अग्ने पत्नीरिहा वह देवानामुशतीरुप ।
त्वष्टारं सोमपीतये ॥ ९

एकाग्नेः ।

हे अग्ने देवानां उशतीः पत्नीः इह कर्मणि उपावह । देवान् यज्ञागमनं वा । उश कामने । त्वष्टारं च सोमपानार्थम् । वोढुरग्नेरेवात्र प्राधान्यं न देवपत्नीनां त्वष्टुश्च । तस्मादाग्नेयत्वमृचः ॥ ९

आ ग्ना अग्न इहावसे होत्रां यविष्ठ भारतीम् ।
वरूत्रीं धिषणां वह ॥ १०

ह्रेतु देवीनाम् ।

हे अग्ने स्त्रिय आवह ।

स्त्रियो योषा योषणा ग्ना ।

इति । इहकर्मणि तर्पणपालनार्थम् । हूयते असौ इति होत्रा अग्नेः दीप्तिः पत्नी वा । तां च । हे युवतम ।

नक्षत्रो भरतो ज्योतिरादित्यः।

तस्य भाः पत्नी वा भारती। तां च वरणीयां च वाचम्। धिषणेति वाक्। एता आवह ॥ १०

अभि नो देवीरवसा महः शर्मणा नृपत्नीः।
अच्छिन्नपत्राः सचन्ताम् ॥ ११

अभिसचन्तां अस्मान् होत्रा भारती धिषणा देव्यः तर्पणपालनाभ्यां महता गृहेण सुखेन वा। टार्थे ङस्। महता। नरो देवाः तदाकारत्वात्। अग्न्यादित्ययज्ञानां पत्नीः होत्राभारतीवाचः। छिन्नं श्रान्तम्। पतत्यनेनेति पत्रं वाहनम्। अश्रान्तवाहनाः अभिसेवन्ताम्। अवश्च महच्छर्म च अस्माकं कुर्वन्तु। षच सेवायां गतौ च। अवसा च महता शर्मणा च अभिगच्छन्तु अस्मान् ॥ ११

इहेन्द्राणीमुप ह्वये वरुणानीं स्वस्तये।
अग्नायीं सोमपीतये ॥ १२

द्वादश्यां तिस्र इन्द्राणी वरुणान्यग्नाय्यः पृथक्।
स्तुताः।

इह कर्मणि इन्द्रवरुणाग्नीनां पत्नीरुपह्वये अविनाशाय आत्मनः सोमपानाय च। आगता अस्मान् रक्षिष्यन्ति सोमं च पास्यन्ति इत्येवमर्थम् ॥ १२

मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम्।
पिपृतां नो भरीमभिः ॥ १३

द्यावपृथिव्यौ द्वे ऋचौ।

महत्यौ द्यावापृथिव्यौ अस्माकं यज्ञं गच्छेताम्। म्यक्ष गतौ। पृ पालनपूरणयोः। छान्दसं ह्रस्वत्वं च। पूरयतां तर्पयतां अस्मान् भरणसमर्थैरन्नैः रसैश्च ॥ १३

तयोरिद्घृतवत्पयो विप्रा रिहन्ति धीतिभिः।
गन्धर्वस्य ध्रुवे पदे ॥ १४

द्यावापृथिव्योः क्षरणवदुदकं सर्वत्र विविधं प्राप्ताः मेधाविनो वा आदित्यरश्मयो वा स्वादयन्ति कर्मभिर्गमनाख्यैः। घृ क्षरणदीप्त्योः। रिह आस्वादने। गत्वा चन्द्रमसो नित्ये स्थाने। सुषुम्ना सूर्यरश्मिः। सात्र गौः। तां धारयतीति गन्धर्वः चन्द्रमाः।

अत्राह गोरमन्वत। ऋ. वे. १. ८४. १५.

इति। चन्द्रमण्डलाख्ये गत्वा समादयन्दि । या ह्येताः पूर्वपक्षे कलाख्याः चन्द्र मस्यः आगामिन्य आपो भवन्ति रश्मयः ता अपरपक्षे पिबन्ति। सोमोत्पत्याम्।

प्रथमां पिबते वह्निः।

इत्याद्युक्तत्वात् । तदेतदिहोच्यते । अन्यथा वा योजना । तयोरुपस्तरणाभि घरणघृतेन। तद्वविलक्षणं पयः। त एव मेधाविन ऋत्विजः स्तुवन्ति स्तुतिकर्मभिः इह स्तुतौ। सुपि वा भिस् । यागकर्मसु यज्ञस्य वेद्याम् । यज्ञो गन्धर्वः। गौर्वाक्। तस्या धारयिता। तस्य ध्रुवं पदं वेदिः। तत्र॥ १४

स्योना पृथिवि भवानृक्षरा निवेशनी।
यच्छा नः शर्म सप्रथः॥ १५

स्योनादिस्त्वेव पार्थिवा॥
स्योनं शातरम्॥

इति सुखे । हे पृथिवि सुखा भव । कण्टकवर्जिता निवेशनयोग्या च । देहि चास्मभ्यं सुखं गृहं वा सर्वतः पृथु।

ऋक्षरः कण्टकम्॥ १५

अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे।
पृथिव्याः सप्त धामभिः॥ १६

अतो देवा इति दैवी।

अतो देवा अस्मानवन्तु यतः विष्णुः विक्रान्तवान् । भूम्या अवयवभूतेभ्यः सप्तभ्यः स्थानेभ्यः द्वीपाख्येभ्यः । पञ्चम्यां जस्भिसौ । धाम स्थानम्। सर्वत उपजायमाना अस्मदापद अपनयन्तु इत्यर्थः । केचित्त ङसौ पृथिव्या इति व्याचक्षते। भिसि जस् इति च। यस्याः पृथिव्याः विचक्रमे सप्तभिः छन्दोभि. वायुस्कन्धैर्वा अत अवन्तु! पञ्चम्यास्तासिल्। धाम छन्दः॥ १६

इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्।
समूळ्हमस्य पांसुरे॥ १७

सूक्तशेषस्तु वैष्णवः।

विष्णुस्तु भगवानस्मद्भर्ता वासुदेवः । स वामनो छद्मना महाबलिं बबन्ध। तत्काले प्रपञ्चं विक्रान्तः त्रिस्थानभेदेन निहितवान् ! पदसात्मीयं पदं त्रिषु स्थानेषु

कृतवान् । भुवि खे दिवि च इत्येके । समारोहणे विष्णुपदे गयशिरसि इत्यन्ये । निर्गुणस्य परब्रह्मणो गुणवर्णने विभ्रमन्ति लोकाः । न तच्चित्रम् । तच्च त्रिविधम् । सम्यक् गूढं सम्यक्प्रतिष्ठापितं अस्य विष्णोः पदं पांसुमतीव । पांसवो यस्मिन् सन्तीति मतुपि रप्रत्ययः । लुप्तोपमं च । यथा पांसुमति देशे सुप्रतिष्ठापितं तद्वत् । अस्य स्वीयं वा पांसुः । पृथिवी वा समारोहणं वा । तत्र यत् पदं विष्णोरस्मद्भर्तुः तत्समूढम् । विष्णुरादित्यो वा । इदं सर्वं अहरहर्विचक्रमे । त्रेधा उदयगिरौ नभोमध्ये चास्तगिरौ च त्रिविधं सम्यक् प्रतिष्ठापितं अस्य पदं पांसुरूपदेशे । इति । केचित्तु संपूर्वस्य मुहे रूपमिति । समूढं छन्नम् । न दृश्यते । विष्णुरेव आदित्यरूपेण लोकान् प्रकाशयति । तस्य त्रैविध्यं अन्यथा वा । अग्निवैद्युतादित्यात्मना भुवि खे दिवि । एकमेवेदं ज्योतिस्त्रेधा विभक्तं इति भूर्धन्वान् वक्ष्यति तत् ।

तमू अकृण्वं त्रेधा । ऋ. वे. १०. ८८. १०.

इति । तत्र यत् खे वैद्युतस्य पदं तच्छन्नं नित्यं न दृश्यते ॥ १७

त्रीणि॑ प॒दा वि च॑क्रमे॒ विष्णु॑र्गो॒पा अदा॑भ्यः ।
अतो॒ धर्मा॑णि धा॒रय॑न् ॥ १८

त्रीणि पदानि विक्रान्तवान् विष्णुर्गोपयिता कृत्स्नस्य जगतः अहिंस्यः । अतः पार्थिवाल्लोकात् कर्माणि । सर्वाणि धारयितव्यानि इति वा । आत्मनि धारयन् । धर्म कर्मणि धारयितव्ये च । सर्वाश्रयो हि भगवानस्मद्भर्ता श्रीविष्णुः ॥ १८

विष्णो॒ः कर्मा॑णि पश्यत॒ यतो॑ व्र॒तानि॑ पस्प॒शे ।
इन्द्र॑स्य॒ युज्यः॒ सखा॑ ॥ १९

तस्य विष्णोरद्भुतकर्माणि पश्यत । यूयमृत्विजः ऋषयो वा । यत इति आद्यादित्वात् तस् भिसि । यैर्व्रतानि प्रवर्त्यन्ते तानि इति हविर्लक्षणानि अन्नानि । कर्माणि वा यागाख्यानि । तानि च आत्मनि प्रतिबद्धवान् । आत्मदेवत्यानि कृतवान् । अथवा बलिप्रभृतीनां दानवानां व्रतानि प्रतिबद्धवानित्यर्थः । इन्द्रस्य योग्यः सखा ॥ १९

तद्विष्णो॑ः पर॒मं प॒दं सदा॑ पश्यन्ति सू॒रयः॑ ।
दि॒वीव॒ चक्षु॒रात॑तम् ॥ २०

तद्विष्णोः परमं पदं सर्वदा ध्यायन्ति विद्वांसः स्तोतारो वा ।

चक्षुःख्यानं प्रकाशनम् ।

आदित्यमण्डलं यथा ततं तद्वत् । विष्णुरेव वा आदित्यः । विस्तृते दिवि यथा आदित्यमण्डलाख्यं विष्णोः परमं पदं पश्यन्ति इत्यर्थः । अथवा चक्षुष इन्द्रियत्वात् एवं योज्यम् । विष्णोरुत्कृष्टं पदं सदा पश्यन्ति सूरयः । यथा च दिवि एवं विष्णावपि सर्वमनुष्याणां चक्षुराततम् । दिविष्ठः सूर्य एकः जलेऽनन्तः तद्वदेकः सन्नपि प्रपञ्चेणानेक इव ॥ २०

तद्विप्रा॑सो विप॒न्यवो॑ जागृ॒वांस॒: समि॑न्धते ।
विष्णो॒र्यत्प॑र॒मं प॒दम् ॥ २१

तत् मेधाविनो विविधस्तुतिकामाः । पन स्तुतौ । थुः कामे । मतुपि वा । विस्तुतिमन्त इति वा । अप्रमाद्यन्तः स्तुतिभिः सम्यक् दीपयन्ति । विष्णोः परमं पदं यत् तत् ॥ २१

---

ती॒व्राः सोमा॑स॒ आ ग॑ह्याशीर्व॑न्तः सु॒ता इ॒मे ।
वायो॒ तान् प्रस्थि॑तान् पिब ॥ १

वायव्या ।

तीव्रं तिक्तरसं कटुरसं वा ।

रसा स्वाद्वम्ल लवणकटुतिक्तकषायकाः ।

कटुरसाः तिक्तरसा वा सोमाः । सोममिश्रणं दध्याशीः तद्वन्तः । सुता इमे । तदागहि वायो तान् प्रस्थितसंज्ञकानेतान् पिब ॥ १

उ॒भा दे॒वा दि॑वि॒स्पृशे॑न्द्रवा॒यू ह॑वामहे ।
अ॒स्य सोम॑स्य पी॒तये॑ ॥ २

द्व्योऽन्यस्त्वैन्द्रवायवः ।

स्पृश गतौ । उभौ दीप्तौ दातारौ वा द्युलोकं गन्तारौ इन्द्रवायू अस्य सोमस्य पानाय हवामहे ॥ २

इ॒न्द्र॒वा॒यू म॑नो॒जुवा॒ विप्रा॑ हवन्त ऊ॒तये॑ ।
स॒ह॒स्रा॒क्षा धि॒यस्पती॑ ॥ ३

तौ मनोवत् शीघ्रगामिनौ मेधाविनो यष्टारः स्तोतारश्च हवन्ते। सोमेन तर्पणाय पालनाय वा। इन्द्र एव सहस्राक्षः। नासत्यदस्राविव साहचर्यात् तौ सहस्राक्षौ। कर्मणः प्रज्ञाया वा पालयितारौ स्वामिनौ वा॥ ३

मित्रं वयं हवामहे वरुणं सोमपीतये।
जज्ञाना पूतदक्षसा॥ ४

तृचो मित्रावरुणाभ्याम्।

मित्रं वरुणं च वयं हवामहे सोमपानाय जायमानावेव शुद्धबलौ॥ ४

ऋतेन यावृतावृधावृतस्य ज्योतिषस्पती।
ता मित्रावरुणा हुवे॥ ५

ऋतेन उदकेन यज्ञेन वा यौ उदकस्य यज्ञस्य वा वर्धयितारौ। तयोश्च तेजसश्च पती। ऋ गतौ। सर्वत्र गतस्य रश्म्याख्यस्य ज्योतिषः पती। तौ मित्रावरुणौ हुवे। ५

वरुणः प्राविता भुवन्मित्रो विश्वाभिरूतिभिः।
करतां नः सुराधसः। ६

वरुणो मित्रश्च अस्माकं प्रकर्षेण रक्षितारौ भवतु। सर्वैः पालनैः कुरुतां अस्मान् सुधनाम्॥ ६

मरुत्वन्तं हवामह इन्द्रमा सोमपीतये।
सजूर्गणेन तृम्पतु॥ ७

तथेन्द्राय मरुत्वते।

मरुत्सहितमिन्द्रं सोमपानाय हवामहे। आ अर्वाचि वा। अर्वाक् हवामहे। संप्रीयमाणो मरुद्गणेन तृप्यतु। जुषी प्रीतिसेवनयोः॥ ७

इन्द्रज्येष्ठा मरुद्गणा देवासः पूषरातयः।
विश्वे मम श्रुता हवम्॥ ८

हे इन्द्रप्रधाना मरुद्गणाः सप्तसप्तका देवाः पूषरातयः सर्वे मे शृणुत आह्वानम्॥ ८

हत वृत्रं सुदानव इन्द्रेण सहसा युजा।
मा नो दुःशंस ईशत॥ ९

हत असुरं मेघमस्मच्छत्रुं वा शोभनदानाः मरुतः इन्द्रेण बलवता सहायेन। मा अस्माकं युष्मत्प्रमादेन क्रूराभिप्रायः ईशत। सहः अन्तर्णीतमतुप्। युक् सहायः। दुराशंसः तद्वान् पुरुषः मा अस्मदीशो भवेत्॥ ९

विश्वा॑न्दे॒वान् ह॑वामहे म॒रुतः॒ सोम॑पीतये।
उ॒ग्रा हि पृश्नि॑मातरः॥ १०

तृचो विश्वेषां देवानाम्।

अत्र च आद्यः पादो विश्वलिङ्गः। शिष्टं मारुतम्। वक्ष्यति हि—बहुशस्तु वैश्वदेवेषु सन्त्यृचः पादार्धर्चाः। द्वैपदास्त्रैपदाश्च द्विप्रधाना, अपिचैकप्रधाना बहुप्रधाना अपि वैश्वदेवे। इति। विश्वान् देवान् हवामहे। एतावदेकवाक्यम्। परं तु वाक्यान्तरम्। मरुतां विश्वेषां च विशेषणविशेष्यत्वं न विद्यते। न समुच्चयं च। तस्मात् साकांक्षत्वात् पूर्वस्माद्वाक्यादध्याहार्यं मरुतो हवामहे इति वक्तव्यम्। सोमपानाय। यस्माच्छत्रूणां अप्रसह्याः। दिवः पुत्राः मरुतः। पृश्निर्द्यौः। सा माता येषां ते पृश्निमातरो मरुतः॥ १०

जय॑तामिव तन्य॒तुर्म॒रुता॑मेति धृ॒ष्णुया।
यच्छुभं॑ या॒थना॑ नरः॥ ११

मरुतां गर्जितशब्दः संग्रामं जयतां राज्ञां तन्यतुः गर्जितशब्द इव श्रोत्रदेशं एति। धृष्णुः। सौ याच्। सुपाम् (पा. ७. १. ३९.) इति सूत्रतः। ताच्छील्यादिषु इष्णुच् (पा. ३. २. १३५-१३७). धृष्णुरभिभविता महान् गम्भीरश्च। यदा मेघस्थमुदकं प्रति गच्छथ तदा तन्यतुः शुभं शोभनं वा। यदा शोभनं गच्छथ। हे मनुष्याकाराः॥ ११

ह॒स्का॒राद्वि॒द्युत॒स्पर्य॒तो॑ जा॒ता अ॑वन्तु नः।
म॒रुतो॑ मृळयन्तु नः॥ १२

यदा दुर्भिक्षार्तस्य पुंसः आर्तिप्रतिपत्त्यर्थं हश्शब्दोच्चारणम्। स हस्कारः। तदा विद्युतः परि विद्युतो जाताः। जन्म अत्र व्यवस्थाने। विद्युतमधिष्ठाय वृष्टिप्रदानेन दुर्भिक्षान् दूरीकृत्य अस्मानवन्तु। यथा च वयं हस्कारं त्यक्त्वा प्रमोदलक्षणहन्तशब्दमुच्चारयामः तथा कुर्वन्तु। के मरुतः। सुखयन्तु च अस्मान्॥ १२

आ पू॑षन् चि॒त्रब॑र्हिष॒माघृ॑णे ध॒रुणं॑ दि॒वः।
आजा॑ न॒ष्टं यथा॑ प॒शुम्॥ १३

पूषण आघृणये तृचः ।

हे पूषन् आघृणे । घृ क्षरणदीप्त्योः । क्षरिता घृणिः । दध्ना पूर्णो दृतिः । सा कक्षे रथे वा यस्य स आघृणिः । वक्ष्यति हि—

दृतेरिव तेऽवृकमस्तु सख्यम् । ऋ. वे. ६. ४८. १८.

इति । तस्य संबोधनम् । दीप्तिर्वा घृणिः । सा आगता यस्य स वा । उपजातदीप्तिः । चित्रं विचित्रं पूज्यं वा बर्हिर्यस्य सोमस्य तं चित्रबर्हिषम् । दिवः । मञ्चाः क्रोशन्तीव तत्स्थान् प्रवाह । द्युनिवासिनां देवानां धारयितारम् । आज आज । आङो द्वित्वात् तत्संबद्धक्रियाया अपि द्वित्वम् । धरुणमुदकं वा । चित्रबर्हिषं च सोमं उदकं च द्युलोकात् पुनःपुनः अस्मदर्थमागमय । अजिरत्र अन्तर्णीतण्यर्थः । यथा नष्टं अजं गां वा त्वमेवागमयसि पशूनां रक्षितृत्वात् । लौकिकः पशुपालो वा । तद्वत्॥ १३

पूषा राजा॑नमाघृ॑णिरप॑गूळ्हं॒ गुहा॑ हि॒तम् ।
अवि॑न्दच्चि॒त्रब॑र्हिषम् ॥ १४

अत्रेतिहासः—असुराः सोमं राजानं दीयमानमग्नेर्हस्तात् अपहृत्य गुहायां न्यदधुः । तं पर्येषमाणा अन्ये देवा न अविन्दन् । पूषा त्वविन्दत् । स तं गृहीत्वा दिवमानयत् । इति अस्यां उच्यते । पूषा राजानमाघृणिराच्छादितं गुहायां निहितं असुरैः लब्धवान् । विचित्रपूज्यबर्हिषम् । डेलुक् ॥ १४

उ॒तो स मह्य॒मिन्दु॑भिः॒ षड्यु॒क्ताँ अ॑नु॒सेषि॑धत् ।
गोभि॒र्यवं॒ न च॑र्कृषत् ॥ १५

उतशब्दस्य उञा सह एकादेशः । उत उ । उ इति उञ्द्वयम् । नानावत् सह कृतैकादेशः ।

एषो उषाः । ऋ. वे. १. ४६. १.

सो चित् । ऋ. वे. १. १९१. ११.

चत्तो इतः । ऋ. वे. १०. १५५. २.

इति । यथाख्यातेन सह ।

जनिष्ठो अपः । ऋ. वे. १०. १५. १०.

उपसर्गेण । प्रो अपो ओ उपो । निपातेन । अथो नो उतो मो इति । सर्वः पादपूरणः । अपृथगर्थत्वाच्च कृतैकादेशः । उञ् पदकारेण एकीकृत्यैव पठितः इति करणोपादानाच्च प्रगृह्यतां दर्शयता दर्शितो बोद्धव्यः । इति । स पूषा मह्यमिन्दून्

शसि भिस् । सोमान् षड्तून् युक्तान् संवत्सरगमने नियुक्तान् । तस्य गमयितॄन् । अथवा युक्तान् यान् यान् यो यादृशः साधयितव्यः तं तादृशमेव आनुपूर्व्येण साधयत् । शत्रन्तमेतत् न आख्यातं अनुदात्तत्वात् । गोभिः । गोशब्दः अत्र बलीवर्देषु वर्तते । यवशब्दः धान्यमात्रोपलक्षणार्थः । यथा कश्चित् कर्षकः बलीवर्दैः यवादिधान्यं कुर्यात् । तत्पुनः पुनः करोतु । करोतिर्यङ्लुगन्तः न कृषतिः । सोमयागान् उपनयतु स मह्यमिन्द्रान् ऋतूंश्च अनुसाधयन् ॥ १५

अम्बयो यन्त्यध्वभिर्जामयो अध्वरीयताम् ।

पृञ्चतीर्मधुना पयः ॥ १६

अर्धाष्टमा अपां ज्ञेयाः ।

अम्बिरम्बा मातृभूता आपः प्रतिगच्छन्ति यज्ञं नियतैर्मार्गैः । अध्वरीयतां जामयः यज्ञकामानां भगिनीस्थानीयाश्च । संपर्चयन्त्यः वसतीवर्येकधानाख्येन मधुना उदकेन सोमलक्षणमुदकम् ॥ १६

अमूर्या उप सूर्ये याभिर्वा सूर्यः सह ।

ता नो हिन्वन्त्वध्वरम् ॥ १७

अमूः नः अध्वरं हिन्वन्तु । याः सूर्यसमीपे याभिश्च सूर्यः सह । सूर्येणैकस्थाना आदित्यमण्डलस्थाः ताः अस्माकं यज्ञं गच्छन्तु वर्धयन्तु वा । हि गतौ वृद्धौ च ॥ १७

अपो देवीरुप ह्वये यत्र गावः पिबन्ति नः ।

सिन्धुभ्यः कर्त्वं हविः ॥ १८

अपो देवीः अहं उपह्वये । याः गावः पिबन्ति नः । या आपः । शसि त्रल् । स्यन्दन्तीभ्यः अद्भ्य कर्तव्यं हविः । तासां अर्थाय । कृत्यार्थे । पञ्चमी भ्यस् वा । स्यन्दन्तीभ्यः वसतीवर्येकधानाभ्यः एकदेशं आदाय कर्तव्यं सोमलक्षणं हविः ॥ १८

अप्स्व१न्तरमृतमप्सु भेषजमपामुत प्रशस्तये ।

देवा भवत वाजिनः ॥ १९

अप्सु अपांमध्ये अमृतम् । अप्स्वेव भेषजं व्याध्यपनयकं सुखम् । तत् ज्ञात्वा तासामपामेव प्रशंसनाय हे देवा यूयं हविर्लक्षणान्नेन तद्वन्तो भवत । अतः स्तोतुं हविरुपकल्पयत ।

वाजो वर्चः क्षु कीलालम् ।

इत्यन्नम् । भेषजं व्याध्यपनोदकत्वात् सुखं अपठितमपि ॥ १९

अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा ।
अग्निं च विश्वशंभुवमापश्च विश्वभेषजीः ॥ २०

अप्सु अपां मध्ये सर्वाणि भेषजानि इति मह्यं सोमः कथितवान् । वैद्युताख्यमग्निं च सर्वप्राणिनां सुखस्य भावयितारं विश्वेषां सुखोत्पादयितारम् । अन्तर्णीतण्यर्थो भूः । स्वयमप्यापः सर्वस्य भेषजभूताः ॥ २०

आपः पृणीत भेषजं वरूथं तन्वे३ मम ।
ज्योक् च सूर्यं दृशे । २१

आपः पालयत आत्मान्तर्गतं भेषजं वरणीयं शरीरार्थाय मच्छरीरं भेषजयितुम् । पॄ पालनपूरणयोः । पृण दाने । हे आपः मम तन्वे वरणीयं भेषजं दत्त इति वा ।

पृणीयादिन्नाधमानाय । ऋ. वे. १०. ११८. ५.

इत्यत्रवत् दानार्थः पृणातिः । ज्योक् चिरं सूर्यं द्रष्टुं चक्षुर्दत्त । तुमर्थे । दृशे विख्ये च (पा. ३. ४. ११) इति । चक्षुर्लाभात् सूर्यः चिरं दृश्यते । चिरं द्रष्टुं सूर्यं पृणीत इति वा । चक्षुःकारणं सूर्यः । तल्लाभात् चक्षुषोऽपि लाभः । एतदुक्तं भवति । शरीरभेषजं च मे दत्त । अविकलेन्द्रियतां चिरं सूर्यस्य संदर्शनाय इति ॥ २१

इदमापः प्र वहत यत्किं च दुरितं मयि ।
यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम् ॥ २२

आपः प्रकर्षेण अपनयत । यत्किंच कायिकं दुरितं मयि तदपनयत अन्यत्र कुत्रचित् । यच्च अहं अद्रोग्धव्यं मनसा द्रुग्धवान् तन्मानसं पापं च । यच्च आक्रुष्टावान् वाचिकमप्यनृतं अपनयत । आपो मदीयमनृतवचनजनितं च ॥ २२

आपो अद्यान्वचारिषं रसेन समगस्महि ।
पयस्वानग्न आ गहि तं मा सं सृज वर्चसा ॥ २३

आपः । शसि जस् । अपः अद्याहं आगतवान् । यदपां माहात्म्यं तत् प्रकाशितम् । अतो यां यां देवतां निराह तस्यास्तस्याः तद्भाव्यमनुभवन्ति इति स्मरणात् । तद्भाव्यप्रतिपत्तेः अपां रसेन संगता वयम् ।

अध्यर्धान्त्याग्निदेवता ।

सूक्तस्य च ऋषेश्च अध्यर्धा अग्निदेवता । पयस्वान् हविष्मान् । मया उपकल्पितहविष्कः सन् इति वा । मह्यं दातुं इति वा । हे अग्ने आगच्छ । योऽहं हविर्दाता स्तोता वा तं मां दीप्त्या अन्नेन वा संबन्धय । वर्चो मह्यं देहि इत्यर्थः ॥ २३

सं माग्ने वर्चसा सृज सं प्रजया समायुषा ।
विद्युर्मे अस्य देवा इन्द्रो विद्यात्सह ऋषिभिः ॥ २४

हे अग्ने प्रजया आयुषा वर्चसा च संसृज । समो बहुत्वात् सृजेरपि । दीप्त्या अन्नेन वा संबन्धय । पुत्रेण च संबन्धय जीवितेन च संबन्धय । त्वत्प्रसादात् जीवाम च । जानीयुर्मम एतं कामं देवा मरुदादयः । इन्द्रश्च विद्यात् । ऋषयश्च विद्युः । ज्ञानेन चात्र करणं लक्ष्यते । कुर्यात् मम वर्चःप्रजायुषः इत्यर्थः । लोके हि यः प्रार्थनया कारयितुमिष्यते स उच्यते इदं जानीहि इति । अस्य इति अन्वादेशो वर्च आदीनां कामानाम् । अमिङस् च । देवान्तर्भूतस्य इन्द्रस्य पृथक्त्वं प्राधान्यात् । भगवतोऽग्नेः प्रसादात् विद्युः इति आग्नेयत्वाविरोधः । संमेति तिस्रो वैश्वदेवी प्राजापत्याग्नेयी च इत्येके ॥ २४



कस्य नूनं कतमस्यामृतानां मनामहे चारु देवस्य नाम ।
को नो मह्या अदितये पुनर्दात् पितरं च दृशेयं मातरं च ॥ १

कस्य नूनं शुनःशेप आजीगर्तिः ।
कस्य नूनं तु काण्याद्या ।

कः प्रजापतिः । ब्राह्मणेनोक्तमपि इतिहासं संक्षिप्यते । हरिश्चन्द्रो नारदोपदेशात् वरुणमनुसृत्य पुत्रं लब्ध्वा तत्स्नेहात् तं पञ्चवयस्कं तत्तत्प्रतिबन्धवाचा कालं यापयन् रोगार्तो बभूव । तदा अस्य पुत्रः अजीगर्तं याचयित्वा शुनःशेपमानाय्य वरुणमयाजयत । शुनःशेपस्तु आत्मानं नियोक्ष्यमाणं विशासिष्यमाणं च दृष्ट्वा देवता उपधावामि इति मन्यमानः कस्य नूनं इति अनुवाकमपश्यत् । इति । कस्य प्रजापतेः सर्वप्राणिनां सुखतमस्य ।

श्रुष्टी स्मत् कं जनुर्भद्रम् ।

इति सुखम् । देवानां मध्ये ।

देवा यजत्रा अमृताः ।

इति । निर्धारणे आम् । शोभनं देवस्य नाम स्तुमः । मन याञ्चायां इत्यस्य असंभवात् मन स्तुतौ इत्यस्य रूपं श्यन्विकरणस्य । मन्यामहे स्तुमः ।

चारु शोभनम् ।

कस्य नाम । नामवत एव स्तुतिः । स्तुतः सः अस्मभ्यं महते अदीनत्वाय पुनरायुर्ददातु । महददीनत्वं इति । अमि वा ङे । येन अहमेषां वशवर्तितामतीतः सन् पुनरपि महददीनत्वं गच्छामि इति वा । अदितिर्वाक् वा । महतीं वाचं पुनर्ददातु यथा अन्या देवताः अपि स्तुमः । किंच कस्य प्रसादादेव अहं पितरं मातरं च पश्येयम् । जीवितं एवानेन आशास्यते । जीवन् हि शक्नोति तौ द्रष्टुम् ॥ १

अ॒ग्नेर्व॒यं प्र॑थ॒मस्या॒मृता॑नां॒ मना॑महे॒ चारु॑ दे॒वस्य॒ नाम॑ ।

स नो॑ म॒ह्या अदि॑तये॒ पुन॑र्दात् पि॒तरं॑ च दृ॒शेयं॑ मा॒तरं॑ च ॥ २

तं प्रजापतिरुवाच । अग्निर्वै (ऐ. ब्रा. ३३. १६. ४) इति वाक्येनोक्तः सः अग्निमपससार अग्नेर्वयं इति । प्रथमस्य उत्कृष्टस्य । अमृतानां इत्यादि उक्तम् । अत्र च तुल्यार्थत्वात् पुनरध्ययने पदकाराभिप्रयः पर्येष्यः ॥ २

अ॒भि त्वा॑ देव सवित॒रीशा॑नं॒ वार्या॑णाम् ।

सदा॑व॒न्भा॒गमी॑महे ॥ ३

तमग्निरुवाच । सविवै (ऐ. ब्रा. ३३. १६. ५) इति वाक्येन स सवितारमुपससार अभि इति तृचेन ।

अभि त्वा सवितुस्तृचः ।

हे देव सवितः त्वां वरणीयानां ईश्वरं आयुरादीनां हे सदा अवन् मरणादिभ्यः सर्वदा प्राणिनां रक्षितः अंशं अभियाचामहे । आयुषो भागम् । तद्धि सर्वप्राणिनो भजन्ते इति । आयुर्वा तदंशं वा ईमहे । यः अन्यतमो भाग उच्यते ॥ ३

य॒श्चि॒द्धि त॑ इ॒त्था भगः॑ शशमा॒नः पु॒रा नि॒दः ।

अ॒द्वे॒षो हस्त॑यो॒र्द॒धे ॥ ४

हे सवितः यस्तव हस्तयोर्निहितः स इत्थभूतः । इत्था सत्ये । अविसंवादः । भगो भजनीयः शशमानः स्तुत्यः । शश स्तुतौ । कर्मणि कर्तृप्रत्ययश्च । स्तुत्यः अविद्यमानद्वेषः । न हि कस्यचित् प्राणिनः आयुः तदंशं वा द्वेष्टि । कदा पुनः आयुर्भागं आयुरेव वा अभियाचध्वे । पुरानिदः । अत्यन्तनिन्दितात् तिर्यक्पशुसदृशात् मरणात् पुरा । यावत् तिर्यक्पशुवत् अत्यन्तकुत्सितं विशस्यमाना म्रियामहे । निन्दितुर्विशसनार्थ एव वा । पुरा विशसनात् । विशसितुर्वा । यावन्न विशस्यामहे इत्यर्थः । एवमन्यथा वा अस्या अर्थयोजना पूर्वानपेक्षेण । इत्था अमुत्रार्थे । भगो धनम् । यत्तव अमुत्र स्वर्गे धनं तत् स्तुवन्नहं मन्निन्दितुः पूर्वं द्वेषवर्जित आत्मनो हस्तयोः धारयेयम् । मह्यं तत् दद्याः । यद्वृत्तेनासंबन्धात् छान्दसत्वान्निघाताभवः इति व्याख्येयम् ॥ ४

भर्गभक्तस्य ते वयमुदशेम तवावसा ।
मूर्धानं राय आरभे ॥ ५

भगो देवः तेनापि सेवितस्य । भजनीयेन हविषा स्तुत्या वा नृभिश्च सेवितस्य इति वा । त्वदीया वयमतोऽपि ऊर्ध्वमायुः प्राप्नुयाम । तव पालनहेतुना । त्वया अतो मरणाद्रक्षिताः सन्त इत्यर्थः । धनस्य मूर्धानं च प्राप्नुयाम । उत्कृष्टं च धनं उपभोगान् यागान् वा आरब्धुं उपभोक्तुं यष्टुं वा । यत्तु अस्या ऋचः भगदेवत्यत्वं शौनकेनोक्तं (बृ दे. ३. ९८) तत् भगस्योपसर्जनत्ववचनत्वात् । भगशब्दस्य ब्राह्मणे प्रत्यक्षत्वात् येन अभिप्रायेण उक्तं स पर्येष्यः ॥ ५

न हि ते क्षत्रं न सहो न मन्युं वयश्चनामी पतयन्त आपुः ।
नेमा आपो अनिमिषं चरन्तीर्न ये वातस्य प्रमिनन्त्यभ्वम् ॥ ६

तं सवितोवाच । वरुणाय वै (ऐ. ब्रा. ) इति सवरुणमुपससार अत उत्तराभिरेकत्रिंशद्भिः ।

परं शेषाश्च वारुणः ।

वरुणश्चात्र उक्तस्थान आदित्यः । तव क्षत्रं धनबलं वा सेनालक्षणम् । सेनामपि । सहः शारीरं बलमपि । नापि क्रोधम् । पक्षिणोऽप्यमीगच्छन्तः न प्राप्नुवन्ति ।

मार्ताण्ड शकुना वयः ।

इति । चन अपौ । अतिमहत्वात् तवैतानि न प्राप्युः । इमा आपः सन्ततं चरन्त्यः अपि । मीङ हिंसायाम् ।

ऋभ्वोऽण्वो विभृतःस्थूरः ।

इति महति । ये वायोर्हिंसन्ति गतेर्महत्वात् तेऽपिन । मरुतो मन आदयो वा । वयांसि आपः अतिवेगवन्तः अन्येऽपि त्वत्क्षत्र सहोमन्यूनां अन्तं न प्रापुः ॥ ६

अबुध्ने राजा वरुणो वन्यस्योर्ध्वं स्तूपं ददते पूतदक्षः ।
नीचीनाः स्थुरुपरि बुध्न एषामस्मे अन्तर्निहिताः केतवः स्युः ॥

बुध्नमधोभागः । स इतरयोर्भागयोराश्रयः । बुध्नत्वाश्रयत्वयोः संबन्धात् बुध्नशब्देन आश्रयो लक्ष्यते । अबुध्ने अनालंबने अन्तरिक्षे ईश्वरः दीप्तो वा वरुणः ।

अरुर्वनानि वस्त्राणि ।

इति रश्मौ । अमि ङस् । रश्मीनां सङ्घातमूर्ध्वं धारयति शुद्धबलः । नीचीनाः अधोमुखास्तिष्ठन्ति अन्ये रश्मयः । उपर्याश्रयो मण्डलाख्यः । एषां वनानां स्तूपं अबुध्ने खे आदित्यमण्डलस्य ऊर्ध्वं नीचीनाश्च भुवि रश्मीन् धारयति । परः पादः अन्यार्थः । तत्संबन्धार्थं यत्तदौ स्तः । य इदं करोति तस्य प्रसादेन अस्माकं मनसि निहिताः प्रज्ञाः स्युः । अमि शे । जीवनाशा इयम् । जीवत एव अन्तःप्रज्ञा स्युः न मृतस्य । अथवा—

पिशश्चक्षश्च केतवः ।

इति रश्मौ । ते प्रज्ञानात्मकाः । ते चक्षुर्द्वारेण अन्तर्मनसि भवेयुः । चक्षुषा रश्मीन् पश्येम इति प्रार्थ्यते । मुमूर्षूणां हि चन्द्रमा इव आदित्यो दृश्यते । न रश्मिप्रादुर्भावः । आदित्यरश्मिदर्शनद्वारेण चिरजीवित्वमाशास्यते ॥ ७

उरुं हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ ।
अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चित् ॥ ८

उरुं विस्तीर्णं पन्थानं अन्तरिक्षे राजा वरुणः चकार सूर्यमण्डलार्थं तस्य अनुपूर्वेण गन्तुम् । पथः पन्थ च (पा. ४. ३. २९). तुमर्थे तवै । सूर्योऽन्वेति इत्येवमर्थं खे उरुं पन्थानं कृतवानित्यर्थः । यत्र पदं निधातुं न शक्यते अप्रतिष्ठितत्वात् तदपदं अन्तरिक्षम् । तत्र आत्मीयौ पादौ निधातुं करोति । प्रतिः नौ । तुमि तवै । अप्रतिष्ठितेऽप्यन्तरिक्षे पादौ निधत्ते । उत अपि च अपवदिता शत्रोः ।

दुर्धियो हृदयाविधः ।

इति शत्रौ । पुरुषवचनायोग्यव्यवहारसमाचरणादिभिः यो हृदयं विध्यति तस्य । अपेत्य वक्तावा अपवक्ता । वक्तुं समर्थेभ्यः पृथग्भूय एक एव वक्ता यावत्

किंचित् दुर्वचः तस्य सर्वस्य । हृदयाविधः । चिदपौ । ङसो निर्देशात् सकाशादिति च । यो हृदयं विध्यति । विध सम्यक् ज्ञाने । हृदयेन वा । तस्यापि सकाशात् । हृदयज्ञस्यापि सकाशादपेत्य दुर्वचनीयस्य वक्ता इति वा ॥ ८

शतं ते राजन्भिषजः सहस्रमुर्वी गभीरा सुमतिष्टे अस्तु ।
बाधस्व दूरे निर्ऋतिं पराचैः कृतं चिदेनः प्र मुमुग्ध्यस्मत् ॥ ९

हे राजन् वरुण तव भिषजः अस्मदादीनां आर्तानां जीवनोपायाः एतद्वन्तो वैद्या वा । शतं सहस्रमपि सन्ति । अतो ब्रवीमि । उर्वी विस्तीर्णा च अन्यैर्दुरवगाह्या च शोभनानुग्रहात्मिका बुद्धिः तव अस्मासु अस्तु । अस्मदनुग्राहको भव । बाधस्व दूरं गमय मृत्युदेवतां निर्ऋतिं परागमनैः पराङ्मुखम् । किंच अस्मत्कृतमप्येनः अपनय अस्मत्तः । प्रात् मुञ्चतिरपनयने । ङसो लुक् च ॥ ९

अमी य ऋक्षा निहितास उच्चा नक्तं ददृश्रे कुह चिद्दिवेयुः ।
अदब्धानि वरुणस्य व्रतानि विचाकशच्चन्द्रमा नक्तमेति ॥ १०

नक्षत्रमृक्षा ज्योतींषि ।

अमूनि यानि नक्षत्राणि निहितान्युच्चैः द्युलोके रात्रौ दृश्यन्ते क्वाप्यहनिगच्छन्ति । दिवा नैतानि दृश्यन्ते । अतो न जानीमः क्वापि गच्छन्ति इति । आज्जसेरसुक् । अव्ययानामपि सुबन्तत्वात् अच् ङौ । छन्दसि लुङ्लङ्लिटः । किमोऽत् [पा. ५. ३. १२). वाहचः छन्दसि (पा. ५. ३. १३) इति निहितादीनां प्रक्रिया । चिदपौ । कुहचित् दिवा इति समानाधिकरणे वा । आङमध्याहरति ईयुश्च । क्वचिदहनि आगच्छन्ति । क्वचिदेवाहनि दृश्यन्ते । न सर्वेषु अहस्सु । यदा सूर्यस्य समस्तग्रहणं भवति तदा एव नक्षत्राणि दृश्यन्ते अहनि । य इत्युद्देशात् प्रतिनिर्देशार्थ एतच्छब्दः स्यात् । दंभु हिंसायाम् । एतानि अहिंसितानि वरुणस्य कर्माणि । वरुण एव तान्येतानि नक्षत्ररूपाणि करोति । कथम् । वरुणो हि दिवा स्वभासा नक्षत्राणां भासः छादयति । न रात्रौ । ततो रात्रौ दर्शनं अहन्यदर्शनं तेषाम् । नैषामेव । चन्द्रमसोऽपि दीप्तिः वरुणकर्मणा । काशृदीप्तौ । शतृ च । विविधं दीप्यमानः चन्द्रमाः रात्रावागच्छति । एषोऽपि वरुणकर्मणा । कथम् । तदीयोह्येकोरश्मिः सुषुम्नाख्यः । स चन्द्रमसं दीप्यते । तेन ! अथवा ये इति व्यत्ययेन बहुवचनं पुल्लिङ्गता च । ददृश्रे ईयुः एति इति क्रियाभिरेव संबध्यते । न ऋक्षैः यदिमानि नक्तं दृश्यन्ते यच्च दिवा

क्वापि गच्छन्ति यश्च चन्द्र एति दीप्तः एतानि त्रीण्यपि वरुणस्य अहिंसितानि कर्माणि ॥ १०

तत्त्वा यामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः ।
अहेळमानो वरुणेह बोध्युरुशंस मा न आयुः प्र मोषीः ॥ ११

तत्त्वां याचे ऋचा ब्रह्मणा स्तुवन् । तदायुरेव प्रार्थयते अयं हरिश्चन्द्रो यागं कुर्वन् हविर्भिः । तच्च अक्रुध्यन् हे वरुण इह कर्मणि अवस्थायां वा वर्तमानयोरावयोः बुध्यस्व याच्ञां । हे बहुस्तुत आवयोर्जीवितं मा प्रमोषीः ।

हेळमानोऽमनाः क्रुध्यन् ।

इति क्रुद्धे । अस्मदो द्वयोश्च ( पा. १. २. ५९ ) इति ओसि आम् । जीवय आवाम् ॥ ११

तदिन्नक्तं तद्दिवा मह्यमाहुस्तदयं केतो हृद आ वि चष्टे ।
शुनःशेपो यमह्वद्गृभीतः सो अस्मान् राजा वरुणो मुमोक्तु ॥ १२

तदेवरात्रौ तदेवाहनि मह्यमाहुः ऋषयः ब्राह्मणा वा त्वद्विदः प्राणाधिदेवता वा । तदेव अयं केतः प्रज्ञानं हृदयस्य संबन्धी आभिमुख्येन कथयति । हृदयेनापि अहं तदेव जानामि इत्यर्थः । किं पुनस्तत् । वरुण आर्तानां आर्तिहर इत्येतल्लोकतः स्वतश्च जाने । यत एवं अतो ब्रवीमि । देवस्य नित्यत्वात् तत्कथाया अपि नित्यता कल्पे कल्पे । तस्मादतीते कल्पे यः शुनःशेपः स्वयमाहूतवान् । अयमेव वा सः । गृहीतो यं अह्वत् स राजा वरुणः अस्मान् अतो यूपात् मुमोक्तु ।

मन्तुहृत्केतचित्तयः ।

इति प्रज्ञाने । हृग्रहोर्भः (वा. ८. २. ३२. १.) इति गृहीतः ॥ १२

शुनःशेपो ह्यह्वद्गृभीतस्त्रिष्वादित्यं द्रुपदेषु बद्धः ।
अवैनं राजा वरुणः ससृज्याद्विद्वाँ अदब्धो वि मुमोक्तु पाशान् ॥ १३

स शुनःशेपः यस्माददितेः पुत्रं वरुणमह्वत् त्रिषु यूपस्थानेषु बद्धः ।

वनिनो द्रुर्वनस्पतिः ।

दारुमयत्वात् यूपोऽत्र । पदं स्थानम् । पशोः त्रिषु बन्धनं न युज्यते । तत् पुरुषपशुत्वात् । न चेत् विशसने निश्चलो न स्यादिति पादयोः कट्यां च बध्यते ॥

हि इति यच्छब्दात् तच्छब्दश्च । तस्मादार्तानुकम्पत्वात् एनं शुनःशेपं राजा वरुणः अवससृज्यात् । अवसर्गः अभ्यनुज्ञा । जीवत्वयं मा एनं मारयत इत्येवमनुजानीयादित्यर्थः । अनुज्ञाय अस्मदार्ततां वा जानन् अहिंसितः विमुमोक्तु पाशान् अस्मद्बन्धकरान् ॥ १३

अव ते हेळो वरुण नमोभिरव यज्ञेभिरीमहे हविर्भिः ।
क्षयन्नस्मभ्यमसुर प्रचेता राजन्नेनांसि शिश्रथः कृतानि ॥ १४

हे वरुण तव क्रोधं नमोभिः यज्ञैश्च हविर्भिश्च अवेमहे अपनयामः । नमस्कारस्तुतिसोमयागपुरोडाशादिभिः अपनीतहेळः त्वम् । क्षि निवासगत्योः । निवसन् इह आगच्छन् वा अस्मदर्थं हे असुर । असवः प्राणाः । मतुपि रः । प्राणबलवन् प्रकृष्टज्ञान राजन् दीप्त ईश्वर वा पापानि श्लथय अस्माभिः कृतानि मन्दविपाकानि कुरु । पूर्वकृतपापैरेवाहं बन्धनमरणे प्रापितः । तानि अतोऽपि तावत् शिथिलय येन पुनरीदृशं दुःखं न प्राप्नुयाम् । एनांसि इति पाशा एव वा अभिप्रेताः । अस्मत्पित्रा कृतान् पाशान् शिश्लथः मुञ्च ॥ १४

उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय ।
अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥ १५

हे वरुण उत्तमं पाशं ग्रीवायां बद्धं ऊर्ध्वं श्लथय अस्मत्तः । अधमं पादयोः बद्धं अपि अवश्लथय । नीचैःश्लथय । मध्यमं कट्यां बद्धमपि विश्लथय । तत्रैवावस्थितं विमुञ्च । अथ पाशत्रयविमोक्षानन्तरं एव वयं हे आदित्य तव यागकर्मणि त्वद्देवत्ये अस्मिन् यागे अपगतपापा यागार्थं भवेम ।

अदितिर्वाक् स्तुतिः ।

स्तुतये ॥ १५

---

यच्चिद्धि ते विशो यथा प्र देव वरुण व्रतम् ।
मिनीमसि द्यविद्यवि ॥ १

मा नो वधाय हत्नवे जिहीळानस्य रीरधः ।
मा हृणानस्य मन्यवे ॥ २

यद्यपि तव विशः अन्ये मनुष्या यथैव तद्वद्वयमपि हे देव वरुण यागकर्म प्रकर्षेण हिंसामहे अहन्यहनि । प्रमादेन करणं अस्य यागस्य हिंसा । यद्यपि अन्यमनुष्यवत् अहन्यहनि प्रमादेन यागं कुर्मः तथापि मा अस्माकं तापाय हननाय च पूर्वक्रुद्धस्य वशं नेषीः इति वा। यदिति जसः ङसेर्वा लुक् । न मीञ् हिंसार्थः माङ् माने इत्येव । ये वयं हे देव वरुण तव अन्यमनुष्यवत् साध्यासु उपस्थानं कुर्मः । यागं वा नित्यं यस्मादिति वा । तस्मात् तान् वा अस्मान् वा । वधस्तापे । हत्नुर्मरणे । हेळः क्रुद्धे । लिटः कानज्वा (पा. ३. २. १०६) इति । भूते वा लिट् । रध वशगमने । योऽस्मान् ताडयति मारयति च तस्य पूर्वक्रुद्धस्य मा वश्यान् कार्षीः । हृण क्रोधे । हृञ् वा । श्ना व्यत्ययेन । वर्तमानलटः शानच् च । इदानीं क्रुध्यतः । यः सांप्रतमेव क्रोद्धुमिच्छति तस्यापि क्रोधार्थं मास्मान् वश्यान् कार्षीः ॥ १,२

वि मृ॒ळी॒काय॑ ते॒ मनो॑ र॒थीरश्वं॒ न संदि॑तम् ।
गी॒र्भिर्व॑रुण सीमहि ॥ ३

आत्मनो जीवितलक्षणाय सुखाय तव मनः । मद्धविरसौ । एनं भक्षयामि । इति । रथीः सारथिः । दि बन्धने । रथे सम्यक् बद्धं अश्वं रथीर्यथा विमोक्ष्यति तद्वत् । स्तुतिभिः हे वरुण विषीमहि विगतान्तकर्मः करोमि । वेः स्यतिर्विमोचने । विमुञ्चामः । षो अन्तकर्मणि इति श्वनि । षिञ् बन्धने इत्यस्यैव वा । विगतबन्धनं कुर्मः त्वन्मनः ॥ ३

परा॒ हि मे॒ विम॑न्यवः॒ पत॑न्ति॒ वस्य॑इष्टये ।
वयो॒ न व॑सतीरुप॑ ॥ ४

मन कामे । कामाः विपरापतन्ति विविधं त्वां प्रति प्राप्नुवन्ति वसुनः प्राप्तये । इष् गतौ । धनस्य अधिगत्यै । यथा पक्षिणः स्वनिवासानि प्रति तद्वत् ॥ ४

क॒दा क्ष॑त्र॒श्रियं॒ नर॒मा वरु॑णं करामहे ।
मृ॒ळी॒काया॑रु॒चक्ष॑सम् ॥ ५

कदा । क्षत्रं बलधनयोः । तद्यत्र श्रयति तम् । बलवन्तं धनवन्तं वा । नराकारं वरुणं आकरामहे अर्वागात्माभिमुखं करिष्यामः । मज्जीवनसुखाय बहूनां द्रष्टारं बहुदर्शनं वा । विमोचनविलम्बनात् परिदेवना एषा ॥ ५

तदित्समानमाशाते वेनन्ता न प्र युच्छतः ।
धृतव्रताय दाशुषे ॥ ६

अशू व्याप्तौ । अश भक्षणे । तत् । यजमानः यद्धविर्ददाति तत् साधारणं मित्रावरुणयोः । तौ व्याप्नुतः भक्षयतः वा । विन कामने । शतृ च गुणश्च । कामयमानौ । युच्छ प्रमादे । यजमानः केवलाय वरुणाय एव ददा तिचेत् अवश्यं उभावपि आशाते न प्रमाद्यतः ! अपरित्यक्तकर्मणे यजमानाय उपकर्तुम् । अथवा आशाते इति लोटि लट् । व्यत्ययेन अतांवहौ । आवां हरिश्चन्द्र शुनःशेपौ तत् साधारणं आयुः अश्ववाहे कामयमानौ । न प्रमाद्यावः । अत्रापि तस् वसि । यागे स्तुतौ । यतः स्वकर्मणां परित्यक्ते स्तोतृभ्यः कामानां दात्रे च वरुणाय यो यागः स्तुतिर्वा तत्र यतो न प्रमाद्यावः ततः आयुरश्ववावहै ॥ ६

वेदा यो वीनां पदमन्तरिक्षेण पतताम् ।
वेद नावः समुद्रियः ॥ ७

यो वरुणो अन्तरिक्षेण गच्छतां पदं वेद पक्षिणामपि पांसुवर्जितत्वात् दुर्ज्ञेयमपि वीनां च अन्येषां च पदं जानाति । समुद्रे भवाया अपि नावः पदं च यो वेद ॥ ७

वेद मासो धृतव्रतो द्वादश प्रजावतः ।
वेदा य उपजायते ॥ ८

यः अपरित्यक्तकर्मा द्वादशमासः वेद । मा. चन्द्रमाः ।

वृको मसः ।

इति चन्द्रे । द्वादशमासा एवात्र । प्रजासहितान् । प्रजा अपि । वेद य उपजायते तमपि ।

उपजातस्त्रयोदश ।

इति अधिमासः तम् ॥ ८

वेद वातस्य वर्तनिमुरोर्ऋष्वस्य बृहतः ।
वेदा ये अध्यासते ॥ ९

यश्च वायोर्मार्गं विस्तीर्णस्य महतो बलवतः महतो वेगेन । शीघ्रस्य । उरुर्विस्तीर्णे । ऋष्वबृहतौ महति व्याप्तौ बले वेगे च इमे । व्याप्तस्य महाबलवतः महावेगवतः इत्यर्थः । ये उपरि आसते देवादयः तांश्च यो वेद तस्मै वरुणाय न प्रयुच्छतः । तद्यागान् स्तुतीश्च कुर्वः एव ॥ ९

नि षसाद धृतव्रतो वरुणः पस्त्याऽस्वा ।
साम्राज्याय सुक्रतुः ॥ १०

य एतानि वेद स निषसाद इति वा । धृतकर्मा वरुणः । सर्वेषां वा यज्ञस्य वा लोकपालत्वात् । कुटीकृत्वाभिप्रायोडुपच् (पा. ५. ३. ८८,८९) गृहेषु । सर्वयज्ञस्य आधिपत्याय निषीदति । सुकर्मा सुप्रज्ञश्च ।

पस्त्या हर्म्यं गयः पदम् ।

इति गृहे ॥ १०

अतो विश्वान्यद्भुता चिकित्वाँ अभि पश्यति ।
कृतानि या च कर्त्वा ॥ ११

अतो द्युलोकादागत्य । अत्र पृथिव्यां इति वा । ङ् ङसिः ।

अद्भुतं चरितं कर्त्वम् ।

इति कर्मणि । लोकानां शुभाशुभकर्माणि ज्ञाता प्रत्यवेक्षते । लोकपालत्वात् वरुणः कृतानि यानि च कर्तव्यानि । यस्य प्राणिनो यानि शुभाशुभानि तस्य तत्फल-दानार्थं प्रतिपालयते ॥ ११

स नो विश्वाहा सुक्रतुरादित्यः सुपथा करत् ।
प्र ण आयूंषि तारिषत् ॥ १२

य इदं करोति स आदित्यः सुप्रज्ञः सुकर्मा वा अस्मान् सर्वेषु अहस्सु शोभनेन पथा नयतु । सर्वदा अभिप्रेतेषु तं तं पन्थानं उपदिशतु येन प्रवृत्ता वयं अभिप्रेतानि प्राप्नुमः । प्रवर्धयतु अस्माकमायूंषि च । प्रात् तिरतिः वृद्धौ ॥ १२

बिभ्रद्द्रापिं हिरण्ययं वरुणो वस्त निर्णिजम् ।
परि स्पशो नि षेदिरे ॥ १३

उदयोत्तरकाले ।

द्रापिरत्कं च निर्णिजः ।

इति कवचे । धारयन् । कवचं हिरण्मयम् । वरुण आच्छादयति रूपम् । वस आच्छादने ।

वर्पो निर्णिग्वपुः प्सरः ।

इति रूपे ।

नामोस्राः समिधः स्पशः ।

इति रश्मिषु । वरुणरश्मयः परिनिषेदिरे । कृताकृतप्रत्यवेक्षणार्थं प्राणिनां परितः निषीदन्ति । अथवा निर्णिक् घटादिद्रव्यरूपं अनात्मरूपम् । उदयोत्तरकालं आबद्ध-हिरण्मयकवचो वरुणः रश्मिभिः आच्छादयति घटादिद्रव्यरूपम् । रश्मिभिः तमः अपनीय यावत्किंचिद्रूपं तत्सर्वं प्रकाशयति इत्यर्थः । तत्सहचरिताश्च देवानां स्पशः प्राणिकर्मज्ञानार्थं सर्वतो निषीदन्ति इति पुराणेषु प्रसिद्धम् ।

आदित्यचन्द्रावनलानिलौ च
द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये
धर्मश्च जानाति नरस्य वृत्तम् ॥

इति ॥ १३

न यं दिप्संन्ति दिप्सवो न द्रुह्वाणो जनानाम् ।
न देवमभिमातयः ॥ १४

दम्भु हिंसायाम् । धातोः कर्मणः समानकर्तृकादिच्छायां वा (पा. ३. १. ७) इति सन् । सन्यङोः (पा. ६ १. ९.) इति द्विः । हलादिःशेषः (पा. ८. ४. ६०) खरि च (पा. ८. ४. ५५.) इति चर्त्वम् । अभ्यासलोपश्च । अत्र लोपोऽभ्यासस्य (पा. ७.४.५८) इति । दम्भ इच्च (पा. ७. ४. ५६) इति दिप्सा । . . ..................सनाशंस भिक्ष उः (पा. ३. २ १६८) इति दिप्सुः ।

दिप्सवो राधसः स्पृधः ।

इति शत्रौ । द्रुह द्रोहे । अभिमातिर्हिंसा । यं वरुणं जिघांसका असुरा न जिघांसन्ति । नापि द्रोग्धारो मनुष्याणाम् । तद्धिंसका चोरादयः । तेऽपि तं न हिंसन्ति । असुरैः चोरादिभिर्वा प्रयुज्यमाना हिंसाश्च न हिंसन्ति । देवं वरुणं नन्वा ।

ते हिप्मावनुषः (ऋ. वे. ८ २४. १५)

इत्यत्रवत् हिंसायामेव अभिमातिः ॥ १४

उत यो मानुषेष्वा यशश्चक्रे असाम्या ।
अस्माकमुदरेष्व ॥ १५

उत यः वरुणः मानुषेषु च दैवेषु च अन्नमाभीक्ष्ण्येन करोति । सकलमस्माकं च तिर्यक्सदृशानां नृणां उदरेषु च । आङः त्रितयात् आद्यन्त्यौ चार्थे ।

देवेभ्यश्च पितृभ्य आ (ऋ वे. १०. १५. ११)

इतिवत् । तच्छ्रुतेश्च योग्यद्वितीयसमुच्चयाध्याहारः । मानुषप्रदानं वृष्टिप्रदानेन अन्नेन तद्यागादिना देवानाम् ।

ब्रह्म पीवो यशो गिरः ।

इत्यन्ने । सामि अर्धपर्यायः । असामि प्रभूतम् ॥ १५

परा मे यन्ति धीतयो गावो न गव्यूतीरनु ।

इच्छन्तीरुरुचक्षसम् ॥ १६

यः अन्नकर्ता तं वरुणं परागच्छन्ति मम प्रज्ञाः कर्माणि वा । धीरेव धीतिः। सा प्रज्ञाकर्मणोः । मद्बुद्धयः मत्स्तुतिकर्माणि इति वा । आयुरिच्छन्त्यः बहुद्रष्टारं दर्शनं वा त्वाम् । यथा गावः । यस्मिन् भूप्रदेशे गावः चरन्ति स गव्यूतिः । गाव इव स्वचरणभुवः प्रति । अनुः प्रतौ ॥ १६

सं नु वोचावहै पुनर्यतो मे मध्वाभृतम् ।

होतेव क्षदसे प्रियम् ॥ १७

क्षिप्रं संवोचावहै आवां हरिश्चन्द्रशुनःशेपौ । नौ मुञ्च इति । पुनः संभूतौ । मां मुञ्च इति हरिश्चन्द्रं वा । त्वं च अहं च पुनः संवोचावहै । मां विमुच्य मया संभाषस्व । अहमपि भवन्तं मुच्यमानः इति हि तदाशास इत्यर्थः । कस्मात् । मतः मदर्थं येन उपस्तीर्य अभिघार्य च अहं जुहुषितः तदाज्यलक्षणं मधु आहृतं ऋत्विग्भिः। यत आज्यं गृहीत्वा मां स्तोतुमुपस्थिता ऋत्विजः । यथा होता अध्रिगुप्रैषदानेन एवं त्वमपि निर्मोक्षणेन विशससि इष्टं मच्छरीरम् । क्षद हिंसायां विशसने च । त्रलर्थे वा तसिल् । यत्र यज्ञे मदर्थं मधु आहृतं यत्र च होतेव विशससि प्रियं मत्तनुं तत्र क्षिप्रं संवोचावहै पुनः ॥ १७

दर्शं नु विश्वदर्शतं दर्शं रथमधि क्षमि ।

एता जुषत मे गिरः १८

महता प्रयत्नेन दृष्टवानहं क्षिप्रं सर्वस्य दर्शनीयं द्रष्टारं वा वरुणम् । तद्रथमपि दर्शं पृथिव्या उपरि दिवि यत्रायमारूढः । यत एवं अतो ब्रवीमि एताः सेवतां मम स्तुतीः ॥ १८

इमं मे वरुणश्रुधी हवमद्या च मृळय ।
त्वामवस्युरा चके ॥ १९

मम हे वरुण शृणु आह्वानमिदम् । श्रुत्वा अद्य च अत ऊर्ध्वं च सुखय । आत्मपालनतर्पणकामः अहं त्वां आयाचे । चक कान्तौ । त्वं मां पालय तर्पय च इति कामये ॥ १९

त्वं विश्वस्य मेधिर दिवश्च ग्मश्च राजसि ।
स यामनि प्रति श्रुधि ॥ २०

त्वं हे मेधिर ।

मेधसाधिर्हव्यजुष्टिः ।

इति यज्ञे । मतुपिरः । हे यज्ञवन् । यस्त्वं सर्वस्य अर्थनीयस्य दिवश्च पृथिव्याश्च राजसि ईशिषे ।

ग्मावनिर्गौ रसा वज्रा ।

इति भुवि । सः यामनि मरणकाले । मृत्युं प्रतिगम्यते यस्मिन् सः कालः यामा तत्र । मद्मरणंप्रति जानीहि । त्वां मुञ्चामि इति प्रतिज्ञांकु रु । न त्वं म्रियसे ॥ २०

उदुत्तमं मुमुग्धि नो वि पाशं मध्यमं चृत ।
अवाधमानि जीवसे ॥ २१

उत्तमं पाशं ऊर्ध्वं मुमुग्धि । मध्यमं पाशं तत्रैवावस्थितं विश्लथय । चृति हिंसाग्रन्थयोः । अधमानि अवचृत अधोमुखं मुञ्च जीवनाय ॥ २१

---

वसिष्वा हि मियेध्य वस्त्राण्यूर्जां पते ।
सेमं नो अध्वरं यज ॥ १

तं वरुण उवाच । अग्निर्वै (ऐ. ब्रा ७. १६. ७.) इति वाक्येन सोऽग्निं तुष्टाव अत उत्तराभिः द्वाविंशत्या ।

वसिष्व इत्याग्नेये द्वे ॥

मियेधो माहिनं क्षयः ।

इति यज्ञे । हे यज्ञार्ह वस्त्राण्याच्छादय परिधत्स्व । हविर्लक्षणान्नानां स्वामिन् । यस्त्वं अन्येषां अयाक्षि स त्वं वस्त्राणि परिधाय इमं अस्माकं यज्ञं यज होतृत्वेन निषद्य ॥ १

नि नो होता वरेण्यः सदा यविष्ठ मन्मभिः ।
अग्ने दिवित्मता वचः ॥ २

निः स्वयोग्यक्रियां अध्याहरति। निषीद अस्माकं होता वरणीयः सर्वदा हे युवतम मदतिशयज्ञानैः। मन ज्ञाने। अग्नेर्यौवनं बह्विन्धनत्वात्। हे अग्ने दीप्तिमता वचसा। एतैर्युक्तस्त्वं मे होत्रं कुरु ॥ २

आ हि ष्मा सूनवे पितापिर्यजत्यापये ।
सखा सख्ये वरेण्यः ॥ ३

त्वमेव मे पिता आपिश्च सखा च। ते यस्मन्मर्यादया पुत्रार्थं ज्ञात्यर्थं सख्यर्थं च यजन्ति। वरणीयाः। आङ् मर्यादार्थे। हिः यस्मादर्थे।

हौत्रं कुर्यात् पिता सूनोः ज्ञातीनां ज्ञातयोऽपि वा।
पितृभावे ज्ञात्यभावे सखीनां तत्सहयकाः ॥

इति। मर्यादया त्वं निषद्य नः यज्ञं यज ॥ ३

आ नो बर्ही रिशादसो वरुणो मित्रो अर्यमा ।
सीदन्तु मनुषो यथा ॥ ४

अस्माकं बर्हिषि वरुणमित्रार्यमाणश्च आसीदन्तु मनुष्या इव हिंसितृक्षेप्तारः। सर्वे देवा इत्यर्थः ॥ ४

पूर्व्य होतरस्य नो मन्दस्व सख्यस्य च ।
इमा उ षु श्रुधी गिरः ॥ ५

हे चिरन्तन होतः इदमस्माकं मन्दस्व सख्यं च । ङस् अमि। स्तुत्यस्तोतृत्वलक्षणं देवैर्नृणां सख्यम् । तत् स्तुहि । इमाः स्तुतीः शृणु च। शोभनः शुनःशेपो देवानां स्तोता इत्येतच्च प्रकाशय। इमाः शृणु च स्तुतीरित्यर्थः। मदि स्तुतिमोदनयोः। मदस्वप्नगतिषु च। ङौ वा ङस्। अस्मिंश्च सख्ये मोदस्व। इमाः शृणु स्तुतीः। इति वा ॥ ५

यच्चिद्धि शश्वता तना देवंदेवं यजामहे ।
त्वे इद्धूयते हविः ॥ ६

यद्यपि बहुना हविर्लक्षणेन धनेन अन्यमन्यमपि देवं यजामहे तथापि त्वय्येव हूयते सर्वं तद्धविः नान्यत्र क्वचित्। शश्वत् महति।

मधुर्णस्तनाम्रृतम्।

इति हविषि।

भूरिपूर्वो कुविच्छश्वत्।

इति बहौ। डौ शे॥ ६

प्रियो नो अस्तु विश्पतिर्होता मन्द्रो वरेण्यः।
प्रियाः स्वग्नयो वयम्॥ ७

यथा अस्माकं प्रियो भवति तथा उपकरोतु इत्यर्थः। विशो नराः तत्पतिः अग्निः। होता स्तुत्यः स्तोता वा। मदि स्तुतिमोदनमदस्वप्नगतिषु। वरणीयः। अग्नेरपि प्रियाः स्याम। शोभनैराहवनीयादिभिः युक्ता वयम्॥ ७

स्वग्नयो हि वार्यं देवासो दधिरे च नः।
स्वग्नयो मनामहे॥ ८

शोभनाहवनीयादियुक्ता वयं देवाः वार्यं दधिरे। देवो वा दाता। हविर्दानादत्र ऋत्विजः। चशब्दश्च अस्मात् परो द्रष्टव्यः। देवाश्च धारयन्ति। ऋत्विजश्च विश्वामित्रादयः। वरणीयमग्नेः स्तोत्रं देवा ऋत्विजश्च कुर्वन्ति। नः अस्मत्संबन्धिनः वयं च तैराहवनीयादिभिः स्वग्नयः स्तुमः। मन स्तुतौ। हिः यस्मादर्थे वा। वार्यं इति सोमलक्षणं हविः। दधिरे च इति च शब्दात् योग्यद्वितीयसमुच्चयाध्याहारः। मन याच्ञायाम्। एवमेकवाक्यता। यस्मात् स्वग्नय ऋत्विजोऽस्मत्तः वरणीयतरं सोमलक्षणं हविः धारयन्ति दास्यन्ति च अग्नये तस्मात् स्वग्नयो वयं आत्मविमोक्षं याचामहे॥ ८

अथा न उभयेषाममृत मर्त्यानाम्।
मिथः सन्तु प्रशस्तयः॥ ९

अथ। त्यदादीनि सर्वैर्नित्यम् (पा. १. २. ७२) इति एकशेषः। हे अग्ने तव च अस्माकं च। युष्मदस्मच्छब्देषु अस्मच्छब्द एव शिष्यते नः इति। उभयेषां हे मरणवर्जित मनुष्याकाराणाम्। अग्निः पुरुषविधः। अन्यो मनुष्य एव। परस्परतः सन्तु प्रशंसाः। त्वमस्मान् प्रशंस नेदृशा अन्ये स्तोतार इति। वयमपि प्रशंसामः नेदृशः अन्यो देव इति। मिथः सहत्वे। तव च अस्माकं च सह सन्तु प्रशंसाः। न हि

स्तुत्यस्य स्तोत्रा विना प्रशंसा अस्ति । न स्तोतुः स्तुत्येन । तत्र तव स्तुत्यस्य अस्माभि रेव सह अस्माकं च स्तोतॄणां त्वयैव सह प्रशंसा अस्तु मान्येन केनचित् । इत्याशास्महे ॥ ९

विश्वेभिरग्ने अग्निभिरिमं यज्ञमिदं वचः ।
चनो धाः सहसो यहो ॥ १०

विश्वेभिः हे अग्ने त्वद्भ्रातृभिः इमं यज्ञं इमां स्तुतिम् । चरुपुरोडाशादिलक्षणं हविश्चनः । तच्च धाः स्थापय स्थापयितव्येषु । यज्ञं देवेषु स्तुतिं स्वकरणे चनः स्वोदरे । मां तु मुञ्च । हे बलस्य पुत्र । बलेन मथ्यमानारणिभ्यां जननत्वात् ।

वाजश्चौन्त्यं तवः सहः ॥
पुत्रः सूनु र्यहुस्तोकः ॥

इति ॥ १०

---

अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः ।
सम्राजन्तमध्वराणाम् ॥ १

वारशब्दस्य कपिलादित्वात् रत्वम् । अश्वमिव वालवन्तं त्वां वन्दितुमिच्छामः प्रारभामहे वा । अग्निं नमस्कारैः स्तुतिभिः यज्ञानां सम्यगीशानं संदीप्यमानं वा । सुपि वा आम् । आम्श्रुतेर्वा मध्ये । अश्वोपमानाभिप्रायः पर्येष्यः ॥ १

स घा नः सूनुः शवसा पृथुप्रगामा सुशेवः ।
मीढ्वाँ अस्माकं बभूयात् ॥ २

न इति अस्मदो द्वयोश्च (पा. १. २. ५९.) इति द्वयोर्बहुत्वम् । सः प्रकृतः अग्निः आवयोः सूनुः । अरणीमथनजातत्वात् हरिश्चन्द्रस्य । तत्साहचर्यात् सामान्यात् उभयोरपि पुत्रत्वमग्नेः । स्वतेजोबलेन विस्तीर्णगामी । बलेनारणिमथनजात इति पूर्ववाक्यसंबन्धी वा । सुसेवः सुसुखो वा ।

भुञ्ज्मीढं द्रविणं

इति धने । मिह सेचने । धनवान् हविर्नयनद्वारेण । वृष्टिप्रदत्वात् सेक्ता वा । अस्माकं अत्यर्थं भोक्ता भूयात् बलेन भूयादिति वा सुशेवो भूयादिति वा पुत्रो भूयादिति वा आशंसा । अस्मात् मुक्तः त्वां यष्टुमाशास्महे इत्यर्थः । योऽस्माकं सुसुखः विमोक्तृत्वात् सः नः सूनुर्भूयात् इत्यत्र च संबध्यते ॥ २

स नो दूराच्चासाच्च नि मर्त्यादघायोः ।
पाहि सदमिद्विश्वायुः ॥ ३

यः उक्तगुणोऽसि स त्वं अस्मान् दूरस्थात् अन्तिकस्थाच्च मनुष्यात् पापकामात् नियमेन पाहि । सदैव सर्वगामी सर्वान्नो वा । सदं सदार्थे । इदेवार्थे । इणो गत्यर्थाद्वा आयुः दूरादासादिति तात्स्थ्यार्थे । मञ्चाः क्रोशन्ति इति वत् ॥ ३

इममू षु त्वमस्माकं सनिं गायत्रं नव्यांसम् ।
अग्ने देवेषु प्र वोचः ॥ ४

इमं त्वमस्माकं सनिं मद्व्यतिरिक्तसोमादिहविर्दानं स्तोत्रं च नवतरं अन्यैरकृतपूर्वं हे अग्ने देवान् प्राप्य प्रकर्षेण आचक्ष्व । मां मुञ्च च ।

ऋतगायत्रमनन ।

इति स्तुतौ । षणु दाने ॥ ४

आ नो भज परमेष्वा वाजेषु मध्यमेषु ।
शिक्षा वस्वो अन्तमस्य ॥ ५

आभज अस्मान् परमेषूपकल्पितेषु हविर्लक्षणेषु अन्नेषु मध्यमेष्वपि । यस्य च भावेन भावलक्षणम् (पा. २. ३. ३७) इत्येवं सप्तमी उपकल्पितक्रियामध्याहरति । आमि वा नः इति । शसि वा सुप् । परमानि अन्नानि आभज अस्माकं मध्यमानि च । मां तु मुञ्च च । शिक्ष दाने । देहि वसु तव सन्निकृष्टतमम् ।

वसुरिक्थं तना यशः ।

इति धने । अमि ङस् । यदत्यन्तोत्कृष्टं धनं तत् देवानां अन्तमं भवति नान्यत् ॥ ५

विभक्तासि चित्रभानो सिन्धोरूर्मा उपाक आ ।
सद्यो दाशुषे क्षरसि ॥ ६

विभक्ता त्वमसि हे विचित्रदीधिते पूज्यदीप्ते वा । स्यन्दनात् सिन्धुः सोमः । ङसि ङिः । सोमस्य ऊर्मेः सन्निकृष्टे यागकाले प्राप्ते त्वं देवानां सोमस्य विभक्ता । ऊर्मेरुपाकस्य इति वा समानाधिकरणत्वात् तत्स्थ्यात् । आत्मान्तिकस्थस्य सोमस्य ऊर्मेः विभक्ता । मर्यादया । आङ् मर्यादार्थो वा । विभज्य च तस्मिन्नेव अहनि यजमानाय ददासि दातव्यं धनं आयुर्वा ॥ ६

यमंग्ने पृत्सु मर्त्यमवा वाजेषु यं जुनाः ।
स यन्ता शश्वतीरिषः ॥ ७

हे अग्ने त्वं सङ्ग्रामेषु यं मनुष्यं पालयसि हविर्निमित्तं यं च गच्छसि । निमित्तात् कर्मसंयोगे (वा. २. ३. ३६—६) इति वाजेष्विति सुप् ।

पृत्सु तूर्ये युधि ।

इति युद्धे । लेटोऽडाटौ (पा. ३. ४. ९४) इति आत्वं उभयत्र क्रियायाम् । भिसि वा सुप् । जुनगतौ प्रीणने च । वाजैश्च यं प्रीणयसि ।

वाजो वर्चः ।

इत्यन्ये । यमु दाने बन्धने च । यं अवाः जुनाः च सः दाता अन्येभ्यः। आत्मनि लब्धा वा ध्रुवाणि अन्नानि । बहूनि इति वा ।

भूरि पूर्वी ।

इति ।

शश्वन्नित्येऽननपायित्वात् ।

इडिरा ।

इत्यन्ये ॥ ७

नकिरस्य सहन्त्य पर्येता कयस्य चित् ।
वाजो अस्ति श्रवाय्यः ॥ ८

किं च । अस्य इत्यनुदात्तत्वात् पूर्वस्यां ऋचि उक्तस्य अन्वादेशः ।

अन्वादेशेऽनुदात्तं स्यात् ।

हे सहन्त्य । षह मर्षणे अभिभवे च । हे सहस्वन् अभिभवितः वा । न चास्य मर्त्यस्य अनिष्टः परिगन्ता । नचैनं कश्चिदनिष्टः प्राप्नोति इत्यर्थः । परेः इण् वधे वा । न चास्य कश्चित् हन्ता । कयस्य चित् कस्यचिदपि । सर्वस्य त्वत्सेवकस्य । किं च अन्नं बलं वा अस्यास्ति च श्रवणीयं प्रख्यातम् ॥ ८

स वाजं विश्वचर्षणिरर्वद्भिरस्तु तरुता ।
विप्रेभिरस्तु सनिता ॥ ९

सः प्रकृतोऽग्निः सङ्ग्रामं सर्वस्य द्रष्टा अश्वैरस्मदर्थं गन्ता अस्तु । तॄ प्लवनतरणयोः । गतौ च । स सङ्ग्रामं गत्वा अस्माकं नित्यं साहाय्यं करोतु । वाजं इति द्वौ वा

अम् । तात्स्थ्याद्वा तच्छब्दः । सङ्ग्रामस्थमस्मच्छत्रुं हिनस्तु । किं च मेधाविभिरस्माभिः स्तूयमानः अस्मत्स्तुतीनां संभक्ता अस्तु । अस्माकमेव च ॥ ९

जरा॑बोध॒ तद्वि॑विड्ढि वि॒शेवि॑शे य॒ज्ञिया॑य ।
स्तोमं॑ रु॒द्राय॒ दृशी॑कम् ॥ १०

अत्रेतिहासमाचक्षते । अग्निः स्तूयमानः शुनःशेपमुवाच । रुद्रं स्तुहि । रुद्रा हि पशवः । इति । स तं प्रत्युवाच । नाहं जानामि रुद्रं स्तोतुम् । त्वमेवैनं स्तुहि । इति । तदेतदनया उच्यते । जर स्तुतौ । जरां स्तुतिं यो बुध्यते बोधयति देवान् होतृत्वात् सः । जराबोध अग्ने यन्मां अवोचः तत् त्वमेव वेत्सि । विष्लृ व्याप्तौ । अयं च वेष इति कर्मनामसु पाठात् नाम्नां च आख्यातत्वात् कर्मणि च करोत्यर्थस्य संभवात् करोत्यर्थोऽपि विष्लृ । तत् कुरु । यो वा कश्चिन्मनुष्यः यज्ञार्हः अहं वा अन्यो वा तस्य सर्वस्य अर्थाय । स्तोमं रुद्रार्थं दर्शनीयं त्वया । तदर्हतीत्यर्थे ठक् । दर्शनमर्हतीति दृशीकम् । एतदर्थं एव यज्ञर्त्विग्भ्यां घखञौ (पा. ५. १. ७१) घस्य इय् (पा. ७. १. २) । यज्ञियः । यज्ञकर्मार्हः । यज्ञियाय रुद्रायेति वा । न विट्संबन्धी । विशे इति आमि ङे । सर्वमनुष्याणां यज्ञार्हाय । रोरूयमाणत्वात् अग्निरेव रुद्रः इति यास्कः (नि. १०. ७) । तदर्थं जराबोध इति आत्मा अन्तरात्मानं संबोधयति । स्तुतिबुत् अन्तरात्मन् यदुच्यते तद्विविड्ढि कुरु विशां यज्ञार्हाय अग्नये स्तुतिं ताम् ॥ १०

स नो॑ म॒हाँ अ॑निमा॒नो धू॒मके॑तुः पुरुश्च॒न्द्रः ।
धि॒ये वाजा॑य हिन्वतु ॥ ११

सोऽग्निरस्माकं महान् । अनियतं मानं यस्य सः । अनियतपरिमाणः । केतुः पताका । धूमः पताकास्थानीयो यस्य सः । केतुर्ज्ञानं वा । धूमेन यो ज्ञायते स इति वा ।

उरु विश्वं तुविः पुरु ।

इति बहौ । चदि आह्लादने । बहूनां कान्तः । प्रज्ञायै यागाख्याय कर्मणे वा । अन्नाय च प्रीणयतु ।

धीर्धिषा ।

इति ।

धीः शग्म ।

इति वा । हिनु प्रीतौ । हनुर्वा । अग्निना प्रीयमाणा वयं सुखं धियं वाजं च प्राप्नुयामः ॥ ११

स रेवाँ इव विश्पतिर्दैव्यः केतुः शृणोतु नः ।
उक्थैरग्निर्बृहद्भानुः ॥　　　　१२

सः धनवानिव राजा सर्वार्थिनामेवं अभिप्रेतानि संपादयन् । देवः देवभवो वा प्रज्ञानसत्त्वः सर्वकर्मकर्ता वा शृणोतु अस्माकं शस्त्राणि अग्निर्महद्दीप्तिः । उक्थैरिति शसि भिस् । तृतीयसवनभवशस्त्रं उक्थम् । एतानि श्रुत्वा अस्माकमभिप्रायं संपादयेत् ॥　　　　१२

नमो महद्भ्यो नमो अर्भकेभ्यो नमो युवभ्यो नम आशिनेभ्यः ।
यजाम देवान्यदि शक्नवाम मा ज्यायसः शंसमा वृक्षि देवाः ॥　१३

इति प्रार्थितोऽग्निः तमुवाच । विश्वान्नु देवान् स्तुहि । इति । स तान्नम इत्यृचा अस्तौत् (ऐ. ब्रा. ७. १६. ८) । नमो वृद्धेभ्यः । तपस्तेजोधनविद्यायुर्भिर्वर्धितेभ्यो युष्मद्भ्यः । नमो बालेभ्यः । नमस्तरुणेभ्यः । नमो व्याप्तृभ्यः पलितेभ्यो वा । तारुण्यवृद्धत्वलक्षणयोर्द्वयोरपि वयसोः । आसन्नपलितेभ्यो मध्यमवयस्केभ्यः । द्वयोरधिकारात् अस्य च वयसः परिशिष्टत्वाच्च एवम् । यजाम देवान् यदि शक्नवाम । अवगुणयागस्य दुष्करत्वात् यदि शक्नवाम इति । यत एवं अतो ब्रवीमि । मा वृद्धतरायुषः दीर्घतरस्य आयुषो वा आशंसां आवृश्चत हे देवाः । व्रश्चु छेदने । थस्य स्थाने व्यत्ययेन मिप् । मा छेत्त । मा मे आयुषः प्रार्थनां अपहार्ष्ट । दत्त मे दीर्घायुः । स्वार्थ एव वा मिप् । मा अहमात्मनो दीर्घायुःप्रार्थनां विच्छित्सम् । अविच्छेदेन सततं आयुः प्रार्थये । भवन्तश्च यथाप्रार्थितमेव मे देयासुः ॥　　　　१३

---

यत्र ग्रावा पृथुबुध्न ऊर्ध्वो भवति सोतवे ।
उलूखलसुतानामवेद्विन्द्र जल्गुलः ॥　　　　१

ऐन्द्रश्चतु ऋचः परः ।

वियुक्तपाशः शुनःशेपः एतेन चतुऋचेन सोमं जुहाव । परेणोलूखलमुसलेनाभिषुषाव । अन्त्यया द्रोणकलशं अभ्यवनिनाय । तथा वियुक्तपाशं शुनःशेपं अधिकृत्य ब्राह्मणं भवति । तमृत्विज ऊचुः (ऐ- ब्रा. ७. १७. १) इति षड्भिरुक्तम् । तत्र यज्ञे अभिषवग्रावा विस्तीर्णाधोभागः । हस्तेन उद्धृष्यमाण ऊर्ध्वो भवति । सोमाभिषवार्थम् । यत्र उलूखलसुतं सोमं अत्यर्थं पिब । पुनःपुनः पिब इति वा । गॄ निगरणे ।

तत्प्रतिकूलार्थः अवपूर्वत्वात् । क्रियासमभिहारार्थे यङ्लुगन्तं अवजल्गुलः इति । सन्यङोः (पा. ६. १. ९) इति द्वित्वम् । गुणो यङ्लुकोः (पा. ७. ४. ८२) इति गुणः । उरण्रपरत्वम् (पा. १. १. ५१) उदोष्ठ्यपूर्वस्य (पा. ७. १. १०२) बहुलं छन्दसि (पा. ७. १. १०३) इति उत्वम् । अभिषवणफलकयोरेव सोमोऽभिषूयते । नोलूखले । तत्र अभिधानात् तदाकारत्वात् तत्कार्यकरत्वात् उलूखलशब्दः ॥ १

यत्र द्वाविव जघनाधिषवण्या कृता ।
उलूखलसुतानामवेद्विन्द्र जल्गुलः ॥ २

यत्र यज्ञे यथा मैथुनकाले स्त्रीपुंसजघने एवमभिषवकाले परस्परसंपर्कौ अधिषवणफलकग्रावाणौ कृतौ । औविभक्तेः आच् । तत्र अधिषवणफलकाभ्यां सुतं अवपिब ॥ २

यत्र नार्यपच्यवमुपच्यवं च शिक्षते ।
उलूखलसुतानामवेद्विन्द्र जल्गुलः ॥ ३

यत्र यज्ञे मैथुनकाले स्वजघने नारीव पुरुषाय एकोऽभिषवग्रावा इतरस्मै ग्राव्णे अपगमनं उपगमनं च ददाति । च्यु गतौ । शिक्ष दाने । अपगच्छति उपगच्छति च इत्यर्थः । तत्र सोमं पिब ॥ ३

यत्र मन्थां विबध्नते रश्मीन् यमितवा इव ।
उलूखलसुतानामवेद्विन्द्र जल्गुलः ॥ ४

यत्र यज्ञे अभिषवग्रावाणं विबध्नाति अङ्गुलीभिः । अश्वरश्मीन् नियन्तुं अश्वानिव । सोमस्य मथितृत्वात् ग्रावा मन्थाः । दधिमन्थनरज्जूः वा । टाभिसोः अम्शसौ । यथा दधिमन्थानेन नियन्तुं रज्जुभिः बध्नीयुः तद्वत् । तत्र उलूखलसुतं पिब ॥ ४

यच्चिद्धि त्वं गृहेगृह उलूखलक युज्यसे ।
इह द्युमत्तमं वद जयतामिव दुन्दुभिः ॥ ५

उलूखलस्य द्व इमे ।

यद्यपि त्वं गृहे गृहे हे उलूखल व्रीह्याद्यवघातार्थं युज्यसे तथापि इह मया सोमाभिषवाय युक्तः त्वं दीप्तिमत्तमं वद । शब्दं कुरु । यथा जयतां राज्ञां दुन्दुभिः आघातैः ॥ ५

उत स्म ते वनस्पते वातो वि वात्यग्रमित् ।
अथो इन्द्राय पातवे सुनु सोममुलूखल ॥ ६

हे वनस्पतिविकार उलूखल । न्यग्रोधेन अधिषवणफलके क्रियेते । तद्धितेन कृत्स्नवन्निगमा भवन्ति (नि. २ ५) इत्येवम् । यस्मात्तवाग्रं वृक्षावस्थायां वायुर्विविधं अकम्पयत् । तस्मादिन्द्रस्य पातुं अभिषुणु सोमम् । हे अधिषवणफलक । ग्रावाणो वा । वा गतिगन्धनयोः । कम्पने च । लट् स्मे (पा. ३. २. ११८) इति भूते । वाति स्म । उलूखले सोमाभिषवस्य अभिधानात् तत्र तत्र उलूखलकश्रुतेश्च तदाकारतत्कार्यकरत्वाच्च एवम् । फलकास्थचर्मणि ग्रावभिश्चतुर्भिः अध्वर्युप्रतिप्रस्थातृनेष्टाग्नीधैः सूयते सोमः । वात इन्द्रः । सः यस्मात् वृक्षावस्थायां अग्रकम्पनेन अचलत्वदुःखं अपनीतवान् तस्मात् त्वमपि प्रत्युपकारार्थं सोमं सुनु । यस्मात् वातेन चाल्यमानमग्रं न कचिदप्यन्यत्र नियुक्तं निष्प्रयोजनं आसीत् इति वा । इदानीं तु महति प्रयोजने इन्द्रपानार्थं सोमाभिषवणे विनियुक्तमस्ति । तस्मात् सुनु सोमम् । इन्द्रः पास्यति । इति वा ॥ ६

आयजी वाजसातमा ता ह्युच्चा विजर्भृतः ।
हरी इवान्धांसि बप्सता ॥ ७

द्वेपरे मुसलस्य च ।

द्वे उलूखलमुसले आयजी मर्यादया यष्ट्र्णी अवघातद्वारेण यागस्य कर्तृणी । अवघातवेलायां अन्नस्य संभक्तृतमे । ते उच्चैः पुनः पुनः विह्रियेते । हिः यस्मादर्थे वा । यस्मात्ते तत्र उच्चैर्विह्रियेते तस्मान्मर्यादया यष्ट्र्णी हविः पुरोडाशावघातेन अन्नस्य संभक्तृतमे च । इन्द्राविव । तै यथा धाना ऋजीषं च स्वभागं भक्षयतः तद्वदवघातकाले चरुपुरोडाशानि बप्सतः । प्सा भक्षणे । शतृ शुश्च । श्लौ (पा. ६. १. १०.) इति द्विः । ह्रस्वः (पा. ७. ४. ५९.) हलादिः शेषः (पा. ७. ४. ६०.) च । अभ्यासेचर्चे (पा. ८. ४. ५४.) इति जश्त्वमटा । विजर्भृतः इति । वेः हृञ् विहारे । धातोरेका च (पा. ३. १. २२.) इति यङ् । यङोऽचि च (पा. २. ४. ७४.) इति लुक् । सन्यङोः (पा ६. १. ९) इति द्विः गुणोयङ्लुकोः (पा. ७. ४. ८२.) उरण् रपरः (पा. १. १. ५.) कुहोश्चुः (पा. ८. ४. ६२.) हृग्रहोर्भः छन्दसि (वा. ८. २. ३२—१.) इति रूपं सिद्धयते ॥ ७

ता नो अद्य वनस्पती ऋष्वावृष्वेभिः सोतृभिः ।

इन्द्राय मधुमत्सुतम् ॥ ८

ये महती ते हे वनस्पतिविकारभूते अस्मदर्थं अद्य महद्भिरभिषोतृभिः अध्वर्यु-प्रतिप्रस्थतृनेष्टाग्निध्रैः सह इन्द्रार्थं स्वादुमदन्नं अभिषुतम् ॥ ८

उच्छिष्टं चम्वोर्भर सोमं पवित्र आ सृज ।

नि धेहि गोरधि त्वचि ॥ ९

प्रजा पतिं हरिश्चन्द्रं चर्म वान्त्या प्रशंसति ॥

कर्म वान्त्या ।

इति केचित् । यान्यस्यामृचि उद्धरणासर्जननिधनादिकर्माणि तानि इति । एतद्द्वारेण यागकर्मस्तुतिर्वा । चर्मणः इतरस्य वा उभयोर्वा अस्यां प्रशंसासंभवात् यथोक्तं तत् पर्येष्यम् । अथैनं द्रोणकलशं अभ्यवनिनाय इतिश्रुतिप्रत्यक्षत्वात् सोमप्रशंसा न्यायतरा । बृहद्देवतायां चाह –

चर्माभिषवणीयं वा सोमां वान्त्या प्रशंसति । (बृ. दे. ३. १०१.)

इति । आत्मा अन्तरात्मानं प्रेष्यति । शुन शेप एव अध्वर्युं वा । अनुपयुक्तं शिष्टं सोमं अधिषवणफलकाभ्यां उद्धर । अधिषवणफलके अत्र चम्वौ । भ्यामि ओस् । ओसि चेत् सकाशादित्याहार्यः । उत् अवार्थे वा । चम्यते अस्मिन् सोम इतिचमूः चमसम् । सुपि ओस् । हृञ् आङ् अध्याहरति । अवशिष्टं सोमं चमूषु चमसेषु आहर । आहृत्य दशापवित्राख्यपावनवस्त्रे प्रक्षिप । प्रक्षिप्य स्थापय द्रोणकलशे । गोस्त्वचि उपरि गोचर्मणि स्थिते द्रोणकलशे अपनय ॥ ९

---

यच्चिद्धि सत्य सोमपा अनाशस्ता इव स्मसि ।

आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ १

ब्राह्मणे विश्वेदेवानन्तरं इन्द्रं स्तुतवान् इति । तं विश्वेदेवाऊचुः इन्द्रो वै (ऐ. ब्रा. ७. १६. १.) इति द्वाभ्यां इन्द्रं तुष्टाव ।

ऐन्द्रं यच्चिद्धि सत्येति उत्तरं चाश्विनंतृचम् ।

यदिति सुपां सु लुक् (पा. ७. २. ३९.) इति ङसेः लुक् । यस्मात् हे इन्द्र अविसंवादिन् सोमानां पातः । तव अत्यन्तस्तुतिपरा भवामः । ईषदर्थे आङ् । ईषत्स्तुतिपरा अनाशस्ताः । अविद्यमानेषत्स्तुतयः अनाशस्ताः । इव एवे । अस भूवि । मस् । इदन्तो मसि (पा. ७. १. ४६.) श्नसोरल्लोपः (पा. ६. ४. १११.) शपो लुक् च इति स्मसि । यस्मादत्यन्तं स्तुमः तस्मात् क्षिप्रं अस्मान् आशंसय । प्रार्थयमानान् प्रार्थितसंपादनेन प्रायुङ्क्ष्व । तद्देहि । गाः अश्वान् शोभावतः सहस्रसंख्यान् हे इन्द्र बहुधन । तुः क्षिप्रे । शस स्तुप् ।

उरुर्विश्वं तुवि ।

इति बहौ ।

धनं मघम् ।  १

शिप्रि॑न् वाजानं पते॒ शची॑व॒स्तव॑ दं॒सना॑ ।
आ तू न॑ इन्द्र शंसय॒ गोष्वश्वे॑षु शु॒भ्रिषु॑ स॒हस्रे॑षु तुवीमघ ॥  २

क्षिप्रे हनू नासिके वा । नि. ६. १७.
शिरस्त्राणेऽपि शिप्रा स्यात् ।

तदस्यास्तीति वा शिप्रिन् ।

शिप्राः शीर्षसु विततः ।

इति दृष्टत्वात् । हे शिप्रिन् धनानां अन्नानां वा स्वामिन् कर्मवन् प्रज्ञावन् वा तव दंसना वाक् स्तुतिर्वा । दसि दर्शनदंसनयोः । टाप्त्वात् वाक् । यत एवं अत आशंसय एतां देहीत्युक्तः ॥  २

नि ष्वा॑पया मिथू॒दृशा॑ स॒स्तामबु॑ध्यमाने ।
आ तू न॑ इन्द्र शंसय॒ गोष्वश्वे॑षु शु॒भ्रिषु॑ स॒हस्रे॑षु तुवीमघ ॥  ३

मुमूर्षुः किल विकृतरूपाणि प्रेतपिशाचादिमिथुनानि पश्यति । तदभावमत्र शुनःशेप आशास्ते । महाधन इन्द्र अस्मद्दर्शनपरिहारार्थं नियमेन स्वापय । मिथुनीभुय ये दृश्येते तेमिथूदृशे । प्रेतः पिशाचो वा पुमान् स्त्री च । ते च स्वप्नं कुरुताम् । प्रतिबोधवर्जिते । सस स्वप्ने । बुध अवगतौ । किंच आशंसय अस्मान् ॥  ३

स॒सन्तु॒ त्या अरा॑तयो॒ बोध॑न्तु शूर रा॒तयः॑ ।
आ तू न॑ इन्द्र शंसय॒ गोष्वश्वे॑षु शु॒भ्रिषु॑ स॒हस्रे॑षु तुवीमघ ॥  ४

या जाग्रते। मां मुच्यमानं नेच्छन्ति च। स्थ अरातयः शत्रवः स्वपन्तु।

शिश्नदेवा अरातयः।

इति शत्रौ। स्था इति टाप् व्यत्ययेन पुंविशेषणत्वत्। रा दाने। स्त्रियां क्तिन् (पा. ३. ३. १४.) रातिर्दाता। तत्प्रातिकूल्ये नाशकरा अरातयः। स्त्रियां वा। हे शूर मन्मुक्तीच्छावन्तः ज्ञातयः बोधयन्तु। श्यनि शप्। मदायुर्दानानि बुध्यन्ताम्। मे आयुर्देहि इत्यर्थः। किंच आशंसय अस्मान्॥ ४

समिन्द्र गर्दभं मृण नुवन्तं पापयामुया।

आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ॥ ५

हे इन्द्र गर्दभं संमृण अपशब्दं कुर्वन्तं पापयामुया वाचा। विस्वरमारटन् गर्दभः अनिष्टसूचकः हि। तेन तद्धिंसां आशास्ते। मृण हिंसायाम्। नुव आरटने। किंचाशंसय अस्मान्॥ ५

पताति कुण्डृणाच्या दूरं वातो वनादधि।

आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ॥ ६

कुण्डाकारा भूत्वा अञ्चतीति कुण्डृणाची वात्या। सा यथा अधिपताति उपरि गच्छति। सौ टा। यथा वातोऽपि वनाद्दूरं पतति अरण्यात् तिर्यग्गच्छति। यथैत-योरेतदुचितमेव स्यात् तद्वत्त्वापि स्तोतुरनुग्रहं उचितमेव। तस्मान्मां अनुगृहाण। इत्यौचित्यात् योज्यम्। कुड्यमञ्चतीति वा कुण्डृणाची। कुड्यचारी गरकोलिका। या आरुह्य चङ्क्रम्यते इत्यर्थः। तस्या हि कृष्णाया दर्शनं अनिष्टसूचकम्। तदनेन प्रति-पाद्यते। वातोऽपि स्वप्ने मामादाय दूरं गच्छति वनात्। तच्च मुमूर्षोरचिरमरणसूचक-मिति श्रुतिश्च। आशु वायुरेनं प्रहरति इति। एताभ्यां द्वाभ्यां लिङ्गाभ्यां आसन्न-मरणतया मांज्ञात्वा अनुग्राहक स्वभावेन आयुर्देहि गवादींश्च॥ ६

सर्वं परिक्रोशं जहि जम्भया कृकदाश्वम्।

आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ॥ ७

अनिष्टं यत्सूचयति तत्सर्वं सृगालवायसादिकं जहि नाशय। कृकलासम्। तद्दर्शनमपि अनिष्टम्। जभि हिंसायाम्। कृकलास एव कृकदाश्वः। जनिष्टान् सर्वान् अनुक्तांश्च नाशय। इष्टान् कुरु च॥ ७

आ व इन्द्रं क्रिविं यथा वाजयन्तः शतक्रतुम् ।
मंहिष्ठं सिञ्च इन्दुभिः ॥ १

हे इन्द्र त्वां बहुकर्मप्रज्ञं दातृतमं सोमैरन्नकामाः स्तुवन्तो वा सिञ्चाम इत्याशास्महे सोमैः । यथा कूपम् । महत्या कूपोदकमाहृत्य सिञ्चेत् । तत्समीपस्थमाहावं वा ।

उदः काटः क्रिविः कर्तम् ।

इति कूपे ।

आहावश्चावपानंच निपाने तत्समीपजे ।

व इति अमि शस् । भक्त्या परवशचित्त एवम् । वाज स्तुतौ । स्तुवन् । अत्रापि सौ जस् । महि दाने इष्ठन् च । वाजमन्नं वा । क्यच् आत्मनः तदिच्छति इत्यर्थे । अवग्रहत्वात् ॥ १

शतं वा यः शुचीनां सहस्रं वा समाशिराम् ।
एदु निम्नं न रीयते ॥ २

द्वावपि वाशब्दौ चार्थे । य इन्द्रः शुद्धानां सोमानां शतं च सोममिश्रितदध्नां समाशिरां सहस्रं च गच्छति । शुद्धांश्च दधिमिश्रांश्च अत्यन्तबहून् सोमान् । उदकं निम्नं प्रदेशं यथा शीघ्रं गच्छति तद्वत् । री गतौ । यस्त्वं सोमपानार्थं शीघ्रमागच्छसि तं त्वां वयं वाजयन्तः सौमैरासिञ्चाम इति समस्तार्थः ॥ २

सं यन्मदाय शुष्मिण एना ह्यस्योदरे ।
समुद्रो न व्यचो दधे ॥ ३

एना इति सौ टा । यदेनत् । द्वितीयाटौस्स्वेनः (पा २. ४. ३४) प्रथमायां व्यत्ययेन इदम् । यदिदं सोमानां शतं सहस्रं च मदार्थं बलार्थं च अस्य इन्द्रस्य उदरे व्याप्तं सम्यक् धारयति । यथा समुद्रो व्याप्नुयात् । एवं त्वदुदरं प्राप्य अवतिष्ठते व्यचः व्याप्तिः । तं त्वां वाजयन्तः आसिञ्चेम सोमैः । ते त्वदुदरे व्याप्ता भवन्तु॥ ३

अयमु ते समतसि कपोत इव गर्भधिम् ।
वचस्तच्चिन्न ओहसे ॥ ४

अयं ते अभिषुतः सोमः यंत्वां सम्यक् सततं गच्छसि । यथा मैथुनार्थं कपोतः कपोतिकाम् । गर्भः धीयते अस्यामिति गर्भधिः ताम् । उपसर्गे घोः किः (पा. ३. ३. ९२.) कर्मण्यधिकरणे च (पा. ३. ३. ९३) अर्तिगृभ्यां भन् ( उ. ३. १६३. ) गर्भः । स इव

यस्त्वां सोऽयम्। यदिदमुक्तं अस्माकं तद्वहस्व आत्मानं प्रति प्रापय। मद्वचः श्रुत्वा सोमपानतृप्तो मां मोचय। अत सातत्यगमने। वह प्रापणे। यजादित्वात् अकिति च बहुलं छन्दसि (पा. ६. १. ३४) संप्रसारणगुणौ॥ ४

स्तो॒त्रं रा॑धानां पते॒ गिर्वा॑हो वीर॒ यस्य॑ ते।
विभू॑तिरस्तु सू॒नृता॑॥ ५

हे गिरां वाहक स्तुत्याश्रयधनानां स्वामिन् स्तोत्रस्तुतिवाहक विक्रान्त। यस्य तव यावत्किंचित् स्तोत्रं तत्सर्वम्। यस्त्वं सर्वैः स्तोत्रैः स्तूयसे तस्य तव विभूतिर्वागस्तु। विभवति इति विभूतिः। संग्रामस्तुतिकरणसमर्था अस्तु।

गान्धर्वा सूनृता।

इति वाचि विभूतिरैश्वर्ये वा। सा मतुबर्था च। त्वत्स्तुतिलक्षणा मदीया विभूतिमती मदैश्वर्यकरी मत्स्तुतिरस्तु। शोभनेषु नृषु तायत इति वा सूनृता। तनु विस्तारे। क्विप् च अनुदात्तोपदेशवनतितनोति (पा. ६ ४. ३७) इत्यादिना। स्तोत्रमद्योग्या इत्यर्थः॥ ५.

ऊ॒र्ध्वस्ति॑ष्ठा न ऊ॒तये॒ऽस्मिन् वाजे॑ शतक्रतो।
सम॒न्येषु॑ ब्रवावहै॥ ६

उत्तिष्ठ। यं ब्रवीमि तत्र प्रवर्तस्व। अस्माकं पालनाय। अस्मिन् संग्रामे। आत्ममरणफलत्वात् यज्ञ एव संग्रामः। बहुकर्मन् बहुप्रत्यवा। संभूय अन्यान् देवान् मद्विमोचनार्थं अभ्यर्थयावहै। एतदर्थमुत्तिष्ठ। अन्येष्विति शसि सुप्॥ ६

योगे॑योगे त॒वस्त॑रं॒ वाजे॑ वाजे हवामहे।
सखा॑य॒ इन्द्र॑मू॒तये॑॥ ७

अपूर्वस्यागमो योगः।

इति अत्र इच्छाप्राप्तिः। तत्र तत्र इच्छाप्रप्तौ बलवत्तरमिन्द्रं तत्र तत्र संग्रामे च हवामहे। हे सखाय इदामिदं इदमिदं ददाति इति इन्द्रं तत्र तत्र पालनाय॥ ७

आ घा॑ गम॒द्यदि॒ श्रव॑त्सह॒स्रिणी॑भिरू॒तिभिः॑।
वाजे॑भि॒रुप॑ नो॒ हव॑म्॥ ८

इन्द्रः नः हवं यदि श्रवत् अस्मदाह्वानं यदि शृणुयात् सहस्रसंख्यायुक्तैः पालनैरन्नैश्च उपागच्छत्। इत्थंभूतलक्षणे (पा २. ३. २१.) इत्यर्थे भिस्। संबद्धपालनसहस्रैरस्मान् पालयन् अन्नानि च ददत् इत्यर्थः॥ ८

अनु॑ प्र॒त्नस्यौक॑सो हु॒वे तु॑विप्र॒तिं नर॑म्।
यं ते॒ पूर्वं॑ पि॒ता हु॒वे॥ ९

हे इन्द्र त्वां पुराणनिवासस्थानं सोमाख्यं प्रति आह्वयामि। बहूनां प्रत्यवस्थाता तुविप्रतिः कृतानेकयुद्धः। तं तुविप्रतिं नराकारं त्वां पूर्वं मम पिता आहूतवान्। यं नवसोममिति वा।

प्रवयः प्रदिवः प्रत्नम्।

इति पुराणे।

सद्योकः।

इति गृहे। एतयोः अमि ङस्॥ ९

तं त्वा॑ व॒यं वि॑श्ववा॒रा शा॑स्महे पुरुहूत।
सखे॑ वसो जरि॒तृभ्यः॑॥ १०

हे सर्वस्य वरणीय पूर्वोक्तं त्वां वयमात्मजीवितमाशास्महे; बहुभिराहूत सखे प्रशस्य धनवन् वा। स्तोत्रर्थम्। आत्मार्थं अन्यार्थं वा आशास्महे।

जरिता स्तोमवाहसः।

इति स्तोतरि। शतपथे यद्वै नु श्रेष्ठः तेन वसिष्ठः (श. ब्रा. ८. १. १. ६) इति वसुः प्रशस्यः॥ १०

अ॒स्माकं॑ शि॒प्रिणी॑नां॒ सोम॑पाः सोम॒पाव्ना॑म्।
सखे॑ वज्रि॒न्त्सखी॑नाम्॥ ११

तथा॒ तद॑स्तु सोमपाः॒ सखे॑ वज्रि॒न्तथा॑ कृणु।
यथा॑ त उ॒श्मसी॒ष्टये॑॥ १२

हे सोमानां पातः सखे वज्रवन् यथावयं चिरं जीवेम इति कामयामहे। तव यागार्थं तत्तथा कुरु। अस्माकं हनूवतां नासिकावतां वा सोमस्य पातृणां सखीनां त्वत्प्रसादेन तथा तदस्तु॥ ११,१२

रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः ।

क्षुमन्तो याभिर्मदेम ॥ १३

अस्माकं स्तुतयः रेवतीः सन्तु । धनवत्यो भवन्तु । तत्साधका भवन्तु इत्यर्थः । सहभूतैर्यो माद्यते । मदि स्तुतिमोदमदगतिषु । स्तूयते तृप्यते वा । तस्य इन्द्रस्य धन-साधका बह्वन्नाश्च बह्वन्नसाधकाश्च । क्षु शब्दे । कीर्त्यामत्र । कीर्तिमत्यः । वयं याभिर्नित्यं इन्द्रं स्तुमः इति वा । मदतिःस्तुतौ ॥ १३

आ घ त्वावान्त्मनाप्तः स्तोतृभ्यो धृष्णवियानः ।

ऋणोरक्षं न चक्र्योः ॥ १४

हे इन्द्र त्वत्सदृशः । युष्मदस्मद्भ्यां छन्दसि सादृश्ये (वा. ५. २. ३९. १.) आत्मना स्तोतृभिः स्तुतिभिर्वा व्याप्तः स्तुतः सन् स्तोतृभ्यः । हे प्रगल्भाभिभवितः । इ याच्ञायाम् । याच्यमानः । ऋणु गतौ । अन्तर्णिच्च । तिपि सिपू । आऋणोत् । स्तोतृभ्यः कामान् गमयति ददाति इत्यर्थः । चक्रयोरक्षमिव । यथा अक्षं चक्रेषु प्रक्षिपेत् एवं स्तोतृषु कामान् ॥ १४

आ यद्दुवः शतक्रतवा कामं जरितॄणाम् ।

ऋणोरक्षं न शचीभिः ॥ १५

सूक्तमृड् मादनं दुवः ।

इति स्तुतौ । यावती काचित् परिचर्या तया सर्वया स्तोतृभिरात्मानं परिचार-यसि । स्तोतॄणां कामानपि आगमयसि । तद्ददासि । अक्षमिव शचीभिः प्रज्ञाभिः कर्मभिर्वा ॥ १५

शश्वदिन्द्रः पोप्रुथद्भिर्जिगाय नानदद्भिः शाश्वसद्भिर्धनानि ।

स नो हिरण्यरथं दंसनावान्त्स नः सनिता सनये सनोऽदात् ॥ १६

तस्मा इन्द्रः स्तूयमानः प्रीतो मनसा हि रथं ददौ तमेतया प्रतीयाय शश्वदिन्द्र इति (ऐ. ब्रा ७. १६.) य इन्द्रः एवंभूतैरश्वैः असुरधनानि जिगाय सः अस्मभ्यं हिरण्य-रथमदात् । पोप्रुथद्भिः । प्रोथृ पर्याप्तौ शतृच सुश्च । श्लौ (पा. ६. १. १०.) इति द्विः । हलादिः शेषः (पा. ७. ४. ६०.) णौ चङि (पा. ७. ४. १.) नाग्लोपि (पा. ७. ४. २.) भ्राज (पा. ७. ४. ३ ) इति ऋदित उपधाह्रस्वः अन्यतरस्यामिति उपधाया उत्तम् ।

पर्याप्तः समर्थः। समर्थैः नानदद्भिः अत्यर्थं पुनः पुनर्वा ह्रेषद्भिः । नद शब्दे। यङ्लुकौ। दीर्घोऽकितः (पा ७. ४ ८३.) तुजादीनां दीर्घोऽभ्यासस्य (पा. ६. १ ७.) दीर्घः। छन्दसि प्रत्ययविशेष इति वा। सन्यङोः (पा. ६. १ ९.) इति उभयत्रापि। शीघ्रगतित्वादत्यर्थं पुनः पुनर्वा श्वासं कुर्वद्भिः। श्वस प्राणने। दसि दंशदर्शनयोः।

दंसना सुवितं करः।

इति कर्मणि दर्शनीयत्वात् दंसना वाक्। रूपं वा। कर्मवान् वा वाग्मी वा रूपवान् वा। स एव अस्माकं सर्वविधुरेषु संभक्ता जीवितलाभाय च। स एव अस्माकम्। वन षण संभक्तौ। सनिता। षणु दाने। सनये॥ १६

आश्विनावश्वावत्येषा यातं शवीरया।
गोमद्दस्रा हिरण्यवत्॥ १७

तमिन्द्र उवाच। अश्विनौ नु (ऐ. ब्रा ७. १६. ११.) इति सोऽश्विनौ तुष्टाव अत उत्तरेण तृचेन। हे अश्विनौ अश्ववता अन्नेन आयातम्। इत्थं भूतलक्षणाट्टात्वात् तत्संबद्धौ। अश्वयुक्तौ। मतौ बह्वचोऽनजिरादीनाम् (पा. ६. ३. ११९) शरादीनां च (पा. ६. ३. १२०.) इति पूर्वस्य दीर्घः। यदस्मभ्यं अश्वमन्नं च दातव्यं तद्गृहीत्वा आगच्छतम्। शु क्षिप्रे। ईर गतौ।

क्षिप्रगत्यामाशुगतौ वेगे च।

मेधराधाभ्यां ईरन्नीरचौ। ह्रस्वाच्च इति इरच्। वेगवत्या इषा। गोमत्। क्रियाविशेषणमिदम्। गा हिरण्यं च गृहीत्वा आगच्छतम्।

शत्रुनाशकरौ दस्रौ।

एकस्य नाम्ना उभयोर्व्यपदेशो वा॥ १७

समानयोजनो हि वां रथो दस्रावमर्त्यः
समुद्रे अश्विनेयते॥ १८

हे दस्रौ अश्विनौ वां रथः साधारणं युज्यते एव उभयोरपि। मरणवर्जितश्च।

नाकः समुद्रः कृन्तत्रम्।

इत्यन्तरिक्षे। अनालम्बने गच्छति॥ १८

न्य १ घ्न्यस्य मूर्धनि चक्रं रथस्य येमथुः।
परि द्यामन्यदीयते॥ १९

अघ्न्यः । हन हिंसागत्योः । गमहनजनखनघसाम् (पा ६ ४ १८) अहन्तव्यः। प्रजापतिरादित्यो वा। तस्य मूर्धनि स्वरथस्य एकं चक्रं नियमितवन्तौ। कर्मप्रवचनीयप्रतौ परिः। दिवं प्रति अन्यत् द्वितीयं गच्छति। १९

कस्त उषः कधप्रिये भुजे मर्तो अमर्त्ये।

कं नक्षसे विभावरि। २०

तमश्विना ऊचतुः उषसं नु इति। स उषसं तुष्टाव अत उत्तरेण तृचेन (ऐ. ब्रा. ७. १६. १२)

उषस्यस्तृच उत्तरः।

हे उषः।

पुरीषं कम्।

इत्युदके। रश्म्याहृतं तत् यो दधाति धारयति वा स कधः। आतोऽनुपसर्गे कः (पा. ३ २. ३.) इति कः। कः प्रजापतिर्वा। केन विधीयते प्रकाशनरसाद्याहरणार्थं स्थाप्यते इति वा कधः आदित्यः। तस्य प्रिया। सः प्रियो यस्या इति वा। अत्यन्तसाहचर्य्याच्च तत्प्रियत्वं साध्यते। एवंभूते। अमरणे। भुजे पालनाय। मर्तः। स्वार्थे यत्। तस्य लुक्। मर्तः। कं मर्तं आयुरादिप्रदानेन व्याप्नोषि। नक्ष व्याप्तौ,। स भुजे अलभ्। तक्ष तृक्ष णक्ष गतौ। कं पालयितुं गच्छसि इति वा। कथय। एतत्सुखं ज्ञात्वा वयमपि तादृशा एव भवेम। भा दीप्तौ। विविधा भा विभाः। मतुपि छन्दसि वनिप्। विभायुक्ता विभावरी। वनो र च (पा. ४ १. ७) ऋन्नेभ्यो ङीप् (पा. ४. १. ५) अम्बार्थनद्योर्ह्रस्वः (पा. ७. ३. १०७)॥ २०

वयं हि ते अमन्मह्यान्तादा पराकात्।

अश्वे न चित्रे अरुषि॥ २१

वयं त्वां आजीवितं याचामहे। मन याच्ञायाम्। मदायुष आ अवसानात्। आवर्षशतात्। दूरात्। दूरं पराकं विप्रकृष्टम्।

पुरुषायुर्वर्षशतम्।

आङ् मर्यादायां अभिविधौ वा। यावद्वर्षशतं पूर्वम्। अश्वे न चित्रे। यथा बडबडबारूपेण विचित्रा पूज्या वा तद्वत्। अश्वे बडबासदृशे व्याप्ते वा। विचित्ररूपे पूज्ये वा। अरुष दीप्ते गन्त्रि वा। रुश रुच दीप्तिगत्योः॥ २१

त्वं त्येभिरा गहि वाजेभिर्दुहितर्दिवः ।
अस्मे रयिं नि धारय ॥ २२

त्वं यानि वयं अर्थयामहे तैः संबद्धा अश्वैः । यान्यस्मद्द्यान्यन्नानि तानि गृहीत्वा आगच्छ । दिवो जातत्वात् उषा दिवो दुहिता । हे दुहितर्दिवः । अस्मभ्यं धनं नियमेन धारय । स शुनःशेपः अस्यामृच्युक्तायां वि पाशो मुमुचे इतीतिहासार्थः ॥ २२



त्वमग्ने प्रथमो अङ्गिरा ऋषिर्देवो देवानामभवः शिवः सखा ।
तव व्रते कवयो विद्मनापसोऽजायन्त मरुतो भ्राजदृष्टयः ॥ १

हिरण्यस्तूप आङ्गिरसः ।

आग्नेयं प्रथमं सूक्तम् ।

हे अग्नेः त्वं सर्वत उत्कृष्टः शरीरस्थितिहेतोः अशितपीतरसकर्ता च । अङ्गं शरीरावयवम् । मतुप्यत इनिः । अङ्गिनः स्थित्यै अशितपीतरसः तदङ्गिरसः । तत्करोति तदाचष्ट (वा. ३. १. २६-१) इति णिच् । णिच्यागते प्रत्ययधातुत्वात् क्विप् च । आत्वम् । तस्यच अधातोः इति अधातुभूतपूर्वस्य दीर्घत्वम् । मतुपि रः । दिवोदासादित्वादाद्युदात्तत्वम् । इत्यङ्गिराः । जाठरो ह्यग्निरन्नं रसीकरोति । रसो लोहितमांसस्नाय्वस्थिमज्जाशुक्रभावेन परिणममानः शरीरस्थितिहेतुर्भवति । ऋषिः सर्वस्य द्रष्टा मनसैव । अथवा योऽयं प्रथमोऽङ्गिरा ऋषिः स त्वमेव । त्वत्कारणत्वात् । अग्नेः

अर्चिषि भृगुर्जज्ञे अङ्गारेष्वङ्गिरा ऋषिः (बृ. दे. ५. ९९).

देवानां हविर्नयनाद्युपकारेण देवोऽभवः । तेषामपि दाता । सुखः सखा च भवसि ।

सुगम्यं छर्दिः शुनं शिवम् ।

इति सुखे । तव कर्मणि परिचर्यायां अवस्थिताः मेधाविनः विदितयागादिकर्माणः वेदितव्यकर्माणो वा । विद ज्ञाने । आतो मनिन् (पा. ३. २. ७४) अन्येभ्योऽपि (पा. ३. २. ७५) विद्मना ।

आप्तोऽपश्च कृतम् ।

इति कर्मणि । उत्कृष्टचेष्टिताः अजायन्त मरुतः दीप्यमानशक्त्यायुधाः ।

ऋष्टिरूर्मिः स्वादिरारा ।

इति वज्रनायुधे ।

"धर्मायत्तं हि देवत्वं धर्मश्चाग्निवशं गतः" ।

अतः तव व्रते अजायन्त मरुतः इति ।

केचित् तु मरुत इति ऋत्विङ्नाम आचक्षते । अत्र च ऋत्विक्षु एव तद्वत्सु यजमानेषु वा । त्वत्कर्मण्यवस्थिता ऋत्विजो यजमाना वेदितव्यकर्माणः अजायन्त इति योजना । अत्र चेतिहासः । 'त्रिशङ्कुर्नाम ऐक्ष्वाको राजा वसिष्ठस्य याज्योऽभवत् । स वसिष्ठमब्रवीत् । येनाहं क्रतुना सशरीरो दिवं यायां तेन मां याजय इति । तं वसिष्ठोऽब्रवीत् । अशक्यमेतदिति । स किञ्चिदागतमन्युरेतदेव वसिष्ठपुत्रानब्रवीत् । त एनमब्रुवन् । भगवान् प्रवृत्तो यजने । किमर्थं वृक्षमुत्सृज्य शाखा स्ववलंबसे इति । स तानब्रवीत् । अशक्यमेतदिति भगवता अहमुक्त इति । त एनमब्रुवन् । यत्तस्याशक्यं कथं तदस्माकं शक्यं भविष्यति इति । स तानब्रवीत् । प्रत्याख्यातोऽस्मि गुरुणा गुरुपुत्रैश्च । अन्यां गतिं यास्यामि इति । तं वसिष्ठपुत्रः शक्तिः क्रुद्धोऽशपत् । गुर्वतिक्रमाच्चण्डालो भव इति । स शापानन्तरमेव घोररूपश्चण्डालोऽभवत् । अथासौ पुत्रं राज्येऽभिषिच्य विश्वामित्रस्याश्रमं गत्वा प्रोषितस्य तस्य भार्यां परिचरितवान् । अथागतो विश्वामित्रः स्वदारपरिचरणाहिततोषः यथावृत्तं सर्वमुपलभ्य राजानमब्रवीत् । अहं त्वां तेन क्रतुना याजयिष्यामि येन सशरीरः स्वर्गं यास्यसि । इति उक्त्वा स्वयमेव संभारान् संभृत्य शिष्यानुवाच । मन्त्रयन्तामृषयः । यश्च यत् ब्रवीति तत्सर्वं मह्यं आख्यापयतां इति । त ऋषीन् उपामन्त्रयन् । ते उपामन्त्र्यमाणाश्च ऋषयोऽब्रुवन् । आगमिष्याम इति । वसिष्ठास्त्वब्रुवन् । चण्डालो यत्र यजते क्षत्रियो याजयति च कथं तत्र देवताभिः ग्रहा गृहीष्यन्ते । कथं तत्रागच्छामः इति । तत्सर्वं विश्वामित्राय तच्छिष्या आचक्षते । अथ सपुत्रवसिष्ठवर्जं आगतेषु ऋषिषु परिसमाप्त एव यज्ञे उत्पत इति विश्वामित्रः त्रिशङ्कुमब्रवीत् । अथ असावुत्पत्य त्रिदिवमगच्छत् । तं देवाः पातयितुं ऐच्छन् । ततः क्रुद्धो विश्वामित्रः अन्यान् देवानसृजत् । अथैनं जिता देवा अब्रुवन् । यथा भवानिच्छति तथास्तु इति । सोऽयं त्रिशङ्कुरद्यापि दिवि रोचते । तदेतदनेन अर्धर्चेन उच्यते । ये क्षत्रियत्वाद्दीप्तशक्त्याद्यायुधाः ते तव व्रते अवस्थिता मरुत ऋत्विजो विश्वामित्रादयः तद्वन्तः त्रिशङ्काद्ययजमाना वा वेदितव्यकर्माणः अत्यन्तोत्कृष्टसशरीरस्वर्गगमनादिकर्माणः अजायन्त ॥ १

त्वम॑ग्ने प्रथ॒मो अङ्गि॑रस्तमः क॒विर्दे॒वानां॒ परि॑ भूषसि व्र॒तम् ।

वि॒भुर्विश्व॑स्मै॒ भुव॑नाय॒ मेधि॑रो द्विमा॒ता श॒युः क॑ति॒धा चि॑दा॒यवे॑ ॥ २

हे अग्ने सर्वेषामुत्कृष्टः सः शरीरस्थितिहेतोरशितपीतरसस्य अतिशयेन कर्ता । अङ्गिरस ऋषेरतिशयेन उत्पत्तिकारणम् । मेधावी देवानां यागाख्यं कर्म परिगृह्णासि । परिभूः परिग्रहे । किंच ईश्वरश्च विश्वभुवनार्थं यज्ञस्य संपादयिता । मेधो यज्ञः । मेधरथाभ्यां इरन् । नित्यं यज्ञयुक्तः । तस्मात् तत्संपादयिता । द्यावापृथिव्यौ अरणी वा मातृस्थानीये यस्य स द्विमाता । आमाशयो जलाशय इव । अत्र शीङ् स्थाने ।

आयवः पूरवः प्रजाः ।

इति नृषु । कतिप्रकारैर्मनुष्यार्थं पुनर्व्यवस्थाता । और्वशेयो वा पुरूरवसः पुत्र आयुः । तदर्थाय वा । कतिधात्वं अग्निहोत्रदर्शपूर्णमासादिषु तावदाहवनीयत्वात् त्रिधा । पिण्डपितृयज्ञचातुर्मास्येषु चतुर्धा । प्रणीतातिरेकात् पशौ पञ्चधा । शामित्रातिरेकात् सोमाग्नीध्रधिष्ण्यातिरेकात् यावत्तावत्संख्यात्वम् ॥ २

त्वम॑ग्ने प्रथ॒मो मा॒तरि॑श्वन आ॒विर्भ॑व सुक्रतू॒या वि॒वस्व॑ते ।
अरे॑जेतां॒ रोद॑सी होतृ॒वूर्ये॒ऽस॑घ्नोर्भा॒रमय॑जो म॒हो व॑सो ॥ ३

अत्रेतिहासः । सर्वमन्धंतम आसीत् । अथ मातरिश्वा सूक्ष्ममग्निमपश्यत् । अथर्वा च ऋषिः तत् पाराशर्यो भरद्वाजश्च वक्ष्यति ।

मथीद्यदीम् । ऋ. वे १. ७१. ४.
त्वामग्ने पुष्करात् । ऋ. वे. ६. १६. १३.

इत्याभ्याम् । तत्र मथ्यमाने ज्वालामाली नाम अग्निरजायत । स प्रथमं मातरिश्वन आविरभवत् । अथ विवस्वते । तदिह उच्यते । हे अग्ने त्वं अग्रिमो वायवे आविरभवः । लिङि लोट् । शोभनकर्मेच्छया । इच्छार्थे क्यच् । हलः (पा. ६. ४. २.) इति दीर्घश्च । टार्थे आच् । सुक्रतूयया शोभनयागादिकर्मेच्छया । मातरिश्वने च आविर्भूय अनन्तरं विवस्वते च । रेजृ भयेवपनयोः । अबिभीतां भयाद्वा अकम्पेतां द्यावापृथिव्यौ । होतृवूर्ये होतरि वृते त्वयि । यदा त्वं होता वृतो वेदिमध्यस्थोऽदीप्यथाः तदा रोदसी अपि अभ्यसेताम् । अयं दीप्तो ह्यावां दहेदिति भीतवत्यौ । भयात् कम्पितवत्यौ वा । किं पुनरन्ये । किंच असघ्नोः । अत्रेतिहासः । देवाः किल स्वयमेव स्वानि स्वानि हवींषि अभक्षयन् । तेषां केचित् वोढुं नाशक्नुवन् । एकैकाहुतिः त्रैलोक्यभारादतिरिच्यते । कांश्चित्तु शक्नुवतोऽपि असुरा अभ्यद्रवन् । ते सर्वे अग्निमब्रुवन् । हव्यं नो वह इति । तत् लीलायमान एव सोऽवहत् । तदेतदिहोच्यते । असघ्नोर्भारमिति । सघतिर्हिंसायाम् । इह तु भारस्य हिंसाकर्मतासंभवात् अन्यस्य । सघिः शक्नोत्यर्थे वा । सहेर्वा शक्तिरर्थस्य । न सघेः । शक्नोतेश्च निर्दिष्टकर्मभूत

धात्वन्तरानुषक्तत्वात् भारं इति च श्रुतेर्वोढुं इति वाक्यशेषः । आहुतिभारं वोढुं अशक्नोः । तेन आहुतिभारेण अयजः महतो देवान् । हे प्रशस्य धनवन् वा ॥ ३

त्वमग्ने मनवे द्यामवाशयः पुरूरवसे सुकृते सुकृत्तरः ।
श्वात्रेण यत्पित्रोर्मुच्यसे पर्या त्वा पूर्वमनयन्नापरं पुनः ॥ ४

अत्रापीतिहासः । स्वर्गकामो मनुः अग्निमधत्त पुरूरवाश्च ऐळः । ताभ्यामग्निः स्वर्गमदात् । इति । एतदिहोच्यते । हे अग्ने त्वं मनुना राज्ञा द्यां द्युलोकं कामितवान् । मनुं राजानं दिवं कामयमानं तत्प्रापणेन प्रयुक्तवान् । वश कान्तौ । हेतुमति च (पा. ३. १. २६) इति णिच् । पुरूरवसा च सुकृता शोभनकर्माणि कृतवता शोभनकर्मकृत्तरः । ङे टार्थे सर्वः । श्वात्रेण । अत्रापीतिहासः । यो ज्वालामालाग्निः प्रथमं मातरिश्वने विवस्वते च आविर्भूतः तं मातरिश्वा विवस्वतः सकाशात् पृथिव्यामनयत् । इति । वक्ष्यति—

आ दूतो अग्निम् । ऋ. वे. ६. ८. ४.

इति । श्वात्रेणेत्यर्धर्चेन अत्रापि ।

क्षिप्रं मक्षु तृषु श्वात्रम् ।

इति क्षिप्रार्थत्वात् मातरिश्वा निवर्तते । तस्य वायोः अत्यन्तक्षिप्रत्वात् स एव श्वात्रः । तेन यत् यदा पित्रोमुच्यसे परि । पितरौ द्यावापृथिव्यौ । लङि लट् । परिरुपरौ । द्यावापृथिव्योरुपरि अमुच्यथाः । यद्यपि ज्वालामालाग्निः मातरिश्वना केवलं पृथिव्या एवोपरि अमुच्यत न दिवः तथापि साहचर्यादुभे प्रति व्यपदेशः । यदा पृथिव्या मुक्तवान् ततः प्रभृति मर्यादया त्वां पूर्वमाहवनीयात्मना निहितवन्तः यजमानाः । मर्यादयैव अपरं गार्हपत्यात्मना पुनः पुनः तत्र कर्मणि । पुनःशब्दस्त्वङ्गीकृतवीप्सार्थः । आङुभयत्रापि मर्यादार्थः । यदा विवस्वतः सकाशान्मातरिश्वा पृथिव्यामनयत् ततः प्रभृति त्वां यजमानाः कर्मसु त्रेधा व्यभजन् इति समष्टः ४

त्वमग्ने वृषभः पुष्टिवर्धन उद्यतस्रुचे भवसि श्रवाय्यः ।
य आहुतिं परि वेदा वषट्कृतिमेकायुरग्रे विश आविवासासि ॥ ५

हे अग्ने त्वं तदा कामानां वर्षिता इष्टार्थदः । हविर्नयनद्वारेण वृष्टेः कर्ता वा पुष्टेर्वर्धयिता च । यागार्थं नित्यं यः स्रुचमुद्यमयति तस्य वृष्टेर्वर्षयिता वृष्टेर्वर्धयिता च भवसि । श्रवणीय अत्यन्तोत्कृष्टगुणः । य आहुतिं वषट्कारं च कर्म परि विजानाति । तस्य उद्यतस्रुचः । ङसि ङे । एकायु रिति । अत्रापीतिहासः । और्वशेय आयुः

गन्धर्वलोकादग्निमाहृत्य आयत्तसोम्यः प्रथमं देवविशः पर्यचरत् । ततोऽन्यान् । इत्येतदुच्यते । एक आयुः । प्रथममाहर्ता इत्यस्यैकायुस्त्वम । अग्ने प्रथमं देवविशः पर्यचरत् इत्यर्थः ॥　५

त्वम॑ग्ने वृजि॒नव॑र्तनिं॒ नरं॒ सक्म॑न् पिपर्षि वि॒दथे॑ विचर्षणे ।
यः शूर॑साता॒ परि॑तक्म्ये॒ धने॑ द॒भ्रेभि॑श्चि॒त्सम॑ृता हं॒सि॒ भूय॑सः ॥　६

हे अग्ने त्वं कुटिलमार्गं नरं पिपर्षि विदथे । हे सक्मन विचर्षणे । षच सेवायाम् । चर्ष दर्शने । देवानां सेवितः सेव्यो वा । अन्येभ्योऽपि (पा. ३. २. ७५) इति मनन्तत्वात् । सेवनशील विश्वद्रष्टः ।

अवद्यं वृजिनं रिप्रम् ।

इति पापे । अन्यास्वपि चेष्टासु । सम्यक् चेष्टितं वृजिनम् । पृ पालनपूरणयोः पालयसि यज्ञगृहे ।

खसरं विदथः ।

इति गृहे । यस्त्वं शूरसाता संग्रामे परिगन्तव्ये धने निमित्तं तद्गतौ । निमित्तात् कर्मसंयोगे (वा २. ३ ३६-६.)इति ङिः । संग्रामे यत्प्राप्यं धनं तन्निमित्तम् । दभ्रैः संगतौ भूयसो हंसि । दभ्रमल्पम् । ऋ गतौ । अल्पसंख्यैः शत्रुभिः संगतौ । भयाद्संगतान् दूरस्थानपि अन्यांश्च गत्वा बहून् हंसि । देवतामाहात्म्यान्मध्यमकर्मणा स्तुतिः । मध्यम एवात्र अग्निः ॥　६

त्वं तम॑ग्ने अमृत॒त्व उ॑त्त॒मे मर्तं॑ दधासि॒ श्रव॑से दि॒वेदि॑वे ।
यस्ता॑तृषा॒ण उ॒भया॑य॒ जन्म॑ने॒ मयः॑ कृ॒णोषि॒ प्रय॒ आ च॑ सू॒रये॑ ॥　७

हे अग्ने यस्त्वां परिचरति त्वं देवत्वे उत्कृष्टे तं मनुष्यं धारयसि । कीर्त्यै अन्नाय वा अहन्यहनि । सर्वकालमित्यर्थः । ङे ङौ । यस्त्वां पूजयति तमिह लोके अन्नादीनि दत्वा धारयसि । परलोके देवत्वं च । अथवा श्रवः कीर्तिः । स्वार्थ एव ङे तादर्थ्ये । यस्त्वां स्तौति तं देवत्वं प्रापयसि अन्नादीन्यपि इह । तव वा तस्य वा यशसे सर्वकालमिति । यस्त्वं स्तुतिहविषोः तृष्णया बाध्यमानः । तृष तृष्णायाम् । तुजादित्वाद्वा अभ्यासदीर्घः । उभयस्मिन् जन्मनि । मयः प्रयश्च मर्यादया विदुषे ददासि ।

सुखं शर्म मयः सं शम् ।

इति सुखे ।

स्वधा पाजः प्रयः सनम् ।

इत्यत्र । आङ् मर्यादार्थः । ङे ङौ । उभयाय जन्मने इति । इह च परत्र च अन्नं सुखं च सूरये स्तोत्रे कृणोषि । कृञ् सर्वार्थत्वात् दानेऽत्र ॥ ७

त्वं नो॑ अग्ने स॒नये॒ धना॑नां य॒शसं॑ का॒रुं कृ॑णुहि॒ स्तवा॑नः ।
ऋ॒ध्याम॒ कर्मा॒पसा॒ नवे॑न दे॒वैर्द्या॑वापृथिवी॒ प्राव॑तं नः ॥ ८

हे अग्ने त्वं मां धनानां सनये यशस्वन्तं कारुं कुरु स्तूयमानः । सनिर्लाभः ।

ब्रह्म पीवो यशः ।

इत्यन्ने । हविर्लक्षणान्नयुक्तम् ।

स्तोतारः कारवः ।

स्तोतारं यष्टारं च कुरु इत्यर्थः । नः इति अमि आम् वा । यशः कीर्तिः । अस्माकमन्तरात्मानं यजमानं वा स्तोतारं धनलाभार्थं यशस्विनं कुरु स्तूयमानः । किंच ऋध्याम त्वत्प्रसादेन वृद्धिं प्राप्नुयाम । इदं कर्म च यागाख्यं पालनाख्यकर्मणा अपसा नवेन अन्यैरकृतपूर्वेण अन्यैरपि देवैः । हे द्यावापृथिव्यौ प्रकर्षेण रक्षतं युवामप्यग्निप्रसादादस्मत्कर्म । हे अग्ने धनलाभार्थं मां यशस्विनं स्तोतारं च कृत्वा मत्स्तुत्या प्रसन्नः तत्कर्म देवैर्द्यावापृथिवीभ्यां युक्तः पाहि इत्यर्थः ॥ ८

त्वं नो॑ अग्ने पि॒त्रोरु॒पस्थ॒ आ दे॒वो दे॒वेष्व॑नवद्य॒ जागृ॑विः ।
त॒नू॒कृद्बो॑धि॒ प्रम॑तिश्च का॒रवे॒ त्वं क॑ल्याण॒ वसु॒ विश्व॒मोपि॑षे ॥ ९

त्वं अस्मद्यज्ञे उपगम्य । ऋत्विग्यजमानाः तिष्ठन्त्यस्मिन् उपस्थीयन्ते वा देवाः इति उपस्थो यज्ञः । हे अग्ने अनवद्य निर्दोष पित्रोर्द्यावापृथिव्योर्यज्ञे ताभ्यां यजनीयानां देवानां यज्ञे त्वं देवानां मध्ये दाता जागृविश्च सर्वकार्येषु अप्रमादी । देवेष्वप्रमत्तः देवांश्च यष्टुमुत्साही इति वा । निर्धारणे वा अधिकरणे वा सुप् । तनूकृच्च अशितपीतरसानां भावापादानेन शरीराणां कर्ता च । हे कल्याण कारवे बोधि । वसु विश्वं आवपसि च । प्रमतिः प्रकृष्टज्ञानस्त्वं द्युस्थानां देवानां अर्थाय अस्मत्कृतयज्ञे याः स्तुतयः ताः श्रुत्वा बुध्यस्व । स्तोतॄणां उपर्युपरि भद्र सानुग्रह कमनीय वा स्तोत्रे बहु धनं ददासि यत् । तदस्माकं च देहि ॥ ९

त्वम॑ग्ने॒ प्रम॑ति॒स्त्वं पि॒तासि॑ न॒स्त्वं व॑य॒स्कृत्तव॑ जा॒मयो॑ व॒यम् ।
सं त्वा॒ राय॑: श॒तिन॒: सं स॑ह॒स्रिण॑: सु॒वीरं॑ यन्ति व्रत॒पाम॑दाभ्य ॥ १०

हे अग्ने त्वं प्रकृष्टज्ञानः । त्वं पितृकार्यकरत्वात् नः पितासि । पितैव पितामहः । त्वत्पुत्रोऽङ्गिराः । तत्पुत्रोऽहं इति । त्वं वयस्कृत् अन्नकृत् ।

चनो द्युम्नं वयोऽमृतम्।

इत्यन्ने। तण्डुलादि पचसि इत्यर्थः। डुदाञ् दाने। स्तोतॄणां दाता अन्नानां वा। तव सजातयो वयं पौत्रत्वात्। किंच संयन्ति त्वा त्वदीयं रायः शतसहस्रसंख्यायुक्ताः। अत्यर्थं बहवः। सुष्ठु वीरः विक्रान्तः। शोभना वा वीरा यस्य संबन्धिनः। केन सबन्धेन। सामर्थ्यात् स्तोतृत्वेन। सः शुवीरः तम्।

कृतं व्रतम्।

इति कर्मणि। कर्मणां पालयितारम्। हे अहिंस्य। दम्भु हिंसायाम्। तव स्वभूतं मांसं प्रतिपद्यन्ते रायः॥ १०

त्वाम॑ग्ने प्रथ॒मम॒ायुम॒ायवे॑ दे॒वा अ॑कृण्व॒न्नहु॑षस्य वि॒श्पति॑म्।

इळा॑मकृण्व॒न्मनु॑षस्य शास॑नीं पि॒तुर्यत्पु॒त्रो मम॑कस्य॒ जाय॑ते॥ ११

अत्रेतिहासः। ऊर्वश्यामुत्पन्नः पुरूरवसः पुत्र आयुः। तं कदाचित्सुरैरूपद्रूयमाणा देवा अब्रुवन्। जह्येनानसुरानिति। सोऽब्रवीत्। सेनापतिमें युष्माकमेको भवतु इति। तस्य देवा अग्निं सेनापतिमकुर्वन्। तथा नहुषस्य। तदनेनार्धर्चेन उच्यते। हे अग्ने त्वामुत्कृष्टम्। अग्रे इति वा क्रियाविशेषणम्। इण् गतौ। अस्मादायुः औणादिकः। छन्दसीणः (उ. १. २.) इति। असुरान् प्रतिगन्तारं त्वां देवा आयवे नहुषस्य च विश्पतिं अकुर्वन्। ङसि ङे। आयोर्नहुष्पस्य च सेनापतिं चक्रुः। किंच। इळामित्य त्रापीति हासः। मनुः प्रजाकामः नावाहुतिं अजुहोत। अग्निमेवेळारूपिणं कृत्वा प्रायच्छत्। एषा ते सर्वान् कामान् ददाति इति। तां मनुः अन्वशासत्। इदं इदं च मे कुरु इति। सा तस्मै ऐळं पुत्रं अजनयत् इति। तदनेनोच्यते। त्वामेव इळां अकुर्वन् मनुष्यस्य वशवर्तिनीम्।

मनुषःस्तुर्वशायवः।

इति मनुष्ये। शासनेन वश्यता साध्यते। कदैतदिति। पितुर्यदा पुत्रः पुरूरवा नम मदीयस्य अग्नेः इळाया जायते। तवक ममका वेकवचने (पा. ४. ३. ३.) इति अणि शैषिके मामकः मदीयः ममक. इतीमे पर्यायाः। इळारूपिणोऽग्नेरेव पुत्रः पुरूरवाः। अग्निर्हिरण्यस्तूपपितामहः। पितृकारकत्वात् पिता वा इति व्याख्यातम्। अत उपपन्नमेतत्। ममकस्य पितुरग्नेरिळारूपिणः यदा पुत्रः पुरूरवाः नाम अजायत॥ ११

त्वं नो॑ अग्ने॒ तव॑ देव पा॒युभि॑र्म॒घोनो॑ रक्ष॒ तन्व॑श्च वन्द्य।

त्रा॒ता तो॒कस्य॒ तन॑ये॒ गवा॑म॒स्यनि॑मेषं॒ रक्ष॑माण॒स्तव॑ व्र॒ते॥ १२

हे अग्ने त्वं अस्माकं मघवतस्तन्वश्च रक्ष ।

स्वधनं मघम् ।

हविर्लक्षणेन धनेन धनवतः । श्वयुवमघोनामतद्धिते (पा. ६. ७. १३३) इति मतुबर्थवकारसंप्रसारणम् । तनूशब्देन पुत्रादयो लक्ष्यन्ते । पायुरायुवत् । हे देव वन्दनीय अग्ने । तव योग्यैः पायुभिः पालनैः यज्ञवतोऽस्मत्पुत्रपौत्रादींश्च । त्राता तोकस्य तनयस्य । पुत्रस्य पौत्रस्य चेत्यर्थः । त्रा पालने ।

पुत्रः सूनुर्यहुस्तोकः कुमारस्तनयस्तनः ।

इति उभावपि पुत्रवाचिनौ । अपितु पुत्रपौत्रत्वान्न पुनरुक्तता । ङसि ङिः । तनयस्येत्यर्थः । गवां च त्राता । निमेषवार्जितं यत्नेन परिरक्षन् । तव यागकर्मणि व्यवस्थितानां च यजतां पुत्रपौत्राणां गवां च रक्षिता असि ॥ १२

त्वमग्ने यज्यवे पायुरन्तरोऽनिषङ्गाय चतुरक्ष इध्यसे ।
यो रातहव्योऽवृकाय धायसे कीरेश्चिन्मन्त्रं मनसा वनोषि तम् ॥ १३

हे अग्ने यज्यवे यष्टुरर्थाय स्तोतृयजमानानां च पालयिता । कृवापाजिमिस्वदिसाध्यशूभ्य उण् (उ. १. १) सन्निकृष्टतरः ज्ञातिस्थानीय इत्यर्थः । अनिषङ्गाय यज्यवे चतुरक्ष इध्यसे । अन्यदेवतापरिचरणाय न निषज्यते कामभोगेषु वा इत्यनिषङ्गः तस्मै । त्वत्स्तुतियागपराय अभोगप्रधानाय वा । दिक्चतुष्टयाभिमुखो दीप्यसे । अक्ष्णा मुखं लक्ष्यते । समन्ताद्यज्ञे दीप्यसे इत्यर्थः । यो यज्युः रातहव्यः पूर्वमपि दत्तहविष्कः अहिंस्राय तुभ्यम् । वृको हिंस्रप्राणिः । तत्स्वभावरहिताय । अथवा कुकवृक आदाने इत्यस्माद्वा । आज्यसोमपयःप्रभृतीनां आदात्रे इति । ओव्रश्चूछेदने इत्यस्माद्वा । भावे घञ् । धेट् पाने इत्यस्मात् धायसे इति च । तुमर्थे से सेन् । (पा. ३. ४. ९.) आतो युक्चिण् कृतोः । (पा. ७. ३. ३३.) यः अच्छिन्नपानभोगार्थं दत्तहविष्क इत्यर्थः ।

सूरयः कीरयो रुद्राः ।

इति स्तोतरि । यो दारिद्र्यान्न यजते स्तौत्येव तस्यापि मन्त्रलक्षणां स्तुतिं मनसा हृदयेन संयाचसे । वन याऽऽयाम् । संभजसि वा सादर एव । तच्छब्दाद्यच्छब्दश्च । यः तं इति । तं प्रार्थयसे संभजसे वा । १३

त्वमग्न उरुशंसाय वाघते स्पार्हं यद्रेक्णः परमं वनोषि तत् ।
आध्रस्य चित्प्रमतिरुच्यसे पिता प्र पाकं शास्सि प्र दिशो विदुष्टरः ॥ १४

शंसु स्तुतौ ।

उरु विश्वं तुवि ।

इति बहौ ।

वाघतः कारवः पस्त्याः ।

इति ऋत्विक्षु । तद्वति यजमानेऽत्र ।

स्वं नृम्णं रत्नरेक्णश्च ।

इति धने । परममिति क्रियाविशेषणम् । वन दाने ।

वंस्वा नो वार्या पुरु । ऋ. वे. ८. २३. २७, ६. १४.

इतिवत् । हे अग्ने त्वं बहुस्तुताय यजमानाय स्पृहणीयं यद्धनं तत् परमं ददासि इत्यर्थः ।

आध्रः कृशो भ्रुमुश्चांद्रुः ।

इति दरिद्रे । त्वं जनैर्दरिद्रस्यापि प्रकृष्टमतिः अनुग्रहपरः इत्युच्यसे । पितृसदृश इति च । पाकं प्रानुशास्सि । अविपक्वप्रज्ञं परिपक्वप्रज्ञं वा प्रकर्षेण अनुशास्य प्रज्ञां अस्य जनयसि इत्यर्थः । प्रदिशश्च दिक्षु निवसितानि सर्वभूतान्यपि प्रानुशास्सि विद्वत्तरः ॥ १४

त्वम॑ग्ने प्रय॑तदक्षिणं॒ नरं॒ वर्मे॑व स्यूतं॒ परि॑ पासि वि॒श्वतः॑ ।
स्वा॒दु॒क्ष॒द्मा यो व॑सतौ॑ स्यो॒न॒कृज्जी॑वया॒जं यज॑ते॒ सो॒प॒मा दि॒वः ॥ १५

यमु दाने बन्धने वा ।

वर्मासत्रं वरूथं च ।

इति कवचे । हे अग्ने त्वं दत्तदक्षिणं प्रबद्धदक्षिणं सन्ततदानं मनुष्यं सर्वतः परिपालयसि । कवचानुस्यूतं योद्धारं त्वदीयं पासि यथा तद्वत् । षिवु वा । च्छ्वोः शूड् (पा. ६. ४. १९) इति ऊत्वं च । षिञ् बन्धने । हृद्ये बद्धकवचम् । किंच ।

क्षद्म पाथ इळः ।

इत्यन्ने । यो वसतौ स्वादुक्षद्मा स्योनकृच्च अति थेर्जीवयागेन यजते च सः त्वत्प्रसादात् दिव आन्तिकस्थः ।

पाथो ज्मा वसनिर्वास्तु ।

इति गृहे । यः स्वगृहे अतिथिं स्वाद्वन्नं भोज यसि । सुखकृत् शय्यायां शाययति च । जीवो जन्तुः याज्ञीयपशुना यथेष्टं यजते च देवान् वा त्वां वा ।

अन्तमोपमतुर्वशा ।

इत्य न्तिके । तात्स्थार्थौ च सुः । अस्याच्च । सः त्वत्प्रसादात् स्वर्गस्थ एव । अथवा दिवः स्वर्गस्य उपमानभूतः । सर्वैः प्राणिभिः मृष्टाहारसंतुष्टैः स्वर्गोऽयमिति स्तूयते इति वा अर्थ ॥ १५

इ॒मामग्ने श॒रणिं॑ मीमृषो न इ॒ममध्वा॑नं॒ यमगा॑म दू॒रात् ।
आ॒पिः पि॒ता प्रम॑तिः सो॒म्या॒नां॒ भृमि॑रस्यृषि॒कृन्मर्त्या॑नाम् ॥ १६

अत्रापि इतिहासः। हिरण्यस्तूपो यागायाग्निं विहृत्य अनिष्ट्वा रक्षोभयाद्दूरं जगाम। तेषु गतेषु प्रत्यागत्य कृतापराधत्वाभिप्रायेण अग्निमाह। शॄ हिंसायां आक्रोशे च। नञ्यनिः। गुणश्च। मृष तितिक्षायम्। छन्दसि लुङ् लोटि। चुरादित्वात् णिच्। णिश्रिद्रुस्रुभ्यः (पा. ३. १. ४७.) इति चङ्। चाङि. (पा. ६. १. ११.) इति द्वे। अत्र लोपोऽभ्यासस्य इत्यभ्यासे वर्तमाने भृञामित् (पा. ७. ४. ७६.) इति इत् च। सन्यतः (पा ७. ४. ७९.) इति इकारीभूतः। सन्वल्लघुनि (पा. ७. ४. ९३.) इति चङि. दीर्घो लघोः (पा. ७. ४. ९४.) इति वा दीर्घः। बहुलं छन्दस्यमाङ्योगेऽपि (पा. ६. ४. ७५.) इत्यडभावः। हे अग्ने आत्मन इमां हिंसां क्षमस्व अस्माकम्। यद्वयं त्वां विहृत्य अनिष्ट्वा रक्षोभयादिमं अत्यन्तं दूरमार्गं यमगाम तदस्मदपराधं त्वद्धिंसां मृषस्व। यस्मात्त्वं ज्ञातिः पितृस्थानीयश्च। प्रकृष्टमतिरनुग्रहपरश्च सोमसंपादिनां सर्वयजमानानाम्।

युगापिः प्रष्ठिः।

इति ज्ञातौ। सोममर्हति य इति सोम्यः। तस्मादमीमृषः। छन्दसि लुङ् लङ् लिटः (पा. ३. ४. ६.) इति लुङ् लोटि। यङ्लुगन्तं वा लुङि। चुरादित्वाण्णिच्। णिश्रुद्रुस्रुभ्यः कर्तरि चङ् (पा. ३. १. ४८.) पुषादिः। किंच। भूमिः भ्रमिता असि। त्रिष्वपि लोकेषु। ऋषिः दर्शने। तमोहन्तृत्वात् दर्शनकृन्मनुष्याणाम्। भ्रमु चलने। अथवा मुषत्यर्था। हे अग्ने इमां संसृतिं मार्जय अस्माकं जननमरणादिन्यतिदुःखदानि शोधय अपनय। दूरात् सृष्ट्यादिमयं संसाराध्वानं गतास्म। यस्मात्त्वं बन्धुः पितृकार्यकरश्च अनुग्रहमतिश्च सोमार्हाणां सतां दर्शनकृत् सम्यक् ज्ञानकरः असतां भ्रमयिता असि मोहकरः। तस्मादस्माकमृषिकृत् भव इत्यर्थः। एतदुक्तं भवति। क्रान्तेः सम्यक् ज्ञानस्य च त्वं कर्ता। त्वदायत्तौ संसारमोक्षौ। त्वं च पितृवत् सर्वजनानां अनुग्रहपरश्च। अतोऽस्मान् सम्यक्ज्ञानोत्पादनेन मोचय अस्मात्संसारात् इति। मृजू शुद्धौ। व्रश्चभ्रस्जादिषत्वम्। लङि श्लु। चुरादिणिज्वा लुङि। भूमिः सणिच्। १६

मनुष्वद॑ग्ने अङ्गिर॒स्वद॑ङ्गिरो ययाति॒वत्सद॑ने पूर्व॒वच्छु॑चे।
अच्छ॑ या॒ह्या व॑हा॒ दैव्यं॒ जन॒मा सा॑दय ब॒र्हिषि॒ यक्षि॑ च प्रि॒यम्॥ १७

हे अग्ने शुचे दीप्त यत्सदने गृहे अभिगत्य आवाह्य देवलोकं सर्वदेवान् वा अस्मदीये बर्हिषि निषीदय। यज च इष्टं तव कामं वा। अच्छ अभौ। बहिर्देवपञ्चजनेभ्यो यञ् तत्र भवार्थे। यथैतेषां मन्वङ्गिरोययातिपूर्वर्षीणां होतृत्वेन निषद्य अयजः। हे अशितपीतरसस्य कर्तः। तद्वन्ममापि इत्यर्थः॥ १७

एतेनाग्ने ब्रह्मणा वावृधस्व शक्ती वा यत्ते चकृमा विदा वा ।
उत प्र णेष्यभि वस्यो अस्मान्त्सं नः सृज सुमत्या वाजवत्या ॥ १८

हे अग्ने त्वं एतेन अस्मत्स्तुतिलक्षणेन ब्रह्मणा अत्यर्थं वर्धस्व । स्तूयमानाहि देवता वीर्येण वर्धन्ते । अत एवम् । यङ्लुकौ । दीर्घो लघोः (पा. ७. ४. ९४.)। यत्ते शक्त्या विदा वा चकृम । यद्ब्रह्म यथाशक्ति यथाज्ञानं करवाम । सुपां (पा. ७. १. ३९.) इत्यादिना पूर्वसवर्णत्वं टाविभक्तेः । अपिच त्वमभिप्रणेषि स्तुतिकरणैरस्मान् प्रवर्तयसि । वस्यः वसीयोऽसि । अस्माभिः स्तुतिं कारयसि इत्यर्थः । एतदुक्तमत्र । त्वत्स्तुत्यर्थं कुतोऽस्माकं शक्तिः ज्ञानं च । त्वदनुग्रहादेव त्वामस्तौष्म । न स्वमहिम्ना इति । अभिप्रणेषि उत । लट् च लोटि । एतेन ब्रह्मणा अभिप्रणय । अपिच वसूनि वर्धयस्व च । अस्मभ्यं देहि इत्यर्थः । संसृज अस्मान् शोभनया बुध्या अन्नवत्या । ज्ञानमन्नं च नो जनय इत्यर्थः ॥ १८

---

इन्द्रस्य नु वीर्याणि प्र वोचं यानि चकार प्रथमानि वज्री ।
अहन्नहिमन्वपस्ततर्द प्र वक्षणा अभिनत्पर्वतानाम् ॥ १

हे ऐन्द्रे ।

इन्द्रस्य वीरकर्माणि क्षिप्रं ब्रवीमि । वज्रवान् अन्येनाकृतपूर्वाणि अत्यन्तप्रकृष्टानि यानि मेघहननापान्तर्दननदीप्रभेदनादीनि । तानि अवोचमित्यर्थः ।

अहिर्वृत्रः परिषदः ।

इति मेघे । तर्द हिंसायाम् । अनुः पश्चादर्थे । पूर्वं मेघं हत्वा तदनन्तरं मेघस्था अपः पातितवान् । भूपातनमपां हिंसनम् ।

वक्षणा प्रायतः कुल्या ।

इति नदीषु । पर्वतप्रभवा हि नद्यः । पर्वतसंबन्धिनी नदीः बहूदकत्वात् भित्वा स्वकूलानि सर्वतः प्रहितवान् इत्यर्थः । तर्द विस्तारे वा । पृथिव्यामपो वितस्तार । पातिताभिर्विस्तृताभिर्वा नदीकूलभेदः । अथवा वक्षणाः पशवः । पर्वता मेघाः । तेषामेकं हत्वा अन्येषामपि पशून् भिन्नवानित्यर्थः । अथवा पशुवचनेन वक्षणाशब्देन तत्सामीप्यात् पक्षा अत्र प्रतिपद्यन्ते । पर्वतोऽपि महीधरः । पर्वतानां पक्षान् प्राभिनत् छिन्नवान् । एवं हि चरकाध्वर्यूणां ब्राह्मणे इतिहासः श्रूयते । प्रजापतेर्वा हुतं ज्येष्ठं तोकं यत्पर्वताः । ते पक्षिण आसन् । ते यत्र यत्राकमयन् तत्तत् परापातं आसत । अथ चेयं तर्हि शिथिलासीत् । तेषामिन्द्रः पक्षानच्छिनत् । तैरिमामदृंहत् । इति ॥ १

अहन्नहिं पर्वते शिश्रियाणं त्वष्टास्मै वज्रं स्वर्यं ततक्ष ।
वाश्राइव धेनवः स्यन्दमाना अञ्जः समुद्रमव जग्मुरापः ॥ २

अहन् । श्रीञ् सेवयाम् । अत्र एकीभावे । अचिश्नुधातुभ्रुवाम् (पा ६. ४. ७७) इति यङ् । हलादिः शेषः (पा. ७. ४. ६०) । पर्वते लीयमानं मेघम् । यं त्वष्टा देवशिल्पी अस्मै इन्द्रार्थं वज्रं प्रहारवेलायां शब्दकरं उपतापयितारं वा चकार तेन अहन् इत्यर्थः । त्विषेर्देवतायाम् । अकारश्च उपधायाः इति ताच्छील्यादिषु शतृ । अथवा तक्ष त्वक्ष तनूकरणे । स्वृ शब्दोपतापयोः । अचो यत् (पा. ३. १. ५७) गुणश्च अण् रपरः । मेघा हि स्वभावेन पर्वतेषु लीयन्ते । योग्यत्वसन्निधानाभ्यां वा वज्रत्वकरणप्रतीतिः । प्रहर शीघ्रमयं दण्डः । इतिवत् । हते चाहौ आपः स्यन्दमानाः स्रवन्त्यः समुद्रादन्तरिक्षात् । अञ्जः ऋजुना मार्गेण अवजग्मुः अधो भूमिं अग्मुः । अभिनवप्रसूतत्वात् यथा वाशनशीला धेनवः स्ववत्सान् प्रतिगच्छेयुः तद्वत् मेघे हते द्रुततरं वृष्टिरूपेण । स्यन्दू आप्रस्रवणे । शानच् मुक् च । अञ्जः क्रियाविशेषणं वा । टार्थे अयं सुः ।

नाकः समुद्रः ।

इत्यन्तरिक्षे । ङसेः अम् । अव अधोऽर्थः । पार्थिवमेव समुद्रं स्वार्थे । अन्तं जग्मुः इति वा । अञ्जः क्षीरं वा अमि । यथा वाश्रा धेनवः अञ्जः क्षीरं स्रवन्ति तद्वत् समुद्रमवजग्मुरापः ॥ २

वृषायमाणोऽवृणीत सोमं त्रिकद्रुकेष्वपिबत्सुतस्य
आ सायकं मघवादत्त वज्रमहन्नेनं प्रथमजामहीनाम् ॥ ३

वृषायमाणः । वृष अशने । यथा पिण्डपितृयज्ञे अत्र पितरः (वा. सं २. ३१) इत्यादिषु दृश्यते । शतपथब्राह्मणे विवृणोति । अत्र पितरो मादयध्वं यथाभागमावृषायध्वं इत्यस्य यथाभागमश्नीय इत्येवैतदाह । तथा मीमदन्त पितरो यथाभागं आवृषायिषत इति । अत्र यथाभागमाशिषुः इत्येवैतदाह इति । वृषा वर्षम् । तदात्मन इच्छति इत्यर्थे सुप आत्मनः क्यच् (पा. ३. १ ८) । ऋदुपधत्वात् वृषायमाण. । अश्नन् वृषमिच्छन् वा सोमं प्रार्थितवान् । अभिप्लवत्यहं पूर्वं त्रिकद्रुका इत्याचक्षते । अभिप्लवत्यहेषु पीतवान् अभिषुतं तस्यैकदेशं वा । षो अन्तकर्मणि । आदेचः (पा ६. १ ४५) णित् । वस्यकः । आतो युक् (पा ७ ३ ३३) । मघं धनम् । तद्वानिन्द्रः । शत्रूणामन्तकरं वज्रमादत्त । एनं इति पूर्वर्चि उक्तमेघस्य अन्वादेशः । अहीनां मेघानां मध्ये प्रथमजां अग्रेजातं मेघं हतवांश्च ॥ ३

यदिन्द्राहन्प्रथमजामहीनामान्मायिनाममिनाः प्रोत मायाः ।
आत्सूर्यं जनयन्द्यामुषासं तादीत्ना शत्रुं न किला विवित्से ॥ ४

हे इन्द्र यदा त्वं अहीनां मेघानां मध्ये प्रथमजातं मेघं अहन् हतवानासि । आत् तदार्थे । तदा मायावतां मायापि अमिनाः । नाशयसि इत्यर्थः । प्रमिञ् हिंसायाम् । मेघहननेन तत्सहायानां मायायुक्तानां बलं प्रज्ञां चातिसंधां प्रामिनाः इत्यर्थः । यदा मेघहानिः तदैव सर्वजनवृष्टिमूलत्वात् । सूर्यं द्यां उषसं च जनयन् त्वं तदा तादृशं मायावत्संमितमन्यं मेघशत्रुं शातयितव्यं वैरिणं वा नैव अविन्दः । तावन्तं महापरिमाणं मेघं इति वा तादीत्नार्थः ।

तादीत्ना स्यात्तदासमः ।

तावदर्थे वा । अहीनां प्रथमजाः अहिः परिमाणतो यादृक् यावानिति वा तद्वदन्यो नैव सूर्ये जाते । विद्लृ लाभे । लिट् । न अलभथाः । किल एवार्थे ॥ ४

अहन्वृत्रं वृत्रतरं व्यंसमिन्द्रो वज्रेण महता वधेन ।
स्कन्धांसीव कुलिशेना विवृक्णाहिः शयत उपपृक् पृथिव्याः ॥ ५

अहन् इन्द्रो वज्रेण महता वधेन नित्यहन्त्रा प्रहारकेण इति वा वधार्थः । तेन वृत्रमहन् । वृत्रव्यंसौ असुरौ । तौ अहन्निति वा । आवरणशीलत्वाद्वृत्रं मेघं वृत्रतरं गन्तृतरं अत्यर्थं नश्वरम् । विच्छिन्नांसं इति वा । यथा कुठारेण विविधं छिन्नाः शाखाः पृथिव्या उपपृक् पृथिवीसंपर्चिताः तद्वदहिः शयते । उदकरूपेण भूमौ पतितः शेते मेघश्चेत् । असुरश्चेत् स्वशरीरेण ।

शाखास्कन्धा वया वल्ला ।

इति । व्यत्ययेन नपुंसकम् । उपः सामि । अहि गतौ । गन्ता वृत्रः व्यंसश्च पतितौ शयाते । शीङ् स्वाने । जलाशय इव ॥ ५

अयोद्धेव दुर्मद आ हि जुह्वे महावीरं तुविबाधमृजीषम् ।
नातारीदस्य समृतिं वधानां सं रुजानाः पिपिष इन्द्रशत्रुः ॥ ६

अयोद्धेव दुर्मदो वृत्र इन्द्रमाजुह्वे । योद्धुमसमर्थोऽपि सुरापानमत्तः य आह्वयति स अयोद्धा । स इव । आत्मबलं त्वद्वीर्यंच अजानन् कुत्सितमदः । एवंभूतं त्वां आह्वयते । महाविक्रान्तं बहूनां शत्रूणां बाधितारं ऋजीषिणम् । यत्सोमस्य पूयमानस्य अतिरिच्यते तदृजीषम् । माध्यन्दिनाभिषुतनिरसीकृतमृजीषम् । तमेव तृतीयसवने

हारियोजने च अभिषुणोति। तदिन्द्राश्वभागम्। धानाश्च विप्रुषः। एतदिन्द्रस्य च ऋजीषस्य च संबन्धः। तद्वन्तमिन्द्रमाहूय युद्धे इन्द्रस्य वधानां प्रहाराणां संगतिं न अतारीत् नाशक्नोत्। प्रहारान् नासहत सोढुमित्यर्थः। तॄ शक्तौ। रुज भङ्गे। इन्द्रशत्रुः इन्द्रः शातयिता यस्य सः। संरुजानाः आत्मग्रीवास्ताः संपिष्टवान् चूर्णीकृतवान्। इन्द्रप्रहारचूर्णीभूतग्रीवः इति असुरपक्षे। मेघपक्षे तु। नद्यो रुजानाः। नदीकूलानि संपिष्य स्रोतवान्। पिश पेषणे गतौ वा। उदकरूपेण नदीः प्रति जगाम इति वा॥ ६

अपादहस्तो अपृतन्यदिन्द्रमास्य वज्रमधि सानौ जघान।
वृष्णो वध्रिः प्रतिमानं बुभूषन् पुरुत्रा वृत्रो अशयद्व्यस्तः॥ ७

अपात्। अत्रोपमा लुप्ता। अपादिव अहस्त इव इत्यर्थः। यथा पादहस्तवर्जितः पुरुषः चेष्टितुमशक्तः तद्वदशक्तोऽपि अपृतन्यत् इन्द्रं प्रति किञ्चित् असंग्रामयत्। योध्यमानश्च इन्द्रः अस्याधि अस्योपरि सानौ समुच्छ्रिते प्रदेशे आजघान आगमितवान् वज्रम्। हन्तिर्गत्यर्थः अन्तर्णीतण्यर्थश्च। पृतना युद्धे। क्यजन्तत्वात् सुब्धातुत्वम्। लङ्च। अधिरुपरौ। पर्वतस्थं मेघं क्षिप्तवान् वर्षितुमित्यर्थः। वृष्णः वर्षितुरिन्द्रस्य वध्रिः वध्योऽपि प्रतिद्वन्द्वत्वं भवितुमिच्छन् बहुत्र असकृदावृत्य अतिष्ठत् व्यस्तः। विखण्ड्य विखण्ड्य भूमौ क्षिप्त आसीत्। मेघपक्षे नदीतटाकादिषु उदकरूपेण। शीङ् स्थाने। बहुष्वतिष्ठत् विक्षिप्तः।

दुर्बलेच बलीवर्दे वध्रिर्मुष्के हते भवेत्।

इति। प्रजननसमर्थे वृषभे वा रूढित्वबलात्।

वृषो दुध्रिर्मुष्कभारौ।

इति। यथा प्रजनन समर्थस्य बलवद्वृषभस्य प्रतिद्वन्द्वेच्छया दुर्बलो वध्रिः विक्षिप्तस्तिष्ठेत् एवं वृत्र इन्द्रस्येति॥ ७

नदं न भिन्नममुया शयानं मनो रुहाणा अति यन्त्यापः।
याश्चिद्वृत्रो महिना पर्यतिष्ठत्तासामहिः पत्सुतःशीर्बभूव॥ ८

आपो मनो रुहाणा मनुष्याणां चित्तं आरोहन्त्यः आह्लादयन्त्यः अमुया शयानं अतियन्ति। अनया महत्या वृद्धया संबध्य तिष्ठन्तम्। मनो रुहाणा अतिगच्छन्ति आपः। यथा महान्तं नदं भिन्नकूलमतीत्य गच्छेयुः तद्वत्। सर्वस्योपकारिण्य आपः मेघनिरोधान्निष्फला आसुः। तदा इन्द्रो मेघं हतवान्। तदा सन्तुष्टा वयं सर्व-

माह्लादयामः इति विचिन्त्य अवर्षयन् इत्यर्थः। या एव वृत्रो महत्या स्वतन्वा सेनया वा परिवृत्यातिष्ठत् तासामेव । इन्द्रेण हते सति । अहिः तासां पादसमीपशायी बभूव। सुपि पादः पत् (पा ६. ४. १३०) इति पद्भावः । तेनैकदिक् (पा. ४. ३. ११२) तसिश्च (पा. ४. ३. ११३) इति पत्सुतः। पादेनैकदिक् इत्यर्थः । टार्थे सुप्। पत्सुतः शेते इति पत्सुतःशीः। शीङ् स्वाने । यतो यतः अपां पादा वर्षधाराः ततस्ततः स्थाता अभूदित्यर्थ । हताद्धि मेघात् ऊर्ध्वान्निश्चरन्तीनां अपां पादतः स्थायी मेघः। अत एवम् ॥ ८

नी॒चाव॑या अभवद्वृ॒त्रपु॒त्रेन्द्रो॑ अ॒स्या अव॒ वध॑र्जभार ।
उत्त॑रा॒ सूरध॑रः पु॒त्र आ॑सी॒द्दानुः॑ शये स॒हव॑त्सा॒ न धे॒नुः ॥ ९

वृत्रः पुत्रो यस्याः सा। वृत्तमाता। नीचीनबाहुरभवत्। वृत्रे हन्यमाने तन्माता पुत्ररक्षार्थं तस्योपरि प्रसार्य बाहू अतिष्ठत् इत्यर्थः । तथा व्यवस्थिताया अपि इन्द्रः अस्या वधं अकृत्वा वृत्रमेव हतवान्।

पवीरं दियवो वधः ।

इत्यायुधे । तयावष्टब्धोऽपि वृत्रस्यैव शरीरे वधवज्रं जभार क्षिप्तवान् इत्यर्थः। स्वन्तत्वात् स्वमोर्नपुंसकात् (पा. ७. १. २३) इति अमो लुक् । अभि सुवां। अपादहस्तार्धचान्यवत् जघानेति परार्धर्चेन नीचावयस्त्वं समर्थ्यते । उत्तरा उपरिवर्तिनी वृत्रस्य माता जनित्री ॥

सूर्जन्म ॥

इति प्रसूत्या सूर्माता। अधरः अधोवर्ती । कुटिलतनोः प्रलम्बबाहोः स्वमातुः बाहुजङ्घान्तरस्थायी पुत्र आसीत्। माता शये तस्थौ । सहवत्सा धेनुरिव ॥ ९

अ॒ति॒ष्ठन्ती॑नामनिवेश॒नानां॒ काष्ठा॑नां॒ मध्ये॒ निहि॑तं॒ शरी॑रम्।
वृ॒त्रस्य॑ नि॒ण्यं वि च॑र॒न्त्यापो॑ दी॒र्घं तम॒ आश॑य॒दिन्द्र॑शत्रुः ॥ १०

आपोऽपि काष्ठा उच्यन्ते (नि. २. १५) इति निरुक्तम्।

क्षोदः क्षीरं रजः काष्ठम्।

इति नामानुक्रमण्यामपि । अपां बहुत्वात् अनवस्थायित्वं अनिवेशित्वं च युज्यते एव। स्थाननिवेशरहितानामपां मध्ये निहितं वृत्रस्य शरीरं निण्यं तिरस्कृतं विज्ञापयन्ति इन्द्राय आपः।

अपगूळहं ह्रिरुङ् निण्यम्।

इति गूढे।

अहिर्वृत्रः परिषदः।

इति मेघे। चर गतिभक्षणयोः। मनसा अवगम्यते इति गत्यर्थाः सर्वे ज्ञानार्थाश्च। सोऽन्तर्णिकश्च तद्यो ज्येचेत्। वृत्रशरीरं मरणभयादपां मध्ये अन्तर्हितमपि आपः प्रकाशयन्ति इत्यर्थः। प्रकाशिते अस्मिन् इन्द्रः अहन्। तदा इन्द्रशत्रुर्वृत्रः मरणलक्षणं दीर्घं तमः आस्थितवान्। दीर्घनिद्रां प्रवेशित इव। मेघे तु। मेघमध्ये ह्यापो निहिताः। तस्मादन्यथा योजना। मध्ये अवस्थिता आपः बहुभिर्निहितमेघशरीरान्निर्गमनद्वारं निण्यं विजानन्ति। नीचैर्नमतीति निण्यं निर्गमनबिलम्। अप्सु निण्येन निर्जिगमन्तीषु तदवरोद्धुमिच्छया दीर्घं तमः समस्तनभोमण्डलव्यापितमोरूपेण आतिष्ठत्। नभसि सर्वत्र व्यातिष्ठदित्यर्थः॥ १०

दासपत्नीरहिगोपा अतिष्ठन्निरुद्धा आपः पणिनेव गावः।
अपां बिलमपिहितं यदासीद्वृत्रं जघन्वाँ अप तद्ववार॥ ११

दासपत्नीः। दसु उपक्षये इत्यस्मात् घञ्। दासः कर्मकरः। श्रमादिभिर्वा आतपेन वा क्षीणशक्तिः। पीतमात्र एव एनं पान्ति इति तस्य पालयित्र्य आपः दासपत्न्यः। अहिना मेघेन गुप्ताः तदुदरस्था आपः। तेन वा असुरेण वा तिष्ठन्ति। पणिर्वणिगुच्यते। यथा विक्रयार्थं वणिजा निरुद्धा गावः तिष्ठेयुः तद्वदतिष्ठन्नापः। एवं निरुद्धानामपां निर्गमनबिलं घटितं यदासीत् तदा मेघं तद्रक्षितारमसुरं वा घ्नन् तद्बिलमपावृतवान्। कसुः शत्रर्थे। मेघे नभसि व्याप्ते अपां निर्गमनार्थं तद्द्वारं उद्घाटितवान्॥

अश्व्यो वारो अभवस्तदिन्द्र सृके यत्त्वा प्रत्यहन्देव एकः।
अजयो गा अजयः शूर सोममवासृजः सर्तवे सप्त सिन्धून्॥ १२

अश्व्यः अश्वपृष्ठे साधु स्थिरयानः। तद्धितत्वात् कृत्स्नवन्निगमः। वाहिता वारः। अश्ववारः शत्रूणां वारो वा।

सृको वज्रं घनं त्यजः।

इत्यायुधे। युद्धे वा अपटितः। यस्य च भावेन (पा. २. ३. ३७) इति ङिः। हे इन्द्र यदा त्वं वज्रं गृहीतवान् वृत्रयुद्धार्थं यदा च देवेषु एक एव देवो मरुद्गणः त्वां प्रति गतवांश्च तदा तु अश्व्यो वारः अभूः इति वा अर्थः। त्वया यदा वज्रे गृहीते युद्धे प्रवृत्ते वा मरुत एव त्वां प्रति जग्मुः। हन गतौ। इत्यस्मदीये ह्यैतरेय ब्राह्मणे। इन्द्रो वै वृत्रं हनिष्यन् (ऐ. ब्रा. ३-२०) इत्यादिभिर्नवभिर्वाक्यैः। अथवा सृकेण इति। टार्थे ङिः। वृत्रायुधवचनं च आयुधसामान्यत्वात्। हन हिंसायाम्। यदा सृकेण आयुधेन त्वां प्रतिहतवान् वृत्रः तदा त्वमेक एव दानादिगुणयुक्तः।

तमजयः। तदैव गाः सोमं च तदैव अनुज्ञातवान् गमनाय। अवसर्गो ह्यभ्यनुज्ञा। सप्तसंख्याका नदी। गंगा हि सप्तधा स्रोतोवती। ता वा अन्या वा प्रधानभूता नदीः॥ १२

नास्मै॑ वि॒द्युन्न त॑न्य॒तुः सि॑षेध॒ न यां मिह॒मकि॑रद्ध्रा॒दुनिं॑ च।
इन्द्र॑श्च॒ यद्यु॑यु॒धाते॒ अहि॑श्चो॒ताप॒रीभ्यो॑ म॒घवा॒ वि जि॑ग्ये॥ १३

अस्य इन्द्रस्य अर्थाय इन्द्रस्वभूता इति वा। यदा इन्द्रश्च अहिश्च परस्परं युयुधाते तदा एते न सिषिधुः। विद्युत् तन्यतुः स्तनयित्नुः। यां मिहं अकिरत् सा च ह्रादुनिश्च। अपरेभ्योऽपि मघवैव विजिग्ये। मिह सेचने। वृष्टिर्मिट्। कॄ विक्षेपे। इन्द्रो यां वृष्टिं वितस्तार तत्प्रत्युपकारार्थम्। सापि ह्रादुनिः ह्रास्कारः हनहनशब्दः।

सौदामिनी मेघशब्दो वृष्टिर्हनहनादि च।

न असाधयन्। इन्द्रजयमहेरपनयं च।

अन्येषामपि चार्थाय मघवैवाजयद्रिपुम्।

इति इतिहासः। राध साध संसिद्धौ। षिधू गतौ अपनये च।

ते सेधन्ति पथो वृकम्। ऋ. वे. १. १०५. ११.

इत्यत्र अपनयार्थः॥ १३

अहे॑र्या॒तारं॒ कम॑पश्य इन्द्र हृ॒दि यत्ते॑ ज॒घ्नुषो॒ भीरग॑च्छत्।
नव॑ च॒ यन्न॑व॒तिं च॒ स्रव॑न्तीः श्ये॒नो न भी॒तो अत॑रो॒ रजां॑सि॥ १४

अहेः। या हनने।

यया वज्रिवः परियासि। ऋ. वे. ६. ३७. ४.

यातेव भीमः। ऋ. वे. १. ७०. ११.

इतिवत् वधार्थे। वियातः इति च याते रूपं न यातयतेः। हे इन्द्र अहेर्यातारं हन्तारं त्वत्तोऽन्यं कमपश्यः। कोऽपि न। यत् यस्मात्। जिघांसोस्ते हृदि भीः अगच्छत् उत्पन्ना। एनं अन्यो हनिष्यतीति ईदृशं भयं हृदये यस्मादुत्पन्नं इत्यर्थः। यत् भीतस्त्वं नवनवतिर्नदीः लोकत्रयं च तीर्त्वा अहिं हन्तुं त्वरया गतः।

एन्यः स्रवन्त्यः स्रवतः।

इति नदीषु।

लोकाश्चैव रजांसि च।

इति। बहुत्वात् लोकान् इत्यवगम्यते। वेगेन श्येन इव अतरः। तॄ प्लवनतरणयोः। जघ्नुष इति रूपार्थे क्वसुः। छन्दसि लिट् (पा. ३. २. १०५.) लिटः कानज्वा (पा. ३.

२. १०६) क्वसुश्च (पा. ३.२.१०७) लिटि धातोरनभ्यासस्य (पा. ६. १. ८.) इति दीर्घः। वसोः संप्रसारणम् (पा. ६. ४. १३१) क्वसोश्च । कुहोश्चुः (पा. ७. ४. ६२) गमहना-दिना उपधालोपश्च । हन्तेर्घत्वं च ॥ १४

इन्द्रो॑ या॒तोऽव॑सितस्य॒ राजा॒ शम॑स्य च शृ॒ङ्गिणो॒ वज्र॑बाहुः ।
सेदु॒ राजा॑ क्षयति चर्ष॒णीना॑म॒रान्न ने॒मिः परि॒ ता ब॑भूव ॥ १५

यत् जङ्गमम् । अवसितं स्थावरम् । चराचरेश्वर इत्यर्थः । शमः शान्तः ऋषि-लोकः । शृङ्गं दीप्तम् । तद्वन्तो नक्षत्राश्च ईश्वरः शान्तानां दीप्तानां च । वज्रहस्तः । स एव राजा दीप्तः । चर्षणीनां क्षयति मनुष्याणां च ईष्टे । केवलमीष्टे एव न । नेमि-रिव अरान् परिता बभूव । रथचक्रपृष्ठं हि नेमिः । सः यथा अरान् परिगृह्णाति तद्वत्ताः सर्वाः तान् मनुष्यान् सर्वाणि तानि जङ्गमानि । द्वादशारं इति प्रसिद्धः अरशब्दः ॥ २५

वलभीविनिवास्येतामृगर्थागमसंहतिम् ।
भर्तृध्रुवसुतश्चक्रे स्कन्दस्वामी यथामति ॥

द्वितीयोऽध्यायः ।

## तृतीयोऽध्यायः ।

एतायामोप गव्यन्त इन्द्रमस्माकं सु प्रमतिं वावृधाति ।
अनामृणः कुविदादस्य रायो गवां केतं परमावर्जते नः ॥ १

आ इत आगच्छत मत्पुत्रा ऋत्विजो वा । अयाम उप । याम प्रापणे उपशब्दो ऽप्युपसर्गः छन्दसि परेऽपि (पा. १. ४. ८१) इत्येवं परः प्रयुज्यते । उपायाम उपगच्छाम । गव्यन्तः । गा इच्छन्तः । इन्द्रम् । अथवा अयामेति ईमहे यामि (निघ॰ ३. १९) इत्यस्य याच्ञाकर्मणो रूपम् । उपशब्दस्तु उपसर्गो धात्वर्थानुवादी । उपसर्गश्रुतेर्वा योग्यक्रियापदाध्याहारः । याचामहे । उपगम्य गव्यन्तः इन्द्रम् । किं पुनरत्र याच्यते । गावः । कुत एतत् गव्यन्त इति वचनात् इष्यमाणस्य च याच्यमानत्वात् । कस्मात्पुनरिन्द्रमुपायाम उच्यते । यस्मात् अस्माकं सुप्रमतिम् । सुशब्दः अत्र सुष्ठ्वर्थे । प्रशब्दः प्रकर्षे । मतिरपि यामि मन्महे (निघ. ३. १९) इति याच्ञाकर्मसु पाठात् याच्ञायाम् । सुष्ठु प्रकृष्टं याच्ञाम् । वावृधाति । वृधिरत्र अन्तर्णीतण्यर्थः । लुङर्थे च लेट् । याचितप्रदाने । पुनःपुनरपि पृथक् यद्यदा याचितं तत्तदा दत्तवानित्यर्थः । यस्माच्च अनामृणः । मृण हिंसायां अहिंस्यः शत्रुभिर्हिंसितुमशक्यः । कुवित् । बहुनामैतत् । अत्यन्तबहु । आदिति निपातः पदपूरणः । अस्येन्द्रस्य रायः धनम् । वसु- रायो राधः (निघ. २. १०.) इति हि धननामसु पाठात् धननामैतत् प्रथमान्तम् । रैशब्दाद्वा । प्रथमार्थे षष्ठी । यस्मादत्यन्तं बहुधनत्वाद्दानसमर्थ इत्यर्थः । यस्माच्च गवां केतम् । गोशब्दोऽत्र साक्षादिमद्वचनः । उदकनाम वा । केतशब्दोपि सामर्थ्यात् समूहवचनः । गवां अपां वा समूहं परं अत्यन्तोत्कृष्टम् आवर्जते । वृजिरत्र सामर्थ्यादन्तर्णीतण्यर्थः दाने वर्तते । आवर्जयति ददाति । नः अस्मभ्यम् । यस्मादिदानीं अस्मभ्यं गां वृष्टिं वा ददात्येवेत्यर्थः । अथवा कित ज्ञाने इत्यस्य केतशब्दो ज्ञेयवचनः । गवामिति तु निर्धारणे षष्ठी । गवां मध्ये यत् केतं ज्ञेयं अत्यन्तोत्कृष्टं गोजातं तत् परमावर्जते । सुसुष्ठु ददाति । १

उपेदहं धनदामप्रतीतं जुष्टां न श्येनो वसतिं पतामि ।
इन्द्रं नमस्यन्नुपमेभिरर्कैर्यः स्तोतृभ्यो हव्यो अस्ति यामन् ॥ २

उपशब्दः पतामीत्याख्यातेन संबन्धयितव्यः । इच्छब्दः पदपूरणः । अहं धनदां धनस्य दातारं अप्रतीतं अप्रतिगतं शत्रुभिरप्रत्यभिभूतमित्यर्थः । जुष्टां न श्येनो वसतिं यथाप्रियां वसतिं निवासस्थानं श्येन उपपतेत् एवमुपपतामि उपगच्छामि । कं इन्द्रम् । नमस्यन् । परिचरणकर्मायम् । परिचरन् । कीदृशैः उपमेभिः उपम इत्यन्तिकनाम सन्निकृष्टैरिन्द्रस्य इत्यर्थः । अर्कैः मन्त्रैः । मन्त्रैः स्तुवन्नित्यर्थः । कीदृश इन्द्र उच्यते । यः स्तोतृभ्यः । षष्ठ्यर्थे चतुर्थ्येषा । स्तोतॄणां हव्यः आह्वातव्यः । यामन् । अधिकरणे इयं प्रथमा द्रष्टव्या । यन्ति देवता अस्मिन् इति याम यज्ञः । तत्र ॥ २

नि सर्वसेन इषुधीँरसक्त समर्यो गा अजति यस्य वष्टि ।
चोष्कूयमाण इन्द्र भूरि वामं मा पणिर्भूरस्मदधि प्रवृद्ध ॥ ३

समग्रया सेनयोपेतः इषुधीन् तूणानि असक्त । षञ्ज संगे । निषजति । आत्मनः पृष्ठे रथे वा निबध्नातीत्यर्थः । निषज्य च अयं ईश्वरः इन्द्रः । शत्रूणां स्वभूता गाः समजति । अज गतिक्षेपणयोः । सम्यक् क्षिपति । स्वराष्ट्रं प्रति प्रेरयति अपहरतीत्यर्थः । यस्य वष्टि अपहर्तुं कामयते तस्य सर्वस्यापहरति । न केनचित् प्रतिबन्धुं शक्यत इत्यर्थः । स्वाश्रितेभ्यो दानकाले यदर्पणं तदत्र क्षेपणमभिप्रेतम् । स्वाश्रितेभ्यो दानकाले समजति सम्यक् क्षिपति अर्पयति । यस्य वष्टि क्षेप्तुं कामयते । यस्मै अभिप्रेतं स्वाश्रिताय दातुमिच्छति तस्मै ददातीत्यर्थः । अथवा गावः अत्र आपः अभिप्रेताः । निषज्य इषुधीन् मेघं प्रत्यपः सम्यक् क्षिपति । यस्य राज्ञो यजमानस्य वा क्षेप्तुं कामयत इत्यर्थः । परोऽर्धर्चः प्रत्यक्षकृतः । पूर्वस्माद्भिन्नं वाक्यम् । चोष्कूयमाणः । ष्कुञ् आप्रवणे । इह तु भूरि वामं मा पणिर्भूरित्येतेन सम्बन्धात् दानार्थः । अत्यर्थं पुनः पुनर्वा ददत् । हे इन्द्र भूरि बहु वामं वननीयमत्यन्तोत्कृष्टं धनं मा पणिर्भूः । पणिर्वणिगुच्यते । तेन चात्र स्वागतं अल्पदत्वं लक्ष्यते । नाल्पदो भूरित्यर्थः । अस्मदधि अस्माकमुपरि । अस्मभ्यं माल्पं दा इत्यर्थः प्रवृद्धसेनालक्षणेन बलेन शारीरेण वा ॥ ३

वधीर्हि दस्युं धनिनं घनेनँ एकश्चरन्नुपशाकेभिरिन्द्र ।
धनोरधि विषुणक्ते व्यायन्नयज्वानः सनकाः प्रेतिमीयुः ॥ ४

ते व्यायन इति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । उत्तरार्धर्चस्थैश्च भूयोभिर्बहुवचनान्तैः सामानाधिकरण्यात् दस्युं धनमिति बहुवचनस्य स्थाने एकवचनः । यान् वधीः हि शब्दः पदपूरणः । हतवानसि दस्युं दस्यून् शत्रून् । धनिनं धनवतः । घनेन

निष्ठुरेण वज्रेण एक एव चरन् पर्यटन् । न च केवलेन वज्रेण । उपशाकेभिः । शक्यन्ते यैर्दस्यवो हन्तुं ते शाकाः शक्तयः । उपशब्दस्तु धात्वर्थानुवादी । शक्तिभिश्च । हे इन्द्र । अथवा अङ्गिरसोऽत्र उपशाका अभिप्रेताः । चरन्नित्येतदपेक्ष्य च सहयोग लक्षणे तृतीया । एक एवावधीरङ्गिरोभिः । सह पर्यटन्नित्यर्थः । अङ्गिरसो हि ।

इन्द्रो विदुरङ्गिरश्च घोराः ऋ. वे. १०. १०८. १०.

घोरत्वादिदर्शनात् इन्द्रात् किञ्चिन्न्यूनशक्तयः । अत एषां तत्सदृशशक्तित्वादिन्द्रापेक्ष उपशाकव्यपदेशः । इन्द्रस्य च सखायोऽङ्गिरसः । सखिभिश्च सह पर्यटनमप्युपपन्नम् । धनोरधि । धनुशब्दः अपठितमपि अन्तरिक्षनाम । धन्वशब्दस्य वान्तरिक्षनाम्नः छान्दसमिदं संप्रसारणं नकारलोपश्च । अन्तरिक्षस्योपरि विषुणक् इतश्चेतश्च ते व्यायन् । विगता नष्टा अपि सन्तः अयज्वानः सनकाः । सनकशब्दस्य पुराणवचनस्येदं रूपम् । चिरन्तना अयष्टारः । जन्मन एव प्रभृति यागवर्जिता इत्यर्थः । प्रेतिं प्रयाणं मरणं ईयुः गताः । नष्टा अपि सन्तस्त्वया मारिता एवेत्यर्थः ॥ ४

केन प्रकारेण प्रेतिमीयुः । उच्यते—

परा चिच्छीर्षा ववृजुस्त इन्द्रायज्वानो यज्वभिः स्पर्धमानाः ।
प्र यद्दिवो हरिवः स्थातरुग्र निरव्रताँ अधमो रोदस्योः ॥ ५

चिच्छब्दः पदपूरणः । शीर्षा खानि शीर्षाणि त्वया छिन्नानि परावव्रुजुः परावर्जितवन्तः । भूमौ पर्यस्तवन्त इत्यर्थः । हे इन्द्र अयज्वानः यज्वभिः त्वदाश्रितैः सह स्पर्धमानाः । कदा । उच्यते । प्र यत् । प्रशब्दः अधमः इत्याख्यातेन संबन्धयितव्यः । यत् यदा दिवो हरिवःस्थातः । दिव इत्येतत् स्थातरित्येतेन संबन्धयितव्यः । हे दिवः स्थातःद्युलोकस्याधिष्ठातः हरीवः उग्र अप्रसह्य । निः अव्रतान् अधमः प्रकर्षेण निरधमः। अपकलितवानसि । अव्रतान् अकर्मान् अयष्टॄन् । रोदस्योः द्यावापृथिव्योः सकाशात् । लोकद्वयादपीत्यर्थः ॥ अथवा प्रयद्दिव इति यच्छब्दः इन्द्रप्रतिनिर्देशः । अधमः इत्यपि लोडर्थे लङ् । यस्त्वमव्रतानयष्टॄन् मनुष्यान् द्वयोरपि निर्धमसि । सवधीर्दस्युम् ॥ ५

अयुयुत्सन्ननवद्यस्य सेनामयातयन्त क्षितयो नवग्वाः ।
वृषायुधो न वध्रयो निरष्टाः प्रवद्भिरिन्द्राच्चितयन्त आयन् ॥ ६

एकवाक्यताप्रसिध्यर्थं यत्तच्छब्दावध्याहर्तव्यौ । ये असुरा अयुयुत्सन् । योधयितुमिष्टवन्तः । अनवद्यस्य प्रशस्यस्येन्द्रस्य सेनाम् । तान् कांश्चित् अयातयन्त ।

यातयतिर्वधकर्मा । स्वार्थिकश्चात्र णिच् । हतवन्तः । णिच्छ्रुतिसामर्थ्याद्वा इन्द्रेण घातितवन्तः । के । क्षितयो मनुष्याः । कतमे । नवग्वाः ।

अंगिरसो नः पितरो नवग्वाः । ऋ. वे. १०. १४. ६.

इति सामानाधिकरण्यदर्शनात् अंगिरसो नवग्वा इत्युच्यन्ते । ते किल तपस्यन्तो नवभिर्मासैः सिद्धिं गताः । ते कांश्चिद्यातयन्त । केचित्तु वृषायुधो न वध्रयो निरष्टाः । प्रजननसमर्थो बलवान् वृषः तेन सह ये युध्यन्ते ते वृषायुधः । नशब्द उपमायाम् । वध्रयः प्रजननसमर्था बलीवर्दाः । निर्गता अष्टाभ्यो निरष्टाः । पतितदशनाः अत्यन्तवृद्धा अबलीवर्दाः । ये वध्रयो निरष्टाश्च वृषेण सह युयुत्सन्ते । ते यथा ताडिता अत्यन्तपराङ्मुखा नश्येयुः तद्वत् । प्रवद्भिः प्लवमानैरत्यन्तशीघ्रगतिभिः अश्वैः रथैर्वा इन्द्रात् चितयन्तः । किं सामर्थ्यादिन्द्रस्य पराक्रमम् । अथवा चित सञ्चोदने इत्यस्य चितयन्तः इति रूपम् । चोदयन्तः अश्वान् आयन् । आगमन् । नष्टा इत्यर्थः । अथवा निरष्टा इत्येतदशू व्याप्तौ इत्येतस्य रूपम् । प्रवद्भिरित्येतेन च संबध्यते । प्रवद्भिरित्येतच्च अङ्गिरोविषयम् । यथा वृषेण सह युयुत्समानः वध्रयः तेन व्याप्ता नश्येयुः एवं निरष्टाः निश्चयेन व्याप्ताः प्रवद्भिः प्लवमानैः अत्यन्तशीघ्रगतिभिः अङ्गिरोभिः । यस्यानुचराणामृषीणामीदृशः पराक्रमः सः स्वयमसह्यपराक्रमः इति अङ्गिरः पराक्रमादेवेन्द्रस्य पराक्रमं जानन्तः चोदयन्तो वा अश्वान् अप्राप्तादेवेन्द्रात् अयन् गता नष्टाः । ये इन्द्रस्य सेनामयुयुत्सन् ते केचिद्धताः केचिन्नष्टा इति समस्तार्थः ॥ ६

त्वमे॒तान् रु॑द॒तो जक्ष॑त॒श्चायो॑धयो॒ रज॑स इन्द्र पा॒रे ।
अवा॑दहो दि॒व आ दस्यु॑मु॒च्चा प्र सु॑न्व॒तः स्तु॑व॒तः शंस॑मावः ॥ ७

त्वमेतानसुरान् वा । रुदतो जक्षतश्च । जक्ष भक्ष हसनयोः । रुदतो हसतश्च । सर्वास्ववस्थासु वर्तमानानित्यर्थः । अयोधयः योधितवानसि । रजसः । लोकनामैतत् । अन्तरिक्षलोकस्य द्युलोकस्य वा । हे इन्द्र पारे अन्ते । अवस्थितवान् । भयादन्तरिक्षस्य दिवो वा अन्तात् नष्टानपि सत इत्यर्थः । किञ्च अवादहः अवशब्दः अधोभागे । दहतिरप्यत्र सामर्थ्यान्निधमनार्थः । अधो निरधमः । निधमसि । दिवः द्युलोकात् । आकारस्तु पदपूरणः । दस्युं शत्रुम् । उच्चा उच्चैरप्यवस्थितम् । किञ्च सुन्वतः स्तुवतश्च यजमानस्य शंसं कामं प्रावः प्रकर्षेण रक्षितवान् तर्पितवान् वा असि ॥ ७

च॒क्रा॒णासः॑ परी॒णहं॑ पृथि॒व्या हिर॑ण्येन म॒णिना॒ शुम्भ॑मानाः ।
न हि॑न्वा॒नास॑स्तितिरु॒स्त इन्द्रं॒ परि॒ स्पशो॑ अदधा॒त्सूर्ये॑ण ॥ ८

चक्राणासः कुर्वन्तः परिणहं पृथिव्याः । णह बन्धने । सर्वतो बध्यते येन पृथिवी सा पृथिव्याः परिणाहः । खातप्राकारादिकं दुर्गाणि कुर्वन्त इत्यर्थः । हिरण्येन मणिना शुंभमानाः । शोभन्तः । न हिन्वानासः तितिरुस्ते । हिनोतिः वृध्यर्थः । तरतिः शक्नोत्यर्थः । शक्नोतेश्च कर्मभूतधात्वन्तरानुषङ्गस्य नित्यत्वात् प्रतियोद्धुमिति वाक्यशेषः । ते इत्यसुराणां प्रतिनिर्देशः । सर्वा वर्धमानार्थाः । कम् । इन्द्रम् । कस्मात् । उच्यते । यस्मात् तत्पुरेषु । परि स्पशो अदधात् । पर्यदधात् सर्वतो निहितवानिन्द्रः । स्पशो बन्धिकान् न केवलम् । किं तर्हि सूर्येण अन्यैरपि देवैः सह सम्मन्त्र्य इत्यर्थः । यस्माचारः चक्षुर्मन्त्रशक्तियुक्तश्चेत्यर्थः ॥ ८

परि॒ यदि॑न्द्र॒ रोद॑सी उ॒भे अबु॑भोजीर्महि॒ना वि॒श्वतः॑ सीम् ।
अम॑न्यमानाँ अ॒भि मन्य॑मानै॒र्निर्ब्र॒ह्मभि॑रधमो॒ दस्यु॑मिन्द्र ॥ ९

यदिति प्रथमान्तः । व्यत्ययेन तु नपुंसकता । यस्मादर्थे वा । यस्त्वं यस्माद्वा हे इन्द्र रोदसी उभे पर्यबुभोजीः । भुज पालनाभ्यवहारयोः । परिपालयसि भुंक्षे वा । महिना महता वीर्येण विश्वतः सर्वतः । सीमिति पदपूरणः । यच्छब्दश्रुतेः तच्छब्दोऽध्याहार्यः । सः तस्माद्वा । अमन्यमानान् । मन्यतिरर्चतिकर्मा । अस्तुवतः । अभिमन्यमानैः अभिष्टुवद्भिः । केन । ब्रह्मभिः ऋग्यजुःसामलक्षणैः । निरधमः । धमतिरत्र अन्तर्णीतण्यर्थः । ण्यन्तस्यापि कालयतेरर्थे वर्तते । स्वस्मात् स्थानात् अवकालीयसीत्यर्थः । दस्युम् । अमन्यमानानिति बहुवचनसामानाधिकरण्यात् बहुवचनस्थाने इदमेकवचनम् । अभिष्टुवतः शत्रून् । हे इन्द्र । इदि परमैश्वर्ये । अत्यन्तेश्वरः ॥ ९

न ये दि॒वः पृ॑थि॒व्या अन्त॑मा॒पुर्न मा॒याभि॑र्धन॒दां प॒र्यभू॑वन् ।
युजं॒ वज्रं॑ वृष॒भश्च॑क्र॒ इन्द्रो॒ निर्ज्योति॑षा॒ तम॑सो॒ गा अ॑दुक्षत् ॥ १०

ये अप्यसुरा दिवः पृथिव्याश्च अन्तं न आपुः । न प्राप्नुवन्ति । द्यावापृथिव्योरेकदेशवर्तिन इत्यर्थः । नापि मायाभिः प्रज्ञाभिः । धनदामिन्द्रं पर्यभूवन् । परिभवन्ति । इन्द्रात् न्यूनप्रज्ञा इत्यर्थः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । तैः अपि सह युजं संबद्धं वज्रं वृषभः वर्षिता चक्रे इन्द्रः । तानपि वज्रेण हतवानित्यर्थः । हत्वा च ज्योतिषा सौरेण वैद्युतेन च । तमसः यत्र गुहादौ तमोरूपेण स्थापिताः ततस्ततः तेषामसुराणां स्वभूताः गाः निरधुक्षत् निर्दुग्धवान् निष्कासितवानित्यर्थः । अथवा ये इति मेघानां प्रतिनिर्देशः । मेघाः द्यावापृथिव्योरेकदेशवर्तिन इन्द्राच्च न्यूनप्रज्ञाः । तानपि वज्रेण हतवान् । हत्वा च वैद्युतेन ज्योतिषा तदीयात्तमसः आपो निरधुक्षत् क्षारितवान् ॥ १०

अनु स्वधामक्षरन्नापो अस्यावर्धत मध्य आ नाव्यानाम् ।
सध्रीचीनेन मनसा तमिन्द्र ओजिष्ठेन हन्मनाहन्नभि द्यून् ॥ ११

अनुशब्दो लक्षणे कर्मप्रवचनीयः । स्वधेत्युदकनाम यत् । पूर्वपतितमुदकं तत् प्रति अक्षरन् क्षरितवत्यः क्षरन्ति वा आपः । अस्येन्द्रस्य स्वभूताः प्रसादेन वा । अनु पश्चात्क्षीणायामेव पूर्ववृष्टौ पुनरप्यवर्षन् । वर्षितव्या इत्यर्थः । अन्विति पश्चाद्भावे । स्वधेत्यप्यन्ननाम । अस्येत्येतच्च स्वधामित्येतेन संबध्यते । अस्येन्द्रस्य स्वभूतां हविर्लक्षणां स्वधां अनु एतदीयस्य हविषः पश्चात् । यदास्मै हविर्दीयते तदनन्तरमित्यर्थः । किम क्षरन् । आपो वृष्टिलक्षणाः । कथं पुनर्मेघेन निरुद्धाः सत्यः अक्षरन् । अवर्धत मध्य आ । आ इत्येष अपेत्येतस्य स्थाने । सध्रीचीनेन मनसा । तं इति तच्छब्दाद्यच्छब्दोऽध्याहार्यः । यो मेघो वृष्टिनिरोधाभिप्रायेणावर्धत मध्येऽवस्थितानामपामेवाधः । कियतीनाम् । नाव्यानांनावा तार्याणां अत्यन्तबह्वीनामित्यर्थः । सध्रीचीनेन । सह अञ्चति गच्छतीति । सध्रीचीनेन सह गामिना वज्रेण । केन सहगामिना । मनसा । यत्रैव मनो गच्छति तत्रैव गन्ता । यत्र मनसा इष्यते तत्र निपततेत्यर्थः । तं मेघं इन्द्रः । कीदृशेन वज्रेण । ओजिष्ठेन बलवत्तमेन हन्मना हन्त्रा मेघानां अहन् हतवान् अभिद्यून् दिवसान् प्रति । येषु वार्षिकेष्वहःसु हन्तुं योग्यः तेष्वित्यर्थः ॥ ११

न्याविध्यदिलीबिशस्य दृळ्हा वि शृङ्गिणमभिनच्छुष्णमिन्द्रः ।
यावत्तरो मघवन्यावदोजो वज्रेण शत्रुमवधीः पृतन्युम् ॥ १२

कस्यचित्तावत् न्यविध्यत् निष्कृष्य विद्धवान् । कस्य । इलीबिशस्य । इलीबिशो मेघः । कथम् । इळेत्यन्ननाम । बिशशब्दो बिस्यतेः । बिस्यतिश्च भेदनकर्मा वृद्धिकर्मा वा । एवं ह्याह—बिसं बिस्यतेर्भेदनकर्मणो वृद्धिकर्मणो वा (नि २. २४) इति । अथवा पिस्यति बिस्यति मिस्यति (निघ. २ १४.) इति गतिकर्मसु पाठात् बिस्यतिर्गतिकर्मा । बीजरूपमन्नमुद्भिनत्ति वर्धयति उदकरूपो वा गच्छतीति इळाबिसः । इळाबिसः सन्निळीबिश उच्यते । छान्दस ईकारः शकारश्च । अथवा इळाशब्दोऽत्र अन्नहेतुत्वादुदके वर्तते । बिशशब्दोऽपि एकदेशलोपेन बिलशयशब्दस्यार्थे । अन्नहेतोरुदकस्य बिलेषु शेते तानि अपावृत्य तिष्ठतीति इळाबशो मेघः । तस्य हळहा दृढा निदुर्व्यथानि । कानि । सामर्थ्यादुदकनिर्गमनबिलानि । कंचित्तुशृङ्गिणं दीप्तं मेघं व्यभिनत् विविधं भिन्नवान् । विदारितवानित्यर्थः । शुष्णम् । बलनामैतत् सामर्थ्याच्चान्तर्णीतमत्वर्थः । बलवन्तंम् । कः । इन्द्रः कस्यचिन्मेघस्य बिलान्युद्घाटितवान् । कश्चित्तु शतशतशर्करं भग्नवानित्यर्थः । अथवा

शुष्णं पिप्रुम्। ऋ० वे० १. १०३. ८.

इत्यादिषु दर्शनात् शुष्णो नामासुरः। तं विविधं भिन्नवान् विदारितवानित्यर्थः। शुष्णसम्बन्धाच्छ इळाबिशोऽप्यसुर एव। तस्य स्वभूतानि दृढानि पुराणि निरविध्यत्। व्यध ताडने। निभृंनताडितवान् हतवानित्यर्थः। परोऽर्धर्चः प्रत्यक्षकृतो भिन्नं वाक्यं पूर्वस्मादर्धर्चात्। यावत् तरः शरीरसामर्थ्यलक्षणं बलम्। हे मघवन् यावच्च ओजः सेनालक्षणं बलम्। यावदित्युद्देशात् तावदित्यध्याहार्यः। तेन सर्वेण वज्रेण त्वं शत्रुमवधीः। अस्मदीयं वा जहि। पृतन्युं संग्राममकामम्॥ १२

अभि सिध्मो अजिगादस्य शत्रून् वि तिग्मेन वृषभेणा पुरोऽभेत्।
सं वज्रेणासृजद्वृत्रमिन्द्रः प्र स्वां मतिमतिरच्छाशदानः॥ १३

सिध्मः साधयिता इन्द्रः। अभ्यजिगात् अभिगतवान्। किम्। अस्यैवेन्द्रस्य शत्रून्। अथवा सिध्म इति वज्र उच्यते। साधयिता वज्रः। अभ्यजिगादस्येन्द्रस्य शत्रून्। अभिगतेन वज्रेण तिग्मेन तीक्ष्णेन वृषभेण वर्षित्रा। तेषां शत्रूणां स्वभूताः पुरो नगराणि व्यभेत् विविधं भिन्नवान् विनाशितवानित्यर्थः। किंच सं वज्रेणासृजत्। समसृजत् संवर्जितवान् संबन्धितवानित्यर्थः। वृत्रं असुरम्। कः। इन्द्रः। प्र स्वां मतिमतिरत्। मतिर्मन्यतेः अर्चतिकर्मणो रूपम्। अतिरदित्यपि तिरतिर्वृद्ध्यर्थः। आत्मीयां स्तुतिं प्रकर्षेणावर्धयत्। शाशदानः। पुनःपुनरसुरान् तत्पुराणि च शातयन्। यः ईदृशं कर्म पुनःपुनः करोति स तत्कर्मसंबन्धात् आत्मीयस्तुतिं वर्धयति। अथवा मतिरिति प्रज्ञैवोच्यते। स्वप्रज्ञामवर्धयदिति। हि यन्नित्यं करोति तस्य तत्र प्रज्ञाकौशलं वर्धते॥ १३

आवः कुत्समिन्द्र यस्मिञ्चाकन् प्रावो युध्यन्तं वृषभं दशद्युम्।
शफच्युतो रेणुर्नक्षत द्यामुच्छ्वैत्रेयो नृषाह्याय तस्थौ॥ १४

आवः अरक्षःकुत्सं नाम ऋषिम्। यस्मिन् कुत्से यागं कुर्वति चाकन् कामितवानसि सोमं स्तुतिं च। न केवलं कुत्सम्। किं तर्हि। प्रावः प्रकर्षेणारक्षः। युध्यन्तं युध्यमानं वृषभनामानं राजानं दशद्युं बहुदीप्तिम्। केन प्रकारेण। उच्यते। शफच्युतो रेणुः नक्षत। नक्षतिर्गतिकर्मा वा व्याप्तिकर्मा वा। गतवान् व्याप्तवान् वा। द्यां द्युलोकम्। उत् श्वैत्रेयः। उच्छब्दः तस्थौ इत्याख्यातेन संबन्धयितव्यः। शु इति क्षिप्रनाम। इ गतौ। शु इता श्वित्रा आशुगामिनी जगतः प्रकृतिः। तस्यापत्यं श्वैत्रेयो वायुः। सः नृषाह्याय शत्रुमनुष्याभिभवनाय उत्तस्थौ उत्थितः। शत्रुषु अभिभवनार्थं युद्धवेलायां महान्तं रेणुं वात्यं च अकरोदित्यर्थः। १४

आवः शमं वृषभं तुग्र्यासु क्षेत्रजेषे मघवञ्छ्वित्र्यं गाम् ।
ज्योक् चिदत्र तस्थिवांसो अक्रञ्छत्रूयतामधरा वेदनाकः ॥ १५

आवः शमं शान्तात्मकं वृषभं नाम राजानं तुग्र्यासु । तुग्र्या इत्युदकनाम । सप्तमीनिर्देशात् स्थितं इति वाक्यशेषः । अप्सु स्थितं अद्भ्यः उत्तारितवानसीत्यर्थः । क्षेत्रजेषे । क्षेत्रशब्देनात्र एकदेशवचनेन समस्ता पृथिवी लक्ष्यते । पृथिवीजयाय । अद्भ्यः उत्तारितां पृथिवीं जेष्यतीत्येवमर्थम् । हे मघवन् । कीदृशम् । श्वित्र्यं गां गन्तारं देवान् शत्रून् वा प्रति । ज्योक् चित् । ज्योगिति निपातश्चिरवचनः । चिच्छब्दः पदपूरणः । एकवाक्यताप्रसिध्यर्थं यच्छब्दोऽत्राध्याहार्यः । यं वृषभम् । चिरमत्र पृथिव्यां तस्थिवांसः स्थिताः प्रतिष्ठिताः तच्छत्रवः असुरा वा अक्रन् । करोतिरिह क्रियासामान्यवचनः सामर्थ्यात् प्रक्षेपे वर्तते । अप्सु क्षिप्तवन्तः । यं पृथिव्यां चिरप्रतिष्ठितमपि सन्तं शत्रवः असुरा वा राज्योच्छेदादप्सु प्रक्षिप्तवन्तः इत्यर्थः । उत्तार्य च श त्रूयतां शत्रुं कामयमानानां तेषां यानि स्वभूतानि वेदनानि । अपठितमपि धननामैतत् । धनानि तानि अधराणि तस्याधोवर्तीनि अकः कृतवानसि । शत्रुधनानि तस्यायत्तान्यकरोदित्यर्थः ॥ १५

---

त्रिश्चिन्नो अद्या भवतं नवेदसा विभुर्वां याम उत रातिरश्विना ।
युवोर्हि यन्त्रं हिम्येव वाससोऽभ्यायंसेन्या भवतं मनीषिभिः ॥ १

तत आश्विनम् ।
ये एते ऐन्द्रे सूक्ते उक्ते ताभ्यां परमिदमाश्विनम् । त्रिश्चित् । त्रिशब्दोऽत्र सर्वत्र त्रिशब्दस्य बहुत्वमात्रप्रतिपत्त्यर्थत्वात् बहुकृत्व इत्यस्यार्थे । बहुकृत्वः । चिच्छब्दस्तु पदपूरणः । नः अस्मान् अद्य भवतम् । भवतिरिह प्राप्त्यर्थः । प्राप्नुतत् । हे नवेदसा मेधाविनौ । बहुकृत्वोऽप्यस्मत्समीपमागच्छतमित्यर्थः । वां युवयोः यामः । यान्त्यतेनेति यामो रथ इहोच्यते ।

अक्ष वीळो वीळित वीळयस्व ॥ ऋ. वे. ३. ५३. १९.

इति यथा । उत रातिः । उतशब्दोऽप्यर्थे । रातिशब्दोऽपि देयवचनः । देयमपि । विभुः । हे अश्विनौ यदागत्यास्मभ्यं धनं दास्यथः तदपि प्रभूतमित्यर्थः । युवोर्हि यन्त्रम् । हिशब्दो यस्मादर्थे । यस्माच्च युवयोः स्वभूतं यन्त्रमपि विभु । येन यन्त्रेण युवामपि शत्रून् हथ । तदपि सर्वं गमनप्रतिबन्धकम् । अभ्यायंसेन्या भवतम् । हिमेति रात्रिनाम । तत्र भवा हिम्या उषाः । वास इत्यपठितमप्यहर्नाम ।

आद्रात्री वासः ।

इति यथा । अभ्यायंसेन्या इति अभ्याङ्पूर्वस्य सेनाशब्दस्य कर्तरि प्रत्ययः । यथाउषाः अह्न अभि तथा अस्माभिमुख्येन यन्तारौ भवतः । कस्य सामर्थ्याद्रथस्य । यथोषा नियमेन अहरूत्पत्त्या अभिमुखं करोति एवं युवां नियमेन रथमस्मदभिमुखं कुरुतः । येनासौ अस्मत्समीपमागच्छतीत्यर्थः । अभ्यायंशब्दः क्विबन्तः । सेनाया अभ्यायन्तारौ । अभ्यात् । राजदन्तादिषु परम् । (पा. २. २. ३१.) इति परनिपातः । अभ्यायंसेनौ एव अभ्यायंसेन्यौ । स्वार्थिकोऽत्र यःप्रत्ययः । स्वसेनया अस्माभिमुख्येन यन्तारौ भवतमित्यर्थः । मा च केवलौ । किंतर्हि । मनीषिभिः । मेधाविभिः सह । कैः । त्रयस्त्रिंशता देवैः । कुत एतत् ।

आ नासत्या त्रिभिः । ऋ. वे. १. ३४. ११.

इति दर्शनात् । अथवा हिम्येव वासस इत्येतदुपमानम् । युवयोर्हि यन्त्रमित्येतेन च संबध्यते । अयं च पादो भिन्नमेव वाक्यं पूर्वस्मादर्धर्चात् । युवयोरिति षष्ठीनिर्देशात् ज्योतिरिति वाक्यशेषः । युवयोर्ज्योतिर्यन्त्रम् । यमु बन्धने । यमनं बन्धनम् । कस्य सामर्थ्यात्तमसः । कथम् । हिम्येव वाससः । उष्यतेऽस्यामिति वासो रात्रिः । अहिर्वचनेन वा वासःशब्देन रात्रिर्लक्ष्यते । रात्र्यापि स्वसंबन्धि तमो लक्ष्यते । यथा उषाः शार्वरस्य तमसः तद्वदित्यर्थः । चतुर्थोऽपि पादो भिन्नं वाक्यं पूर्ववच्च व्याख्यातव्यम् ॥ १

त्रयः॑ प॒वयो॒ मधु॒वाह॑ने॒ रथे॒ सोम॑स्य वे॒नामनु॒ विश्व॒ इद्वि॑दुः ।
त्रयः॑ स्क॒म्भास॑ः स्कभि॒तास॑ आ॒रभे॒ त्रिर्नक्तं॑ या॒थस्त्रिर्व॑श्विना॒ दिवा॑ ॥ २

अत्र ।

हिरण्यया वां पवयः प्रुषायन् । ऋ. वे. १. १०८. १.

इति मन्त्रान्तरे दर्शनात् मधुपूर्णाः त्रयः पवयः । युवयोः स्वभूते मधुवाहने रथे । आगच्छतोः पिपासितयोः युवयो अस्ति रथे पेयं मध्वित्यर्थः । सोमस्य चोपरि वेनां कान्ति युवयोरिच्छामेत्यर्थः । विश्वे इद्विदुः । इत् एवार्थे । सर्वे एव यजमानाः जानन्ति आगच्छतोः । आगताभ्यां युवाभ्यां सोमाभिलषितं जानन्तः सर्व एव यजमानाः सोमं दास्यन्तीत्यर्थः । त्रयस्कंभासः स्कभितासः प्रतिबद्धाः । क । सामर्थ्याद्रथे सदसि वा । किमर्थम् । आरभे आरम्भणाय । अवष्टंभयानाय आगच्छतोरागतयोर्वा श्रान्तयोः रथे सदसि वा अवष्टंभनस्तंभा अपि विद्यन्त एवेत्यर्थः । एतत् ज्ञात्वा त्रिः बहुकृत्वः नक्तं रात्रौ । याथः यातम् अस्मत्समीपम् । त्रिः । उकार एवार्थे । बहुकृत्व एव अश्विनौ दिवा ॥ २

समाने अहन्त्रिरवद्यगोहना त्रिरद्य यज्ञं मधुना मिमिक्षतम् ।

त्रिर्वाजवतीरिषो अश्विना युवं दोषा अस्मभ्यमुषसश्च पिन्वतम् ॥ ३

अहन् त्रिः इत्यनयोः कारकक्रियाविशेषणयोः अवद्यगोहना इत्यनया आमन्त्रितस्थया क्रियया संबन्धः । परांगवद्भावं तु न भवति त्रिशब्दस्य अव्ययप्रतिषेधात् । समाने अहन्नित्यनयोः त्रिशब्देन व्यवधानात् । हे समाने अहन्नेकस्मिन्नेवाहनि त्रिः बहुकृत्वः अवद्यगोहनौ गर्ह्यस्य तमसो गोहितारौ । स्वेन ज्योतिषापहन्तारावित्यर्थः । त्रिः बहुकृत्वः अद्य अस्मदीयं यज्ञं मधुना उदकेन मिमिक्षतं सिञ्चतम् । त्रिः बहुकृत्वः वाजवतीः बलवतीः । इषः अन्नानि हे अश्विनौ युवं युवां अस्मभ्यं पिन्वतं सिञ्चतं क्षालयतम् । बलकराण्यन्नानि अस्मभ्यं दत्तमित्यर्थः । मा च केवलौ । किं तर्हि युष्मत्प्रसादेनैव । दोषाः उषसश्च रात्रयश्च । उषसश्च आभ्यां ददतु । उषःशब्देनात्र साहचर्यादहर्लक्ष्यते । सप्तम्येकवचनस्य स्थाने उभयत्र प्रथमाबहुवचनम् । रात्रौ चाहनि च पिन्वतम् । सततं दत्तमित्यर्थः ॥ ३

त्रिर्वर्तिर्यातं त्रिरनुव्रते जने त्रिः सुप्राव्ये त्रेधेव शिक्षतम् ।

त्रिर्नान्द्यं वहतमाश्विना युवं त्रिः पृक्षो अस्मे अक्षरेव पिन्वतम् ॥ ४

त्रिः बहुकृत्वः वर्तिः वर्तन्या प्रसिद्धेन मार्गेण यातम् । कात्रिरनुव्रते जने । अनुव्रतशब्द आपन्नभक्तवचनः प्रसिद्धो लोके । बहुकृत्वो भक्ते आपन्ने मादृशे जने । नित्यं भक्तस्य मादृशस्य मनुष्यस्य समीपं गच्छतं इत्यर्थः । गत्वा च त्रिः सुप्राव्ये । सुष्ठु प्रावयति प्रतर्पयति यो देवताः सःसुप्रावी यष्टा तस्मै । त्रिः सुप्राव्ये बहुकृत्वो यष्ट्रे त्रेधेव शिक्षतम् । त्रिधाशब्दः त्रिधाशब्दस्य बहुत्वमात्रप्रतिपत्त्यर्थत्वात् बहुधाशब्दस्यार्थे । इवशब्दः अस्त्युपमार्थस्य संप्रत्यर्थे प्रयोग (नि. ७. ३१.) इति पदपूरणः । शिक्षतिर्दानकर्मा । बहुप्रकारं दत्तम् । किं सामर्थ्याद्धनम् । किंच त्रिः नान्द्यम् । टुनदि समृद्धौ । बहुकृत्वः पुत्रादिसमृद्धिं वहतं प्रापयतम् । हे अश्विनौ युवां पुत्रादिसमृद्धिमपि दत्तमित्यर्थः । किंच । त्रि. पृक्षः । अन्ननामैतत् पठितम् ।

पक्वाः पृक्षो भरन्त वाम । ऋ वे. ५. ७३ ८.

इत्यादिषु बहुवचनान्तसामानाधिकरण्यदर्शनात् बहुवचनान्तं द्रष्टव्यम् । बहुकृत्वोऽन्नानि अस्मे अस्मभ्यं अक्षरेवचिन्वतम् । अक्षरमित्युदकनाम उदकानीव पिन्वतम् । यथा मेघः अन्यो वा कश्चित् प्रभूतान्युदकानि तथा बहुकृत्वोऽस्मभ्यं दत्तमित्यर्थः । ४

त्रिर्नो॑ र॒यिं व॑हतमश्विना यु॒वं त्रिर्दे॒वता॑ता त्रिरु॒ताव॑तं॒ धियः॑ ।
त्रिः सौ॑भगत्वं त्रिरु॒त श्रवां॑सि नस्त्रि॒ष्ठं वां॒ सूरे॑ दुहि॒ता रु॑हद्रथम् ॥ ५

बहुकृत्वः नः अस्मभ्यं रयिं धनं वहतं प्रापयतं दत्तम्। हे अश्विनौ युवाम्। क। त्रिर्देवताता। यज्ञनामैतत्। त्रिः आवृत्ते यागे। पुनःपुनः यजद्भ्योऽस्मभ्यं इत्यर्थः। त्रिरुतावतं धियः। उतशब्दोऽप्यर्थे। धिय इत्यस्माच्च परो द्रष्टव्यः। धियोऽपि त्रिरवतम्। कर्माण्यपि प्रज्ञा वा अस्मदीया बहुकृत्वो रक्षतमित्यर्थः। किंच। त्रिः सौभगत्वं बहुकृत्वः सौभाग्यं सुधनताम्। किम्। साकांक्षत्वाद्योग्यत्वाच्च व्यवहितस्यापि वहतमित्यस्यानुषङ्गः। वहत दत्तम्। त्रिरुत श्रवांसि। श्रव इत्यन्ननाम। कीर्तिपर्यायो वा। अन्नान्यपि कीर्तिं वा बहुकृत्वो वहतम्। कस्मै। नः अस्मभ्यम्। किंच। त्रिष्ठं वां इत्यादि। अत्रेतिहासमाचक्षते। सूर्यस्य दुहितरं देवा वरयामासुः। ते ऊचुः। आजिं धावन् यो नो जेष्यति तस्येयं भवतीति। तामश्विनौ जिग्यतुः। सा जिता अश्विनोः रथमारुरोह इति। तदेतत् त्रिष्ठं वां इत्यादिनोच्यते।

त्रिबन्धुरेण त्रिवृता। ऋ वे. १. ४७. २, ११८. २.
क त्री चक्रा त्रिवृता। ऋ. वे. १. ३४. ९.

इत्यादिषु दर्शनात् अश्विनोस्त्रिचक्रो रथः। सः त्रिषु चक्रेषु स्थितत्वात् लोकत्रयस्थत्वाच्च त्रिष्ठः। तं त्रिष्ठं वां युवयोः स्वभूतं सूरे दुहिता। सूरः सूर्यपर्यायः। षष्ठ्यर्थे सप्तमी। तत्प्रभवत्वाच्चोषसो दुहितृव्यपदेशः। सूर्यस्य दुहिता उषाः। आरुहत् आरूढवती रथम्। तत् कक्षीवान् वक्ष्यति।

आ वां रथं दुहिता सूर्यस्य॥ ऋ. वे. १. ११६. १७. २

त्रिर्नो॑ अश्विना दि॒व्यानि॑ भेष॒जा त्रिः पार्थि॑वानि॒ त्रिरु॑ दत्तम॒द्भ्यः ।
ओ॒मानं॑ शं॒योर्मम॑काय सू॒नवे॑ त्रि॒धातु॒ शर्म॑ वहतं शुभस्पती ॥ ६

त्रिः बहुकृत्वः नः अस्मभ्यं हे अश्विना दिव्यानि भेषजा दिव्यानि त्रिप्राकराण्यौषधानि। त्रिः पार्थिवानि। त्रिरु त्रिरेव दत्तं अद्भ्यः अन्तरिक्षात्। अप इति ह्यन्तरिक्षनाम। लोकत्रयभेषजानि तान्यस्मभ्यं बहुकृत्वो दत्तमित्यर्थः। किंच। ओमानं सर्वोपस्करपालनसमर्थम्। शंयोः। चतुर्थ्यर्थे षष्ठी। शंयो सुखकामाय ममकाय मामकीनाय सूनवे पुत्राय त्रिधातु। धीयन्ते प्राणिनां देहेष्विति धातवः शरीरस्थितिहेतवोऽन्नरसाः। देवपितृमनुष्योपभोग्यैरन्नरसैः त्रिभिरभ्युपेतं शर्म। गृहनामैतत्। शर्म वहतम् प्रापयतं दत्तम्। शुभस्पती उदकस्य पती स्वामिनौ। अथवा शंयोरिति

सुखेच्छापादानत्वाद्दिष्यमाणस्य याचितव्यत्वात् शं च दत्तमित्यर्थः । न गृहम् । ओमानमित्यवतेः तृप्तिकर्मणः । अवनं पालनं वा । त्रिधात्वित्यपि त्रयाणां धातूनां समूहः । अवनपालनयोरन्यतरदेवपितृमनुष्योपभोग्यान्यतररसत्रयसमूहं सुखं च दत्तं इ मित्यर्थः । अथवा त्रिधात्विति शर्मण एव विशेषणं नार्थान्तरप्रतिनिर्देशः । धातुशब्देन तु शीतोष्णवर्षकालाः त्रय उच्यन्ते । त्रिषु कालेषु भवत् त्रिधातु शर्म । कालत्रयेऽपि सुखं दत्तमित्यर्थः ॥ ६

त्रिर्नो॑ अश्विना यजता दि॒वेदि॑वे॒ परि॑ त्रि॒धातु॑ पृथि॒वीम॑शायतम् ।
ति॒स्रो ना॑सत्या रथ्या परा॒वत॑ आ॒त्मेव॒ वातः॒ स्वस॑राणि गच्छतम् ॥ ७

त्रिः बहुकृत्वः नः अस्मान् हे अश्विनौ यजतौ । नेदमामन्त्रितं अननुदात्तत्वात् । प्रत्यक्षकृतश्चायं मन्त्रः । अतो यत्तच्छब्दावध्याहृत्यैकवाक्यता नेया । यौ यजता यष्टव्यौ यागार्हौ दिवेदिवे अहन्यहनि तौ परि त्रिधातु पृथिवीम् । त्रिधात्विति पृथिवीसामानाधिकरण्याद्व्यत्ययेन नपुंसकता । पृथिवीशब्देनापि समस्तभूमण्डलवचनेन एकदेशोऽत्रलक्ष्यते । त्रिभिरपि रसैरुपेतां निवासभूमिं परि अशायतम् । अश्नोतेः रूपम् । अस्माकं स्वभूतां वेदिलक्षणां पृथिवीं पर्यशायतं अश्नुवाथाम् । सर्वतो व्याप्नुतामित्यर्थः । अथवा अशायतं इति शेः रूपम् । शेतिश्च स्थानार्थः । इदं ण्यन्तस्य छान्दसं रूपम् । पर्यशायतम् । परिप्रापयतम् । दत्तमस्मभ्यमित्यर्थः । अथवा नः इति षष्ठी । पृथिवीविशेषणार्था । पृथिवी च वेदिरभिप्रेता । अशायतमित्यपि प्रकृत्यन्तरस्यैवाश्नोतेः । रूपम् । अस्माकं स्वभूतां वेदिक्षणां पृथिवीम् । अथवा धातुशब्दः कालवचनः । ततः क्रियाविशेषणम् । त्रिषु पूर्वाह्णमध्यन्दिनापराह्णलक्षणेषु कालेषु भवत् त्रिधातु । अशायतम् । सर्वासु यागवेलासु अशायतमित्यर्थः । किंच । तिस्रोऽप्यस्मदीया ऐष्टकपाशुकसौमीकवेदिलक्षणा वेदिः । हे नासत्यनामानौ । यद्यपि चाश्विनोरन्यतरस्येदं नामधेयं तथापि साहचर्यादुभयोः व्यपदेशः । रथ्या रथस्य वोढारौ रथे वा साधू । परावतः । दूरनामैतत् । तात्स्थ्याच्चात्र ताच्छब्द्यम् । दूरस्थः अपि आत्मेव वातः । आत्मशब्देनात्रात्मसम्बन्धान्मन उच्यते । वातशब्दोऽपि लुप्तेव शब्दं उपमानमेव । द्वितीयं मन इति इव च । वात इव । यथा वायुमनसी शीघ्रं गच्छतः तद्वत् स्वसाराणि । अहर्नामैतत् । सप्तम्यर्थे चात्र प्रथमा । यजनीयेष्वहस्सु शीघ्रं गच्छतः । अथवा आत्मेति वातस्यैव विशेषणं न पृथगुपमा । वातो हि सर्वस्यात्मा सर्वशरीराणां पाञ्चभौतिकत्वात् । यथा सर्वस्यात्मा वातः शीघ्रं गच्छति तद्वच्छीघ्रं गच्छतमिति । अनयोश्चार्धर्चयोः पूर्वेण निवासभूमिप्राप्तिराशास्यते परेण यागकालेषु वेदिगमनमित्यस्यां तावत् कल्पनायामपौनरुक्त्यमेव । यदा तु पूर्वेण

वेदिव्याप्तिरुक्ता। तदा परेण वेदिगमनमुच्यते। गमनोत्तरकालं व्याप्तिः पूर्वेण। इत्येवमपौनरुक्त्या वाक्यभेदाद्वा अर्धर्चयोस्तुल्यार्थत्वेऽप्यपौनरुक्त्यमेव ॥ ७

त्रिरश्विना सिन्धुभिः सप्तमातृभिस्त्रय आहावास्त्रेधा हविष्कृतम् ।
तिस्रः पृथिवीरुपरि प्रवा दिवो नाकं रक्षेथे द्युभिरक्तुभिर्हितम् ॥ ८

त्रिः बहुकृत्वः हे अश्विनौ सिन्धुभिः सप्तमातृभिः। स्यन्दनात् सिन्धवः सोमा उच्यन्ते। सप्तच्छन्दांसि मातृभूतानि अभिषवद्वारेण येषां ते सप्तमातरः सोमाः। इत्थंभूतलक्षणे तृतीया। छन्दोभिरभिषुतैः सोमैः संबद्धाः। त्रयः आहावाः। कूपादेसन्निधौ प्रभूतोदकं निपानमाहाव इति प्रसिद्धः लोके। तत्स्थानीयास्त्रयः। किम्। साकाङ्क्षत्वात् कृतशब्दः परस्तात्कृतोऽनुषक्तव्यः। युष्मदर्थे कृताः। सामर्थ्यादस्माभिः। कतमे पुनस्ते। पूतभृद्धवनीयद्रोणकलशाः। बहुकृत्वोऽस्माभिर्युष्मदर्थं सर्वैः छन्दोभिरभिषुतानां सोमानां पूर्णा आहावस्थानीयाः पूतभृद्धवनीयद्रोणकलशाः त्रयोऽप्युपकल्पिता इत्यर्थः। न च केवलाः। किं तर्हि। अन्यदपि। पुरोडाशादिः विभागेन त्रेधा हविष्कृतम्। किं च। तिस्रः पृथिवीरुपरि प्रवा दिवः। पृथिवीशब्देनात्र साहचर्यात् सर्वे लोका उच्यन्ते। उपरीत्येतद्दिव इत्येतेन सम्बध्यते। प्रवा। प्रवतिर्गतिकर्मा। नचेदमामन्त्रितमननुदात्तत्वात्। रक्षेथे इति मध्यमपुरुषसंयोगात्। अयमप्यर्धर्चः प्रत्यक्षकृतः। अतो यत्तच्छब्दावध्याहृत्यैकवाक्यता कल्प्या। यौ युवां त्रीनपि लोकानुपरि द्युलोकस्य प्रवा गन्तारौ तौ नाकं स्वर्गं स्वव्यापारेण रक्षेथे। न च केवलम्। किं तर्हि। द्युभिः अक्तुभिः। अक्तुः इति रात्रिनाम। उभयत्र च सहयोगलक्षणा तृतीया। अहोभिः रात्रीभिश्च सह। कीदृशम्। हितं उपकारकं सर्वप्रजानाम् ॥ ८

क्व१त्री चक्रा त्रिवृतो रथस्य क्व१त्रयो बन्धुरो ये सनीळाः।
कदा योगो वाजिनो रासभस्य येन यज्ञं नासत्योपयाथः ॥ ९

त्रीणि चक्राणि। त्रिवृतः। त्रिभिश्चक्रैर्वर्तते गच्छतीति त्रिवृत्। तस्य त्रिवृतो युष्मदीयस्य रथस्यावयवभूतानि। क्व वा त्रयो बन्धुरः। सारथिस्थानं बन्धुर उच्यते। ये सनीळाः समानस्थानाः। एकस्मिन्नेव प्रदेशे स्थिताः। मनुष्यस्य शकटस्येव भिन्नप्रदेशवर्तिन इत्यर्थः। कदा योगः रथे नियोजनं वाजिनः वेगवतः रासभस्य युष्मदीयाश्वस्य। कदा युष्मदीयोऽश्वो रथे नियोक्ष्यते इत्यर्थः। येनाश्वेन यज्ञं हे

नासत्यौ उपयाथः वेगं गच्छथः । किमसन्निहितानि वां गमनसाधनानि येन नागच्छथः। इत्येवमागमनविळम्बनादुपालंभोऽयम् ॥ ९

आ नासत्या गच्छतं हूयते हविर्मध्वः पिबतं मधुपेभिरासभिः ।
युवोर्हि पूर्वं सवितोऽषसो रथमृताय चित्रं घृतवन्तमिष्यति ॥ १०

हे नासत्यौ आगच्छतं। युवाम् । किं कारणम् । यस्मात् सोमलक्षणं हविः हूयते । आगत्य मध्वः मधुस्वादमिदं मधुस्वादस्य वाऽस्यैकदेशम् । स्वांशलक्षणं पिबतम् । मधुपेभिरासभिः । व्यत्ययेनेदं बहुवचनम् । मधुपाभ्यां आस्याभ्याम्। कस्मादागच्छतम्। उच्यते। युवोर्हि। हिशब्दो यस्मादर्थे। युवयोः स्वभूतः। पूर्वम्। क्रियाविशेषणमेतत् । अन्याभ्यो देवताभ्यः प्रथमं सविता । यजमाननामधेयमेतत् शाकपूणिना पठितम् । सर्वस्य यज्ञस्य प्रसविता अभ्यनुज्ञाता यजमानः । उषसश्च स्वभूतं रथं ऋताय । ऋ गतौ । यज्ञं प्रति गमनाय चित्रं विचित्रं पूजनीयं वा घृतवन्तं उदकवन्तं इष्यति। इच्छतेरयम्। व्यत्ययेन श्यन्। इच्छति यजमानः यस्माद्युष्मदीयं औषसं च रथं पूर्वं इच्छति तस्मात् आगच्छतं इत्यर्थः। अथवा सविता प्रकाशद्वारेण सर्वस्य प्रसुवन् सूर्य उच्यते। उषसः इत्येतच्च ऋतायेत्येतेन संबध्यते। इष्यतीत्यपि भूतकाले लट्व्यत्ययेन द्रष्टव्यः । यस्माद्युवयोः स्वभूतं रथं पूर्वमतीते काले सविता सर्वस्य प्रसविता सूर्यः दुहितुरुषसः ऋताय गमनाय इष्यतीष्टवान् प्रार्थितवान्। तदेतत्।

आवां रथं दुहिता सूर्यस्य । ऋ. वे. १. ११६. १७.

इत्यत्र वक्ष्यति कक्षीवान्। यस्मात् सूर्यप्रभृतिभिः देवैरप्युषसो गमनं प्रार्थितं तस्मान्महात्मकत्वादागच्छतमित्यर्थः ॥ १०

आ नासत्या त्रिभिरेकादशैरिह देवेभिर्यातं मधुपेयमश्विना ।
प्रायुस्तारिष्टं नी रपांसि मृक्षतं सेधतं द्वेषो भवतं सचाभुवा ॥ ११

हे नासत्यौ त्रिभिरेकादशैरिह देवेभिः। एकादश परिमाणा येषां ते एकादशाः। सहयोगलक्षणा चात्र तृतीया। इहेत्येतत् मधुपेयमित्येतेन संबध्यते । त्रयस्त्रिंशता देवैः सह इह यज्ञे यदेतन्मधुपेयं मधुस्वादं च पानार्हं च सोमलक्षणं हविः तत् प्रति आयातम् । आगत्य च सोमपानोत्तरकालं हे अश्विनौ प्रायुस्तारिष्टं प्रकर्षेणास्माकमायुर्वर्धयतम्। नी रपांसि मृक्षतम्। रपो रिप्रमिति पापनामनी भवतः। पापानि च निर्मृक्षतम्। मृजू शुद्धौ। निःशोधयतम्। सर्वाण्यपनयतमित्यर्थः। सेधतम्। सेधि-

रत्र सामर्थ्याद्वधार्थः । हतं च द्वेषः द्वेष्टन् द्वेष्यं वास्माकम् । अथवा सेधतिर्गतिकर्मा । सामर्थ्याच्चात्रान्तर्गीतण्यर्थः । शुद्धोऽपि च सोपसर्गार्थो द्रष्टव्यः । यत्किंच द्वेष्टृ द्वेष्यं वास्माकं तत्सर्वमपगमयतं इत्यर्थः । किंच यज्ञे अस्माभिस्सह भवतम् । सचाभुवा । सचा सहेत्यर्थः । सहभुवौ एकस्थानवर्तिनौ । नित्यमस्मदीयेषु यज्ञेषु आगच्छतं इत्यर्थः ॥ ११

आ नो अश्विना त्रिवृता रथेनार्वाञ्चं रयिं वहतं सुवीरम् ।
शृण्वन्ता वामवसे जोहवीमि वृधे च नो भवतं वाजसातौ ॥ १२

नः इति तादर्थ्ये चतुर्थी अस्माकमर्थाय हे अश्विनौ त्रिवृता रथेनात्मीयेन अर्वाञ्चमस्मदभिमुखं रयिं वहतं प्रापयतम् । सुवीरं शोभनैर्वीरैरुपेतम् । शृण्वन्ता नित्यं अस्मदीयमाह्वानं शृण्वन्तौ वां युवां अवसे तर्पणाय पालनाय वा जोहवीमि पुनः पुनराह्वयामि । वृधे वर्धनाय च नः अस्माकं भवतम् । वाजसातौ । संग्रामनामैतत् । संग्रामे । नित्यं चास्मान् सङ्ग्रामेषु जयलक्षणया वृद्ध्या वर्धयतं इत्यर्थः ॥ १२

---

ह्वयाम्यग्निं प्रथमं स्वस्तये ह्वयामि मित्रावरुणाविहावसे ।
ह्वयामि रात्रीं जगतो निवेशनीं ह्वयामि देवं सवितारमूतये ॥ १

ह्वयामीत्यग्नये पादो मैत्रावरुण उत्तरः ।
तृतीयो रात्रिसंस्तावः सूक्तं सावित्रमुच्यते ॥

ह्वयामीत्याद्यः पाद आग्नेयः । ततः परो द्वितीययो मैत्रवरुणः । तृतियो रात्रेः संस्तावः । रात्रिदेवत्य इत्यर्थः । शिष्टमन्यत्सूक्तं सावित्रम् । ह्वयाम्यग्निम् । कीदृशम् । प्रथमं मुख्यम् । क्रियाविशेषणं वा प्रथमशब्दः । अन्येभ्यो देवताभ्यः प्रथमं अग्र । स्वस्तये अविनाशायात्मनः । ह्वयामि मित्रावरुणौ इह अवसे पालनाय । ह्वयामि रात्रिं जगतो निवेशनीं स्वापकरीम् । ह्वयामि देवं सवितारं ऊतये पालनाय ॥ १

आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च ।
हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥ २

रजोऽत्र तमो रात्रिर्वा उच्यते । तृतीयानिर्देशाच्च योग्यक्रियाध्याहारः । कृष्णेन रजसा तमसा वा रात्र्या वा व्याप्ते जगति आवर्तमानः । वर्तत इति गतिकर्मा ।

लक्षणहेत्वोः क्रियायाः (पा ३२. १२६) इत्येवमयं हेतौ शानच् । आगमेनात्मीयेन हेतुना निवेशयन् । शुद्धोऽप्ययं निविशिः अभिपूर्वार्थो द्रष्टव्यः । स्वव्यापारेष्वभिनिवेशात् यत्नेन व्यापारयन्नित्यर्थः । किं अमृतं मरणवर्जितं देवादिम् । मर्त्यं च मनुष्यादिम् । उदिते हि सवितरि सर्वः स्वव्यापारे प्रवर्तते । अत एवमुच्यते आवर्तमानो निवेशयन्नमृतं मर्त्यं चेति । किं करोति । उच्यते । हिरण्ययेन सविता रथेन देवः आयाति भुवनानि भूतानि कृताकृतप्रत्यवेक्षणार्थं पश्यन् । अथवा निवेशयन्निति निवेशः स्वाप एवाभिप्रेतः । कृष्णेन रजसा इत्येतच्च निवेशयन्नित्येतेन संबध्यते । सप्तम्यर्थे चात्र तृतीया । आवर्तमानो निवेशयन्निति तु हेतुमद्भावे । एवं योजना । कृष्णायां रात्रौ निवेशयन् स्वापयन् अमृतं मर्त्यं च आवर्तमानश्च । कदा सामर्थ्यादहनि । हिरण्ययेन सविता रथेन आ देवो याति । क्याति । सामर्थ्यात् रात्रौ । निवेशयन्नमृतं मर्त्यं च उदयगिरिं प्रत्यायाति । उत्तरकुरुस्थानीभूतानि पश्यन् अहनि । पृथिवीं प्रत्यायाति तत्रस्थानि भूतानि पश्यन् ॥ २

याति॑ दे॒वः प्र॒वता॑ यात्यु॒द्वता॒ याति॑ शु॒भ्राभ्यां॑ यज॒तो हरि॑भ्याम् ।
आ दे॒वो या॑ति सवि॒ता प॑रा॒वतोऽप॒ विश्वा॑ दुरि॒ता बाध॑मानः ॥ ३

याति देवः प्रवता । उपसर्गाच्छन्दसि धात्वर्थे (पा. ५. १. ११८) इत्येवमयं वतिप्रत्ययः । शीघ्रयायिना । केन । सामर्थ्याद्रथेन । यात्युद्वता ऊर्ध्वगामिना । केन रथेनैव । याति शुभ्राभ्यां शोभनाभ्याम् । यजतो यज्ञार्हः । हरिभ्यामश्वाभ्याम् । यत्र यथा गन्तव्यं शीघ्रं वोर्ध्वं वा रथेन वाश्वैर्वा तत्र तथा गच्छतीत्यर्थः । किञ्च आ देवो याति सविता परावतः दूरादुदयगिरेः । अप विश्वा दुरिता बाधमानः । सर्वाणि दुरितानि सविता बाधते । रश्मिसंस्पर्शस्य शुचिकरत्वादहनि च पापनिवृत्त्यर्थं । प्रायश्चित्तानुष्ठानम् ॥ ३

अ॒भीवृ॑तं॒ कृश॑नैर्वि॒श्वरू॑पं॒ हिर॑ण्यशम्यं यज॒तो बृ॒हन्त॑म् ।
आस्था॒द्रथं॑ सवि॒ता चि॒त्रभा॑नुः कृ॒ष्णा रजां॑सि॒ तवि॑षीं॒ दधा॑नः ॥ ४

अभिवृतं कृशनैः । हिरण्यनामैतत् । हिरण्यैः । सुवर्णखचितमित्यर्थः । विश्वरूपम् । विश्वमिति बहुनाम सर्वपर्यायो वा । बहुरूपं सर्वरूपम् । हिरण्यशम्यं वोढुरश्वस्य अनडुहो वानपगमार्थं या निधीयते सा शम्येति प्रसिद्धा । सा हिरण्मयी यस्य तं हिरण्यशम्यम् । यजतं यागार्हं बृहन्तम् । आस्थात् आतिष्ठति आस्थितवान् वा । रथं सविता चित्रभानुः चित्रदीप्तिर्विचित्रदीप्तिर्वा पूजनीयदीप्तिर्वा । कृष्णा

कृष्णानि रजांसि तविषीम् । बलनामैतत् । तृतीयार्थे चात्र द्वितीया । स्वेन तेजोबलेन दधानः धारयन्निरुन्धन् इत्यर्थः ॥ ४

वि जनाञ्छ्यावाः शितिपादो अख्यन् रथं हिरण्यप्रउगं वहन्तः ।
शश्वद्विशः सवितुर्दैव्यस्योपस्थे विश्वा भुवनानि तस्थुः ॥ ५

जनान् मनुष्यान् श्यावाः शितिपादः श्वेतपादा अश्वाः व्यख्यन् विविधं प्रकाशयन्ति । सवितुः स्वभूतं रथं हिरण्यप्रउगम् । यत्र रथं निबध्यते स प्रदेशः प्रउगमुच्यते । स हिरण्मयो यस्य तं हिरण्यप्रउगम् । वहन्तः । किंच । शश्वत् । बहुनामैतत् नित्यपर्यायो वा । बहवो नित्यं वा विशः मनुष्याः सवितुर्दैव्यस्य । देव एव दैव्यः । तस्य दैव्यस्य उपस्थे उपस्थाने विश्वा भुवनानि सर्वाणि च भूतजातानि तस्थुः स्थितानि । बहवो मनुष्याः सर्वाणि च भूतजातानि सवितारमुपतिष्ठन्ते इत्यर्थः ॥ ५

तिस्रो द्यावः सवितुर्द्वा उपस्थाँ एका यमस्य भुवने विराषाट् ।
आणिं न रथ्यममृताधि तस्थुरिह ब्रवीतु क उ तच्चिकेतत् ॥ ६

द्युशब्दोऽत्र दिवोऽवयवेषु देवस्थानेषु वर्तते । त्रीणि दिवोऽवयवभूतानि स्थानानि सवितुः । अथवा स्वत एव दर्शनात् दिवां बहुत्वं प्रतिपत्तव्यम् । तिस्रो दिवः सवितुः स्वभूताः । तासां च द्वे उपस्थे समीपे सवितुः । एका तु यमस्य भुवने लोके विराषाट् । अथवा विराषाडिति विपूर्वस्य राजतेर्दीप्त्यर्थस्येदं रूपम् । विविधं दीप्ता । अथवा द्युसाहचर्यात् त्रयो लोका अत्र तिस्रो दिव इष्यन्ते । तासां द्वे समीपे द्यौरन्तरिक्षं च । एका तु पृथिवी यमस्य भुवने । अग्निरत्र यम उच्यते ।

यमो ह जातो यमो जनित्वम् । ऋ. वे. १. ६६. ८.

तस्य स्वभूते पार्थिवे लोके विराषाट् विविधं स्वदीप्त्या दीप्ता । किंच आणिं न रथ्यम् । चक्रस्याक्षान्निर्गमननिरोधार्थः कील आणिरुच्यते । रथे भवो रथ्यः । यथा रथ्यमाणिं सर्वाणि रथाङ्गान्याश्रितानि एवं सवितारं अमृता । अमृतमित्युदकनाम । रश्म्याहृतान्युदकानि । अथवा अमृतशब्दो देववचनः । प्रथमाबहुवचनस्यायमाकारः । अमृता देवा अधितस्थुः अधिष्ठितवन्तः । आश्रिता इत्यर्थः । इह लोके सः ब्रवीतु । य उ तत् । उकारः पदपूरणः । यः चिकेत तत् ॥ ६

वि सुपर्णो अन्तरिक्षाण्यख्यद्गभीरवेपा असुरः सुनीथः ।
क्वेदानीं सूर्यः कश्चिकेत कतमां द्यां रश्मिरस्या ततान ॥ ७

वि सुपर्णः सुपतनः सुगमनः सविता । अथवा सुपर्ण इति रश्मिनाम । सामर्थ्याच्चात्रान्तर्णीतमत्वर्थः । सुपर्णवान् रश्मिमान् । अन्तरिक्षाणि । अन्तरिक्षावयवा अत्रान्तरिक्षशब्देनोच्यन्ते । बहून्येव वा अन्तरिक्षाणि । अन्तरिक्षसाहचर्याद्वा त्रयोऽपि लोका अन्तरिक्षाण्युच्यन्ते । तानि व्यख्यत् विविधं प्रकाशितवान् । गभीरवेपाः गभीरं दुरवगाहम् । वेप इति कर्मनाम । गभीरकर्मा असुरः प्रज्ञावान् सुनीथः। प्रशस्यनामैतत् । प्रशस्यः । क्वेदानीम् । अनयोरर्धर्चयोरेकवाक्यताप्रसिध्यर्थं यत्तच्छब्दावध्याहार्यौ । इदानीमिति च रात्र्यभिप्रायमेतत् । यो दिवान्तरिक्षाणि व्यख्यत् सः क इदानीं रात्रौ सूर्यः सतां गन्ता सविता । कः चिकेत जानाति । कतमां द्यां दिवोऽवयवं द्युलोकमेव वा । लोकमात्रवचनो द्युशब्दः । कतमं लोकं रश्मिरस्य स्वभूतं आततान । तनोतिः अत्र सामर्थ्यात् प्रकाशनार्थः । प्रकाशयति । अथवा द्यामिति द्वितीयानिर्देशात् कर्मप्रवचनीयशब्दाध्याहारः। कतमां द्यां प्रति रश्मिरस्य आततानि आत्मानं विस्तारयति ॥ ७

अष्टौ व्यख्यत्ककुभः पृथिव्यास्त्री धन्व योजना सप्त सिन्धून् ।
हिरण्याक्षः सविता देव आगाद्दधद्रत्ना दाशुषे वार्याणि ॥ ८

अष्टौ । चतस्रो दिशः चतस्रोऽवान्तरदिशः । ता एता अष्टौ व्यख्यत् ककुभः । दिङ्नामैतत् । दिशः। पृथिव्याः सम्बन्धिनीः । न च केवलाः । किं तर्हि । त्री धन्व । त्रीणि च धन्वानि । धन्वेत्यन्तरिक्षनाम । अत एव च दर्शनादन्तरिक्षाणां त्रित्वं प्रतिवक्तव्यम् । तदवयवेषु वा आद्यमध्यान्तेषु धन्वशब्दो वर्तते । साहचर्याद्वा त्रयो लोकास्त्रीणि धन्वान्युच्यन्ते । योजना सप्त सिन्धून् । नदीनामैतत् । शोणाद्यान्महतः प्रभूतान्नदान् । अथवा सप्तसंख्यायोगात् सिन्धवोऽत्र रश्मय उच्यन्ते । तृतीयार्थे द्वितीया । सप्तभिः रश्मिभिः व्यख्यदित्यर्थः । परोऽर्धर्चो भिन्नमेव वाक्यम् । यत्तच्छब्दावध्याहृत्यैकवाक्यतां नेयः । यो व्यख्यत् ककुभः स हिरण्याक्षः हिरण्यमये एव हिरण्यसदृशे वा अक्षिणी यस्य स हिरण्याक्षः । सविता देव आगात् । उदित इत्यर्थः । दधत् ददत् रत्ना धनानि दाशुषे यजमानाय वार्याणि वरणीयानि उत्कृष्टानि ॥ ८

हिरण्यपाणिः सविता विचर्षणिरुभे द्यावापृथिवी अन्तरीयते ।
अपामीवां बाधते वेति सूर्यमभि कृष्णेन रजसा द्यामृणोति ॥ ९

हिरण्यमयौ पाणीयस्य सः हिरण्यपाणिः । अत्र च शांखायना इतिहासमामनन्ति । अथ यत्र ह तद्देवा अयज्ञमतन्वत तस्सवित्रे प्राशित्रं प्राशितुं परिजह्रुः तस्य

पाणी प्रचिच्छेद । तस्माद्धिरण्यपाणिरिति स्तुतः । इति । स हिरण्यपाणिः सविता विचर्षणिः कृताकृतस्य विद्रष्टा । उभे द्यावापृथिवी अन्तः । अधिकरणश्रुतेश्च योग्यक्रियाध्याहारः । मध्ये अवस्थितः । ईयते गच्छति । मध्ये स्थितः उभे अपि द्यावापृथिव्यौ ज्योतिषा व्याप्नोतीत्यर्थः । किंच अपामीवां बाधते । अमीवा हिंसिता शत्रुर्यजमानस्य । तमो वा प्रकाशस्य हिंसितृत्वात् । तं अपबाधते । वेतिर्गतिकर्मा अयम् । गच्छति च सूर्यम् । प्रथमार्थे द्वितीया । सूर्यः सर्ता सविता । कं प्रति । सामर्थ्यादस्तपर्वतम् । अथवा सर्तव्यत्वात् सूर्यसम्बन्धाय सूर्यः अस्तपर्वत इहोच्यते । तं प्रति । अस्तं च गच्छतीत्यर्थः । ततश्चोत्तरकालं कृष्णेन रजसा तमसा द्यां ऋणोति । ऋणोतिर्गतिकर्मा । सामर्थ्याच्च अत्रान्तर्णीतव्यर्थः । अभिगमयति व्यापयतीत्यर्थः ॥ ९

हिरण्यहस्तो असुरः सुनीथः सुमृळीकः स्ववाँ यात्वर्वाङ् ।
अपसेधन् रक्षसो यातुधानानस्थाद्देवः प्रतिदोषं गृणानः ॥ १०

हिरण्यहस्तः असुरः प्रज्ञावान् सुनीथः प्रशस्यः सुमृळीकः सुसुखः स्ववान् यातु । अस्मदभिमुखम् । अपसेधत् । सेधतिरत्र सामर्थ्याद्वधार्थः गत्यर्थो वा ण्यर्थश्च । अपघ्नन् अपशमयन् वा । रक्षसः राक्षसान् । कीदृशान् । यातुधानान् । रक्षसां रक्षःशब्देनैवोक्तत्वाद्विशेषणार्थः क्रियाशब्दोऽयम् । यातुः हिंसा । तस्यां हितव्याः स्थापयितव्याः यातुधानाः । तान् यातुधानान् । हिंसार्हानित्यर्थः । अस्थात् लोडर्थे लुङ् । तिष्ठत्वस्मदीयायां वेद्याम् । प्रतिदोषम् दोषेति रात्रिनाम । अत्र च साहचर्यादहनि वर्तते । प्रत्यहं गृणानः । व्यत्ययेनायं कर्तरि । गीयमानः स्तूयमानः अस्माभिः ॥ १०

ये ते पन्थाः सवितः पूर्व्यासोऽरेणवः सुकृता अन्तरिक्षे ।
तेभिर्नो अद्य पथिभिः सुगेभी रक्षा च नो अधि च ब्रूहि देव ॥ ११

ये ते पन्थानः । हे सवितः । पूर्व्यासः पूर्वाः चिरन्तनाः । अरेणवः पांसुवर्जिताः सुकृताः शोभनाः कृताः । केन । सामर्थ्यात्त्वयैव विधात्रा अन्तरिक्षे । तेभिः । नः इति तादर्थ्ये चतुर्थी । तृतीयानिर्देशाच्च योग्यक्रियाध्याहारः । तैरस्मदर्थमागत्य । कदा । आद्य । कैः पथिभिः । कीदृशैः । सुगमनैः । रक्ष च नः अस्मान् । अधि च ब्रूहि । अधिवचनं आज्ञापनम् । आज्ञापय च यदाज्ञापयितव्यम् । हे देव ॥ ११

प्र वो॑ य॒ह्वं पु॑रू॒णां वि॒शां दे॑वय॒तीना॑म् ।
अ॒ग्निं सू॒क्तेभि॒र्वचो॑भिरीमहे॒ यं सी॒मिद॒न्य ईळ॑ते ॥ १

प्रवः कण्वस्य उत्तरः ॥

प्रवो यह्वमित्येतत् कण्वो नामर्षिः हिरण्यस्तूपादुत्तरोऽपश्यत् । प्रवो यह्वमित्याग्नेयं चैतत् सूक्तम् । प्रेत्युपसर्ग ईमह इत्याख्यातेन संबध्यते । व इति द्वितीयैकवचनस्य स्थाने बहुवचनम् । त्वां यह्वम् । महन्नामैतत् । महान्तम् । पुरूणां विशां देवयतीनाम् । पुरु इति बहुनाम । सर्वत्र च निर्धारणे षष्ठी । बह्वीनां मनुष्यजातीनां देवानिच्छन्तीनां मध्ये वयमग्निं सूक्तेभिः सूक्तैः प्रकर्षेण याचामहे । यं सीं इत् । सीमिति परिग्रहार्थीयो वा पदपूरणो वा । इच्छब्दस्तु पदपूरण एव । यं सर्वेऽन्ये ईळते । ईळिरत्र याच्ञार्थः । याचन्ते । अथवा सूक्तानां वचसां स्तुतिकारणत्वादीमहे ईळते इत्येतावुभावपि स्तुत्यर्थौ । बह्वीनां मनुष्यजातीनां मध्ये वयं स्तुमः । यमन्येऽपि स्तुवन्तीत्यर्थः ॥१

जना॑सो अ॒ग्निं द॑धिरे सहो॒वृधं॑ ह॒विष्म॑न्तो विधेम ते ।
स त्वं नो॑ अ॒द्य सु॒मना॑ इ॒हावि॒ता भवा॒ वाजे॑षु सन्त्य ॥ २

स त्वं नः इति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । ये जनासः मनुष्याः अग्निं दधिरे परिचर्यया धारयन्ति । परिचरन्तीत्यर्थः । सहोवृधं बलस्य वर्धयितारम् । यं च हविष्मन्तः विधेम वयमपि परिचरामः । ते । द्वितीयार्थे षष्ठी । त्वाम् । सः त्वं नो अद्य सुमनाः सुचित्तोऽनुग्रहपरः । इह अविता पालयिता भव । वाजेषु संग्रामेषु हे सन्त्य । षणु दाने इत्यस्यैतद्रूपम् । दातः ॥ २

प्र त्वा॑ दू॒तं वृ॑णीमहे॒ होता॑रं वि॒श्ववे॑दसम् ।
म॒हस्ते॑ स॒तो वि च॑रन्त्य॒र्चयो॑ दि॒वि स्पृ॑शन्ति भा॒नवः॑ ॥ ३

त्वा त्वां दूतं प्रकर्षेण वृणीमहे । होतारं च विश्ववेदसं सर्वधनम् । महः ते सतः । अयमर्धर्चो भिन्नं वाक्यं पूर्वस्मात् । यस्य ते तव महः महतः सुदीप्तस्य सतः सर्वतो विचरन्ति अर्चयो ज्वालाः । दिवि स्पृशन्ति भानवः । दिवीति द्वितीयार्थे सप्तमी । भानवः दीप्तयः । दीप्तयोऽपि दिवं स्पृशन्ति ॥ ३

दे॒वास॑स्त्वा॒ वरु॑णो मि॒त्रो अ॑र्य॒मा सं दू॒तं प्र॒त्नमि॑न्धते ।
विश्वं॒ सो अ॑ग्ने जयति॒ त्वया॒ धनं॒ यस्ते॑ द॒दाश॒ मर्त्यः॑ ॥ ४

देवासः देवाः त्वा त्वां वरुणो मित्रो अर्यमा इत्येते दूतं प्रत्नं पुराणं समिन्धते तेजसा दीपितवन्तः। देवा अपि त्वां परिचरितवन्तः। न केवला मनुष्या इत्यर्थः। किञ्च। विश्वम्। बहुनामैतत्। बहु हे अग्ने जयति स्ववशे करोति। लभते इत्यर्थः। त्वया। तृतीयानिर्देशादत्र योग्यक्रियाध्याहारः। त्वया अनुगृह्यमाणः। किञ्च। धनं यः। किं करोति। उच्यते। यस्ते ददाश हविर्ददाति मर्त्यो मनुष्यः॥ ४

मन्द्रो होता गृहपतिरग्ने दूतो विशामसि।
त्वे विश्वा संगतानि व्रता ध्रुवा यानि देवा अकृण्वत॥ ५

मन्द्रः। मदतिः स्तुत्यर्थः। स्तोता। होता गृहपतिश्च। हे अग्ने दूतश्च। विशां मनुष्याणां भवसि। किञ्च। त्वे तव विश्वा। सर्वाणि संगतानि स्तोतृभिः यष्टृभिश्च सह सख्यानि। व्रता कर्माणि च ध्रुवा ध्रुवाणि। कतमानि। उच्यते। यानि देवा अकृण्वत कृतवन्तः। कतमानि हविर्वहनादीनि। अग्नेः कर्माणि देवैः कृतानि॥ ५

त्वे इदग्ने सुभगे यविष्ठ्य विश्वमा हूयते हविः।
स त्वं नो अद्य सुमना उतापरं यक्षि देवान्त्सुवीर्या॥ ६

स त्वं नः इति तच्छब्दात् यच्छब्दाध्याहारः। यस्मिन् त्वयि। इदिति पदपूरणः। हे अग्ने सुभगे सुधने। हे यवीष्ठ्य युवतम। विश्वं बहु सर्वं वा आहूयते हविः। सः त्वं नो अद्य सुमनाः। सुचित्तोऽनुग्रहपरः। उतापरम्। उतेत्यप्यर्थे। अपरमित्यस्माच्च परो द्रष्टव्यः। अपरमिति च सप्तम्यर्थे द्वितीया। अपरस्मिन्नपि काले। अद्य चागामिनि च काले इत्यर्थः। यक्षि यज देवान्। सुवीर्या। तृतीयैकवचनस्य चायमाकारः। शोभनेनात्मीयेन वीर्येण॥ ६

तं घेमित्था नमस्विन उप स्वराजमासते।
होत्राभिरग्निं मनुषः समिन्धते तितिर्वांसो अति स्रिधः॥ ७

तमग्निम्। च ईमिति पदपूरणौ। इत्था। सत्यनामैतत्। सत्यम्। नमस्विनः स्तुतिमन्तः। स्वराजं स्वदीप्तं उपासते स्तुतिभिः परिचरन्ति। स्तुवन्तीत्यर्थः। न च स्तुवन्त्येव केवलम्। किं तर्हि। होत्राभिः। यज्वनामैतत्। स हि आहुतिलक्षणेषु यागेषु वर्तते आहुतिभिश्च। अग्निं मनुषः मनुष्याः समिन्धते सन्दीपयन्ति। तितिर्वांसः। अग्निप्रसादादेव निस्तीर्णवन्तः। अथवा तिरति इति वधकर्मसु पाठात्

तिरतिरत्र वधार्थः । हतवन्तः । अति सुष्ठु । कान् । स्रिधः । स्रेधतिः क्षयार्थः शोषणार्थो वा । क्षेपयितॄन् शोषयितॄन्वा । बलवन्तः शत्रूनित्यर्थः ॥ ७

घ्नन्तो॑ वृ॒त्रम॑तरन् रोद॑सी अ॒प उ॒रु क्षया॑य चक्रिरे ।
भुव॒त्कण्वे॒ वृषा॑ द्यु॒म्न्याहु॑तः॒ क्रन्द॒दश्वो॒ गवि॑ष्टिषु ॥ ८

घ्नन्तो न पलायमानं वृत्रम् । अतरन् च । निस्तीर्णाः । के । सामर्थ्यादग्नेः स्तोतारो यष्टारश्च । किंच । रोदसी अपः । अप इत्येतदन्तरिक्षनाम द्वितीयाबहुवचनान्तम् । बहुवचनान्तमेव ह्यप इत्यन्तरिक्षनामसु पठितम् । द्यावापृथिव्यौ चान्तरिक्षं च । कीदृशम् । उरु विस्तीर्णम् । क्षयाय निवासाय आत्मनः चक्रिरे कृतवन्तः । अग्निप्रसादात् त्रिष्वपि लोकेषु यथाकामं न्यवसन्नित्यर्थः । यत एवमतो ब्रवीमि । भुवत् भवतु । कण्वे । षष्ठ्यर्थे सप्तम्येषा । ममापि कण्वस्य । वृषा कामानां वर्षिता । दातेत्यर्थः । द्युम्नं द्योततेः । यशो वा अन्नं वा धननाम वा । तद्वान् । यशस्वी अन्नवान् धनवान् वेत्यर्थः । आङ्मर्यादावचनः । मर्यादया हुतः सन् । किं कुर्वन् । उच्यते । क्रन्दत् । क्रदि क्रदि आह्वाने । शत्रन्तं चेदं द्रष्टव्यम् । क्रन्दन्नाह्वयन् । देवान् । अश्वः । लुप्तोपमैतत् द्रष्टव्यम् । अश्व इव महता शब्देनेत्यर्थः । अथवा अश्वशब्दोऽत्र क्रियाशब्दः । अष्टा व्याप्तः उच्यते । गविष्टिषु । गावः सोमाः । ते यत्रेष्यन्ते देवताभिः । गावो वा याभिरिष्यन्ते यजमानैः ता गविष्टयः । तासु । यज्ञेष्वित्यर्थः । अथवा क्रन्दत् इत्याख्यातम् । पादादित्वात्त्वनिघातः । क्रन्दत् क्रन्दतु । ह्वयतु च देवता यज्ञेष्वित्यर्थः ॥ ८

सं सी॑दस्व म॒हाँ अ॑सि॒ शोच॑स्व देव॒वीत॑मः ।
वि धू॒मम॑ग्ने अरु॒षं मि॑येध्य सृ॒ज प्र॑शस्त दर्श॒तम् ॥ ९

संसीदस्व अस्मद्वेद्याम् । किं कारणम् । यस्मात् महानसि । संसद्य च शोचस्व दीप्यस्व । देववीतमः । वेतिर्गत्यर्थः कान्त्यर्थो वा । अतिशयेन देवान् प्रति गन्ता कामयिता वा देवानाम् । शोचमानश्च अर्धदग्धानां हविषां धूमं हे अग्ने अरुषम् । रुशतेः रोचतेर्वा आङ्पूर्वस्य अरुषशब्दः । स्वदीप्त्या दीप्तम् । बहुळमित्यर्थः । अथवा रुषतेर्गतिकर्मणः । अरुषो गन्ता । दिवं प्रति गन्तारम् । दिवस्पृशमित्यर्थः । हे मियेध्य मेध्य यज्ञार्ह विसृज विमुञ्च । हे प्रशस्त दर्शतं दर्शनीयम् । ९

यं त्वा॑ दे॒वासो॒ मन॑वे द॒धुरि॒ह यजि॑ष्ठं हव्यवाहन ।
यं कण्वो॒ मेध्या॑तिथिर्धन॒स्पृतं॒ यं वृषा॒ यमु॑पस्तु॒तः ॥ १०

अत्रेति हासमाचक्षते। देवाः सत्रमासत। तेतत्राग्निमैन्धत। ते खल्वतोऽग्निं मनवे प्रादुः। तं मनुः। तं ऋषयः। तं ऋषिपुत्राश्च प्रावचनाश्चेति। तत्र यदिन्धनं तद्दर्शपूर्णमासयोरावाहननिगदे दृश्यते। देवेद्धो मान्विद्ध इति। यत्तु मनवे दानं तदयमर्धर्च आह। यं त्वा देवासो मनवे दधुः। दत्तवन्तः।इह। लोके इत्यर्थः। अथवा मनुशब्दो मनुष्यपर्यायः। तादर्थ्ये चतुर्थी। दधुरित्यपि दातिर्निधानार्थः। यं त्वा देवाः मनुष्याणामर्थाय इह लोके विनिहितवन्तः इत्यर्थः। कीदृशम्। यजिष्ठं यष्टतमम्। हे हव्यवाहन हविषां वोढः। यं च कण्वः। सोऽयमित्यभिसम्बन्धात्पुत्रेऽयं पितृशब्दः प्रयुज्यते। काण्वो मेध्यातिथिर्नाम ऋषिः। अथवाकण्वश्च मेध्यातिथिश्च। किम्। आनीय इति वाक्यशेषः। कुत एतत्। साकांक्षत्वादुत्तरस्यां त्वृचि दर्शनात्। कीदृशम्। धनस्पृतम्। स्पृ प्रीतिपालनयोः। धनस्य पालयितारं धनेन वा प्रीणयितारं यजमानानाम्। दानार्थे वा सामर्थ्यात् स्पृणोतिः। धनस्य दातारमित्यर्थः। नच केवलो मेध्यातिथिः। कस्तर्हि। यं वृषा नाम ऋषिः दधेयं च उपस्तुतो नाम ऋषिः। किं तस्येति। संसीदस्वेति। यच्छब्दश्रुतेः पूर्वयर्चैकवाक्यता। परया वा। तदीयस्यार्धर्चस्यास्य च तुल्यार्थत्वात्पौनरुक्त्यप्रसंगात्॥ १०

यम॒ग्निं मेध्या॑तिथिः॒ कण्व॑ ई॒ध ऋ॒तादधि॑।
तस्य॒ प्रेषो॑ दीदियु॒स्तमि॒मा ऋच॒स्तम॒ग्निं व॑र्धयामसि॥ ११

अत्रापीतिहासमाचक्षते। मेध्यातिथिरादित्यादग्निमाहृत्य समीधे। इति। तदेतदिहोच्यते। यं अग्निं मेध्यातिथिः काण्वः। अथवा कण्वो मेध्यातिथि च। ईधे दीपितवान्। ऋतादधि। आदित्योऽत्र ऋतशब्देनोच्यते। अधीति चोपसर्गश्रुतेः योग्यक्रियाध्याहारः। आदित्यादधिगम्य लब्ध्वा। आदित्यादानीयेत्यर्थः। तस्य सम्बन्धिन्यः इषः अन्नानि प्रदीदियुः प्रकर्षेण दीप्यन्ते। केन पुनः सम्बन्धेन संबन्धीनि अन्नानि दीप्यन्ते। तद्दत्ततया। तेन यानि यष्टृभ्योऽन्नानि दत्तानि तानि न कुतश्चिन्न्यूनानि भवन्तीत्यर्थः। य ईदृशः तमग्निं इमाः अस्मदीया ऋचः। वयं च तमेवाग्निमन्याभिरपि स्तुतिभि वर्धयामसि। स्तूयमाना हि देवता वीर्येण वर्धन्ते। अत एवमुच्यते। तमिमा ऋचः वयं च अन्याभिरपि स्तुतिभिः वर्धयामः इति॥ ११

रा॒यस्पू॑र्धि स्वधा॒वोऽस्ति॒ हि तेऽग्ने॑ दे॒वेष्वाप्य॑म्।
त्वं वाज॑स्य॒ श्रुत्य॑स्य राजसि॒ स नो॑ मृळ म॒हाँ अ॑सि॥ १२

रायः धनस्य पूर्धि पूरय अस्मान्। अथवा राय इति द्वितीयाबहुवचनम्। पूर्द्धि इत्यपि याच्ञाकर्म। याच्ञया चात्र दानं लक्ष्यते। धनानि देहीत्यर्थः। हे स्वधावः अन्न-

वन्। किं कारणम्। उच्यते। हिशब्दो यस्मादर्थे। यस्मादस्ति ते तव हे अग्ने देवेषु। निर्धारणे एषा सप्तमी। देवानां मध्ये आप्यं आप्तव्यम्। यस्मादस्माभिरर्थिभिर्मनुष्यैर्देवेभ्य आप्तव्यं तत् देवानां मध्ये तवैवास्ति नान्यस्य कस्यचिदित्यर्थः। अथवा आप्यमिति आपिशब्दस्य ज्ञातिवचनस्य भावप्रत्ययान्तस्य रूपम्। यस्मादस्ति तव देवेष्वापित्वं ज्ञातित्वम्। यस्मात्तव देवा ज्ञातयः। ज्ञातित्वाच्च तदीयानि धनानि त्वां ददतं अनुमन्यन्ते इत्यर्थः। परोऽर्धर्चः भिन्नं वाक्यम्। स नो मृळ इति तच्छब्दात् यच्छब्दोऽध्याहार्यः। यस्त्वं वाजस्यान्नस्य श्रुतस्य श्रोतव्यस्य अत्यन्तोत्कृष्टस्य। अथवा श्रुतस्य प्रख्यातस्य। राजसि ईशिषे। स नः अस्मान् मृळ मृळय सुखय। किं कारणम्। यस्मात् महानसि प्रभावतः। महाप्रभावाश्च आश्रितानां सुखकरा भवन्ति ॥ १२

ऊर्ध्व ऊ षु णं ऊतये तिष्ठां देवो न सविता।
ऊर्ध्वो वाजस्य सनिता यदुञ्जिभिर्वाघद्भिर्विह्वयामहे ॥ १३

ऊर्ध्वं इत्येतत् तिष्ठा इत्येतेन संबन्धयितव्यम्। सु इति पदपूरणः। नः अस्माकं ऊतये पालनाय ऊर्ध्वस्तिष्ठ उत्तिष्ठ। व्याप्रियस्वेत्यर्थः। कथम्। देवो न सविता। यथा सविता देवः सर्वदा अस्माकं पालनाय उत्तिष्ठति तद्वत्। नच केवलाय पालनाय। किं तर्हि। ऊर्ध्वो वाजस्य सनिता। सनितिर्लाभः। चतुर्थ्यार्थे षष्ठी। अन्नस्यापि लाभायोर्ध्वस्तिष्ठ। कथम्। उच्यते। यद्यस्मादञ्जिभिः। छन्दांस्यत्र अञ्जय उच्यन्ते। तैः। वाघद्भिः। वाघत् इति ऋत्विङ्नाम। आत्मीयैर्ऋत्विग्भिः। विह्वयामहे। ह्वयतिरत्रान्तर्णीतण्यर्थः। यज्ञेषु नित्यं विविधं ह्वयामः। यस्मान्नित्यं यज्ञेषु त्वामाहूय यजामह इत्यर्थः॥ १३

ऊर्ध्वो नः पाह्यंहसो नि केतुना विश्वं समत्रिणं दह।
कृधी न ऊर्ध्वाञ्चरथाय जीवसे विदा देवेषु नो दुवः॥ १४

ऊर्ध्वतयात्र यत्नो लक्ष्यते। ऊर्ध्वो यत्नवान् नः अस्मान् पाहि अंहसः। निपाहि नियमेन रक्ष अंहसः पापात्। किंच। केतुना। केतुरिति प्रज्ञानाम। इह तु प्रज्ञानात्मत्वात् दाहत्वाद्दाहकरणत्वोपपत्तेश्च ज्योतिषि वर्तते। स्वेन ज्योतिषा विश्वं सर्वं अत्रिणम्। अत्रिशब्दो रक्षोवचनः। अत्तारं राक्षसं संदह। किंच। कृधि कुरु नः अस्मान् ऊर्ध्वान्। ऊर्ध्वतयात्र व्यापारसामर्थ्यं अविकलशरीरता च लक्ष्यते। अविकलशरीरान् सर्वव्यापारसमर्थान्। किमर्थम्। चरथाय चरणाय गमनाय। जीवसे जीवनाय। किंच। विदाः जानीहि। ज्ञानेन चात्र करणं प्रतिपाद्यते। कुरु देवेषु।

षष्ठ्यर्थे सप्तम्येषा। देवानां नः। तादर्थ्ये एषा चतुर्थी। अस्माकमर्थाया दुवः परिचर्याः। अस्मदर्थं देवान् परिचरेत्यर्थः। अथवा नः इति षष्ठी। अस्माकं या देवानां परिचर्या तां जानीहि। यद्वयं देवान् परिचरामः तत् जानीहि। ज्ञात्वा च अनुरूपं फलं देहीत्यर्थः। यदा यूपोच्छ्रयणे विनियोगात्तत्र प्रयुज्यमाने यूपदेवत्ये एते ऋचौ भवतः। यदाश्रित्य शौनकेनोक्तम्।

ऊर्ध्व ऊ षु ण ऊतये एते काण्व्यावृचौ यौप्यौ।

इति। तदापि ऊर्ध्वस्तिष्ठेत्युच्छ्रियमाणो यूप उच्यते। नाग्निः। ऊर्ध्वश्च सत्पशोर्बन्धनतां आपद्यमानः नः पाहीति विशेषः। शिष्टं समानम्॥ १४

पाहि नो अग्ने रक्षसः पाहि धूर्तेरराव्णः।
पाहि रीषत उत वा जिघांसतो बृहद्भानो यविष्ठ्य॥ १५

पाहि नः हे अग्ने रक्षसः राक्षसात्। पाहि धूर्तेः हिंसितुर्मारयितुः अराव्णः अदातुः हविषाम्। अयागशीलादित्यर्थः। पाहि रिषतः। रेषणं हिंसा ताडनलक्षणा अत्राभिप्रेता। प्रहारैस्ताडयतः। उत वा जिघांसतः हन्तुमिच्छतः। बृहद्भानो महादीप्ते यविष्ठ्य युवतम॥ १५

घनेव विष्वग्वि जह्यराव्णस्तपुर्जम्भ यो अस्मध्रुक्।
यो मर्त्यः शिशीते अत्यक्तुभिर्मा नः स रिपुरीशत॥ १६

तप्तं लोहं येन हन्यते स घन उच्यते। तृतीयैकवचनस्य चायमाकारः। घनेन इव यथा लोहकारस्तप्तं लोहं घनेन हन्यात् एवं विष्वक् नानाभूतानपि विजहि। अराव्णः अदातॄन् हविषः। अयष्टॄन् इत्यर्थः। तपुर्जम्भ।

इमं जंभसुतं पिब। ऋ. वे. ८. ९१. २.

इति प्रयोगदर्शनात् जंभशब्दोऽत्र दंष्ट्रावचनः। तापयितृदंष्ट्र। तीक्ष्णदंष्ट्र इत्यर्थः नच केवलानराव्णः। किं तर्हि। यो अस्मध्रुक्। यश्चास्माकं द्रोग्धा। अथवा यो अस्मध्रुगिति परेण संबध्यते। यो अस्मध्रुक् यश्च मर्त्यः मनुष्यः शिशीते। शी तनूकरणे। अतिशिशीते सुष्ठु तनूकरोति। केन अक्तुभिः। अक्तुशब्दोऽत्र सामर्थ्यादायुधवचनः। आयुधैः। सामर्थ्यादस्मनायुधैः तनूकरोति कर्शयति। ये अस्माकं सहायाः तानायुधैरुच्छिनत्ति इत्यर्थः। अथवा अक्तुभिरिति द्वितीयार्थे तृतीया। यश्चाक्तूनि आयुधानि अतिशिशीते सुष्ठु निश्यतीत्यर्थः। मा नः अस्माकं स रिपुः शत्रुः ईशत ईशिष्ट। मा तस्य वशवर्तितां गमाम इत्यर्थः। १६

अ॒ग्निर्द॑दे सु॒वीर्य॑म॒ग्निः कण्वा॑य॒ सौभ॑गम् ।
अ॒ग्निः प्राव॑न्मि॒त्रोत मेध्या॑तिथिम॒ग्निः सा॒ता उ॑पस्तु॒तम् ॥ १७

कण्वाय इति संप्रदानचतुर्थीश्रुतेः

वंस्वानो वार्यापुरु ऋ. वे. ८. २३. २७.

इति प्रयोगदर्शनात् वनिरत्र दानार्थः । अग्निर्वव्ने दत्तवान् । सुवीर्यं शोभनं वीर्यम् । अग्निरेव मह्यं कण्वाय सौभगं सुधनतां दत्तवान् । अग्निः प्रावत् प्रकर्षेण रक्षितवान् । मित्रा मित्राणि । उत मेध्यातिथिमृषिम् । अग्निरेव सातौ । सन्यन्ते संभज्यन्ते यत्र धनानि योद्धृभिः सा सातिः संग्रामोऽत्राभिप्रेतः । तत्र उपस्तुतं उपस्तुतनामानमपरं ऋषिम् ॥ १७

अ॒ग्निना॑ तु॒र्वशं॒ यदुं॑ परा॒वत॑ उ॒ग्रादे॑वं हवामहे ।
अ॒ग्निर्न॑यन्नव॑वास्त्वं बृ॒हद्र॑थं तु॒र्वीतिं॒ दस्य॑वे॒ सहः॑ ॥ १८

अग्निना । सहयोगलक्षणैषा तृतीया । अग्निना सह परिचर्यातिशयेन तदनुचरतां आपन्नं तुर्वशं यदुं उग्रदेवं च राजानं परावतो दूरात् हवामहे ह्वयामः । परोर्धर्चो भिन्नं वाक्यम् । अग्निर्नयत् नीतवान् । नववास्त्वं नामासुरं बृहद्रथं महारथं तुर्वितिम् । तुर्वि थुर्वि दुर्वि हिंसार्थाः । नववास्त्वं हिंसितवानित्यर्थः । अथवा तुर्वीतिरित्यसुरान्तरस्य नामधेयम् । अग्निर्नयदिति तु नयतिः सामर्थ्याद्वधार्थः । नववास्त्वं च तुर्वीतिं च अग्निर्हतवानित्यर्थः । दस्यवे । द्वितीयार्थे चतुर्थी एषा । दस्युं शत्रुं सहः । बलनामैतत् । अन्तर्णीतमत्वर्थं चेह द्रष्टव्यम् । सहस्वन्तं बलवन्तम् । अथवा सह इति तृतीयार्थे द्वितीया । सहसा स्वबलेन नीतवानित्यर्थः । यद्यपि च ।

अहं स यो नववास्त्वम् । ऋ. वे. १०. ४९. ६.

इति दर्शनादिन्द्रेण नववास्त्वो हत इत्यवगम्यते तथापि माहाभाग्याद्देवतानां हत एव इति च दर्शनादग्निनापि हत एवेत्यमबोद्धव्यम् ॥ १७

नि त्वाम॑ग्ने॒ मनु॑र्दधे॒ ज्योति॒र्जना॑य॒ शश्व॑ते ।
दी॒देथ॒ कण्व॑ ऋ॒तजा॑त उ॒क्षि॒तो यं न॑म॒स्यन्ति॑ कृ॒ष्टयः॑ ॥ १९

त्वां हे अग्ने मनुर्निदधे पृथिव्यां निहितवान् । ज्योतिः । अन्तर्णीतमत्वर्थमेतद्द्रष्टव्यम् । ज्योतिष्मन्तं जनाय शश्वते बहवे । बहूनां मनुष्याणामर्थाय । दीदेथ

दीप्यस्व । कण्वे । यस्य च भावेन (पा. २. ३. ३७.) इत्येवमियं सप्तमी । तच्छ्रुतेश्च लक्षणभूतयोग्यक्रियाध्याहारः । यस्त्वं कण्वे यजति ऋतजातः । ऋतो यज्ञस्तत्र जातः उत्पन्नः । अथवा ऋतः आदित्यः ततो जातः । आदित्याद्धाहृत इत्यर्थः । तदुक्तम् ।

यमग्निं मध्योतिथि कण्वं ईध ऋता दधी ।

इति । उक्षितः । उक्ष सेचने । आहुत्याज्येन सिक्तः । सः त्वम् । कीदृशः । उच्यते । यं नमस्यन्ति परिचरन्ति कर्मार्थं परिचरन्ति । कृष्टयः मनुष्याः । १९

त्वेषासो॑ अ॒ग्नेरम॑वन्तो अ॒र्चयो॑ भी॒मासो॒ न प्रती॑तये ।
र॒क्ष॒स्विनः॒ सद॒मिद्या॑तु॒माव॑तो॒ विश्वं॒ सम॒त्रिणं॑ दह ॥ २०

अग्नेः स्वभूताः अमवन्तः त्वेषासः दीप्ताः । आत्मपर्यायममशब्दं व्याचक्षते । आत्मवन्तः । यत्नवन्त इत्यर्थः । अथवा गत्यादिषु । गमनवन्तः । अम रोगे । तमसो रोगवन्तः । तमसो भंगवन्तः इत्यर्थः । अर्चयः ज्वालाः भीमासः न प्रतीतये । न प्रतिगमनाय कस्यचित् । केनचित् प्रत्यभिभवितुमशक्या इत्यर्थः । परोक्षैर्वैः प्रत्यक्ष कृतो भिन्नं वाक्यम् । रक्षस्विनः रक्षोजातिमतः । राक्षसानित्यर्थः । कीदृशान् । उच्यते । सदमित् । सदशब्दः सदाशब्दपर्यायः । इच्छब्द एवार्थे । सदैव । यातुमावतः इति वतुप्रकरणे युष्मदस्मद्भ्यां छान्दसि सादृश्य उपसंख्यानम् (वा. ५. २. ३९-१.) इत्येवं वतुप् । मावतो यातवः । षष्ठीसमासे छान्दसत्वाद्राजदन्तादिवत् परनिपातः । तान् यातुमावतः । मत्सदृशस्यापि उपरि रक्षोरूपानेवेत्यर्थः । अथवा यातुधानैर्निर्मीयमानत्वाद्यातुमा हिंसा । तद्वतः यातुमावतः । विश्वं सर्वं च अत्रिणं अत्तारं संदह । व्याघ्रदिकं संदह ॥



क्री॒ळं वः॒ शर्धो॒ मारु॑तमन॒र्वाणं॑ रथे॒शुभ॑म् ।
कण्वा॑ अ॒भि प्र गा॑यत ॥ १

त्रीणि सूक्तानि मारुतम् ।

त्रीण्येतानि सूक्तानि मरुद्देवत्यानि । क्रीळं क्रीडनस्वभावकम् । वः । प्रथमायाः स्थाने इयं द्वितीया । यूयम् । शर्धः बलं मारुतं मरुतां स्वभूतं मरुत्समूहरूपं वा । अनर्वाणम् । ऋ गतौ । अन्यत्राश्रिततया गन्ता अर्वा आश्रित इत्यर्थः । ततोऽन्योः अनर्वा । तमनर्वाणम् । शर्धसश्च नपुंसकस्य विशेषणत्वाद्व्यत्ययेन पुंलिङ्गता । अन्यत्रानाश्रितमित्यर्थः । रथेशुभम् । रथेषु व्यवस्थितं यच्छोभते तद्रथेशुभम् । हे कण्वा मम

कण्वस्य पुत्रः पात्रैश्च । अभिप्रगायत गायतिरर्चतिकर्मा । अभिप्रेत्यनयोश्चात्र विपर्ययो द्रष्टव्यः । प्रगायत । प्रकर्षेणाभिष्टुत ॥ १

ये पृष॑तीभिर्ऋ॒ष्टिभि॑ः सा॒कं वाशी॑भिर॒ञ्जिभि॑ः ।
अजा॑यन्त॒ स्वभा॑नवः ॥ २

ये मरुतः पृषतीभिः अत्र आदिष्टोपयोजनमेतदश्वताम । वृषद्वर्णाभिः बडबाभिः ऋष्टिभिः ।

अंसेषु व ऋष्टयः

इत्यंसस्थत्वदर्शनातळना शक्त्यो वा ऋष्टय उच्यन्ते । ताभिश्च साकं सह । वाशीभिः । आयुधविशेषो वाश्यः । ताभिश्च । अञ्जिभिः । रत्नप्रायाण्याभरणान्यञ्जय उच्यन्ते । तैश्च । अजायन्त स्वभानवः स्वदीप्तयः अपराश्रयविभूतयः । सर्वोपकरणैस्सहैव ये जाता इत्यर्थः । तेषां शर्धोऽभिप्रगायतेत्येव यच्छब्दश्रुतेः पूर्वयर्चैकवाक्यता परया वा ॥ २

इ॒हेव॑ शृण्व एषां॒ कशा॒ हस्ते॑षु॒ यद्वदा॑न् ।
नि याम॑ञ्चि॒त्रमृ॑ञ्जते ॥ ३

इहेव । इवशब्दः अस्तुपमाभेत्य संप्रत्यर्थे प्रयोगः (नि. ७ ३२.) इति पदपूरणः एवशब्दार्थे वा । ये पृषत्यादिभिः सहैवाजायन्त तेषामेमामिहैव पृथिव्यामेव शृण्वे । लिडेतत् कर्मणि व्यत्ययेन रूपम् । लडर्थे च लिट् श्रूयते । किम् । सामर्थ्याच्छब्दम् । कदा उच्यते । कशाः । अश्वाधन्यः कशा उच्यन्ते । तां हस्तेषु । सप्तमीनिर्देशात् स्थिता इति शेषः । यत् यदा वदान् वदन्ति । हस्तैः गुहिता कशा अश्वानाघ्नन्त्यः शब्दं यदा कुर्वन्तीत्यर्थः । यदा च यामन् रथं चित्रं विचित्रं पूज्यं वा ऋञ्जते । ऋञ्जतिः प्रसाधनकर्मान्यत्र । इहतु सामर्थ्यात् गत्यर्थः अन्तर्णीतण्यर्थः । निगमयन्ति नियतेन मार्गेण गमयन्ति । यदाश्वैः रथेन वा गच्छन्तीत्यर्थः ॥ ३

प्र वः॒ शर्धा॑य॒ घृष्व॑ये त्वे॒षद्यु॑म्नाय शु॒ष्मिणे॑ ।
दे॒वत्तं॒ ब्रह्म॑ गायत ॥ ४

व इति प्रथमार्थे द्वितीया । यूयं अस्मत्पुत्राश्च ऋत्विजो वा । शर्धाय बलाय मारुताय । घृष्वये । अपठितमपि महन्नामैतत् । महते । त्वेषद्युम्नाय । द्युम्नं द्योतर्यशः इहाभिप्रेतम् । दीप्तयशसे । शुष्मिणे बलवते । देवदत्तम् । देङ् रक्षणे इत्यस्यायम् ।

छान्दसत्वादनुपसर्गादपि देवशब्दात् उपसर्गात्त इत्येवं तकारः । देवेभ्यो मरुद्भ्यो दत्तं रक्षितम् । अस्माभिर्मरुदर्थमुपकल्पितं इत्यर्थः । अथवा देवदत्तमिति दातेः रूपम्। अथवा देवेनेन्द्रेण दत्तमिति । अत्र चेतिहासमाचक्षते । अदितिः किल शत्रुहननसमर्थं पुत्रमिच्छन्तीकश्यपमुपचचार। तां स परितुष्ट उवाच । जनिष्यते तवेदृशः पुत्रः यदि प्रयतगर्भं वर्षसहस्रं धारयिष्यसि इति । तथेत्यदितिः किल प्रतिपेदे। तच्छ्रुत्वा इन्द्रः छिद्रान्वेषी तां शुश्रूषांचक्रे । सा कदाचिदिन्द्रस्योत्संगे शिरो निधाय मुक्तकेशी विवृतोपस्थद्वारा सुष्वाप । तां अप्रयतामासाद्येन्द्रः तस्या उपस्थं प्रविश्य तं गर्भं सप्तधा वज्रेण चिच्छेद। सः छिन्नो रुरोद। तमिन्द्रः प्रत्येकं पुनः सप्तधा चिच्छेद। एते सप्तसप्तका मरुतां गणाः। तत्प्रबुद्धा अदितिः ज्ञात्वा इन्द्रमुवाच। ममैवायमपराधः । तेन त्वां न शपामि इति । किन्तु तैः सह समय-मुपैहि भागधेयमेषां प्रकल्पय इति। तैः सह इन्द्रः सख्यमुपेत्य स्तुतिभाजो हविर्भाजश्च चकार इति। तदेतदुच्यते। देवेनेन्द्रेण दत्तं देवदत्तं ब्रह्म स्तुतिलक्षणं प्रगायत। कै गै शब्दे। प्रशब्दयत। प्रकर्षेणोच्चारय इत्यर्थः॥ ४

प्र शंसा गोष्वघ्न्यं क्रीळं यच्छर्धो मारुतम् ।
जम्भे रसस्य वावृधे ॥ ५

प्रशंस। क्रीळं यदिति यच्छब्दश्रुतेस्तच्छब्दोऽत्राध्याहार्यः। तत्प्रशंस। शंस स्तुतौ। आत्मन एवायमन्तरात्मनः प्रैषः। प्रकर्षेण स्तुहि हे अन्तरात्मन्। गोष्विति निमित्ते एषा सप्तमी । प्रयोजनस्य निमित्तत्वेन विवक्षा । गोषु निमित्तभूतासु। गवार्थमित्यर्थः । अघ्न्यं अहन्तव्यं शत्रुभिः हन्तुमशक्यम् । कतमत् । उच्यते। क्रीळं यच्छर्धो मारुतं तत्। किं करोति। उच्यते। जंभे । जम्भतिरत्र सामर्थ्यात् पानार्थः। तृतीयार्थे च सप्तमी । जंभेन पानेन रसस्य सोमरसस्य वावृधे वीर्येण वर्धते॥ ५

को वो वर्षिष्ठ आ नरो दिवश्च ग्मश्च धूतयः ।
यत्सीमन्तं न धूनुथ ॥ ६

को वः। निर्धारणे एषा षष्ठी। युष्माकं मध्ये वर्षिष्ठो वृद्धतमः। न कश्चिदपि वृद्धतमः। सर्वे सवयस्का इत्यर्थः । हे नरः मनुष्याकाराः । दिवः च ग्मः चः। द्युलोकस्य च पृथिव्याश्च धूतयः आकंपयितारः। कीदृशाः यूयम्। उच्यते। यत्। सीमिति परिग्रहार्थीयः। सर्वं जगत् । अन्तं न अन्तमिव । यथा कश्चिच्छायाया वंशस्य वा अन्तं धुनुयात् एवं धूनुथ। भयेन कंपयथ इत्यर्थः॥ ६

नि वो यामा॑य॒ मानु॑षो द॒ध्र उ॒ग्राय॑ म॒न्यवे॑ ।
जिही॑त॒ पर्व॑तो गि॒रिः ॥ ७

वः युष्माकं स्वभूतं यामाय । द्वितीयार्थे चतुर्थी एषा । यामं रथं मानुषो मनुष्याः निदध्रे । धृ धारणे । नियमेन स्वयज्ञे धारयति । अथवा यामशब्दो यागवचनः । स्वार्थ एव च तादर्थ्ये चतुर्थी । युष्माकं यागाय । यूयं यज्ञे यास्यथेत्येवं तु मनुष्यो नियमेन धारयति । किम् । सामर्थ्यात् सोमलक्षणानि हवींषि । किमर्थम् । उग्राय मन्यवे । मन्युर्मन्यतेर्दीप्तिकर्मणः । दीप्तिरिहाभिप्रेता । उग्रायै दीप्त्यै । प्रकृष्टायैश्वर्यायेत्यर्थः । किञ्च जिहीत । ओहाङ् गतौ । अन्यत्र गच्छति । युष्मद्भयान्नश्यतीत्यर्थः । कीदृशः । पर्वतः पर्ववान् बह्ववयवयुक्तः । महानपि सन्नित्यर्थः । कः । गिरिः मेघो महीधरो वा । अथवा पर्वतो गिरिरिति समुच्चीयमानार्थौ । एतेन परस्परविशेषणविशेष्यभूतौ । गिरिश्च पर्वतश्च । मेघश्च महीधरश्चेत्यर्थः । अथवैवमन्यथास्या ऋगचोऽर्थयोजना । व इति द्वितीयाबहुवचनम् । यन्त्यस्मिन् देवा इति यामो यज्ञः । युष्मान् यज्ञाय मनुष्यो नियमेन धारयति । किंच उग्राय मन्यवे जिहीत । मन्युरिति क्रोधनाम । पञ्चम्यर्थे च चतुर्थी । उग्रात् क्रोधात् गच्छति । उग्रेभ्यः क्रुद्धेभ्यो युष्मभ्यं बिभ्यन्नश्यतीत्यर्थः । कः । पर्वतो गिरिरपि । महान् गिरिः । किमुतान्य इत्यर्थः ॥ ७

कीदृशा यूयमुच्यते—

येषा॑म॒ज्मे॑षु पृथि॒वी जु॑जु॒र्वाँ इ॑व वि॒श्पति॑ः ।
भि॒या यामे॑षु॒ रेज॑ते ॥ ८

येषां युष्माकं अज्मेषु । अज गतिक्षेपणयोः । गमनेषु । पृथिवी जुजुर्वान् इव विश्पतिः । पुत्रपौत्रादीनां मनुष्याणां पतिः विश्पतिः । कुलज्येष्ठोऽत्राभिप्रेतः न राजा । यथा जीर्णोऽत्यन्तं वृद्धः भिया भयेन रेजते कंपते । यामेष्वित्येतत्त अज्मेष्वित्येतेन संबन्धयितव्यः । तृतीयार्थे चात्र सप्तमी यामैः रथैरज्मेष्विति । येषु युष्मासु रथैर्गच्छत्सु कमप्येते हन्तुं गच्छतीत्यजानती पृथिव्यपि भयेन कंपते । किमुतान्य इत्यर्थः । अथवा येषामित्येतत् भियेत्येतेन संबन्धयितव्यः । तत्सम्बन्धे च भीत्रार्थानाम् (पा. १. ४. २५.) इत्यपादानत्वात् पञ्चम्यर्थे षष्ठी । अज्मेष्वित्यप्यज्मशब्दो गृहनाम । अज्मेष्विति यामेष्विति च समुच्चीयमानार्थे एते । सप्तमीनिर्देशाच्च योग्यक्रियाध्याहारः । येभ्यो युष्मभ्यमज्मेषु यामेषु गृहेषु च रथेषु व्यवस्थितेभ्यो भिया

भयेन पृथिवी रेजते इति । येभ्यः स्वस्थेभ्यश्चासीनेभ्यो युद्धाभिमुखेभ्यश्च भयेन पृथिवी कंपते इत्यर्थः । तेषाम् । ये मानुषः इत्येवं तच्छब्दश्रुतेः पूर्वयचैकवाक्यता परया वा ॥ ८

स्थिरं हि जानमेषां वयो मातुर्निरेतवे ।
यत्सीमनु द्विता शवः ॥ ९

हिशब्दः पदपूरणः । येषामज्मेषु येभ्यो वा भिया पृथिवी रेजते तेषामेषां मरुतां स्थिरं जनं जन्म वयश्च यौवनलक्षणम् । यथा मनुष्यजाताः शीघ्रमेव म्रियन्ते वृद्धीभवन्ति च न तद्वदेते मरुत इत्यर्थः । किमर्थं उच्यते । मातुर्निरेतवे मातुः सकाशान्निर्गन्तुम् । मातुरुदरे पुनर्गर्भवासमननुभवितुमित्यर्थः । यो हि म्रियते वृद्धीभवति च तेनावश्यं मातुरुदरे पुनर्गर्भवासोऽनुभवितव्यः । कीदृशा मरुतः उच्यते । यत् । षष्ठ्या अत्र लुक् । येषां सीमनु । सीमिति परिग्रहार्थीयः । अन्विति लक्षणे कर्मप्रवचनीयः प्रतिशब्देन समानार्थः । सर्वं प्रति द्विता द्विधा द्विविधमपि सांयौगिकं च हस्त्यश्वादिशरीरं च । शवः बलम् । ये द्विविधेनापि बलेन न कुतश्चिन्न्यूना इत्यर्थः ॥ ९

उदु त्ये सूनवो गिरः काष्ठा अज्मेष्वत्नत ।
वाश्रा अभिज्ञु यातवे ॥ १०

उदित्युपसर्गः अत्नतेत्याख्यातेन संबन्धयितव्यः । उ इति पदपूरणः । य उक्तगुणाः त्ये ते मरुतः । सूनवः पुत्राः । कस्य पृश्नेर्वा रुद्रस्य वा । कुत एतत् ।

पृश्नेः पुत्रा उपमासो रभिष्ठाः । ऋ. वे. ५. ५८. ५.
रुद्रस्य ये मीढुषः सन्ति पुत्राः । ऋ. वे. ६. ६६. ३.

इत्यादिषु मन्त्रान्तरेषु दर्शनात् । गिरः काष्ठाः । आपोऽत्र काष्ठा उच्यन्ते । गर्जितलक्षणा वाचः । अपश्च अज्मेषु । तृतीयार्थे सप्तमी । अज्मैः अजनैः स्वगमनैः । उदत्नत ऊर्ध्वं विस्तारयन्ति । मेघं प्रति गर्जन्ति तदीयाश्चापो विक्षिपन्तीत्यर्थः । कीदृशीरपः वाश्राः वाशनशीलाः शब्दकारिणीः । बह्वीरित्यर्थः । कथमुदत्नत । अभिज्ञु । क्रियाविशेषणमेतत् । अभिगतं जानु यस्मिन् उत्तानने तदभिज्ञु । निपात्य जानुम् । महता यत्नेनेत्यर्थः । किमर्थम् । यातवे पृथिवीं गन्तुम् । पृथिव्यां पातनायेत्यर्थः ॥ १०

नच केवला गिरः काष्ठाश्च । किं तर्हि—

त्यं चिद्घा दीर्घं पृथुं मिहो नपातममृध्रम् ।
प्र च्यावयन्ति यामभिः ॥ ११

त्यंचित् । चिदित्यप्यर्थे । घेति पदपूरणः । तच्छब्दश्रुतेश्च योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । योऽयं वैद्युतो नामाग्निः तदपि दीर्घं पृथुं मिहो नपातम् । मिह सेचने । सेचनात् मिट्मेघ उच्यते । नपादित्यपत्यनाम । मेघस्यापत्यभूतम् । मेघाद्धि वैद्युतोऽग्निर्जायते । अथवा नपादिति पौत्रस्यैव नाम न पुत्रस्य । तत्रादित्योमिडुच्यते । सोऽपि हि रश्म्याहृताभिः अद्भिः मध्यमं सिञ्चति । ताभ्यश्चाभ्द्यो मेघोजायते । मेघाद्विद्युत इत्येवमादित्यपौत्रत्वमस्य । अमृध्रम् । मृधिर्हिंसार्थः । अहिंस्यं अहिंसितारं वा साधूनाम् । अथवा मृध्रशब्दो मृदुपर्यायः । तथाहि यास्केन दार्शितः । दनो विश इन्द्र मृध्रवाचः दानमनसो नो मनुष्यानिन्द्र मृदुवाचः कुरु (नि. ६ ३१.) इति । अमृध्रं अमृदुं तीक्ष्णम् । अथवा मृध्रशब्दो निर्वीर्यवचनः । एवं हि छागलेयिनां श्रुतौ प्रयोगः । दक्षिणेन हस्तेन देवान् असृजत् । सव्येन नरान् । ते देवा वीर्यवन्तोऽभवन् मृध्रा असुराः । इति । अत्र च वीर्यवत् प्रतियोगित्वेनोपादानात् मृध्रशब्दो निर्वीर्यवचनः इति गम्यते । अमृध्रं वीर्यवन्तं प्रच्यावयन्ति मेघात् यामभिर्यानैः । विद्युतमपि स्वगमनैरेव कुर्वन्तीत्यर्थः ॥ ११

मरुतो यद्ध वो बलं जनाँ अचुच्यवीतन ।
गिरीँरचुच्यवीतन ॥ १२

हे मरुतः यद्वो बलम् । ह इति पदपूरणः । यद्वो बलं जनान् अचुच्यवीतन स्वराष्ट्रेभ्यः च्यावितवन्तः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । तदेव गिरीनपि मेघान् पर्वतान्वा अचुच्यवीतन । च्यावयन्ति ॥ १२

यद्ध यान्ति मरुतः सं ह ब्रुवतेऽध्वन्ना ।
शृणोति कश्चिदेषाम् ॥ १३

यत् यदा यान्ति मरुतः । यान्तश्च संब्रुवते परस्परेण संभाषन्ते । अध्वन्ना । आ इत्युपसर्गोऽध्यर्थे । अध्वन्नाधि अध्वन उपरि । अध्वनीत्यर्थः । यदेति वचनात्तदेत्यध्याहार्यम् । तदा शृणोति कश्चिदेषां मरुतां संभाषणं न सर्वः । यस्यैवैते मरुतः प्रसादवन्त स एवैतान् गच्छतोऽध्वनि भाषमाणान् शृणोति नापरः ॥ १३

प्र यात शीभमाशुभिः सन्ति कण्वेषु वो दुवः ।
तत्रो षु मादयाध्वै ॥ १४

प्रेत्येष उपेत्येतस्य स्थाने । उपयातास्मान् शीभम् । क्षिप्रनमैतत् । क्षिप्रं आशुभिः अश्वैः शीघ्रैः । किं कारणम् । उच्यते । यस्मात् सन्ति कण्वेषु एकस्मिन्नेवात्मनि

अस्मदो द्वयोश्च (पा. १. २ ५९.) इति बहुवचनम् । पुत्रपौत्राद्यपेक्षं वा । अस्मासु कण्वेषु वो युष्माकं दुवः परिचर्या । यस्मादागतान् युष्मान् वयं परिचरिष्याम इत्यर्थः । आगत्य च तत्रोषु । तच्छब्दश्रुतेर्योग्यार्थसंबन्धो यच्छब्दोऽत्राध्याहार्यः । योऽस्मदीयो यज्ञो वेदिर्वा तत्र सुष्ठु मादयाध्वै । मद तृप्तौ । तर्पयतात्मानम् ॥ १४

कस्मादुच्यते—

अस्ति हि ष्मा मदाय वः स्मसि ष्मा वयमेषाम् ।
विश्वं चिदायुर्जीवसे ॥ १५

हिशब्दो यस्मादर्थे । स्मेति पदपूरणम् । यस्मात्तत्रास्ति मदाय वः । किम् । साम-र्थ्यात् सोमः । मदाय वः । यस्माद्युष्मन्मदकरसमर्थः सोमोऽस्तीत्यर्थः । स्मसि ष्मा वयम् । स्मेति पदपूरणम् । विद्यामहे वयमपि । एषां युष्माकं मरुतां स्वभूता । यस्माद्वयमपि युष्माकं परिचारकाः सोमस्यार्पयितारः स्तुतिभाजश्च विद्यामह इत्यर्थः । यस्माच्च विश्वं चिदायुः । विश्वमिति बहुनाम । चिच्छब्दोऽप्यर्थे आयुरित्यस्माच्च परो द्रष्टव्यः । आयुरित्येतच्चात्रान्ननाम । अन्नमपि बह्वस्तीत्यर्थः । किमर्थम् । जीवसे जीवितुमस्म-ज्जीवनार्थम् । यत् सोमेनात्मानं तर्पयित्वा जीवनायास्मभ्यमन्नं दास्यते तदपि बह्व-स्तीत्यर्थः ॥ १५



कद्ध नूनं कधप्रियः पिता पुत्रं न हस्तयोः ।
दधिध्वे वृक्तबर्हिषः ॥ १

कच्छब्दः कदेत्यस्य पर्यायः । ह नूनमिति पदपूरणौ । कदा हे कधप्रियः । कमुदकं तं दधाति धारयतीति कधो मेघः । स प्रियो येषां ते कधप्रियः । व्यत्ययेनै-कवचनं द्रष्टव्यम् । अथवा कध आदित्यः उदकस्य धारयितृत्वात् । प्रजापतिना वा प्रकाशाद्यर्थं निहितत्वात् । प्रीञ् तर्पणे । प्रियः तर्पयिता येषां ते कधप्रियाः । मरुतो हि वर्षासु रश्म्याहृतैरुदकैरादित्येन तर्प्यन्ते । तेषां संबोधनं हे कधप्रियः । पिता पुत्रन्न हस्तयोः । यथा पिता बालकं पुत्रं लालयन् हस्तयोर्धारयति एवं दधिध्वे धारयन्ते धारायिष्यथ । कम् । सामर्थ्यादस्मान् । कदा अस्मान् लालयिष्यथेत्यर्थः । हे वृक्तबर्हिषः सर्वैर्मनुष्यैः वृक्तमास्तीर्णं बर्हिर्येषां ते वृक्तबर्हिषः । सर्वमनुष्यैः कृतयागा इत्यर्थः । तेषां संबोधनं हे वृक्तबर्हिषः ॥ १

क्व नूनं कद्वो अर्थं गन्ता दिवो न पृथिव्याः ।
क्व वो गावो न रण्यन्ति ॥ २

कत् नूनमिति पदपूरणौ । क देशे कदा वा वः अर्थम् । ऋ गतावित्यस्य । अर्थं गमनमुच्यते । युष्माकं गमनं क कदा वा । यूयं गन्तारः स्थेत्यर्थः । किमुच्यते । येन पुनः पुनरप्याहूयमाना गन्ता दिवो न पृथिव्याः । द्वितीयार्थे षष्ठ्येषा । गच्छथ । द्युलोकान्न पृथिवीम् । एतदुक्तं भवति । स्वस्मिंस्थाने नूनमसन्निहिता एव स्थ । येनाहूयमाना अपि नागच्छथ इति । क वो गावः । अश्वा अत्र गाव उच्यन्ते । क वो युष्माकं स्वभूता गन्तारोऽश्वा न रण्यन्ति न रमन्ते । एतदुक्तं भवति । सर्वत्रैव रमन्ते । अतोऽस्मत्समीपं किं नागच्छथ इति ॥ २

क्वं॑ वः सु॒म्ना नव्यां॑सि॒ मरु॑तः॒ क्व॑ सुवि॒ता ।
क्वो॒३ विश्वा॑नि॒ सौभ॑गा ॥ ३

कान्यत्र वः युष्माकं सुम्ना । सुम्नमिति सुखनाम । परिचर्यासुखानि नव्यांसि नवतराणि अस्माभिरनुत्पादितपूर्वाणि यदिच्छया यूयमन्यत्र गताः । हे मरुतः क सुविता । सुवितशब्दः सुगतवचनः । क वा सुगतानि स्थानानि । यत्र च पुनः पुनर्गम्यते तत्सुगतं भवति । अतोऽनेन गमनौचित्यं प्रतिपाद्यते । कान्यत्र भवतामुचितं गमनमित्यर्थः । क्वो विश्वानि सौभगा । विश्वमिति बहुनाम । भग इति धननाम । शोभनानि धनानि सुभगानि । सुभगान्येव सौभगानि । स्वार्थिकस्तद्धितः । क वाऽन्यत्र बहूनि शोभनानि हविर्लक्षणानि धनानि । कान्यत्र परिचर्यातिरेके सुखं वौचित्यं वा हविरतिरेको वा येनास्मत्समीपं नागच्छथेति समस्तार्थः ॥ ३

य॒द्यू॒यं पृश्नि॑मातरो॒ मर्ता॑सः॒ स्यात॑न ।
स्तो॒ता वो॑ अ॒मृत॑: स्यात् ॥ ४

यच्छब्दो यदिशब्दस्यार्थे । यदि यूयं हे पृश्निमातरः । पृश्निवर्णा गौः पृश्निः । सा माता येषां ते पृश्निमातरः । कुत एतत् ।

गोमातरो यच्छुभयन्ते अञ्जिभिः ॥ ऋ. वे. २. ८५. ३.

इति दर्शनात् । अथवा पृश्निर्गौरित्युभे अपि द्युनामनी । द्यौर्माता येषां ते पृश्निमातरः । मर्तासो मनुष्याः स्यातन भवेत । स्तोता च वो अस्मदादिरमृतो देवः स्यात् । ततः सर्वकामान् युष्माकं समवर्धयेदिति वाक्यशेषः । कुतएतत् । साकांक्षत्वात् ।

यदग्नेस्यामहं त्वम् ऋ. वे ८. ४४. २३.
यदिन्द्राहं यथा त्वम्—ऋ. वे. ८. १४. १.

इत्यादिषु चैवंरूपेषु मन्त्रेषु दृष्टत्वात् । अथवा यदिति वचनात्तत इत्येतत्तृतीय एव पादेऽध्याहर्तव्यः । यदि यूयं मर्तासो मनुष्याः स्यातन ततो युष्मत्प्रसादेन स्तोता वः अमृतो

मरणवर्जितः स्यादिति । एतदुक्तं भवति । यूयं चेत् मनुष्या अभविष्यत अवश्यमीदृशीभिः स्तुतिभिः प्रासत्स्यत । फलेन स्तोतारं समयोजयिष्यथ । देवास्तु भवन्तः । अतो न जानीमः किं यूयं न प्रासत्स्यथ । फलेन वा स्तोतारं न संयोजयिष्यथ इति ॥ ४

मा वो॑ मृ॒गो न यव॑से जरि॒ता भू॒दजो॑ष्यः ।

प॒था य॒मस्य॑ गा॒दुप॑ ॥ ५

मेति प्रतिषेधार्थीयो भूदित्यनेन संबन्धयितव्यः । व इति षष्ठ्यन्तो जरितेत्येन संबन्धयितव्यः । मृगो न यवसे । यवसशब्दः सस्यवचनः सामर्थ्याच्चात्रान्तर्णीतमत्वर्थः । यथा सस्यवतो देशात्सर्वस्य विनाशकरत्वात् मृगः सर्वस्य प्रियः एवं वो जरिता । जरितेति स्तोतृनाम । युष्माकं स्तोता अस्मदादिर्मा भूदजोष्यः अप्रियः । कस्य । सामर्थ्यात् सर्वस्य । सर्वस्यैव प्रियोऽस्त्वित्यर्थः । एतत्तावज्जीवतस्तोतुराशास्यते । मरणोत्तरकालमपि पथा यमस्य । यम आदित्यः । तस्य यः पन्था देवयानः तेन गादुप उपगच्छतु । देवयानेन पथा स्वर्गलोकमुपगच्छत्वित्यर्थः । अथवा व इत्येतदजोष्य इत्येतेन संबध्यते । पथा यमस्येत्यपि यमशब्दो यज्ञवचनः । गादित्यपि मध्यमपुरुषबहुवचनस्य स्थाने प्रथमपुरुषैकवचनम् । मा कदाचिदपि स्तोता युष्माकमप्रियोऽभूत् । किंतर्हि । सर्वदैव यज्ञस्य यो नियतः पन्थाः तेनोपगच्छत स्तोतारमित्यर्थः ॥ ५

मो षु णः॒ परा॑परा॒ निर्ऋ॑तिर्दु॒र्हणा॑ वधीत् ।

प॒दी॒ष्ट तृष्ण॑या स॒ह ॥ ६

मो इति निपातसमाहारः निपातान्तरं वा मेत्यस्यार्थे वर्तते । सु इति पदपूरणः । मा नः अस्मान् परापरा अत्यन्तपरा युष्मत्प्रसादादेव दूरवर्तिनीत्यर्थः । निर्ऋतिः मृत्युदेवता दुर्हणा । दुःखं हन्तीति दुर्हणा । मावधीत् । किं तर्हि । पदिष्ट पदु गतौ । शुद्धोऽपि चात्र सोपसर्गार्थे द्रष्टव्यः । अस्मत्तोऽवगच्छतु । अथवा परापरेत्येतत् पदीष्टेत्येतेन संबध्यते । परापरा गच्छतु । दूरं गच्छत्वित्यर्थः । न च केवला । किं तर्हि । तृष्णया सह । तृष्णा नाम निर्ऋतेर्दुहिता । तया सह ॥ ६

स॒त्यं त्वे॒षा अम॑वन्तो॒ धन्व॑ञ्चि॒दा रु॒द्रिया॑सः ।

मिहं॑ कृण्वन्त्यवा॒ताम् ॥ ७

सत्यमेतत्। त्वेषा दीप्ता मरुतः अमवन्तः। अमशब्द आत्मपर्यायः। आत्मवन्तः। यत्नवन्त इत्यर्थः। अथवा गत्यादिषु। गमनवन्तः। अथवा अम रोगे। शत्रूणां रोगवन्तः। धन्वञ्चित्। धन्वेत्यन्तरिक्षनाम। चिच्छब्दोऽप्यर्थे। आ इत्याकार उपसर्गोऽप्यर्थे। अन्तरिक्षेऽप्यधि। निरालम्बनस्यान्तरिक्षस्याप्युपरीत्यर्थः। रुद्रियासः। अपत्ये यच्प्रत्ययो द्रष्टव्यः। रुद्रपुत्रा। मिह सेचने। मिट् वृष्टिरुच्यते। तां कृण्वन्ति अवातां वातवर्जितां वातेनानुपहार्याम्। निरालम्बनेऽप्यन्तरिक्षे स्थिता निर्वातं वर्षन्तीत्यर्थः। अथवा धन्वेति मरुदेश उच्यते। तस्याप्युपरि वृष्टिं कुर्वन्ति। अत्यन्तनिरुदकानपि देशान् वृष्ट्या उदकवतः कुर्वन्तीत्यर्थः॥ ७

वाश्रेव विद्युन्मिमाति वत्सं न माता सिषक्ति।
यदेषां वृष्टिरसर्जि॥ ८

विद्युत् यथा वाश्रा वाशनशीला अभिनवप्रसूता गौः तद्वन्मिमाति। मिमातिः शब्दकर्मा। मेघान् स्फोटयन्ति गर्जितलक्षणं शब्दं करोति। वत्सं न माता। यथा च माता वत्सं तद्वत् सिषक्ति सेवते उपगच्छतीत्यर्थः। कम्। सामर्थ्यान्मेघं वा मरुतो वा। कदा उच्यते। यद्यदा एषां मरुतां स्वभूता वृष्टिरसर्जि सृज्यते क्षिप्यते यदैते मरुतः वर्षन्तीत्यर्थः॥ ८

दिवा चित्तमः कृण्वन्ति पर्जन्येनोदवाहेन।
यत्पृथिवीं व्युन्दन्ति॥ ९

दिवापि तमः कुर्वन्ति मरुतः पर्जन्येनोदवाहेन उदकवाहिना। उदकवता मेघेनादित्यं छादयन्तो दिवापि तमः कुर्वन्तीत्यर्थः। कदा। उच्यते। यत् यदा पृथिवीं व्युन्दन्ति विविधं क्लेदयन्ति। यदा वर्षन्तीत्यर्थः॥ ९

अध स्वनान्मरुतां विश्वमा सद्म पार्थिवम्।
अरेजन्त प्र मानुषाः॥ १०

अधशब्दः पदपूरणः अपिचेत्यस्य वार्थे। अपिच स्वनात् शब्दादपि मरुतां विश्वं सर्वम्। आकारस्तु पदपूरणः। सद्म सदनं स्थानम्। पार्थिवं पृथिव्यां भवम्। अरेजन्त प्र मानुषाश्च प्रारेजन्त। भ्यसते रेजत इति भयवेपनयोः। प्रकर्षेण बिभ्यन्ति भयेन कंपन्ते। मनुष्यग्रहणं चात्र जंगममात्रोपलक्षणार्थम्। शब्दादपि मरुतां सर्वं स्थावरं जंगमं च प्रकर्षेण बिभ्यन्ति भयेन कंपन्त इत्यर्थः॥ १०

मरुतो वीळुपाणिभिश्चित्रा रोधस्वतीरनु ।
यातेमखिद्रयामभिः ॥ ११

हे मरुतः वीळुपाणिभिः । वीळुशब्दोऽत्र दृढवचनः । पाणिशब्दोऽप्यत्राश्वानामग्रपादे खुरेषु वा वर्तते। दृढाग्रपादैः दृढखुरैर्वा। चित्रा रोधस्वतीरनु । रोधस्वत्य इति नदीनाम। अनुशब्दोऽपि लक्षणे कर्मप्रवचनीयः प्रतिशब्देन समानार्थः। विचित्रा नदीः प्रति यात गच्छत । ईमिति पदपूरणम् । अखिद्रयामभिरखिन्नगामिभिरश्वैः । सर्वदानुश्रान्तैरश्वैरित्यर्थः । यज्ञेष्वागच्छन्तः क्रीडार्थं विचित्रा नदीरपि प्रतिगच्छतेति समस्तार्थः ॥ ११

स्थिरा वः सन्तु नेमयो रथा अश्वास एषाम् ।
सुसंस्कृता अभीशवः ॥ १२

स्थिरा अविचलाः वः युष्माकं सन्तु नेमयः रथचक्रधाराः । रथा अश्वास एषां रथानां संबन्धिनः । सुसंस्कृताः सुष्ठु च संस्कृता अभीशवोऽश्वप्रग्रहाः । भवतां आगच्छतां सर्वाण्यागमनसाधनानि सुदृढानि भवन्त्वित्यर्थः ॥ १२

अच्छा वदा तना गिरा जरायै ब्रह्मणस्पतिम् ।
अग्निं मित्रं न दर्शतम् ॥ १३

अच्छाशब्द आप्तुमित्यस्यार्थे । वदेत्यन्तरात्मनः प्रैषः । हे अन्तरात्मन् आप्तुं वद। प्रकरणात् मरुतः। केनाप्तुम्। तना। धननामैतत्। हविर्लक्षणेन धनेन। गिरा जरायै। गीरिति वाङ्नाम। जरा स्तुतिः। जरतेः स्तुतिकर्मणः। तृतीयायाश्च स्थाने चतुर्थी । वाचा स्तुतिलक्षणया युष्मानहं हविषा स्तुत्या च आप्तवानित्येतत् मरुतो वदेत्यर्थः। अथवा अच्छा वदेत्यच्छाभेः स्थाने। अभिवद। स्तुहीत्यर्थः। तना हेताविर्यं तृतीया। धनेन हेतुना। धनलाभार्थमित्यर्थः । केन स्तवान उच्यते । गिरा जरायै वाचा स्तुतिलक्षणया। कथमच्छा वद। उच्यते। ब्रह्मणस्पतिं अग्निं मित्रं न। नशब्द उपमार्थीयस्त्रिभिरप्येतैः संबन्धयितव्यः । ब्रह्मणस्पतिमिव चाग्निमिव च मित्रमिव च। कीदृशं मित्रं दर्शतं दर्शनीयम् । अथवा दर्शतमिति मरुतां गुणाभिधानं न मित्रस्य। गणाभिप्रायं चैकवचनम्। अच्छा वदा दर्शनीयं मरुतां गणमिति ॥ १३

मिमीहि श्लोकमास्ये पर्जन्य इव ततनः ।
गाय गायत्रमुक्थ्यम् ॥ १४

मिमीहि । ममीहीत्यात्मन एवायमन्तरात्मनः प्रैषः । निर्मिमीष्व कुरु हे अन्तरात्मन् श्लोकम् । वाङ्नामैतत् । स्तुतिलक्षणं शब्दम् । आस्ये । तृतीयार्थे सप्तम्येषा । आस्येनात्मीयेन वदनेन । पर्जन्य इव । यथा पर्जन्यः शब्दं विस्तारयति तद्वद्विस्तारय । विस्तारितेन च तेन गाय । गायतिरर्चतिकर्मा । स्तुहि । गायत्रं स्तुत्यम् । उक्थ्यं प्रशस्यम् ॥ १४

वन्दस्व मारुतं गणं त्वेषं पनस्युमर्किणम् ।
अस्मे वृद्धा असन्निह ॥ १५

......अथवा पनस्यतिरर्चतिकर्मा । स्तुत्यमित्यर्थः । अर्किणं स्तोतृप्रयुक्तैर्गुणैर्मन्त्रवन्तमन्नवन्तं वा । किं कारणम् । यस्मात् अस्मे अस्माकं स्वभूते वृद्धाः वीर्येण परिवृद्धाः मरुतः असन्नित्यं भवन्ति इह कर्मणि । यस्मादस्मदीये कर्मणि नित्यं मरुतः सन्निहिता भवन्ति तस्माद्वन्दस्व मारुतं गणमिति समस्तार्थः । अथवा वन्दस्व मारुतं गणं इमत्यर्धर्चे एव समाप्तं वाक्यम् । तृतीयस्तु पादः आशीर्भिन्नमेव वाक्यम् । मरुतां प्रसादेनास्माकं परिवृद्धा असद्भवन्तु । काः । सामर्थ्यात् संपदः ॥ १५



प्र यदित्था परावतः शोचिर्न मानमस्यथ ।
कस्य क्रत्वा मरुतः कस्य वर्पसा कं याथ कं ह धूतयः ॥ १

ये यूयम् । इत्था । सत्यनामैतत् । सत्यमेव । परावतः दूरात् । शोचिर्न । शोचिर्दीप्तिरुच्यते । यथा अग्निरादित्यो वा सर्वत्र स्वदीप्तिं प्रास्यति एवं मानं वृष्टिद्वारेण सर्वस्य निर्मातारं मेघं प्रास्यथ प्रकर्षेण क्षिपथ । अथवा मानो गर्व उच्यते । शोचिरित्यपि प्रथमान्तम् । क्षेप्तृवचनं क्षिप्यमानवचनम् । यथा अग्नेरादित्यस्य वा शोचिर्दीप्तिः दूरात्तमांसि प्रास्यति एवं यूयं शत्रूणां मानं गर्वं दूरात् प्रास्यथ क्षिपथ । नाशं गमयथेत्यर्थः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः । ते कस्य क्रत्वा । हेतावियं तृतीया । कस्य यजमानस्य कर्मणा हेतुना । कस्य वा वर्पसा रूपेण । कं वा यजमानं प्रति याथ गच्छथ । कम् । सुखनामैतत् । क्रियाविशेषणं चैतत् द्रष्टव्यम् । सुखम् । अक्लेशेनेत्यर्थः । निपातो वा कंशब्दः पदपूरणः । हे धूतयः कंपयितारः । शत्रूणां यत्कर्म कुर्वन्तं यद्रूपं वा यं वा यजमानं प्रति यूयं अक्लेशेन गच्छथ तं मह्यं कथयत । सुखमहमपि तत्कर्मा तद्रूपः स एव च भवामि । इत्यागमनविलम्बनादुपालंभोऽयम् ॥ १

स्थिरा वः सन्त्वायुधा पराणुदे वीळू उत प्रतिष्कभे ।
युष्माकमस्तु तविषी पनीयसी मा मर्त्यस्य मायिनः ॥ २

स्थिराण्यविचलानि नित्यसन्निहितानि वः सन्त्वायुधानि । किमर्थम् । पराणुदे । नुद प्रेरणे । अस्मच्छत्रूणां प्रेरणाय स्वस्थानादपकालनाय । वीळू चास्तु । विळु दृढमभेद्यमेकचित्तमत्रोच्यते । एकचित्तं चास्त्वित्यर्थः । किं तत् । सामर्थ्यात् सेनालक्षणं बलम् । न च पराणुद एव केवलाय । किं तर्हि । उत प्रतिष्कभे । ष्टभि ष्कभि प्रतिबन्धे । प्रतिबन्धायापि शत्रूणाम् । एतदुक्तं भवति । सर्वस्यैव द्विविधाः शत्रवः । उच्छेद्याः उच्छेदका वा । तत्र येऽस्माकमुच्छेद्याः शत्रवः तेषां स्थानादपकालनाय । ये तूच्छेदकास्तेषां प्रतिबन्धकाय युष्माकमायुधानि नित्यं सन्निहितानि सन्तु । सेनालक्षणं चाभेद्यमस्त्विति । अथवा वीळू इति दीर्घत्वदर्शनादायुधानां च प्रकृतत्वात्तत्समानाधिकरणप्रथमाबहुवचनान्तो विळूशब्द इति व्याख्यातव्यम् । स्थिराणि चायुधानि विळूनि चेति । अस्मच्छत्रूणामपकालनाय प्रतिबन्धाय च नित्यं सन्निहितानि दृढानि च युष्माकमायुधानि भवन्त्वित्यर्थः । अथवा विळूशब्द इत्यूकारस्य प्रगृह्यत्वदर्शनाद्वीळूशब्दो द्विवचनान्तः । स्थिराणि वः आयुधानि सन्त्वस्मच्छत्रूणां पराणोदाय । किञ्च वीळू उत वीळू च स्तः । कौ । द्विवचननिर्देशात् युद्धोपकरणाविषुधी वा रथाश्वौ वा । किमर्थम् । प्रतिष्कभे प्रतिबन्धायापनयनाय । धारणायेत्यर्थः । कस्य । सामर्थ्याद्रिपूणां वा युष्माकं वा रथस्थानाम् । पदकाराभिप्रायश्चैवं सति पर्येष्यम् । किञ्च युष्माकमस्तु तविषी पनीयसी मा । अस्त्वित्येतन्मेत्येतेन संबन्धयितव्यः । तत्सम्बन्धाच्च लुङर्थे लोट् द्रष्टव्यः । तविषीति बलनाम । पनीयसीति पनतेः स्तुत्यर्थस्य तृजन्तस्यातिशयप्रत्यये रूपम् । प्रत्ययेन चात्र तृच् कर्मणि द्रष्टव्यः । युष्माकं स्वभूतं बलमतिशयेन स्तोतव्यं मा अस्तु मा भूत् । कस्य । मर्त्यस्य मायिनः । मायावतं युष्मद्बलमशठस्यैवातिशयेन स्तुताः प्रतिपद्यतां मा शठस्येत्यर्थः ॥ २

परा ह यत्स्थिरं हथ नरो वर्तयथा गुरु ।
वि याथन वनिनः पृथिव्या व्याशाः पर्वतानाम् ॥ ३

परेत्युपसर्गः हथेत्याख्यातेन संबन्धयितव्यः । हशब्दः पदपूरणः । यत् स्थिरमविचलं स्वस्मात्प्रदेशात् चालयितुमशक्यं तद्वर्तयथा गमयथ । प्रलोपयथेत्यर्थः । गुरु गुर्वपि दुष्प्रलोपमपीत्यर्थः । किञ्च वियाथन विगच्छथ । लङ्घयथेत्यर्थः । किम् । वनिनः वृक्षात् । कुतः । पृथिव्याः पृथिवीतः भूमितः । उड्डीय वृक्षानपि लङ्घय-

थेत्यर्थः । न च पृथिवीत एव केवलात् । किं तर्हि । व्याशाः । आशा इति दिङ्नाम । दिशोऽपि गच्छथ। पर्वतानां सम्बन्धिनीः। किं पुनः पर्वतानां दिग्भिः संबन्धः । दिक्षु पर्वता व्यवतिष्ठन्ते । अथवा पर्वतानामिति द्वितीयार्थे षष्ठी । दिशः पर्वतांश्च विगच्छथ इति । ऊर्ध्वं तिर्यक् च लङ्घनसमर्थाः स्थेत्यर्थः। अथवा याथनेति यातिरत्रान्तर्णीतण्यर्थो द्रष्टव्यः । विगमयथ वनिनः पृथिव्या भूमितो वि आशाः पर्वतानाम् । आशाशब्द इच्छावचनः । बर्वत इत्यपि मेघनाम । अस्माभिर्वर्षितव्यं इत्येवंरूपा आशा मेघानामपि गमयथ नाशयथेत्यर्थः॥ ३

नहि वः शत्रुर्विविदे अधि द्यवि न भूम्यां रिशादसः ।
युष्माकमस्तु तविषी तना युजा रुद्रासो नू चिदाधृषे ॥ ४

नहि वः शत्रुः शातयिता विविदे विद्यते । अधि द्यवि दिव उपरि । द्युलोक इत्यर्थः । नापि भूम्यां हे रिशादसः । रिशिर्हिंसार्थः । असु क्षेपणे । रिशतोऽस्यन्तीति रिशादसः । हिंसितॄणां प्रतिहिंसितार इत्यर्थः । तेषां संबोधनं हे रिशादसः। किञ्च । युष्माकमस्तु तविषी तना युजा । तनेति धननाम । युष्मदीयहविर्लक्षणेन धनेन युक्ता अस्मदीयं हविरुपभुङ्क्षामित्यर्थः । हे रुद्रासः । पितृशब्दोऽयं सोऽयमित्यभिसम्बन्धात् पुत्रेषु प्रयुक्तः । रुद्रपुत्रा इत्यर्थः । कुत एतत् ।

रुद्रस्य ये मीळ्हुषस्सन्ति पुत्राः । ऋ. वे. ६. ६६. ३.

इत्यादिषु मरुतां रुद्रपुत्रत्वदर्शनात् । किमर्थम् । नू चिदाधृषे । नु इति क्षिप्रनाम । चिच्छब्दः पदपूरणः। क्षिप्रमस्मच्छत्रूणां धर्षणायाभिभवनाय । अथवा नू चिदाधृष इत्येतत् पूर्वानपेक्षं भिन्नमेव वाक्यम् । नूचिच्छब्दश्चात्र नशब्दस्यार्थे ।

नूचित् स भ्रेषते जनो न रेषत् । ऋ. वे ७. २०. ६.

इति यथा । नाधृषे । नाभिभवनाय । कः । सामर्थ्याद्यूयम् । प्रकृतत्वाद्वा तविष्यः युष्मदीयाः । तवींषि यूयं वा । बलं न कुतश्चिदभिभवं प्राप्नोतीत्यर्थः ॥ ४

प्र वेपयन्ति पर्वतान् वि विञ्चन्ति वनस्पतीन् ।
प्रो आरत मरुतो दुर्मदा इव देवासः सर्वया विशा ॥ ५

प्र वेपयन्ति कंपयन्ति पर्वतान् मरुतः । विविञ्चन्ति । विचिरत्र पृथक्भावे । पृथक् कुर्वन्ति । उत्खनन्तीत्यर्थः । कान् । वनस्पतीन् । प्रत्यक्षकृतः परोऽर्धर्चो भिन्नं वाक्यं पूर्वस्मादर्धर्चात् । प्रो आरत । अर्तिर्गत्यर्थः । प्रागच्छत हे मरुतः। कथम् । दुर्मदा इव। यथा दुर्मत्ताः सन्तः प्रकर्षेण हुंकारयन्तः आगच्छन्ति तद्वत् ।

हे देवासः हे देवाः । मा च केवला एव । किंतर्हि । सर्वया विशा । विश इति मनुष्यनाम । सर्वया स्वपरिचारकमनुष्यजात्या सह । सर्वैः परिचारकैः सहेत्यर्थः ॥ ५

उपो रथेषु पृषतीरयुग्ध्वं प्रष्टिर्वहति रोहितः ।
आ वो यामाय पृथिवी चिदश्रोदबीभयन्त मानुषाः ॥ ६

उपो रथेषु । उपो इत्येष निरित्येतस्य स्थाने आख्यातेन संबन्धयितव्यः । स्वरथेषु पृषती पृषद्वर्णा बडबा उपो अयुग्ध्वमिति । अस्मद्यज्ञागमनार्थं नियुग्ध्वम् । न च केवलाः । किं तर्हि । प्रष्टिर्वहति रोहितः । चतुर्गवस्य रथस्यैकस्यामेव धुरि यः पार्श्वे द्वितीयो नियुज्यते सः प्रष्टिरित्युच्यते । एकवाक्यताप्रसिध्यर्थं यत्तच्छब्दावध्याहार्यौ । यः प्रष्टिर्वहति रोहितः लोहितवर्णः तंच । किं पुनः कारणं यत्तेनोह्यामहे । उच्यते । यस्मात् आ वो यामाय । व इति षष्ठी । यामायेति यामशब्दो रथवचनः ।

विभुर्वो यामः । ऋ. वे. १. ३४. १

इति यथा । षष्ठ्यर्थे चतुर्थी । तच्छब्दश्रुतेश्च शब्दमिति वाक्यशेषः । युष्माकं स्वभूतस्य गच्छतो रथस्य शब्दं पृथिवी । चिच्छब्दः पदपूरणः । समस्ता पृथिवी आ अश्रोत् मर्यादया शृणोति । अतस्तं वयमपि शुश्रुमह इत्यर्थः । अबीभयन्त बिभ्यन्ते युष्मत्तः यागमकुर्वन्तः अस्मद्विधाः मानुषाः । आ वो यामायेति व इति प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता. (पा. १. ३. ५९ ) इत्येवं संप्रदानत्वात् संप्रदाने चतुर्थी । यान्त्यस्मिन् देवा इति यामो यज्ञः । द्वितीयोऽथऽत्र चतुर्थी । युष्मभ्यं यज्ञं समस्ता पृथिवी आ अश्रोत् आशृणोति प्रतिजानीते । युष्मान् यक्ष्यामीत्येतत्र कश्चिन्नाभ्युपगच्छतीत्यर्थः। अतश्चान्यान्यत्र व्यापृता मरुतः कदाचिदस्मद्यज्ञं नागच्छेयुरपीत्येवमाशंकिता युष्मदागमनादबीभयन्त बिभ्यन्त्यस्मद्विधा मानुषाः । यस्मादन्यव्यापृतानां युष्माकं स्वयज्ञेऽनागमनात् बिभेमि तस्माद्यत्नेन ब्रवीमि । न्ययुग्ध्वं पृषतीर्बडबाः प्रष्टिं च रोहितमिति समस्ताः स्युः मन्त्रार्थाः ॥ ६

आ वो मक्षू तनाय कं रुद्रा अवो वृणीमहे ।
गन्ता नूनं नोऽवसा यथा पुरेत्था कण्वाय बिभ्युषे ॥ ७

वो युष्माकं स्वभूतं मक्षु क्षिप्रं प्रार्थयामहे इत्यर्थः । तनाय । तनोत्यसाविति तनः पुत्रादिसन्तानः । तदर्थम् । अथवा तनेति धननाम । धनार्थम् । कं सुखं हेरुद्राः रुद्रपुत्राः मरुतः अवः पालनं आवृणीमहे प्रार्थयामहे । युष्माभिः पाल्यमानाः

पुत्रादिसन्तानं धनं वा प्राप्स्याम इत्येवमर्थं युष्मदीयं पालनं क्षिप्रं प्रार्थयामहे इत्यर्थः। अत एतत् ज्ञात्वा गन्त गच्छत । नूनमिति पदपूरणः। नः। गत्यर्थकर्मणि द्वितीया (पा. २. ३. १२.) इत्येवमेषा कर्मणि चतुर्थी। एकवचनस्य स्थाने बहुवचनम्। मह्यम्। अवसा। इत्थंभूतलक्षणे (पा. २. ३. २१.) इत्येवमेषा तृतीया । पालनेन संबद्धः। यथा पूर्वेषु कालेषु इत्थं अमुतोऽन्तरिक्षात् कण्वाय बिभ्युषे आशंकितं युष्मदनागमनभीतम्। यथैव पुरा तद्वदिदानीमपि पालहस्ता मां कण्वमाशङ्कितं युष्मदागमनभीतं प्रत्यमुतोऽन्तरिक्षादागच्छथेत्यर्थः॥ ७

युष्मेषितो मरुतो मर्त्येषित आ यो नो अभ्व ईषते ।
वि तं युयोत शवसा व्योजसा वि युष्माकाभि रूतिभिः ॥ ८

हे मरुतो युष्मत्प्रेषितो मर्त्यप्रेषितो वा आ यो नो अभ्वः। महन्नामैतत्। महान् आ ईषते । ईषति फणतीति गतिकर्मसु पाठात् गत्यर्थोऽयम्। आगच्छति। कः। सामर्थ्याद्धिंसता वितं युयोत। यौतिः पृथग्भावार्थः। पृथक् कुरुत । तं अस्मत्तोऽपनयतेत्यर्थः। केन । शवसा सेनालक्षणेन वि तं युयोत। वि युष्माकाभिरूतिभिः यौष्माकीणैः पालनैश्च वियुयोत । किञ्चित्सेनालक्षणेन बलेन किञ्चित्स्वशरीरबलेन किञ्चित् पालनमात्रेणैवेत्यर्थः॥ ८

असामि हि प्रयज्यवः कण्वं दद प्रचेतसः ।
असामिभिर्मरुत आ न ऊतिभिर्गन्ता वृष्टिं न विद्युतः ॥ ९

साम्यर्धम्। न सामि असामि समग्रम्। किं तत्। सामर्थ्यात् धनम्। प्रयज्यवः प्रकर्षेण यष्टव्याः मरुतः। कण्वम्। चतुर्थ्यर्थे द्वितीयैषा । मह्यं कण्वाय इदं दत्तं हे प्रचेतसः प्रवृद्धज्ञानाः। किञ्च । असामिभिः समग्राभिर्हे मरुतः नः अस्मान् ऊतिभिः पालनैः संबद्धा आगन्त आगच्छत। समग्रपालनहस्ता अस्मान् प्रत्यागच्छतेत्यर्थः। कथम् । वृष्टिं न विद्युतः । यथा वृष्टिं मरुतो व्याप्नुवन्तो विद्युतः आगच्छन्ति तद्वत्॥ ९

असाम्योजो बिभृथा सुदानवोऽसामि धूतयः शवः ।
ऋषिद्विषे मरुतः परिमन्यव इषुं न सृजत द्विषम् ॥ १०

असाम्योजः शारीरं बलं धारयथ हे सुदानवः । दानुशब्दो दातृवचनो दानवचनो वा । शोभनदातारः शोभनदाना वा । न च केवलं शारीरमेव बलम्। किं

तर्हि । अस्माभि हे धूतयः कंपयितारः शत्रूणां शवः सेनालक्षणमपि बलम् । द्विविधेनापि बलेन उपेताः स्थेत्यर्थः । यत एवमतो ब्रवीमि । ऋषिद्विषे मत्प्रभृतीनामृषीणां द्वेष्ट्रे हे मरुतः परिमन्यवे । मन्युरिति क्रोधनाम । परिगतो मन्युर्येन स परिमन्युः । तस्मै परिमन्यवे । क्रुद्धायेत्यर्थः । अथवा मन्युर्मन्यतेर्दीप्तिकर्मणः दीप्तिरत्रोच्यते । परिगतदीप्तये । स्वदीप्त्या ऐश्वर्यादिकया दीप्तयापीत्यर्थः । इषुं न । यथा कश्चित् कस्मैचिदिषुं क्रुद्धः सृजेत् तद्वत् सृजत विसृजत क्षिपत । द्विषं सर्वलोकद्वेष्टारं तमृषीणां द्वेष्टारं नित्यक्रुद्धम् । ऐश्वर्यादिदीप्त्या वा दीप्तमपि सर्वलोकद्वेष्यं कुरुतेत्यर्थः ॥ १०

---

उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे ।

उप प्र यन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचा ॥ १

सूक्तमुत् ब्राह्मणस्पत्यम् ।

सूक्तमुत्तिष्ठेत्येतत् ब्रह्मणस्पतिदेवताकम् । यास्त्वत्रान्या मरुदाद्या देवताः श्रूयन्ते ब्रह्मणस्पतिना सह यौगिकत्वमात्रविज्ञानेन नैघण्टुक्यस्ता बोद्धव्याः । अस्मद्यज्ञमागन्तुमुत्तिष्ठ हेब्रह्मणस्पते । देवयन्तो देवानिच्छन्तो वयं त्वामीमहे स्वयज्ञागमनं याचामहे । स्वयज्ञागमनमभ्यर्थयामह इत्यर्थः । त्वया च सह उपप्रयन्तु मरुतोऽपि सुदानवः शोभनदातारः शोभनदाना वा । त्वमपि हे इन्द्र प्राशूः प्रकर्षेण क्षिप्रो भव । सचा सह ब्रह्मणस्पतिना ॥ १

त्वामिद्धि सहसस्पुत्र मर्त्य उपब्रूते धने हिते ।

सुवीर्यं मरुत आ स्वश्व्यं दधीत यो व आचके ॥ २

त्वामपीन्द्र मर्त्य उप ब्रूते । आत्मानमेव कण्वः परोक्षरूपेण प्रतिनिर्दिशति । अयं कण्वनामा मनुष्य उपगम्य ब्रूते । अस्मदीयं यज्ञं ब्रह्मणस्पतिना सहागच्छेत्येतदभ्यर्थयते इत्यर्थः । धने हविराख्ये हिते । निहिते वेद्यां हविर्निधायेत्यर्थः । अथवा धने हिते इति निमित्त एषा सप्तमी । प्रयोजनस्य च निमित्तत्वेन विवक्षा । धने हिते निमित्तभूते । हितं धनं लब्धुमित्यर्थः । एतत् ज्ञात्वा यज्ञमागत्य सुवीर्यं मरुत आ स्वश्व्यम् । मरुत इति साहचर्यादनुक्रान्ताः ब्रह्मणस्पतिः मरुतः इन्द्रः सहसस्पुत्रः इत्येते चत्वारोऽपि प्रतिनिर्दिश्यन्ते । आकारः समुच्चये स्वश्व्यमित्यस्माच्च परो द्रष्टव्यः । हे मरुत्प्रभृतयः सुवीर्यं स्वश्व्यं च शोभनेन वीर्येणाश्वैश्चोपेतं दधीत । दधातिः दानार्थः ।

लोट् मध्यमपुरुषे बहुवचनं चैतत् द्रष्टव्यम्। दत्त। कस्मै। यो वः आचके कामयते। योऽस्मदादिर्युष्मान् प्रार्थयत इत्यर्थः। अथवा दधीतेति दधातिः धारण एव। लिङ्श्चैतदेकवचनम्। सुवीर्यं स्वश्व्यं च धनं दधीत धारयेत यो व आचक इति। न चादत्तस्य धारणं संभवतीत्यर्थः। दानमेवानेन प्रार्थ्यते ॥ २

प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता।
अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः ॥ ३

प्रैतु प्रकर्षेणागच्छतु ब्रह्मणस्पतिः। तेन च सह प्रदेव्येतु सूनृता वाक्। किमर्थम्। अच्छा आप्तुं वीरम्। ऋत्विक्कर्तृत्वात् वीरपुत्रफलत्वाद्वा वीरोऽत्र यज्ञ उच्यते। वीरकर्तृकं वीरपुत्रफलार्थं वा अस्मद्यज्ञम्। नर्यं नृभ्यो हितम्। पङ्क्तिराधसम्। राध साध संसिद्धौ। पङ्क्तिभिः संसाध्यत इति पङ्क्तिराधाः सोमयागः। स हि चतसृभिः पङ्क्तिभिः संसाध्यते। हविष्पङ्क्त्याक्षरपङ्क्त्या नराशंसपङ्क्त्या सवनपङ्क्त्या च। धानाः करम्भः परिवापः पुरोडाशः पयस्येत्येषा हविष्पङ्क्तिः। सुमत्पद्वग्द इत्येषाक्षरपङ्क्तिः। द्विनाराशंसं प्रातस्सवनं द्विनाराशंसं माध्यन्दिनं सवनं सकृन्नाराशंसं तृतीयसवनं इत्येषा नराशंसपङ्क्तिः। पशुरुपवसथे त्रीणि सवनानि पशुरनूबन्ध्य इत्येषा सवनपङ्क्तिः। एताश्च यो वै यज्ञं हविष्पङ्क्तिं वेद(ऐ. ब्रा. २. २४. १) इत्युपक्रम्य ऐतरेयब्राह्मणे दर्शिताः। एताभिः साध्यमानत्वात् सोमयागः पङ्क्तिराधाः। तं पङ्क्तिराधसं ब्रह्मणस्पतिप्रसादात्। देवा अन्येऽपि देवा आत्मसमीपं यज्ञं नयन्तु नः। अस्माकं स्वभूतं अन्येऽपि यज्ञमाप्नुवन्तीत्यर्थः ॥ ३

यो वाघते ददाति सूनरं वसु स धत्ते अक्षिति श्रवः।
तस्मा इळां सुवीरामा यजामहे सुप्रतूर्तिमनेहसम् ॥ ४

यो वाघते। वाघत इत्यृत्विङ्नाम। सामर्थ्याच्चेहान्तर्णीतमत्वर्थः। यजमानेन वर्तते। यो देवः वाघते ऋत्विग्वते यजमानाय ददाति सूनरं शोभनैर्नरैरुपेतं वसु स धत्ते धारयति अक्षिति अक्षीणं श्रवः कीर्तिम्। कीर्तिमान भवतीत्यर्थः। वयमपि तस्मै एव इळां हविर्लक्षणमन्नं सुवीराम्। शोभनाः वीराः कर्तारो यस्यास्तां सुवीराम्। शोभनैर्ऋत्विग्भिरुपकल्पितामित्यर्थः। आयजामहे सुप्रतूर्तिम्। तुर्वतिः हिंसार्थः। सुष्ठु प्रतुर्वन्ते शत्रवो यया तां सुप्रतूर्तिम्। देवा हि हविरुपभोगाद्वीर्यमाप्नुवन्ति। तेन च वीर्येण शत्रून् घ्नन्ति। अत एवमुच्यते सुप्रतूर्तिमिति। अनेहसः अपापाः। एतत् ज्ञात्वा ब्रह्मणस्पते वीरार्थं हविरर्थं च धनमस्मभ्यं देहीत्यर्थः ॥ ४

प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम् ।

यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरे ॥ ५

प्र नूनं ब्रह्मणस्पतिः । नूनमिति पदपूरणः । ब्रह्मणस्पतिः स्तुतिलक्षणं मन्त्रं प्रवदति । वदतिरत्र सामर्थ्यादन्तर्णीतण्यर्थः। प्रवादयति। सर्वस्तोतृभिरुच्चारयतीत्यर्थः। उक्थ्यं प्रशस्यम् । कीदृशो मन्त्रः । उच्यते । यस्मिन् मन्त्रे इन्द्रो वरुणो मित्रो अर्यमा अन्ये च मरुत्प्रभृतयः देवताः नैघण्टुक्या वृत्या ओकांसि स्थानानि चक्रिरे । यमिन्द्रादयोऽपि नैघण्टुकवृत्या स्थिता इत्यर्थः ॥ ५

यमीदृशं ब्रह्मणस्पतिरान्यैः स्तोतृभिः प्रवादयति ॥

तमिद्वोचेमा विदथेषु शंभुवं मन्त्रं देवा अनेहसम् ।

इमां च वाचं प्रतिहर्यथा नरो विश्वेद्वामा वो अश्नवत् ॥ ६

वयमपि तमिद्वोचेम । उच्छब्द एवार्थे । तमेव वोचेम उच्चारयामेत्याशास्महे । विदथेषु यज्ञेष्वात्मीयेषु । शंभुवं सुखस्यभावयितारम् । स्तुतिलक्षणमन्त्रं हे ब्रह्मणस्पतिसहचारिणो मरुत्प्रभृतयो देवाः अनेहसं अपापम् । इमां च स्तुतिलक्षणां वाचं प्रतिहर्यथ । हर्यतिः कान्तिकर्मा । ब्रह्मणस्पतिना सह कामयध्वं हे नरो मनुष्याकाराः । किञ्च विश्वेद्वामा वः । इच्छब्दः पदपूरणः । सर्वाणि वननीयानि धनानि वः युष्माकं स्वभूतेन प्रसादेन वा अश्नवत् । व्यत्ययेनायमुत्तमस्य स्थाने प्रथमपुरुषः । अश्नुयाम प्राप्नुयाम ॥ ६

को देवयन्तमश्नवज्जनं को वृक्तबर्हिषम् ।

प्रप्र दाश्वान्पस्त्याभिरस्थितान्तर्वावत्क्षयं दधे ७

को देवयन्तम् । क इति सामर्थ्याच्छत्रोर्निर्देशः । कः शत्रुर्देवयन्तं ब्रह्मणस्पतिप्रभृतीन् देवान् यष्टुमिच्छन्तं अश्नवत् प्राप्नोति । जनं मनुष्यम् । न कश्चिदपि व्याप्नोतुं शक्नोतीत्यर्थः । को वृक्तबर्हिषं आस्तीर्णबर्हिष्कम् । प्रवृत्तयागमेवेत्यर्थः । प्रप्र दाश्वान् पस्त्याभिरस्थित । प्रेति प्रसमुपोदः पादपूरणे (पा. ८. १. ६.) इत्येवं द्विवचनम् । अस्थितेत्येतेन चाख्यातेन सम्बध्यते अयमुपसर्गः । एकवाक्यताप्रसिध्यर्थः यत्तच्छब्दावध्याहार्यौ । यो दाश्वान्यजमानः पस्त्याभिः । पस्त्यमिति गृहनाम । अत्र आहुतयः पस्त्या उच्यन्ते । इत्थंभूतलक्षणयैषा तृतीया । आहुतीभिः संबध्दाः । गृहीताहुत्यं इत्यर्थः । प्रास्थित प्रतिष्ठते । होमार्थमाहवनीयं प्रति गच्छन्तीत्यर्थः । सः अन्तर्वा-

वत् । वातेर्गत्यर्थस्य यङ्लुगन्तस्य शतृप्रत्यये रूपमेतत् । अन्तरत्यर्थे गतं लीनं प्रकाशं क्षयं दधे धारयति । सर्वलोकप्रकाशं महान्तम् । परिक्षयं न प्राप्नोतीत्यर्थः ॥ ७

उप॑ क्ष॒त्रं पृ॑ञ्ची॒त ह॒न्ति राज॑भि॒र्भ॒ये चि॑त्सुक्षि॒तिं द॑धे ।
नास्य॑ व॒र्ता न त॑रु॒ता म॑हाध॒ने नार्भे॑ अस्ति व॒ज्रिणः॑ ॥ ८

उप क्षत्रम् । क्षत्रमिति धननाम । धनमुपपृञ्चीत आत्मना सम्पर्कं नयत । धनं च लभत इत्यर्थः । हन्ति शत्रून् राजभिर्दीप्तैः ब्रह्मणस्पतिप्रभृतिभिः । तृतीयानिर्देशादनुगृहीता इति शेषः । अथवा हन्तीति हनिरन्तर्णीतण्यर्थः । घातयति शत्रून् दीप्तैब्रह्मणस्पतिप्रभृतिभिः । भयेचित् भयेऽपि सुक्षितिं शोभनं प्रच्युतिरूपं निवासं दधे धारयति । भयकालेऽपि स्वस्थानान्न प्रच्यवत इत्यर्थः । किञ्च । नास्य वर्ता वर्तयिता नापितरुता हिंसयिता महाधने । संग्रामनामैतत् । महति संग्रामे । नाप्यल्पे अस्ति भवति कश्चिद्वज्रिणः आयुधवतः सतः । नैनं कश्चित् स्वस्मात् स्थानादपकालयति । नाप्यल्पे महति वा संग्रामे गृहीतायुधं हिनस्तीत्यर्थः ॥ ८

---

यं रक्ष॑न्ति॒ प्रचे॑तसो॒ वरु॑णो मि॒त्रो अ॑र्य॒मा ।
नू चि॒त्स द॑भ्यते॒ जनः॑ ॥ १

यं रक्षन्ति त्रयस्तृचाः ।
वरुणार्यमभित्राणाम् ।

यं रक्षन्तीत्येते त्रयस्तृचा वरुणार्यमभित्राणां वेदितव्याः वरुणादिदेवता इत्यर्थः ।

मध्य आदित्यदेवतः

एतेषां यो मध्यमस्तृचः द्वितीयः सः आदित्यदेवतः वरुणादिदेवतः । यं रक्षन्ति प्रचेतसः प्रवृद्धज्ञाना वरुणो मित्रो अर्यमा नूचित् स दभ्यते जनः । नूचिदित्ययं सामर्थ्यादत्र नशब्दस्यार्थे । दभ्नातिर्वधकर्मा । न स हन्यते केनचित् जनो मनुष्यः॥ १

यं बा॒हुते॑व॒ पिप्र॑ति॒ पान्ति॒ मर्त्यं॑ रि॒षः ।
अरि॑ष्टः॒ सर्व॑ एधते ॥ २

यं बाहुतेव । बाहुतेति तृतीयाद्विवचनस्यायं छान्दसस्तादेशः । यं बाहुभ्यामिव पिप्रति । पृ पालनपूरणयोः । वरुणादयः पूरयन्ति । यथा कश्चित् बाहुभ्यां पूरयेत् एवं त्वमन्नेन च धनेन च पूरयसीत्यर्थः। पान्ति रक्षन्ति च मर्त्यं रिषो हिंसितुः सकाः

शात् । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । सः अरिष्टः शत्रुभिराहिंसितः सर्वं एधते वर्धते सर्ववृद्धिभिः ॥ २

वि दुर्गा वि द्विषः पुरो घ्नन्ति राजान एषाम् ।
नयन्ति दुरिता तिरः ॥ ३

वि दुर्गा । वीत्ययं विविधमित्यर्थे । विविधं दुर्गा घ्नन्ति । वि द्विषः विविधं घ्नन्ति द्वेष्टॄन् । पुरः नगराणि च विविधं घ्नन्ति । राजानः दीप्ताः वरुणादयः एषां द्विषाम् । अयमन्वादेशः । पुरां चैतद्विशेषणम् । एषां द्विषां स्वभूताः पुर इति । नयन्ति । शुध्दोऽप्ययं नयतिः सोपसर्गार्थे द्रष्टव्यः । अपनयन्ति । दुरिता पपानि स्तोतॄणां तिरः तिरः सत इति प्राप्तस्य नामनी । प्राप्तान्युत्पन्नानि सन्तीत्यर्थः ॥ ३

सुगः पन्था अनृक्षर आदित्यास ऋतं यते ।
नात्रावखादो अस्ति वः ॥ ४

सुगः पन्थाः । सुखं गम्यते येन स सुगः पन्थाः । अनृक्षरः । ऋक्षराः कण्टकास्तद्वर्जितः । हे आदित्यासः ऋतं यते । षष्ठ्यर्थे एषा चतुर्थी । यज्ञं गच्छतः । एतत् ज्ञात्वागच्छतेत्यर्थः । नात्रावखादोऽस्ति वः । अत्रेति यज्ञं प्रतिर्दिश्यते न पन्थाः । अन्वादेशे सत्यनुदात्तत्वप्रसंगात् । अवखाद इति खादिः सामर्थ्याद्धिंसार्थः । न चात्रास्यज्ञे कश्चिद्धिंसिता तिष्ठति युष्माकमागतानां सतामित्यर्थः । अथवात्रेति प्रकृतत्वात् पन्थाः प्रतिनिर्दिश्यते । ततोऽवखादो गर्त उच्यते । गर्तोऽप्यत्र पथि नास्ति युष्माकं यत्रागच्छन्तो यूयं प्रस्खलिष्यथ । एतत् ज्ञात्वागच्छतेत्यर्थः ॥ ४

यं यज्ञं नयथा नर आदित्या ऋजुना पथा ।
प्र वः स धीतये नशत् ॥ ५

यं यज्ञं नयथ आत्मसमीपं प्रापयथ । प्राप्त्यर्थो वा सामर्थ्यान्नयतिः । प्राप्नुथ । हे नरो मनुष्याकाराः आदित्या ऋजुना पथा शीघ्रमत्यर्थम् । प्र वः स धीतये नशत् । नशदिति व्याप्तिकर्मा । प्रकर्षेण युष्मान् स व्याप्नोति धीतये यजमानस्य प्रज्ञायै । युष्मत्प्रसादेन प्रज्ञाविवृध्यर्थमित्यर्थः ॥ ५

स रत्नं मर्त्यो वसु विश्वं तोकमुत त्मना ।
अच्छा गच्छत्यस्तृतः ॥ ६

स रत्नम् । तच्छब्दश्रुतेश्च योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । यो युष्मांस्तौति यजते च स रत्नं रमणीयं मर्त्यो वसु धनं विश्वं बहु च तोकं उतापत्यं च त्मना आत्मनैव अच्छा गच्छति । अच्छाभेरर्थे । अभिगच्छति प्राप्नोति । अस्तृतः अहिंसितः शत्रुभिः ॥ ६

कथा राधाम सखायः स्तोमं मित्रस्यार्यम्णः ।
महि प्सरो वरुणस्य ॥ ७

कथा केन प्रकारेण राधामः । राध साध संसिद्धौ । सामर्थ्याच्चात्रान्तर्णीतण्यर्थः । संसाधयेमहे । सखायः ऋत्विजः मत्पुत्रादयो वा । स्तोमं मित्रस्यार्यम्णः । वरुणस्य च । कीदृशम् । महि महान्तं प्सरः । रूपनामैतत् । सामर्थ्याच्चात्रार्णीतमत्वर्थम् । रूपवन्तम् । अत्यन्तशोभनमित्यर्थः ॥ ७

मा वो घ्नन्तं मा शपन्तं प्रति वोचे देवयन्तम् ।
सुम्नैरिद्व आ विवासे ॥ ८

मा वो युष्माकं स्वभूतं घ्नन्तमपि । मा शपन्तम् । शप आक्रोशे । आक्रोशन्तम् । प्रतिवोचे । प्रतिवोचामीत्याशासे । देवयन्तं देवानिच्छन्तम् । यष्टारमित्यर्थः । एतदुक्तं भवति । एवमहमत्यन्तं युष्मद्भक्तः येन युष्माकं स्वभूतं यष्टारमपि घ्नन्तमप्याक्रोशन्तमपि प्रतिपत्याशासे परिचरामि वा । किंच......॥ ८

चतुरश्चिद्ददमानाद्बिभीयादा निधातोः ।
न दुरुक्ताय स्पृहयेत् ॥ ९

चतुरश्चित् । चतुर इति संख्यापदं सामर्थ्यादक्षविषयं द्रष्टव्यम् । चिच्छब्द उपमायाम् । ददमानादिति ददातिर्धारयतिकर्मा आ निधातोरित्येते दस्यूपमानेन संबध्येते नोपमेयेन । यथा चतुरोऽक्षा ददमानात् धारयतः कितवादा नि धातोः आनिधानात्तेषामक्षाणां प्रतिकितवो बिभेति तदयं पातयिष्यति येन मां जेष्यतीति एवं युष्माकं वरुणादीनां प्रसादेन मादृशः सर्वः स्तोता बिभीयादित्याशासे । कुतो बिभीयात् । दुरुक्तात् । कुत एतत् । उत्तरस्मिन् पादे दुरुक्तस्पृहाप्रतिषेधात् । न दुरुक्ताय स्पृहयेत् । न शब्दोऽत्र माशब्दस्यार्थे । दुरुक्तमप्रियम् । स्पृहा अभिलाषः । माप्रियमभिलाषीत् । मा कश्चिदप्यप्रियं वोचादित्यर्थः ॥ ९

सं पूषन्नध्वनस्तिर व्यंहो विमुचो नपात् ।
सक्ष्वा देव प्र णस्पुरः ॥ १

पौष्णमेतत् सूक्तम् । महान्तमध्वानमेष्यतः प्रतिभयं वाजपेयस्य विनियोगः । हे पूषन् अध्वनो मार्गात् सन्तिर । तिरतिरत्रान्तर्णीतण्यर्थो द्रष्टव्यः । संतारयास्मान् । व्यंहः । वीत्युपसर्गश्रुतेस्तिरादित्याख्यातमनुषक्तव्यम् । वितर अंहः पापं च विनाशय । पापं चापगमयेत्यर्थः । हे विमुचो नपात् । संहारकाले सर्वमिदं ग्रसितुरपत्य । किञ्च सक्ष्वा देव प्र । सक्ष्वेति सक्षतेः सचतेर्वा गतिकर्मणो रूपम् । प्रसक्ष्व प्रगच्छ । हे देव नः अस्माकं पुरोऽग्रतः । महति प्रतिभयेऽस्मिन् पथि अग्रतोगाम्यस्माकं भवेत्यर्थः ॥ १

यो नः पूषन्नघो वृको दुःशेव आदिदेशति ।
अप स्म तं पथो जहि ॥ २

यो नः पूषन् योऽस्मान् हे पूषन् अघः पापः वृकः । वृक वृक आदाने इत्यस्य । स्तैननामैतत् । परस्वादानपरश्चोरः । दुःशेवः कुत्सितसुखः । अन्यायोपात्तेन हि धनेन यत् सुखं धन्यते कुत्सितं तत् । आदिदेशति । सहायभूतेभ्यश्चोरेभ्यः गच्छतः कथयतीत्यर्थः । अप स्म तं पथो जहि । हन्तिरत्र गत्यर्थः सामर्थ्याच्चात्रान्तर्णीतण्यर्थः । अपजहि अपगमयतं पथो मार्गात् । स्मेति पदपूरणः ॥ २

अप त्यं परिपन्थिनं मुषीवाणं हुरश्चितम् ।
दूरमधि स्रुतेरज ॥ ३

अप त्यं परिपन्थिनम् । अपेत्युपसर्गः अन्तेन अजेत्येतेन संबन्धयितव्यः । यः पूर्वस्यामृचि उक्तस्तं परिपन्थिनं गमनप्रतिबन्धकरं मुषीवाणम् । नैतत् स्तेननाम हुरश्चितमित्येतेन पौनरुक्त्यप्रसंगात् । किं तर्हि । क्रियाशब्दोऽयम् । मोषितारं हुरश्चितम् । स्तेननामैतत् । चोरम् । दूरमधि स्रुतेः । अधिशब्दः अधिपरी अनर्थकौ (पा. १. ४. ९३.) इति कर्मप्रवचनीयः पदपूरणम् । स्रूयते गम्यतेऽनयेति स्रुतिः पन्थाः । दूरमस्मात् पथः अपाज । अजतिर्गत्यर्थः सामर्थ्याच्चान्तर्णीतण्यर्थः । अपाज अपगमय ॥ ३

त्वं तस्य द्वयाविनोऽघशंसस्य कस्य चित् ।
पदाभि तिष्ठ तपुषिम् ॥ ४

त्वं तस्य द्वयाविनः। द्वयं यस्यास्ति। इह च राजभयमपरत्रचापुण्यम्। तद्वान् द्वयावीतस्य। द्वयाविनः। अघशंसस्य। स्तेननामैतत्। चोरस्य कस्यापि स्वभूतस्य। अथवा कमिति सुखनाम। सुखस्यापि। त्वां परिचरतोऽपीत्यर्थः। पदा पदेन अभितिष्ठ आक्रामत तपुषिं तापयित्रीम्। काम्। सामर्थ्यादिषुशक्तिं वा। क्रोधनाम वा तपुषिशब्दः। अस्मद्विषयं क्रोधम्॥ ४

आ तत्ते दस्र मन्तुमः पूषन्नवो वृणीमहे।

येन पितृनचोदयः॥ ५

आ तत्ते दस्र मन्तुमः। तत्तव स्वभूतं हे दस्र तमसां चोराणां वोपक्षयितः दर्शनीय वा मन्तुमः। मन्तुर्मननं तद्वन्। पूषन् तव अवः पालनमावृणीमहे प्रार्थयामहे। येनास्मदीयान् पितृनपि अचोदयः प्रेरितवान्। महत्सु प्रतिभयेषु वा अध्वनि वा प्रेरितवानसीत्यर्थः॥ ५

अधा नो विश्वसौभग हिरण्यवाशीमत्तम।

धनानि सुषणा कृधि॥ ६

अधानो विश्वसौभग। अधशब्दः पदपूरणः। अपिचेत्यस्य वाऽर्थे। अपिच नः अस्माकं हे विश्वसौभग। बहु शोभनं धनं यस्य स विश्वसौभगः। तस्य संबोधनं हे विश्वसौभग। हिरण्यवाशीमत्तम। वाशीति वाङ्नाम। हिरण्यसदृशी प्रीतिकरी हितरमणा वातिशयेन यस्य वाक् स हिरण्यवाशीमत्तमः। तस्य संबोधनं हे हिरण्यवाशीमत्तम। धनानि सुषणा सुलभानि कृधि कुरु। यानि धनानि लब्धुं वयं प्रस्थितास्तानि सुलभानि कुर्वित्यर्थः॥ ६

अति नः सश्चतो नय सुगा नः सुपथा कृणु।

पूषन्निह क्रतुं विदः॥ ७

अति नः सश्चतो नय। अस्मान् सश्चतः गच्छतः अतिनय प्रापय अभिप्रेतं देशम्। न च येन केनाचित्पथा। किं तर्हि। सुगा सुगमने। नः अस्मान् सुपथा शोभनेन पथा कृणु। करोतिः क्रियासामान्यवचनं सामर्थ्यादिह नयने वर्तते। नय। हे पूषन् इह पथि क्रतुमात्मीयं कर्म रक्षाख्यं विदः जानीहि। ज्ञानेन चात्र करणं प्रतिपाद्यते। कुर्वित्यर्थः। तव ह्येतत् कर्म यत् पथि रक्षणम्॥ ७

अभि सूयवसं नय न नवज्वारो अध्वने ।
पूषन्निह क्रतुं विदः ॥ ८

अभि सूयवसं नय शोभनमन्नमभिनय प्रापयास्मान् । प्रतिदेह्यमभ्यमित्यर्थः । यस्मान्न नवज्वारो अध्वने । ज्वरसदृशत्वात् ज्वारोऽत्र बुभुक्षोच्यते । सा नवा यस्य स नवज्वारः अत्यन्तबुभुक्षिता । स न अध्वने न समर्थोऽध्वने । यस्मात् बुभुक्षितो नाध्वानं गन्तुं शक्नोतीत्यर्थः । अथवा नवं नवं ज्वरयति पुनः पुनः सन्तापयतीति नवज्वारोऽग्निरादित्यो वा उच्यते । नशब्दश्च पुरस्तादुपचारोऽप्यत्र सामर्थ्यादुपमार्थीयो द्रष्टव्यः । नवज्वारो न अग्निरादित्योवा इव । यथाग्निरादित्यो वा प्रापयति तद्वदित्यर्थः । किमर्थम् । अध्वने मार्गार्थम् । पथ्यदनार्थमित्यर्थः । किञ्च पूषन्निह क्रतुं विदः । अथवैवमन्यथा अस्या ऋचोऽर्थयोजना । शोभना यवसा यस्मिन् स सूयवसः । तं सूयवसं सन्तं देशं प्रापयास्मान् । नवज्वार इव । किञ्चाध्वने पूषन्निह । अध्वन इति सप्तम्यर्थे चतुर्थी इहेत्यनेन समानाधिकरणः । इहाध्वनि हे पूषन् क्रतुं रक्षणाख्यमात्मकर्म विदः ॥ ८

शग्धि पूर्धि प्र यंसि च शिशीहि प्रास्युदरम् ।
पूषन्निह क्रतुं विदः ॥ ९

शग्धि पूर्धि । शग्धीति याच्ञाकर्मा । याच्ञया चात्र दानं लक्ष्यते । देहि । पूर्धि पूरय । बहु देहीत्यर्थः । मा च निकृष्टम् । किं तर्हि । प्र यंसि च । यच्छतिर्दानार्थः । लोडर्थेचात्र लट् । प्रयच्छ च । प्रकृष्टं च देहीत्यर्थः । दत्वा च शिशीहि । श्यतिः संस्कारार्थः । संस्कुरु । सर्वार्थयोग्यं कुर्वित्यर्थः । प्रासि । प्रा पूरणे । लोडर्थे चात्र लट् । प्राभिपूरय चास्मदीयमुदरम् । जीवनोपायं चास्माकं कल्पयेत्यर्थः । किञ्च पूषन्निह क्रतुं विदः ॥ ९

न पूषणं मेथामसि सूक्तैरभि गृणीमसि ।
वसूनि दस्ममीमहे ॥ १०

न पूषणं मेथामसि । मेथतिराक्रोशकर्मा । नाक्रोशामः । नायोग्याभिः स्तुतिभिः स्तुम इत्यर्थः । किं तर्हि सूक्तैः शोभनैः वचनैः अभिगृणीमसि अभिष्टुमः । अभिष्टुत्य च वसूनि धनानि दस्मं चोराणां तपसां चोपक्षयितारं दर्शनीयं वा ईमहे याचामहे ॥ १०

कद्रुद्राय प्रचे॑तसे मी॒ळ्हुष्ट॑माय त॒व्य॑से ।
वो॒चेम॒ शंत॑मं हृ॒दे ॥ १

पौष्णं समाप्य षड्रौद्रम् ।

संपूषन्नित्येतत् पौष्णं समाप्य कद्रुद्रायेत्येताः षडृचो रुद्रदेवत्याः प्रत्येतव्याः । कद्रुद्राय प्रचेतसे प्रवृद्धज्ञानाय मीळ्हुष्टमाय । मीळ्हु इति धननाम । तद्वान् मीढ्वान् । अथवा मिह सेचने इत्यस्य वा । मीढ्वान् सेक्ता । मध्यमस्थानत्वाद्वर्षिता रुद्रः । अतिशयेन मीढ्वा मीळ्हुष्टमः । तस्मै मीळ्हुष्टमाय तव्यसे । तवतिर्वृद्धिकर्मा । वृद्धाय । वोचेम शन्तमं सुखतमं हृदे हृदयस्य । मनसः प्रीतिकरमित्यर्थः । कम् । सामर्थ्यात् स्तोमम् ॥ १

यथा च पुनर्वोचेम—

यथा॑ नो॒ अदि॑तिः॒ कर॒त्पश्वे॒ नृभ्यो॒ यथा॒ गवे॑ ।
यथा॑ तो॒काय॑ रु॒द्रिय॑म् ॥ २

यथा नो अदितिः । यथा नो अस्माकमदितिरनुपक्षीणो रुद्रः करत् कुर्यात् । दद्यादित्यर्थः । किम् । पश्वे । सर्वत्र द्वितीयार्थे चतुर्थी । पशुं अश्वादिपशुजातं नॄन् परिचारकांश्च मनुष्यान् । यथा च गां गोजातम् । यथा च तोकाय । तोकमपत्यम् । कीदृशम् । रुद्रियं रुद्रार्हम् । यद्रुद्र एव दातुमर्हति नान्यः कश्चिदित्यर्थः । अथवा पश्व इत्याद्याः स्वार्थ एव तादर्थ्यचतुर्थ्यः । अदितिरित्यदितिशब्दोऽनुपक्षयवचनः । द्वितीयार्थे चात्र प्रथमा । यथा नः अस्माकमदितिमनुपक्षयं कुर्यात् । पश्वाद्यर्थमिति । यथास्मदीयानां पश्वादीनामनुपक्षयं कुर्यादित्यर्थः । अथवा अदितिरिति स्वार्थ एव प्रथमा । न इत्यपि चतुर्थी । क्रियमाणं तत् । सामर्थ्यात् पालनम् । यथास्मदीयं पश्वाद्यर्थं च पालनं कुर्यात् । यथास्माकमस्मदीयानां पालनं कुर्यादित्यर्थः । कीदृशं अनुपक्षयं पालनं वा । उच्यते । रुद्रियं रुद्रार्हमिति । यथा नोऽस्मानदितिः करत्पश्वाद्यनुपक्षयपालनानामन्यतमं तथा कद्रुद्राय वोचेम शंतमं स्तोममित्येवमस्या ऋचो यथाशब्दश्रुतेः पूर्वयर्चैकवाक्यता ॥ २

यथा॑ नो मि॒त्रो वरु॑णो॒ यथा॑ रु॒द्रश्चिके॑तति ।
यथा॒ विश्वे॑ स॒जोष॑सः ॥ ३

तृतीया न तु केवला सह मित्रावरुणाभ्यां ।
संस्तवः प्रथमेऽर्धर्चे द्वितीयेऽपि विश्वैर्देवैः ॥

तृतीयेयमृङ् न रुद्रस्यैव केवला । किं तर्हि । सह मित्रावरुणाभ्यां तस्य संस्तवः । प्रथमेऽर्धे । द्वितीयेऽपि विश्वैर्देवैः सह । कुत एतत् । ऋगक्षरेषु दर्शनात् बृहद्देवताकारस्य वचनात् । एवं ह्याह—

तृतीया नतु केवला ।
मित्रेण वरुणेनात्र विश्वैर्देवैश्च संस्तवः । बृ. दे.

इति इहापि तृतीयायां सह मित्रावरुणाभ्यां संस्तवः । प्रथमेऽर्धर्चे इत्येतावता सिद्धे तृतीया न तु केवलेति वचनं समस्तायां तृतीयायां अकेवलरुद्रदेवत्यप्रतिपत्त्यर्थम् । तस्माद्द्वितीये ह्यर्धर्चे विश्वैर्देवैस्सह संस्तव इति सिद्धः । यथा च नोऽस्मान् मित्रो वरुणश्च यथा च रुद्र एव स्वयं चिकेतति जानाति य च विश्वे देवाः । किम् । साकांक्षत्वाच्चिकेततीत्यनुषक्तव्यम् । चिकेतन्ति जानन्ति । कीदृशाः । सजोषसः संप्रीयमाणाः । यथा मित्रादीनां देवानामपि प्रकाशा भवेम तथा कदा रुद्राय वोचेम स्तौम इत्यर्थः । एवमनयोरप्यृचोः यथा नो अदितिः करत् पश्वाद्यनुपक्षयपालनानामन्यतरत् यथा चापि मित्रादयो देवा अपि चिकेतन्ति तथा कदा रुद्राय वोचेम शन्तमं हृदयस्य स्तोममिति यथा शब्दश्रुतेः पूर्वयर्चैकवाक्यभावात् तस्याश्च रुद्रप्राधान्यादनयोरपि रुद्रप्राधान्यमेवावगम्यते । नैघण्टुकत्वं मित्रादीनाम् । तत्र यद्भगवता शौनकेनोक्तम्—

तृतीया न तु केवला सह मित्रावरुणाभ्याम् संस्तवः प्रथमेऽर्धर्चे ।

इति तत्पर्येष्यम् ॥ ३

गाथपतिं मेधपतिं रुद्रं जलाषभेषजम् ।
तच्छंयोः सुम्नमीमहे ॥ ४

गाथपतिं मेधपतिम् । गाथा स्तुतिलक्षणा वाक् । तस्या अधिपतिं स्वामिनम् । स्तुतिभिः स्तुत्यमित्यर्थः । मेधपतिं यज्ञानां स्वामिनं रुद्रं । जलाषभेषजम् । जलाषमिति सुखनाम । तस्य भेषजमौषधम् । सुखस्योत्पादकमित्यर्थः। तच्छब्दश्रुतेर्योग्यार्थसंम्बन्धो यच्छब्दोऽध्याहार्यः। यदत्यन्तोत्कृष्टंतत्शंयोः सुखकरम्। अस्य यजमानस्यात्मने वा कण्वाख्यस्य ऋषेरर्थाय ईमहे याचामहे ॥ ४

यः शुक्र इव सूर्यो हिरण्यमिव रोचते ।
श्रेष्ठो देवानां वसुः ॥ ५

यः शुक्र इव । यो रुद्रः शुक्र इव सूर्यः । यथा शुक्रवर्णः सूर्यः । हिरण्यमिव । यथा च हिरण्यं रोचते तद्वद्रोचते दीप्यते । श्रेष्ठश्च देवानां मध्ये । वसुः धनवान् प्रशस्यो वा । यच्छब्दश्रुतेस्तच्छब्दमध्याहृत्योत्तरयचैकवाक्यता योज्या ॥ ५

शं नः॑ कर॒त्यर्व॑ते सु॒गं मे॒षाय॑ मे॒ष्ये॑ ।

नृ॒भ्यो॒ नारि॑भ्यो॒ गवे॑ ॥ ६

सः शं नः करति। सुखमस्माकं स्वभूताय करति करोतु । अर्वते। अर्वेत्यश्वनाम। अश्वाय। सुगं स्वधिगमम् । सुप्रियमित्यर्थः । अथवा शं सुगमिति समुच्चीयमाने एते। सुखं च पन्थानं च करोत्वित्यर्थः । न च केवलायार्वते । किं तर्हि । मेषाय मेष्ये च । नृभ्यो नारिभ्यश्च गवे च ॥ ६

अ॒स्मे सो॑म॒ श्रिय॒मधि॒ नि धे॑हि श॒तस्य॑ नृ॒णाम् ।

महि॒ श्रव॑स्तुविनृ॒म्णम् ॥ ७

तिस्रः सोम्याः ।

तिस्र एता ऋचः सोमदेवत्याः । अस्मे अस्मासु हे सोम श्रियमधिनिधेहि । अधिशब्दः अधिपरी अनर्थकौ ( पा. १ ४. ९३. ) इति कर्मप्रवचनीयः पदपूरणः । निधेहि स्थापय । अस्मभ्यं देहीत्यर्थः । कियन्ति । उच्यते शतस्य नृणां मनुष्यशतस्य योग्याम्। अत्यन्तमहतीमित्यर्थः । महि श्रवः महच्च यशः तुविनृम्णं बहुबलोपेतम् । बलं च बाहीत्यर्थः ॥ ७

मा नः॑ सोमपरि॒बाधो॒ मारा॑तयो जुहुरन्त ।

आ न॑ इन्दो॒ वाजे॑ भज ॥ ८

मा नः अस्मान् सोमपरिबाधः सोमस्य परिबाधितारः अपहर्तारो राक्षसादयः। मा वा अरातयः शत्रवः जुहुरन्त। हुर्च्छेर्वा ह्वयतेर्वा संमोहनार्थस्यैतद्रूपम्। मा यज्ञेऽन्यत्र वा संमोहं प्रापिपन्नित्यर्थः । त्वमपि नोऽस्मान् हे इन्दो सोम वाजे । संग्रामनामैतत् । संग्रमे । संग्रामस्थानीये यज्ञे संग्राम एव वा आभज सेवस्व ॥ ८

यास्ते॑ प्र॒जा अ॒मृत॑स्य॒ पर॑स्मि॒न् धाम॑न्नृ॒तस्य॑ ।

मू॒र्धा नाभा॑ सोम वेन आ॒भूष॑न्तीः सोम वेदः ॥ ९

यास्ते प्रजाः। षष्ठीनिर्देशात् परिचारका इति वाक्यशेषः। यास्ते तव परिचारकाः अस्मदाद्याः प्रजाः अमृतस्यामरणधर्मणः परस्मिन् धामन् वेद्याख्ये स्थाने। ऋतस्य गतस्य प्राप्तस्य। वेदिस्थस्य सत इत्यर्थः। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः। ता मूर्धा मूर्धनि प्रधानभूते नाभा पृथिव्या नाभिस्थानीये उत्तरवेद्याख्ये स्थाने। हे सोम वेनः। वेनतिः कान्तिकर्मा। कामयस्व। किंच आभूषन्तीः सोम वेदः। आभूषन्तीरित्याङ्मर्यादायाम्। भूष अलंकारे। मर्यादया त्वलंकुर्वतीः हे सोम वेदः विध्दि। अथवा आभूषन्तीरिति भू सत्तायामित्यस्यैव रूपम्। मर्यादया भवन्तीः श्रुतिस्मृत्युदितया मर्यादया वर्तमाना इत्यर्थः। हे सोम वेदः। विदित्वा च मत्प्रवणा एता न्यायवृत्ताश्चेति मन्यमानः कामयस्वेत्यर्थः॥ ९

---

अग्ने॒ विव॑स्वदु॒षस॑श्चि॒त्रं राधो॑ अमर्त्य।
आ दा॒शुषे॑ जातवेदो वहा॒ त्वम॒द्या दे॒वाँ उ॑ष॒र्बुधः॥ १

अग्ने विः काण्वउच्यते।

अग्ने विवस्वादित्यतः प्रभृति प्रस्कण्वो नाम कण्वपुत्र ऋषिरुच्यते।

आग्नेये प्रथमे सूक्ते।

अग्निदेवत्ये द्वे एते सूक्ते।

प्रागाथे प्रथमेऽश्विनौ।

सहोषसः लिङ्गभाजौ॥

यस्त्वयं प्रथमः प्रगाथः तृच इत्यर्थः। अत्राश्विनौ सहोषसा लिंगभाजौ। गुणत्वभाजावित्यर्थः। अश्विनौ उषाश्चाग्नेर्गुणभूता अत्र स्तूयन्त इत्यर्थः। हे अग्ने विवस्वत् विवासनवत्। तमसां विवासनकरम्। किंतत्। सामर्थ्याज्ज्योतिः। कस्य। उच्यते। उषसः। कीदृशम्। चित्रं विचित्रं पूज्यं वा। राधः। धननामैतत्। इह तु धनसादृश्यादौषसे ज्योतिषि वर्तते। उज्ज्वलनत्वेन प्रीतिकरत्वेन धनसदृशम्। हे अमर्त्य। आ दाशुषे यजमानस्यार्थाय। हे जातवेदः जातप्रज्ञान। आवह त्वमद्य। न च केवलमौषसं ज्योतिः। किं तर्हि। अन्यानपि देवान्। कीदृशान्। उषर्बुधः। यागगमनार्थमुषःकाले ये बुध्यन्ते ते उषर्बुधः। तान्। अथवा विवस्वादित्यग्नेरेव संबोधनम्। छान्दसत्वात्तु नुमभावः। उषस इत्यपि द्वितीयाबहुवचनान्तं हूयमानवचनम्। चित्रं राध इत्यपि हविर्लक्षणं धनमभिप्रेतम्। द्वितीयानिर्देशाच्च कर्मप्रवचनीयप्रतिशब्दाध्याहारः। हे अग्ने विवस्वत् विवसनवत्। तमसां विवासयितः। उषसं चित्रं हविर्लक्षणं धनं प्रति देवांश्चावह॥ १

जुष्टो हि दूतो असि हव्यवाहनोऽग्ने रथीरध्वराणाम् ।
सजूरश्विभ्यामुषसा सुवीर्यमस्मे धेहि श्रवो बृहत् ॥ २

जुष्टो हि । हिशब्दो यस्मादर्थे । यस्माज्जुष्टः प्रियः दूतश्चासि । हव्यवाहनः हविषां वोढा हे अग्ने रथीः । रथो यस्यास्ति स रथी सारथिः । तत्स्थानीयश्च । अध्वराणां यज्ञानाम् । यस्मादिति वचनात् तस्मादित्यध्याहर्तव्यः । तस्मात् सजूः संप्रीयमाणः अश्विभ्यामुषसा च सह । सुवीर्यं शोभनेन वीर्येण सहितम् । अस्मे अस्मभ्यं धेहि देहि श्रवो धनं यशोऽन्नं वा । बृहत् महत् ॥ २

अद्या दूतं वृणीमहे वसुमग्निं पुरुप्रियम् ।
धूमकेतुं भाऋजीकं व्युष्टिषु यज्ञानामध्वरश्रियम् ॥ ३

अद्या दूतं वृणीमहे । वसुं धनवन्तं प्रशस्यं वा । अग्निं पुरुप्रियं बहूनां यजमानानां प्रियम् । धूमकेतुं धूमेन यः केत्यते ज्ञायते स धूमकेतुः । तं धूमकेतुम् । अथवा धूमस्य कर्ता धूमकेतुः । तं धूमकेतुम् । भाऋजीकं भा दीप्तिर्यस्यस भाःऋजीकः । छान्दसमृजुकशब्दस्य उकारस्य ईत्वम् । भाः शब्दस्य पूर्वनिपातः । तं भाऋजीकं ऋजुभासम् । कस्यां वेलायम् । उच्यते । व्युष्टिषु उषसः व्युष्टिवेलायाम् । प्रभातकाल इत्यर्थः । यज्ञानामध्वराश्रि यम् । ध्वरतिः हिंसाकर्मा । अध्वरा अहिंसिता श्रीर्येन सोऽध्वरश्रीः । कस्याध्वराश्रियम् । यज्ञनाम् यज्ञानां श्रियं अहिंसकमित्यर्थः ॥ ३

श्रेष्ठं यविष्ठमतिथिं स्वाहुतं जुष्टं जनाय दाशुषे ।
देवाँ अच्छा यातवे जातवेदसमग्निमीळे व्युष्टिषु ॥ ४

श्रेष्ठं प्रशस्यतमं यविष्ठं युवतमं अतिथिं अतिथिस्थानीयं यजमानानां स्वाहुतं सुष्ठ्वभिहुतं सर्वयजमानैर्जुष्टं प्रियं जनाय दाशुषे । षष्ठ्यर्थे चतुर्थी । यजमानस्य। देवान् अच्छा यातवे अभियातुं जातवेदसं अग्निमीळे स्तौमि व्युष्टिषूषसाम् । प्रभातकाल इत्यर्थः ॥ ४

स्तविष्यामि त्वामहं विश्वस्यामृत भोजन ।
अग्ने त्रातारममृतं मियेध्य यजिष्ठं हव्यवाहन ॥ ५

स्तविष्यामि त्वां स्तोष्यामि त्वामहं हे विश्वस्यामृत भोजन । विश्वस्येत्येतत् भोजनेत्येतेन संबध्यते । सर्वस्य हविर्लक्षणस्यान्नस्य भोक्तः । मरणवार्जित हे अग्ने ।

कीदृशम् ॥ उच्यते । सर्वस्तोतॄणां त्रातारं अमृतं हे मियेध्य यज्ञार्ह यजिष्ठं यष्टृतमं हे हव्यवाहन हविषां वोढः ॥ ५

सुशंसो बोधि गृणते यविष्ठ्य मधुजिह्वः स्वाहुतः ।
प्रस्कण्वस्य प्रतिरन्नायुर्जीवसे नमस्या दैव्यं जनम् ॥ ६

सुशंसो बोधि । सुशंसः इत्येतन्नामन्त्रितम् । प्रत्यक्षकृतश्चायं मन्त्रः । यत्तच्छब्दावध्याहृत्य एकवाक्यता नेया । यस्त्वं सुशंसः सुस्तवः स बोधि बुध्यस्व । शृण्वित्यर्थः । गृणते गृणतः स्तुवतो मम । हे यविष्ठ्य । स्वार्थिको यशब्दः । यविष्ठ युवतम । मधुजिह्वः मधुस्वादमाज्यं मधु । तस्मिन् जिह्वा यस्य स मधुजिह्वः । नित्यमाहुतिलक्षणस्यास्वादयितेत्यर्थः । अथवा जिह्वेति वाङ्नाम। मधुरवचनात् मधुजिह्वः । तस्य संबोधनं हे मधुजिह्वः । स्वाहुतः सुष्ठुभिहुतः सन् । किञ्च । मम प्रस्कण्वस्य प्रतिरन् प्रवर्धयन्नायुर्जीवसे चिरजीवनाय । नमस्य नमस्कुरु । दैव्यं जनम् । सर्वदेवानित्यर्थः ॥ ६

होतारं विश्ववेदसं सं हि त्वा विश इन्धते ।
स आ वह पुरुहूत प्रचेतसोऽग्ने देवाँ इह द्रवत् ॥ ७

तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । यं होतारं विश्ववेदसं सर्वधनं सर्वप्रज्ञं वा सं हि त्वा विशः इन्धते । हिशब्दः पदपूरणः । त्वां विशो मनुष्याः समिन्धते सन्दीपयन्ति । स आवह हे पुरुहूत बहुभिराहूत । प्रचेतसः प्रवृद्धज्ञानान् हे अग्ने देवानिह द्रवत् क्षिप्रम् ॥ ७

कतमान् । उच्यते ।

सवितारमुषसमश्विना भगमग्निं व्युष्टिषु क्षपः ।
कण्वासस्त्वा सुतसोमास इन्धते हव्यवाहं स्वध्वर ॥ ८

सवितारमुषसं अश्विना भगमात्मानमेव चाग्निं व्युषिषु क्षपः क्षपाया रात्रेः । प्रभातकाल इत्यर्थः । किञ्च कण्वासस्त्वा । कण्वपुत्रा मत्प्रभृतयः त्वां सुतसोमासः कृतसोमाभिषवाः इन्धते दीपयन्ति । हव्यवाहं हे स्वध्वर सुयज्ञ ॥ ८

पतिर्ह्यध्वराणामग्ने दूतो विशामसि ।
उषर्बुध आ वह सोमपीतये देवाँ अद्य स्वर्दृशः ॥ ९

पतिर्ह्यध्वराणाम् । हि शब्दो यस्मादर्थे । यस्मात् पतिः स्वामी त्वमध्वराणां हे अग्ने दूतश्च विशां मनुष्याणामासि । यस्मादिति वचनात्तस्मादित्यध्याहार्यम् । तस्मादुषर्बुधः। उषःकाले ये बुध्यन्ते त उषर्बुध । तानावह सोमपीतये देवानद्य । कीदृशान् स्वर्दृशः । स्वरादित्यः द्यौर्वा । तद्वद्ये दृश्यन्ते ये तस्य द्रष्टारो वा ते स्वर्दृशः । तान् । आदित्यस्य दिवो वा सदृशाः तद्दर्शिनो वेत्यर्थः ॥ ९

आग्ने पूर्वा अनूषसो विभावसो दीदेथ विश्वदर्शतः ।

असि ग्रामेष्ववि॒ता पुरोहितोऽसि यज्ञेषु मानुषः ॥ १०

हे अग्ने पूर्वा अनूषसः । अनुशब्दो लक्षणे कर्मप्रवचनीयः प्रतिशब्देन समानार्थः । एकस्या एव चोषसः कालभेदापेक्षया पूर्वापरव्यपदेशः । अवयवापेक्षं च बहुवचनम् । पूर्वा उषसः प्रति अद्य एवोषसः उदयकाले इत्यर्थः । हे विभावसो विविधा भाधनस्य यस्य स विभावसुः। तस्य संबोधनं हे विभावसो दीदेथ दीप्यस्व । विश्वदर्शतः सर्वस्य दर्शनीयः । सर्वजनप्रकाश इत्यर्थः । किं कारणम् । उच्यते । यस्मादसि ग्रामेष्ववि॒ता । जनपदनिवासस्थानानि ग्रामः । तेषु रक्षिता त्वमसि पुरोहितोऽसि यज्ञेषु च पूर्वस्यां दिश्याहवनीयात्मना स्थापितं पुरोहितस्थानीयो वा असि । कः मानुषः मन्त्रज्ञाता । अथवा मानुष इति षष्ठी । मनुष्यस्वभूतेषु यज्ञेषु ॥ १०

नि त्वा यज्ञस्य साधनमग्ने होतारमृत्विजम् ।

मनुष्वद्देव धीमहि प्रचेतसं जीरं दूतमर्मत्यम् ॥ ११

त्वां यज्ञस्य साधनं साधयितारं हे अग्ने होत्राख्यमृत्विजम् । मनुष्वत् मनुष्यवत् । हे देव निधीमहि निदध्महे । यज्ञे स्थापयाम इत्यर्थः । प्रचेतसं जीरम् । क्षिप्रनामैतत् । क्षिप्रं दूतममर्त्यम् ॥ ११

यद्देवानां मित्रमहः पुरोहितोऽन्तरो यासि दूत्यम् ।

सिन्धोरिव प्रस्वनितास ऊर्मयोऽग्नेर्भ्राजन्ते अर्चयः ॥ १२

यदा देवानां हे मित्रमहः मित्राणां पूजयितः पूज्य वा । पुरोहितः पूर्वस्यां दिश्यावहवनीयात्मना स्थापितः । अन्तरः सन्निकृष्टः । कस्य सामर्थ्याद्देवानां यजमानानां वा । यासि दूत्यं दूतकर्म । आहवनीयमास्थाय देवानां दूतकर्म करोषीत्यर्थः । यदेति वचनात्तदेत्यध्याहार्यम् । तदा सिन्धोरिव प्रस्वनितास ऊर्मयः । प्रकृष्टं स्वनं

येषान्ते प्रस्वनितासः । शब्दवन्त इत्यर्थः । यथा सिन्धोर्नद्याः महान्तः शब्दवन्त ऊर्मयो भ्राजेरन् तद्वत्तवाग्नेः भ्राजन्ते अर्चयो ज्वालाः ॥ १२

श्रुधि श्रुत्कर्ण वह्निभिर्देवैरग्ने सयावभिः ।
आ सीदन्तु बर्हिषि मित्रो अर्यमा प्रातर्यावाणो अध्वरम् ॥ १३

श्रुधि शृणु हे श्रुत्कर्ण श्रोतृकर्ण । वह्निभिर्हविषां वोढृभिः अन्यैरग्निभिः सह । कीदृशैः । देवैः दानादिगुणैः । हे अग्ने सयावभिः हव्यं गृहीत्वा त्वया सह ये यान्ति ते सयावानः । तैस्सयावभिः । किं शृणवानि । उच्यते । त्वया हुताः सन्तः आसीदन्तु बर्हिषि मित्रो अर्यमा । अन्ये च प्रातर्यावाणः प्रातर्गामिनो देवाः । अध्वरम् । सप्तम्यर्थे द्वितीया । बर्हिषीत्यस्य चेदं विशेषणम् । अस्मदीयेऽध्वरे यद्बर्हिस्तत्र ॥ १३

शृण्वन्तु स्तोमं मरुतः सुदानवोऽग्निजिह्वा ऋतावृधः ।
पिबतु सोमं वरुणो धृतव्रतोऽश्विभ्यामुषसा सजूः ॥ १४

त्वयैव चाहूताः शृण्वन्तु । स्तोमं मरुतः सुदानवः शोभनदातारः शोभनदाना वा। अग्निर्जिह्वास्थानीयो येषां तेऽग्निजिह्वाः। सर्वेषामेव हि देवानामग्निः जिह्वास्थानीयः। ऋतावृधः यज्ञस्य वर्धयितारः। पिबतु सोमं वरुणो धृतव्रतः धृतकर्मा अपरित्यक्तस्वव्यापारः। अश्विभ्यामुषसा च सजूः सह प्रीयमाणः॥ १४



त्वमग्ने वसूँरिह रुद्राँ आदित्याँ उत ।
यजा स्वध्वरं जनं मनुजातं घृतप्रुषम् ॥ १

त्वं हे अग्ने वसून् इह यज्ञे रुद्रानप्यादित्यानपि यज । अन्यं च स्वध्वरं सुयज्ञं दैव्यं जनम् । मनुजातं मनोः प्रजापतेः सकाशात् जातम् घृतप्रुषम् । घृतमित्युदकनाम । प्रुषिः क्षरणार्थः । उदकस्य क्षरितारम् । वर्षितारामित्यर्थः । अथवाहुतिलक्षणं घृतं प्रतिक्षराति इति घृतप्रुषम् । सर्वयजमानानामाज्याहुतिभिर्यष्टव्यमित्यर्थः ॥ १

श्रुष्टीवानो हि दाशुषे देवा अग्ने विचेतसः ।
तान् रोहिदश्व गिर्वणस्त्रयस्त्रिंशतमा वह ॥ २

हिशब्दः पदपूरणः। तान् रोहिदश्वेति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः। दाशुषे यजमानस्यार्थाय ये श्रुष्टीवानः। श्रुष्टीति क्षिप्रनाम। वन षणसंभक्तौ। क्षिप्रं यजमानं संभक्तारः। अथवा श्रुष्टिशब्दोऽत्र श्रुतवचनः। श्रुतवन्तः श्रुष्टीवानः। बहुश्रुता इत्यर्थः। हे देवाः अग्ने विचेतसः विविधप्रज्ञाः ऊहापोहसमर्थाः। तान् रोहिदश्व। रोहितवर्णा अश्वा यस्य स रोहिदश्वः। तस्य संबोधनं रोहिदश्व। गिर्वणः स्तुतिभिः संभजनीय स्तुतीनां वा संभक्तः। त्रयस्त्रिंशतमावह। अष्टौ वसवः एकादश रुद्राः द्वादशादित्याः प्रजापतिश्च वषट्कारश्चेत्येते त्रयस्त्रिंशद्देवाः। तांस्त्रयस्त्रिंशतमावह॥ २

प्रियमेधवदत्रिवज्जातवेदो विरूपवत्।

अङ्गिरस्वन्महिव्रत प्रस्कण्वस्य श्रुधी हवम्॥ ३

प्रियमेधवत् प्रियमेधस्येव। अत्रिवत् अत्रेरिव। हे जातवेदः जातप्रज्ञाग्ने। विरूपस्येव। चांगिरस इव। हे महिव्रत महाकर्मन्। मम प्रस्कण्वस्य श्रुधी हवम्॥ ३

महिकेरव ऊतये प्रियमेधा अहूषत।

राजन्तमध्वराणामग्निं शुक्रेण शोचिषा॥ ४

महिकेरवो महतः स्तोमस्य कर्तारः। ऊतये पालनाय तर्पणाय वात्मनः। प्रियमेधाः प्रिययज्ञाः। अहूषत आहूतवन्तः आह्वयन्ति वा। राजन्तम्। राधतिरैश्वर्यकर्मा। ईशानमध्वराणां यज्ञानम्। अग्निं शुक्रेण शोचिषा। इत्थंभूतलक्षणे एषा तृतीया। शुक्रवर्णया दीप्त्या संबद्धाम्। शुक्रवर्णया दीप्त्या दीप्तमित्यर्थः। अथवा शुक्रेण च शोचिषेत्येतद्राजन्तमध्वराणामित्येतेन संबध्यते। राजतिश्च दीप्त्यर्थः। शुक्रेण शोचिषा राजन्तं दीप्यमानम्। क्व। अध्वराणाम्। षष्ठीनिर्देशात् मध्य इति वाक्यशेषः। यज्ञानां मध्ये। वेदिस्थमित्यर्थः॥ ४

घृताहवन सन्त्येमा उ षु श्रुधी गिरः।

याभिः कण्वस्य सूनवो हवन्तेऽवसे त्वा॥ ५

घृतमाहूयते यस्मिन् स घृताहवनः। तस्य संबोधनं हे घृताहवन। सन्त्य। षणु दाने। दातः। इमा उ षु। उशब्दः पदपूरणः। इमाः सुष्ठु श्रुधि गिरः। याभिः कण्वस्य सूनवः पुत्राः हवन्ते। आत्मन एव वायमपरोक्षरूपेण प्रतिनिर्देशः। वयं कण्वपुत्रा आह्वयाम इत्यर्थः। अवसे पालनाय तर्पणाय वा। त्वाम्॥ ५

त्वां चित्रश्रवस्तम हवन्ते विक्षु जन्तवः ।
शोचिष्केशं पुरुप्रियाग्ने हव्याय वोळ्हवे ॥ ६

त्वां हे चित्रश्रावस्तम । अतिशयेन पूज्यं चित्रं वा अन्नं वा धनं वा यशो वा यस्य स चित्रश्रवस्तमः । तस्य संबोधनं हे चित्रश्रवस्तम । हवन्ते विक्षु । मनुष्यनामैतत् । तेन तल्लोका अत्र लक्ष्यन्ते । मनुष्यलोकेषु जन्तवो मनुष्याः । कीदृशम् । शोचिष्केशम् । शोचिर्दीप्तिः ज्वालाख्या । सा केशस्थानीया यस्य स शोचिष्केशः । तं शोचिष्केशम् । हे पुरुप्रिय अग्ने । किमर्थम् हव्याय वोळहवे हवींषि वोढुम् ॥ ६

नि त्वा होतारमृत्विजं दधिरे वसुवित्तमम् ।
श्रुत्कर्णं सप्रथस्तमं विप्रा अग्ने दिविष्टिषु ॥ ७

नित्वा होतारं ऋत्विजं दधिरे स्थापयन्ति । वसुवित्तमं धनानां लब्धृतमम् । श्रुत्कर्णं श्रुतिशीलं कर्णं यस्य तं श्रुत्कर्णम् । सप्रथस्तमम् ।

आर्चन्नत्र मरुतः सस्मिन्नजौ । ऋ. वे. १. ५२. १५.

इत्यादिप्रयोगदर्शनात् सशब्दः सर्वशब्दपर्यायः । सर्वतः पृथु सप्रथाः । अतिशयेन सर्वतः पृथुतमं सप्रथस्तमम् । विप्राः मेधाविनः हे अग्ने दिविष्टिषु । दिवमिष्यन्ते याभिर्गन्तु ता दिविष्टयः । तासु । यागेष्वित्यर्थ ॥ ७

आ त्वा विप्रा अचुच्यवुः सुतसोमा अभि प्रयः ।
बृहद्भा बिभ्रतो हविरग्ने मर्ताय दाशुषे ॥ ८

त्वां विप्राः मेधाविनः ऋत्विजः अ अचुच्यवुः आच्यावयन्ति । आह्वयन्तीत्यर्थः । सुतसोमाः कृतसोमाभिषवाः । अभि प्रयः सोमलक्षणमन्नं प्रति । बृहद्भाः । बृहती भा दीप्तिर्यस्य तत् बृहद्भाः । स्वदीप्त्या अत्यन्तदीप्तम् । बिभ्रतो धारयन्तः सोमलक्षणं हविः । हे अग्ने मर्ताय दाशुषे मनुष्यस्य यजमानस्यार्थाय ॥ ८

प्रातर्याव्णः सहस्कृत सोमपेयाय सन्त्य ।
इहाद्य दैव्यं जनं बर्हिरा सादया वसो ॥ ९

प्रातर्यै यज्ञान् प्रति गच्छन्ति ते देवाः प्रातर्यावाणः । हे सहस्कृत सहसा कृत बलादुत्पादित । प्राणाद्धि बलात् मथ्यमानोऽयं जायते। तेनैवमामन्त्र्यते सहस्कृतेति । सोमपेयाय सोमपानार्थं हे सन्त्य । षणु दाने । दातः । इहास्मदीये यज्ञे अद्य दैव्यं

जनं देवजनं चान्यमपि। ये प्रातर्यावाणो देवाः ये च इतरे सर्वांस्तानित्यर्थः। बर्हिरासादय हे वसो प्रशस्य धनवन्वा॥ ९

अर्वाञ्चं दैव्यं जनमग्ने यक्ष्व सहूतिभिः।
अयं सोमः सुदानवस्तं पात तिरोअह्न्यम्॥ १०

अर्वाञ्चं दैव्यं जनम्। अर्वाञ्चमिति कर्मश्रुतेर्योग्यक्रियाध्याहारः। अर्वाञ्चमस्मदभिमुखं आहूय दैव्यं जनं हे अग्ने यक्ष्व यज। कथमाहूय। सहूतिभिः साह्वानैः। युगपदाहूयेत्यर्थः। अथवा सहाह्वातारो सहूतयः। सहयोगलक्षणा चैषा तृतीया। सहाह्वातृभिरन्यैरग्निभिः सहाहूयेत्यर्थः।

अर्धर्चो देवदेवत्यः।

अयं सोम इत्ययं अर्धर्चो देवदेवत्यः प्रत्येतव्यः। अयं सोमः हे सुदानवः शोभनदातारः शोभनदाना वा। तं पात पिबत तिरोअह्न्यं। तार्तीयसावनिकः सोमविशेषः तिरोअह्न्यं उच्यते। तं तिरोअह्न्यं। अथवा तिरः सत इति प्राप्तस्य नामनी। प्राप्ते वर्तमाने यागाहे भवस्तिरोअह्न्यः। तं तिरोअह्न्यम्॥ १०



एषो उषा अपूर्व्या व्युच्छति प्रिया दिवः।
स्तुषे वामश्विना बृहत्॥ १

एषो आश्विनमुत्तमम्।

एषो उषा इत्येतदाश्विनं सूक्तं अध्यायस्योत्तमम्। एषो उषाः अपूर्व्याः। यतः पूर्वा अन्या नास्ति सा अपूर्वा। सर्वप्रथमेत्यर्थः। अपूर्वैवापूर्व्या। स्वार्थिको यत्प्रत्ययः। व्युच्छति विवासयति। तमांसि विवासयति उदितेत्यर्थः। प्रिया दिवः। अत्यन्तसाहचर्यात् दिवः प्रियोषा इत्यभिधीयते। एतदुक्तं भवति। उदितेयमुषा। उषउदयकालश्चाश्विनोः स्तुतिकालः। अतस्तुषे। व्यत्ययेनायमुत्तमस्य स्थाने मध्यमः। स्तुषे स्तौमि। वां युवां हे अश्विनौ बृहत् महत् सुष्टुत्यर्थः॥ १

कीदृशौ वाम्। उच्यते—

या दस्रा सिन्धुमातरा मनोतरा रयीणाम्।
धिया देवा वसुविदा॥ २

या दस्रा यौ दस्रौ दस्रनामानौ। यद्यपि चाश्विनोरेको दस्रनामा नासत्यनामा-परः तथापि साहचर्यादन्यतरनाम्नापि सर्वत्र उभयोर्व्यपदेशः। अथवा दंसि दंश-दर्शनयोः। दर्शनीयौ। अथवा तसु उपक्षये दसु च। शत्रूणामुपक्षयितारौ। सिन्धु-मातरा। सिन्धवो नद्यस्तासां वृष्टिद्वारेण मातरौ निर्मातारौ। मनोतरा। मन ज्ञाने। ज्ञातृतरौ। कस्य। रयीणां धनानाम्। अथवा मनोतराविति मन्मह इत्यस्य याच्ञा-कर्मणो रूपम्। याचितारौ हविर्लक्षणानां धनानाम्। अथवा याच्ञयात्रपूर्वं दानं लक्ष्यते। दातृतरौ धनानामित्यर्थः। धिया देवा वसुविदा। धियेत्येतद्वसुविदेत्येतेन संबध्यते। प्रज्ञया धनानां लब्धारौ। देवा देवौ दानादिगुणौ॥ २

वच्यन्ते॑ वां ककु॒हासो॑ जू॒र्णाया॒मधि॑ वि॒ष्टपि॑।
य॒द्वां॒ रथो॒ वि॒भिष्पता॑त्॥ ३

वच्यन्ते वाम्। वचतिर्गत्यर्थः। गच्छन्ति वां युवयोः स्वभूता ककुहासः। ककुह इति महन्नाम। महान्तोऽश्वः। जूर्णायामधि विष्टपि। आदिसृष्टावुत्पन्नत्वात् अत्यन्तचिरन्तनी द्यैर्जूर्णे त्युच्यते। अधीत्युपरि भावे। विष्टपितिदिवोऽभिधानम्। जीर्णाया दिवउपरि। कदा उच्यते। यत् यदा वां युवयोः स्वभूतः रथः विभिः पक्षिसदृशैरश्वैः। पतात् पतन्ति॥ ३

ह॒विषा॑ जा॒रो अ॒पां पिप॑र्ति॒ पपु॑रिर्नरा।
पि॒ता कुट॑स्य चर्ष॒णिः॥ ४

हविषा सोमलक्षणेन जारो जरयिता। कस्य। अपाम्। कोऽसौ। अग्निः। कुतएतत्। हविषाऽश्विनोः पूरणवचनादपां च जरयितृत्वादिह हविषा पिपर्ति पपुरिरिति हविषाश्विनोः पूरणमुच्यते। होतृत्वाच्च हविषां देवतापूरणमग्नेः कर्म नान्यस्य। अपाञ्च जरयिताग्निः। कथम्। जठरावस्थस्तावदशितपीतं जरयंस्तदन्त-र्गता अपो जरयति। अतोऽग्निर्भवत्यपां जारः। अथवा अपामित्येतद्धविषेत्येतेन संबध्यते। वसतीवर्यैकधनालक्षणानामपां सम्बन्धिना सोमलक्षणेन। वसतीवर्यैक-धानामिश्रेण सोमेनेत्यर्थः। जारः आहारस्य जरयिताग्निः पिपर्ति। पॄ पालनपूरणयोः। पूरयति। कम्। प्रकरणसामर्थ्यात् युवामश्विनौ। बहुसोमं युवामाश्विभ्यां ददाती-त्यर्थः। कीदृशोऽग्निः। उच्यते। पपुरिः पूरयिता सोमेन। देवानां होतृत्वात् सर्व-देवानामग्निः सोमेन पूरयिता। हे नरा मनुष्याकारौ। अपि नौ पिता कुटस्य। पिता पालयिता यज्ञस्य कृत्स्नस्य वा जगतः। कुटस्य चर्षणिः। कुट कौटिल्ये इत्यस्य

कुटः यज्ञविभ्रंश उच्यते । स हि श्रुतिविहिताद्दजोर्मार्गादपेतश्च । तस्य चर्षणिः द्रष्टा। अथवा कुटिलचित्तः कुटः शठः पुमान्। तस्य द्रष्टा। भक्ताभक्तयोः पुंसोर्विशेषज्ञ इत्यर्थः। अथवा कुटशब्दः कृतशब्दपर्यायः । कृतस्य पुण्यस्य पापस्य च द्रष्टेति। यास्कस्तु जारो अपामित्यादिभिः आदित्य उच्यते इति मन्यते । एवं ह्याह । पिता कुटस्य कर्मणश्चाययितादित्यः (नि ५. २४) इति। तदनुपपन्नम्। अपां पिपर्ति पपुरिरिति सोमलक्षणेन हविषाश्विपूरणम्यादित्ये असंभवात्। रसानुप्रदानान्मध्यमस्य। अनाश्विनत्वप्रसंगाच्च। हविषोदकेनापां जार इत्यादिगुणयुक्त आदित्यः पिपर्तीत्यादित्यव्यापारप्रधानत्वादस्या ऋचः सत्यपि नरेत्यश्विनोः संबोधने। अथापि प्रत्यक्षकृता हि स्तोतारो भवन्ति परोक्षकृतानि स्तोतव्यानि (नि ९. २) इत्येवमादित्यदेवतेयमृक् प्राप्नोति नाश्विनी । आश्विनं चैतत् सूक्तम् । नच यथाग्न्यभिधानपक्षे सोमलक्षणेन हविषा अग्निः हे नरौ युवां पूरयति इत्येवमश्विनोः प्राधान्यश्रवणादाश्विनत्वं एवमादित्याभिधाने संभवति उदकेनाश्विनोरपूर्यमाणत्वात् । आदित्यो हि मध्यमं वोदकेन पूरयेत् भूमिं वा नाश्विनौ । तस्माद्यथा व्याख्यातमपां जार इत्यादिभिरग्निरेव उच्यते नादित्यः इत्यपोह्यमेतद्यास्कवचनम्॥ ४

किमेतावन्मात्रगुण एवाग्निः। नेत्युच्यते। किं तर्हि

आदारो वां मतीनां नासत्या मतवचसा।
पातं सोमस्य धृष्णुया॥ ५

आदारो वाम्। आदार इति ण्यन्तस्य आद्रियते रूपम्। वां मतीनामिति मन्यतेरर्चतिकर्मणः। मतयः स्तुतय इहोच्यन्ते । षष्ठी च कर्तृकर्मणोः कृति (पा. २. ३. ६५) इत्येवं कर्मणि द्रष्टव्या । प्रकृत्यर्थस्य चेदमादरणस्य कर्मण्यन्तस्य । ओदनपाचयितेति यथा। आदरयिता युवयोः स्तुतीनाम् । युष्मत्स्तुतीराद्रियमाणानां ऋत्विजां प्रयोजक इत्यर्थः। अग्निर्हि दैव्यो होता तदधिष्ठितास्तु मानुषाः स्तुवन्तीत्यग्नेः स्तुतीराद्रियमाणान् ऋत्विजः प्रति प्रयोजकत्वम्। अथवा आदार इति ण्यन्तस्यैव चाद्रियते रूपम् । वां मतीनामित्यपि मतयो यजमानानां बुद्धयः । आदरिता युवयोर्बुद्धीनाम्। अत्यन्तं युष्मत्परिचर्यापरत्वाद्युवां मनसा चिन्तयतस्तस्याप्यादरितेत्यर्थः । हे नासत्या नासत्यनामानौ । अथवा सत्यावेव नासत्यौ । द्वौ प्रतिषेधौ प्रकृतिं गमयतः। सत्यावेव। मतवचसा अभिमत वचनेन। एवं रूपोऽग्निरावां सोमेन पूरयतीति। एतत् ज्ञात्वा पातं पिबतम्। सोमस्य सोमं सोमस्य वैकदेशं स्वांशलक्षणाम्। धृष्णुया। प्रथमाया अयं यादेशः । क्रियाविशेषणश्चैतद्द्रष्टव्यम्। धृष्णु यत् धृष्टं प्रगल्भम्। निःशङ्कौ सर्वलोकप्रकाशं पिबतमित्यर्थः॥ ५

या नः पीपरदश्विना ज्योतिष्मती तमस्तिरः ।
तामस्मे रासाथामिषम् ॥ ६

या नोऽस्माकं पीपरत्। पॄ पालनपूरणयोः इत्यस्यैतत् ण्यन्तस्य रूपम्। पालयति रक्षति। निऋत्य इत्यर्थः । हे अश्विनौ ज्योतिष्मती ज्योतिषा सारवती सर्वलोकप्रकाशौ वा। किं पीपरत्। उच्यते। तमस्तिरः। तिरस्सत इति प्राप्तस्य नाम। प्राप्तं मानसं तमः। येनानेन पुत्रदारपोषणाशक्तिप्रतिघातजेन मानसेन व्याप्ताः स........ ...स्य येन समर्थेत्यर्थः। अथवा न इति द्वितीया। यानस्मान् पीपरत् पूरयति। तर्पयतीत्यर्थः। ज्योतिष्मती च। तमस्तिरः। कर्मोपसर्गश्रुतेरत्र योग्यक्रियाध्याहारः। तमस्तिरस्करोति। तिरस्कारेण चात्र प्रकाशो लक्ष्यते। सर्वलोकप्रकाशा भवन्तीत्यर्थः। तामस्मे रासाथामिषम्। रासाथां दत्तमिषमन्नम्॥ ६

आ नो नावा मतीनां यातं पाराय गन्तवे ।
युञ्जाथामश्विना रथम् ॥ ७

आ ना नावा अस्मान्नावा आयातम्। किमर्थम्। मतीनां पाराय गन्तवेपारमन्तम्। गत्यर्थकर्मणि (पा. २. ३. १२.) इत्येवमेषा कर्मणि चतुर्थी। अश्विनावागमिष्यतः। तावागतौ यक्ष्यामहे। ताविष्टौ कामान्नः संपादयिष्यतः। इत्येवमादिकामानामभिलाषलक्षणानामस्मन्मतीनां पारमन्तं गन्तुम्। युष्मदागमनसंबद्धानस्मदभिलाषान् फलप्राप्तिसंबद्धान कर्तुमित्यर्थः। फलप्राप्त्यन्ता हि सर्वाभिलाषाः। किञ्चास्मान् प्रत्यागन्तुं युञ्जाथाम्। हे अश्विनौ रथम्। यत्र नावा गन्तव्यं जले तत्र नावा अयातम्। यत्र रथेन स्थले तत्र रथेनेत्यर्थः॥ ७

अरित्रं वां दिवस्पृथु तीर्थे सिन्धूनां रथः ।
धिया युयुज्र इन्दवः ॥ ८

अरित्रं वाम्। अर्तिर्गत्यर्थः। गच्छति येन नौः तदरित्रम्। अपल्लक इत्यपभ्रंशेन यन्नाविकानां प्रसिद्धं तत्। वां युवयोः स्वभूतम्। दिवोऽपि सकाशात् पृथु विस्तीर्णतरं। तीर्थे। उत्तरणप्रदेशे। सिन्धूनां नदीनां रथः। जले स्थले च गमनसाधनं युवयोरस्तीत्यर्थः। धिया। धीरिति कर्मनाम। अभिषवादिसंस्कारकर्मणा। युयुज्रे युक्ताः।

इन्दवः सोमाः। अभिषवादिभिः संस्कारैः संस्कृता इत्यर्थः । एतत् ज्ञात्वा गमनसाधनानां गमनप्रयोजनस्य पिपासितस्य सोमस्य विद्यमानत्वात् आगच्छतमित्यर्थः॥ ८

दिवस्कण्वास इन्दवो वसु सिन्धूनां पदे ।
स्वं वव्रिं कुह धित्सथः ॥ ९

दिवस्कण्वासः। दिव इत्यपादानपञ्चमीनिर्देशाद्योग्याक्रियाध्याहारः । दिव आगतयोरश्विनोः हे कण्वासः मत्पितुः कण्वस्यापत्यभूताः मत्पुत्रादयः। अथवा कण्व इति मेधाविनाम। मेधाविन ऋत्विजः मत्पुत्रादयो वा। इन्दवो वसु सोमधनम्। धनतया चात्र तद्वत्त्वं स्वामित्वं प्रतिपाद्यते। दिव आगतावश्विनौ सोमानां स्वामिनौ भविष्यतः। दिव आगताभ्यामाश्विभ्यां वयं सोमं दास्याम इत्यर्थः। क। सिन्धूनां पदे। सिन्धवोऽत्र स्यन्दनादाहुतय उच्यन्ते। तासां पदं स्थानं यज्ञः। तत्र। सर्वाहुतीनां स्थानभूते यज्ञे इत्यर्थः। अथवा सिन्धवोऽत्राप उच्यन्ते।

नाभाकस्य प्रशस्तिभिः सिन्धूनामुपोदय। ऋ. वे. ८. ४१. २.

इति। अथ तासां पदमन्तरिक्षम्। पञ्चम्यर्थे सप्तमी। अपां स्थानादन्तरिक्षात्। दिवो वा अन्तरिक्षाद्वागतयोरित्यर्थः । परः पादः प्रत्यक्षकृतो भिन्नं वाक्यम् । हे अश्विनौ स्वमात्मीयं वव्रिं रूपं कुह स्वस्थाने धित्सथः धारयितुमिच्छथः। स्वशरीरेण वर्तेथे येनास्मद्यज्ञानागच्छथ इत्यर्थः॥ ९

स्यादेतत्। किमेवमतित्वरितोऽसि इत्यत आह—

अभूदु भा उ अंशवे हिरण्यं प्रति सूर्यः ।
व्यख्यज्जिह्वयासितः ॥ १०

अभूदु भाः। उकारावुभावपि पदपूरणौ। अभूत् भाः प्रभा। कस्य। अंशवे। अंशवो रश्मयः। षष्ठीबहुवचनस्य स्थाने इदं चतुर्थ्येकवचनम्। अंशूनामादित्यरश्मीनां हिरण्यं प्रति सूर्यः। प्रतिशब्दोऽत्र सामर्थ्यादुपमायां द्रष्टव्यम्। सूर्योऽपि हिरण्यमिव। सूर्योऽप्युदयाभिमुखीभूत इत्यर्थः। उदयवेलायां हिरण्यसदृशः सूर्यो भवति। हिरण्यसदृशी च भाः अभूच्च। व्यख्यत् विविधं प्रकाशितवान्। किम्। सामर्थ्यात् त्रैलोक्यं वा दिशो वा। केन। जिह्वया। जिह्वास्थानीयत्वादत्र जिह्वा आदित्यदीप्तिरुच्यते। उद्यन् ह्यादित्यो रसानादत्ते जिह्वास्थानीयया दीप्त्येत्यर्थः। असितः। षिञ् बन्धने इत्यस्यैतद्रूपम्। तथाहि वामदेवोऽपि वक्ष्यति।

अनायतो अनिबद्धः कथायं न्यङ्ङुत्तानोऽव पद्यते न। ऋ॰ वे॰ ४. १३. ५.

इति कचिदप्यनिबद्ध इत्यर्थः॥ १०

किंच—

अभूदु पारमेतवे पन्था ऋतस्य साधुया।
अदर्शि वि स्रुतिर्दिवः॥ ११

अभूदु पारम्। अभूत् पारमेतवे गन्तुम्। पन्था। पथिस्थानीयत्वात् आपतत्यनेन यज्ञ इति वा पन्थाः अहरत्राभिप्रेतः। अहरपि प्रवृत्तमित्यर्थः। कस्य पारमेतवे। ऋतस्य यज्ञस्य। कीदृशमहः। साधुया साधु शोभनम्। कथं ज्ञायते। अदर्शि विविधं स्रुतिः सूर्यलोकस्य। एतदुक्तं भवति। अभूत् प्रभा आदित्यरश्मीनाम्। सूर्योऽपि हिरण्यसदृश उदयाभिमुखोऽभूत्। यज्ञपरिसमाप्त्यर्थमहरपि प्रवृत्तम्। अतः परं भवतोर्यागकालोऽतिवर्तते। तेन त्वरमाणो ब्रवीति—

स्वं वव्रिं कुह धित्सथः। ऋ. वे. १. ४६. ९.

येनास्मद्यज्ञं नागच्छथ इत्यर्थः॥ ११

तत्तदिदश्विनोरवो जरिता प्रति भूषति।
मदे सोमस्य पिप्रतोः॥ १२

तत्तदित्। तच्छब्दश्रुतेर्योगार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः। प्रति इत्ययं च कर्मप्रवचनीयः अव इत्येतेन संबन्धयितव्यः। यद्यदुत्कृष्टं तत्तदश्विनोरवः पालनं प्रति जरिता स्तोता भूषति भवति। मदे सोमस्य सोममदे सति। सोमेन मत्तयोः सतोरित्यर्थः। पिप्रतो पूरयित्रोः। कम्। सामर्थ्यात् स्तोतारमेव। एतदुक्तं भवति। यदीयेन सोमेनानश्विनौ आत्मानं तर्पयतः तं यद्यदुत्कृष्टं पालनं तेन तेन पालयत इति॥ १२

वावसाना विवस्वति सोमस्य पीत्या गिरा।
मनुष्वच्छंभू आ गतम्॥ १३

वावसाना विवस्वति। नेदमामन्त्रितम्। प्रत्यक्षकृतश्चायं मन्त्रः। अतो यत्तच्छब्दावध्याहृत्यैकवाक्यता नेया। येन युवां वावसाना। ताच्छील्येऽयं शानच्। अत्यर्थं वसनशीलौ व्यवस्थानशीलौ। विवस्वति। यजमान नामधेयमेतत् शाकपूणिना पठितम्। तेन चात्र स्वगृहं प्रतिपाद्यते। यजमानगृह इत्यर्थः। केन हेतुना।

सोमस्य पीत्या पानेन। गिरा वाचा च स्तुतिलक्षणया। सोमपानार्थं स्तुत्यर्थं चेत्यर्थः तेन मनुष्वत् मनुष्यवत्। शंभू सुखस्य भावयितारौ। अस्मद्गृहमागतमागच्छतम्॥ १३

युवोरुषा अनु श्रियं परिज्मनोरुपाचरत् ।
ऋता वनथो अक्तुभिः ॥ १४

युवोरुषा। युवोरित्येतदन्वित्येतेन संबध्यते। अनुशब्दश्च पश्चाद्भावे। युवयोः पश्चात्। कीदृशयोः। परिज्मनोः। अजतेर्गत्यर्थस्येदं रूपम्। सर्वतोगामिनोः। उषाः श्रियं ज्योतिर्लक्षणं उपाचरत् उपागच्छति प्रतिपद्यते। अश्विनोर्ह्यूर्ध्वं मध्यरात्रात् कालः। ततः परः उषसः। अथवा युवोरित्येतत् श्रियमित्येतेन सम्बध्यते। युवयोः श्रियमुषाः अनूपाचरत् अनुगच्छति। युवयोः श्रिया सदृशीत्यर्थः। किञ्च ऋता यज्ञान् युवां वनथः संभजथः। कीदृशान् अक्तुभिः। अक्तुरिति रात्रिनाम। रात्र्या च तस्याः पर्याया लक्ष्यन्ते। इत्थंभूतलक्षणैषा तृतीया। रात्रिपर्यायैः संबध्दानित्यर्थः। अथवा अक्तुशब्दोऽत्र सोमवचनः।

होतारमक्तोरतिथिं विभावसुम्। ऋ. वे. १०. ९२ १.

इति यथा। सोमः संबध्दान्। सोमयागानित्यर्थः॥ १४

उभा पिबतमश्विनोभा नः शर्म यच्छतम् ।
अविद्रियाभिरूतिभिः ॥ १५

उभा पिबतम्। उभौ युवां पिबतं सोमं हे अश्विनौ। पीत्वा उभौ नः अस्मभ्यं शर्म गृहं सुखं वा यच्छतम्। दत्तमित्यर्थः। अविद्रियाभिः। द्रु विदारणे। सहयोगलक्षणा चैषा तृतीया। अविदारणीभिः अविनाशिनीभिः ऊतिभि पालनैस्सह। स्थिराणि च पालनानीत्यर्थः।

वळभीविनिवास्येतामृगर्थागमसंहृतिम् ।
भर्तृध्रुवसुतश्चक्रे स्कन्दस्वामी यथास्मृति॥ १५

इति स्कन्दस्वामिनः कृतावृग्वेदभाष्ये

तृतीयोऽध्यायः॥

---

## चतुर्थोऽध्यायः ॥

अयं वां मधुमत्तमः सुतः सोम ऋतावृधा ।
तमश्विना पिबतं तिरोअह्न्यं धत्तं रत्नानि दाशुषे ॥ १

आश्विनं प्रथमं सूक्तम् ।

आश्विनमेतदध्यायस्य प्रथमं सूक्तम् । तमश्विनेति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहर्तव्यः । अयं वाम् । तादर्थ्ये एषा चतुर्थी । युवयोरर्थाय । मधुमत्तमः मधुरस्वादुतमः । सुतः सोमः । हे ऋतावृधा यज्ञस्य वर्धयितारौ सुतं हे अश्विनौ पिबतम् । तिरोअह्न्यम् । तार्तीयसवनिकः सोमविशेषस्तिरोऽरो अह्न्यः उच्यते । तं तिरोअह्न्यम् । अथवा तिरस्सन इति पापस्य नामनी । प्राप्तयागाहे भवः तिरोअह्न्यः । तं तिरोअह्न्यम् पीत्वा च धत्तं दत्तं र ानि धनानि दाशुषे यजमानाय ॥ १

त्रिवन्धुरेण त्रिवृता सुपेशसा रथेना यातमश्विना ।
कण्वासो वां ब्रह्म कृण्वन्त्यध्वरे तेषां सु शृणुतं हवम् ॥ २

त्रिवन्धुरेण त्रिवृता । सारथिस्थानं वन्धुर उच्यते । त्रयो वन्धुरा यस्मिन् स त्रिवन्धुरः । तेन त्रिवन्धुरेण । त्रिवृता । त्रिभिश्चक्रैर्वर्तते गच्छतीति त्रिवृत् । तेन त्रिवृता । सुपेशसा । पेश इति रूपनम । सुरूपेण रथेन आयातं हे अश्विनौ । किं कारणम् । उच्यते । कण्वासः कण्वपुत्रा मत्प्रभृतयः वां युवयोः स्तुतिलक्षणं ब्रह्म कृण्वन्ति अध्वरे यज्ञे । तेषां सुष्ठ शृणुतं हवं आह्वानम् ॥ २

अश्विना मधुमत्तमं पातं सोममृतावृधा ।
अथाद्य दस्रा वसु बिभ्रता रथे दाश्वांसमुप गच्छतम् ॥ ३

आश्विना हे अश्विनौ मधुमत्तमं पातं पिबतं सोमं हे ऋतावृधा । अथ । अथेत्यानन्तर्ये । पानानन्तरं च अद्य हे दस्रा वसु यजमानाय यदीप्सितं धनं तत् विभ्रता धारयन्तौ आत्मीये रथे दाश्वांसं यजमानं दानार्थमुपगच्छतं । उपगम्य यजमानाय धनं दत्तमित्यर्थः ॥ ३

त्रिषधस्थे बर्हिषि विश्ववेदसा मध्वा यज्ञं मिमिक्षतम् ।
कण्वासो वां सुतसोमा अभिद्यवो युवां हवन्ते अश्विना ॥ ४

त्रिषधस्थे। सह तिष्ठन्ति येषु देवतास्तानि सधस्थानि। सवनान्यत्राभिप्रेतानि। तानि त्रीणि यस्मिंस्तत्त्रिषधस्थं। सौमिकपरिस्तरणं बर्हिः। अथवाहवनीयादयोऽग्नयः सधस्थाः सहस्थातृत्वात्। ते त्रयो यस्मिन् तत्त्रिषधस्थम्। तस्मिंस्त्रिषधस्थे बर्हिषि। सप्तमीनिर्देशात् व्यवस्थितमिति शेषः। हे विश्ववेदसा सर्वज्ञौ। अथवा विश्वमिति बहुनाम। वेद इत्यपि धननाम। विश्ववेदसा बहुधनौ। मध्वा। उदकनामैतत्। उदकेन। अस्मदीयं यज्ञं मिमिक्षितम्। मिह सेचने। सेक्तुमिच्छतम्। अभिवर्षितुमिच्छतमित्यर्थः। किं कारणम्। उच्यते। यस्मात् कण्वासः वां युवयोरर्थाय सुतसोमाः कृतसोमाभिषवाः अभिद्यवः। द्युशब्दो दिवेर्दीप्त्यर्थस्य दीप्तिवचनः। अभिगता दीप्तिर्यैस्ते अभिद्यवः। ब्राह्मया दीप्त्या दीप्ता इत्यर्थः। अथवा द्यु इत्यहर्नाम। अत्यन्तदुष्प्रापं प्राप्तं यागाहो यैस्ते अभिद्यवः। युवां हवन्ते अश्विना हे अश्विनौ ॥ ४

याभिः कण्वमभिष्टिभिः प्रावतं युवमश्विना।
ताभिः ष्व१स्माँ अवतं शुभस्पती पातं सोममृतावृधा ॥ ५

याभिः कण्वम्। अत्रेतिहासमाचक्षते। कण्वऋषिरन्धो बभूव। स चक्षुष्कामोऽश्विनौ तुष्टाव। तस्मा अश्विनौ चक्षुर्ददतुरिति। तदेतत् कक्षीवान् वक्ष्यति।

युवं कण्वायापरिप्ताय चक्षुः प्रत्यधत्तं सुष्टुतिं जुषाणा। ऋ. वे १. ११८ ७.

इति। तदेवेहाप्युच्यते याभिः कण्वमित्यादिना। याभिरस्मत्पितरं कण्वमभिष्टिभिः। इषेरेतद्रूपम्। युष्मदभ्येषणशीलाभिः। युष्मदन्वेषणपराभिः स्तुतिभिरित्यर्थः। प्रावतं चक्षुःप्रदानेन प्रकर्षेण रक्षितवन्तौ स्थः। युवं हे अश्विनौ। ताभिरेव सुष्ठु अस्मानप्यवतं हे शुभस्पती उदकस्य स्वामिनौ। पातं चास्मदीयेषु यज्ञेषु सोमं हे ऋतावृधा ॥ ५

सुदासे दस्रा वसु बिभ्रता रथे पृक्षो वहतमश्विना।
रयिं समुद्रादुत वा दिवस्पर्यस्मे धत्तं पुरुस्पृहम् ॥ ६

सुदासे। अत्रेतिहासमाचक्षते। सुदा नाम पैजवनो राजा यस्य विश्वामित्र ऋषिः पुरोहितो बभूव। स यष्टुकामः सारवत् प्रभूतं च धनमन्नं चाश्विनौ ययाचे। तस्मै रथेनानीयाश्विनौ धनमन्नं च ददतुरिति। तदेतदिहोच्यते सुदासे दस्रेति। सुदासो राज्ञोऽर्थाय हे दस्रा वसु बिभ्रतौ। रथे पृक्षः अन्नानि च वहतं प्रापितवन्तौ स्थः हे अश्विनौ। तदेतत् कुत्सोऽपि वक्ष्यति ॥

याभिस्सुदास ऊहथुः सुदेव्यम्। ऋ. वे. १. ११२. १९.

इति। परस्त्वर्धर्चो याच्ञार्थत्वात् भिन्नं वाक्यम् । यत्तच्छब्दावध्याहृत्यैकवाक्यता योज्या। यौ सुदासे वहतं तौ रयिं धनं समुद्रात् । समुद्र इत्यन्तरिक्षनाम । अन्तरिक्षात्। उत वा दिवः अपि वा द्युलोकात् । पञ्चमीनिर्देशादाहृत्येति वाक्यशेषः। परिशब्दस्तु अधिपरी अनर्थकौ (पा. १. ४. ९३) इत्येवं कर्मप्रवचनीयः पदपूरणः। अस्मे अस्मभ्यं धत्तं दत्तम्। कीदृशम्। पुरुस्पृहं बहूनां स्पृहणीयम्॥ ६

यन्नासत्या परावति यद्वा स्थो अधि तुर्वशे ।
अतो रथेन सुवृता न आ गतं साकं सूर्यस्य रश्मिभिः ॥ ७

यन्नासत्या । यच्छब्दोऽत्र यदिशब्दस्यार्थे। यदि हे नासत्या परावति दूरे। अमुष्मिन् लोक इत्यर्थः। यदि वा स्थः अधि तुर्वशे । अधिशब्द अधिपरी अनर्थकौ ( पा. १. ४. १३. ) इत्येवं कर्मप्रवचनीयः पदपूरणः। तुर्वशे । तुर्वश इत्यन्तिकनाम अन्तिके। सन्निकृष्टे अस्मिन्नेव लोके इत्यर्थः। अतोऽस्माद्दूरादन्तिकाद्वा रथेन सुवृता सुगतिना नः अस्मान् प्रत्यागतं आगच्छतम्। साकं सूर्यस्य रश्मिभिः । सहयोगित्वमात्रमत्र रश्मीनाम्। अश्विनोरेव तु प्राधान्यम् ॥ ७

अर्वाञ्चा वां सप्तयोऽध्वरश्रियो वहन्तु सवनेदुप ।
इषं पृञ्चन्ता सुकृते सुदानव आ बर्हिः सीदतं नरा ॥ ८

अर्वाञ्चा वां अस्मदभिमुखा युवां सप्तयः। सप्तिरित्यश्वनाम। अश्वाः अध्वरश्रियः। अध्वरं संश्रयन्तीत्यध्वरश्रियः। यज्ञसम्बद्धा इत्यर्थः। अथवा अध्वर इति ध्वरतेः हिंसाकर्मणः क्रियावचनः। अनुपहिंसिता श्रीर्येषां तेऽध्वरश्रियः। लक्ष्मीवन्तः दर्शनीया इत्यर्थः। वहन्तु सवनेदुप । सवनशब्दो यज्ञनाम वा तद[illegible]स्सवनमाध्यन्दिनसवनतृतीयसवनवचनो वा । इच्छब्दः पदपूरणः । सवनान्युप यज्ञानां वा तदवयवानां प्रातस्सवनादीनां वा समीपे इत्यर्थः। ऊढौ च सन्तौ युवां इषमन्नं पृञ्चन्ता। पृचिरत्र सामर्थ्याद्दानार्थे। ददन्तौ। तस्मै सुकृते सुदानवे शोभनानां सुकृतीनां कर्त्रे शोभनानां च हविषां दात्रे यजमानाय। आ बर्हिस्सीदतं आसीदतमिदं बर्हिः हे नरा ॥ ८

तेन नासत्या गतं रथेन सूर्यत्वचा ।
येन शश्वदूहथुर्दाशुषे वसु मध्वः सोमस्य पीतये ॥ ९

तेन नासत्या हे नासत्यौ आगतं रथेन सूर्यत्वचा सूर्यसदृशवर्णेन । हिरण्यखचितत्वादत्यन्तोज्ज्वलेनेत्यर्थः । येन शश्वत् । बहुनामैतत् । बहु ऊहथुः प्रापितवन्तौ स्थः । दत्तवन्तावित्यर्थः । दाशुषे वसु । किमर्थम् । मध्वस्सोमस्य पीतये मधुस्वादस्य सोमस्य पीतये पानाय ॥ ९

उक्थेभिरर्वागवसे पुरूवसू अर्कैश्च नि ह्वयामहे ।
शश्वत्कण्वानां सदसि प्रिये हि कं सोमं पपथुरश्विना ॥ १०

उक्थेभिरर्वाक् स्तोत्रैः शस्त्रैश्चार्वागात्माभिमुखमवसे सोमेन तर्पणाय । पूरूवसू बहुधनौ । अर्कैश्च मन्त्रैश्चान्यैरपि यजुर्लक्षणैः । निह्वयामहे नियतं ह्वयामः । किं कारणम् । उच्यते । यस्मात् शश्वत् । नित्यपर्यायोऽयं शश्वच्छब्दः । नित्यमस्माकं कण्वानां स्वभूते सदसि प्रिये इष्टे । कस्य सामर्थ्यात् युवयोरश्विनोरस्माकमेव वा कण्वानाम् । हिशब्दस्तु पदपूरणः । कं सुखं सोमं पपथुः हे अश्विनौ । यस्मात् पूर्वेष्वपि कालेषु नित्यमस्मदीयेषु सदस्सु सोमान् पीतवन्तौ स्थः तस्मादुत्पन्नप्रणयत्वादिदानीमपि नियतं ह्वयाम इत्यर्थः ॥ १०



सह वामेन न उषो व्युच्छा दुहितर्दिवः ।
सह द्युम्नेन बृहता विभावरि राया देवि दास्वती ॥ १

उषस्ये द्वे ।

एते सूक्ते उषोदेवत्ये । वाममत्रान्नमभिप्रेतम् । सह वामेन वननीयेनात्यन्तोत्कृष्टेनान्नेन । नः अस्माकमर्थाय हे उषः व्युच्छ विविधं तमांसि विवासय । प्रकाशं कुर्वित्यर्थः । हे दुहितर्दिवः । आदित्यतेजसो दिवि जायमानत्वादुषा दिवो दुहिता । तेनैवमामन्त्र्यते हे दिवो दुहितरिति । न च केवलेनान्नेनैव । किंतर्हि । सह द्युम्नेन । द्युम्नं द्योततेर्यशः इहाभिप्रेतम् । यशसा च सह । कीदृशेन । बृहता महता । हे विभावरि रायो धनेन च हे देवि दास्वती दानवती । अन्नयशोधनानि अस्मभ्यं ददती व्युच्छेत्यर्थः १

अश्वावतीर्गोमतीर्विश्वसुविदो भूरि च्यवन्त वस्तवे ।
उदीरय प्रति मा सूनृता उषश्चोद राधो मघोनाम् ॥ २

अश्वावतीः अश्वैस्तद्वत्यः उषसः । गोमतीर्गोभिश्च तद्वत्यः । अश्वान् गाश्च स्तोतृभ्यो ददत्य इत्यर्थः । विश्वसुविदः सर्वस्य भूतजातस्य सुष्ठु वेदयित्र्यः । प्रका-

शिका इत्यर्थः । स्वयमेव वा वेदिभ्यः । भूरि बहु च्यवन्त । च्यवतिर्गतिकर्मा । गतवत्यः । समस्तं त्रैलोक्यं प्राप्तवत्य इत्यर्थः । किमर्थम् । वस्तवे । वस आच्छादने । स्वज्योतिषा तमसामाच्छादनाय । प्रकाशनायेत्यर्थः । परोऽर्धर्चः प्रत्यक्षकृतत्वात् भिन्नं वाक्यम् । उदीरय प्रेरय प्रति मा मां प्रति सूनृताः । अपठितमपि वाङ्नामैतत् । स्तुतिलक्षणा वाचः । मम वाचः प्रति प्रेरय येनाहं त्वां प्रभूताभिः स्तुतिभिः स्तौमीत्यर्थः । अथवा सूनृतेत्युषोनाम । यत्तच्छब्दावध्याहृत्य पूर्वेणार्धर्चेन सहैकवाक्यतैवं योज्या । या अश्वावतीत्यादिगुणा भूरि च्यवन्त वस्तवे तास्त्वमुदीरय मां प्रति सूनृताः प्रकाशरूपा उषसः । हे उषः । प्रकाशरूपाणामुषसां अधिष्ठात्र्या अधिदेवताया इदमुषःशब्देन संबोधनम् । चोद राधः । धनं च देहीत्यर्थः । मघोनां धनवतां यष्टॄणां स्वभूतम् । ये धनवन्तो न यजन्ते तेभ्योऽपहृत्येत्यर्थः । अथवा मघशब्दोऽत्र हविर्लक्षणे धने वर्तते । षष्ठीनिर्देशाद्योग्यमिति शेषः । हविर्लक्षणेन धनेन धनवतामस्मादृशां योग्यम् । यष्टॄणां यद्योग्यमित्यर्थः ॥ २

उवासोषा उच्छाच्च नु देवी जीरा रथानाम् ।
ये अस्या आचरणेषु दध्रिरे समुद्रे न श्रवस्यवः ॥ ३

उवासोषाः । प्रागपररात्रादुवास रात्र्या सहोषितवत्युषा । रात्रावेवानुप्रविष्टा अदृश्यरूपाभवदित्यर्थः । उच्छाच्च व्युष्टवती चापररात्रे । नु क्षिप्रम् । कीदृशी । देवी दानादिगुणा । जीरा रथानाम् । जीर इति क्षिप्रनाम । रथो रंहतेर्गतिकर्मणो गन्तेहाभिप्रेतः । निर्धारणे च षष्ठी । क्षिप्रा गन्तॄणां मध्ये । अथवा रथानामिति षष्ठीनिर्देशात् सकाशादिति वाक्यशेषः । क्षिप्रा रथानामपि सकाशात् । कस्य उवासोषा उच्छाच्च । उच्यते । ये अस्या आचरणेषु दध्रिरे । आ इत्येष परीत्येतस्य स्थाने । परिचरणेषु दध्रिरे आत्मानं धारितवन्तः । परिचर्यायां स्थिता इत्यर्थः । कथम् । समुद्रे न श्रवस्यवः । श्रव इति धननाम । तत्कामाश्रवस्यवः वणिजः । यथात्यन्तधनाशया समुद्रे वणिजो व्यवतिष्ठन्ते तद्वत् । य एवोषसं परिचरन्ति तेषामेव सा उवास उच्छाच्च तत्कार्यकरत्वान्नेतरेषां यष्टॄणामित्यर्थः ॥ ३

उषो ये ते प्र यामेषु युञ्जते मनो दानाय सूरयः ।
अत्राह तत्कण्व एषां कण्वतमो नाम गृणाति नृणाम् ॥ ४

उषो ये ते । हे उषः ये ते तुभ्यं यामेषु यज्ञेषु युञ्जते आत्मीयं मनो हविषां दानाय । ये तुभ्यं यज्ञेषु हवींषि ददतीत्यर्थः । सूरयः स्तोतारः । अत्र । पृथिव्या-

रसन्निहिताया अयं प्रतिनिर्देशः । अत्र पृथिव्यां अह । अहशब्दो विनिग्रहार्थीयः एवशब्दस्यार्थे कण्वशब्दाच्च परो द्रष्टव्यः । तदेषां नृणामिति समानाधिकरणास्त्रयो निर्धारणषष्ठ्यन्ताः। तेषामेषां मनुष्याणां मध्ये कण्म एव कण्वतमो नाम गृणाति। कण्व- इति सोऽयमित्यभिसम्बन्धात् पितृशब्दः पुत्रे प्रयुज्यते । आत्मन एवायं परोक्षरूपेण प्रथमपुरुषेणाभिधानम् । कण्वतम इति कण्शब्दो मेधाविनाम । अतिशयेन मेधावी कण्वतमः । अयं कण्वपुत्रः प्रस्कण्वो नाम मेधावितमस्तत्र नाम स्तौतीत्यर्थः । नाम- स्तुत्या चात्र नामवतामेव स्तुतिः प्रतिपाद्यते । त्वां स्तौतीत्यर्थः । स्तोतारस्तुभ्यं यज्ञेषु हवींषि ददति । समस्तायामेतस्यां पृथिव्यां तेषां मध्ये अहमेव कण्वपुत्रस्त्वा- मतिशयेन स्तौमि नान्यः कश्चिदिति समस्तार्थः ॥ ४

आ घा योषे॑व सूनर्यु॒षा या॑ति प्रभुञ्ज॒ती ।

जर॒यन्ती॒ वृज॑नं प॒द्वदी॑यत॒ उत्पा॑तयति प॒क्षिण॑: ॥ ५

आ घा योषेव । आ इत्युपसर्गो यातीत्याख्यातेन संबध्यते । घेति पदपूरणः । योषेव यथा काचित् स्त्री एवम् । सूनरी । शोभना नरा यस्याः स्तोतृत्वेन यष्टृत्वेन च सन्ति सा सूनरी । उषाः आयात्यागच्छति । उदित्येत्यर्थः । प्रभुञ्जती । भुजपालना- भ्यवहारयोः । स्वेन ज्योतिषा कृत्स्नं जगत् प्रकर्षेण पालयन्ती । जरयन्ती वृजनम् । बलं कालेन हि प्राणिनां जीर्यते । कालं चोषा अतिपातयति । अत एवमुच्यते जरयन्ती वृजनं इति । कथं पुनरायाति । उच्यते । पद्वदीयते । शुद्धोऽप्ययमियतिः सोपसर्गार्थो द्रष्टव्यः । यथा कश्चित् पादवानागच्छेत तद्वदागच्छति । उत्पातयति च चटकप्रभृतीन् पक्षिणः । चटकादयो हि पक्षिणः उषउदयवेलायां स्वेभ्य आवासकेभ्य उत्पतन्ति । अतस्तानुषा एवोत्पातयति इत्युच्यते ॥ ५

वि या सृ॒जति॒ सम॑नं॒ व्य॑१॒र्थिन॑: प॒दं न वे॒त्योद॑ती ।

वयो॒ नकि॑ष्टे पप्ति॒वांस॑ आसते॒ व्यु॑ष्टौ वाजिनीवति ॥ ६

वि या सृजति । या विसृजति । विसर्गो ह्यनुज्ञा । अनुजानाति । किम् । सम- नम् । संग्रामनामैतत् । संग्रामम् । उषउदयोत्तरकालं ह्युक्षादयो योद्धारो युध्यन्ते । अत उषा एव संग्राममनुजानातीत्युच्यते । अथवा समनमिति संपूर्वस्य मनेर्वा ज्ञाना- र्थस्य अनेर्वा प्राणार्थस्य रूपम् । ज्ञानं प्राणं वेत्यर्थः । उभयमपि ह्येतदुषउदयोत्तरकाले प्रवर्तते । न च केवलं समनम् । किं तर्हि । व्यर्थिनः अर्थिनः कार्यवन्तः । कार्यवन्तश्च कार्येषु विसृजन्ति । सर्वे हि कार्यवन्तः स्वकार्येषूषउदयोत्तरकालं प्रवर्तन्ते । यच्छब्द-

श्रुतेस्तच्छब्दोऽध्याहार्यः ॥ सा पदं न वेति । वेतिर्गतिकर्मा । यथा कश्चिदेकं पदं गच्छेत्तद्वत् क्षणेन गच्छति । का । ओदती । उषोनामैतत् । उषाः । परोऽर्धर्चः प्रत्यक्षकृतो भिन्नं वाक्यम् । वयो नकिष्टे पप्तिवांसः । पप्तिवांस इति ताच्छील्ये क्वसु-र्द्रष्टव्यः । पक्षिणः पतनशीलाः तव व्युष्टौ स्वेष्वावासकेषु न आसते । त्वदुदय-वेलायां स्वेभ्य आवासकेभ्य उत्पतन्तीत्यर्थः । हे वाजिनीवति । उषोनामैतत् । उषः ॥ ६

एषायुक्त परावतः सूर्यस्योदयनादधि ।

शतं रथेभिः सुभगोषा इयं वि यात्यभि मानुषान् ॥ ७

एषा अयुक्त युक्तवत्यश्वान् रथेषु । युक्त्वा च परावतः । दूरनामैतत् । दूरात् । कुतः । सूर्यस्योदयनात् । "कृत्यल्युटो बहुलम् (पा. ३. ३. ११३) इति उपादानेऽयं ल्युट् द्रष्टव्यः । यतः स्थानात् सूर्य उदेति ततः । अधिशब्दस्तु अधिपरी अनर्थकौ (पा १. ४ ९३) इति कर्मप्रवचनीयः पदपूरणः । शतं रथेभिः । शतमिति तृतीयार्थे द्वितीया । शतेन रथैः । सुभगा सुधना उषा इयम् । वियाति विविधं गच्छति । अभि मानुषान् । मनुष्यान् प्रति । इतश्चेतश्च पार्थिवं लोकं स्वभासा व्याप्नोतीत्यर्थः ॥ ७

विश्वमस्या नानाम चक्षसे जगज्ज्योतिष्कृणोति सूनरी ।

अप द्वेषो मघोनी दुहिता दिव उषा उच्छदप स्रिधः ८

विश्वमस्याः । विश्वं सर्वमस्या ननाम प्रणतम् । चक्षसे दर्शनाय । जगत् । सर्वस्य जगत एतदायत्तं दर्शनीयमित्यर्थः । ज्योतिश्चेयं कृणोति सूनरि । किञ्च द्वेषः सर्वप्राणिद्वेष्यं तमः । मघोनी धनवती । दुहिता दिव उषाः अपोच्छति । तमश्च विवासयतीत्यर्थः । न च केवलं तमः । किं तर्हि । अप स्रिधः । स्रेधतिः क्षयार्थः शोषणार्थो वा । क्षपयितॄन् शोषयितॄन् वा । कान् । सामर्थ्यात् नक्तंचरान् रक्षआदीन् । रक्षआदीनपि विवासयतीत्यर्थः ॥ ८

उष आ भाहि भानुना चन्द्रेण दुहितर्दिवः ।

आवहन्ती भूर्यस्मभ्यं सौभगं व्युच्छन्ती दिविष्टिषु ॥ ९

हे उषः आभाहि दीप्यस्व भानुना । दीप्तिर्भानुरुच्यते । तेन भानुना चन्द्रेण । चदि ह्लादने । ह्लादयित्रा । सुखकरेणेत्यर्थः । हे दुहितर्दिवः । कथं च पुनराभाहि ।

आवहन्ती आनयन्ती । भूरि बहु । अस्मभ्यमस्मदर्थम् । सौभगं शोभनं धनम् । प्रभूतमस्मभ्यं शोभनं धनं ददातीत्यर्थः । व्युच्छन्ती च दिविष्टिषु । दिवमिष्यते याभिर्गन्तुं ता दिविष्टयः । तासु । अस्मदीयेषु यज्ञेष्वित्यर्थः ॥ ९

विश्वस्य हि प्राणनं जीवनं त्वे वि यदुच्छसि सूनरि ।
सा नो रथेन बृहता विभावरि श्रुधि चित्रामघे हवम् ॥ १०

विश्वस्य हि । हिशब्दः पदपूरणः । सर्वस्य प्राणिजातस्य प्राणनं जीवनं च त्वे त्वयि त्वदायत्तम् । सर्वे प्राणिनस्त्वत्प्रसादात् प्राणन्ति जीवन्ति चेत्यर्थः किं करोषि । उच्यते । वियदुच्छसि । यत् या त्वं व्युच्छसि तमांसि विवासयसि । हे सुनरि । या चैवंरूपासि सा नः अस्माकं रथेन बृहता । तृतीयानिर्देशादत्रागन्तुमिति शेषः । महता रथेनास्मान् प्रत्यागन्तुं हे विभावरि दीप्तिमति । श्रुधि शृणु । हे चित्रामघे हे चित्रधने उषः । उषोनामैव वा चित्रामघशब्दः । हवमाह्वानम् ॥ १०

उषो वाजं हि वंस्व यश्चित्रो मानुषे जने ।
तेना वह सुकृतो अध्वराँ उप ये त्वा गृणन्ति वह्नयः ॥ ११

हे उषः वाजमन्नम् । हिशब्दस्तु पदपूरणः । वंस्व । सामर्थ्यात्

वंस्वा नो वार्या पुरु । ऋ वे ८. २३ २७.

इत्यादिप्रयोगदर्शनाच्च वनिरत्र दानार्थः । देहि । कीदृशो वाजः । उच्यते । यश्चित्रः पूज्यः । मानुषे जने मनुष्यलोके । तेन दत्तेन उपावह । सुकृतः शोभनान्नान् स्वर्गादिफलावाप्तिकरणान् । अध्वरान् यज्ञान् । कस्य । ये त्वा गृणन्ति स्तुवन्ति । वह्नयः स्तुतीनां वोढारो मत्प्रभृतयः । यच्छब्दश्रुतेस्तेषामित्यध्याहार्यः । तेनान्नेन स्तोतॄन् यज्ञकरणसमर्थान् कुर्वित्यर्थः । अथवा तेनेति हेतौ तृतीता । तेन हविर्भूतेन हेतुना तदन्नं हविर्भूतमुपभोक्तुमित्यर्थः । आवह । कान् । आत्मसहचारिणो विश्वान्देवान् । कुत एतत् ।

विश्वान्देवान् आवह ।

इत्युत्तरस्यामृचि दर्शनात् । कीदृशान् । सुकृतः शोभनकर्मकारिणः । क्व । अध्वरानुप । उपशब्दः सामर्थ्यात् प्रतिशब्दस्यार्थे । यज्ञान् प्रति यज्ञेष्वित्यर्थः । कस्य स्वभूतेषु । उच्यते । ये त्वा गृणन्ति वन्हयः तेषाम् ॥ ११

विश्वाँ देवाँ आ वह सोमपीतयेऽन्तरिक्षादुषस्त्वम् ।
सास्मासु धा गोमदश्वावदुक्थ्य१मुषो वाजं सुवीर्यम् ॥ १२

विश्वान् देवान् आत्मसहचारिणो विश्वान्देवानावह सोमपीतये अन्तरिक्षात्। हे उषस्त्वम्। उषस एवात्र प्राधान्यं सहचारित्वमात्रं विश्वेषां देवानाम्। सास्मास्विति तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः। यां त्वामेवमवोचाम सा अस्मासु धाः स्थापय। अस्मभ्यं देहीत्यर्थः। गोमदश्ववत् उकूथ्यं प्रशस्यं हे उषः। वाजमन्नं सुवीर्यं शोभनवीर्यसहितं शोभनवीर्यं वा ॥ १२

यस्या रुशन्तो अर्चयः प्रति भद्रा अदृक्षत ।
सा नो रयिं विश्ववारं सुपेशसमुषा ददातु सुग्म्यम् ॥ १३

..........................................................................

सुपेशसम्। पेश इति रूपनाम। सुरूपम्। उषा ददातु सुग्म्यम्। सुखनामैतत्। सुखं च। अथवा रयेरेवैतद्विशेषणम्। सुखकरं रयिम् ॥ १३

ये चिद्धि त्वामृषयः पूर्व ऊतये जुहूरेऽवसे महि ।
सा न स्तोमाँ अभि गृणीहि राधसोषः शुक्रेण शोचिषा ॥ १४

येचिद्धि त्वाम्। सा न इति तच्छब्दे नोषसः प्रतिनिर्देशात् ये इति यच्छब्द उषोविषयो द्रष्टव्यः। व्यत्ययेन पुंलिङ्गता। द्वितीयैकवचनस्य स्थाने प्रथमाबहुवचनम्। चिच्छब्दः पदपूरणः। यां त्वामृषयः पूर्वे ऊतये। अवतिरत्र गत्यर्थः। स्वयज्ञान् प्रति गमनाय। जुहुरे हुतवन्तः। अवसे तर्पणाय हविर्भिः। हे महि महति। सा नः स्तोमं अभिगृणीहि अभिष्टुहि। राधसा धनेन। धनं देहीत्यर्थः। धनदानेन तुष्टिप्रकाशनात् स्तोमा अभिष्टुता भवन्ति। न च केवलेन राधसा। किं तर्हि। हे उषः शुक्रेणशोचिषा शुक्रवर्णया च स्वदीप्त्या। नित्यं चास्मान् प्रति शुक्रेण ज्योतिषा व्युच्छेत्यर्थः। अथवा ये चिद्धि त्वां सा नः स्तोमानिति श्रुतौ यच्छब्दतच्छब्दौ परस्परसंबन्धासंभवाद्योग्यार्थसंबन्धावन्यौ यच्छब्दतच्छब्दावध्याहृत्य निराकांक्षीकर्तव्यौ। ये त्वामृषयः पूर्वे जुहुरे तेषामिव यां त्वामस्तोष्मः सा नः अस्माकमपि स्तोमान् अभिगृणीहि राधसा इति ॥ १४

उषो यदद्य भानुना वि द्वारावृणवो दिवः ।
प्र नो यच्छतादवृकं पृथु छर्दिः प्र देवि गोमतीरिषः ॥ १५

उषो यत्। हे उष यां त्वामद्य स्वेन भानुना द्वारेण पूर्वापरे द्वे अपि द्वारे विऋण वः। ऋणगतौ। विविधं गच्छसि। तस्य द्वारौ दिवः द्युलोकस्य। कृत्स्नां दिवं

स्वज्योतिषा व्याप्नोषीत्यर्थः। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः। सा प्र नो यच्छतात् प्रयच्छतात् प्रयच्छास्मभ्यं अवृकम्। कुक वृक आदाने। परैरनादेयं पृथु विस्तीर्णं छर्दिः गृहम्। न च केवलम्। किं तर्हि। प्रयच्छ हे देवि गोमतीरिषः गोसंयुक्तान्यन्नान्यपि॥१५

सं नो॑ रा॒या बृ॑ह॒ता वि॒श्वपे॑शसा मिमि॒क्ष्वा समिळा॑भि॒रा ।
सं द्यु॒म्नेन॑ विश्व॒तुरो॑षो महि॒ सं वाजै॑र्वाजिनीवति ॥ १६

सं नो राया। नः अस्मान् प्रति राया बृहता विश्वपेशसा बहुरूपेण सर्वरूपेण वा। संमिमिक्ष्व। म्यक्षतेर्गतिकर्मण एतद्रूपम्। सामर्थ्याच्चात्र म्यक्षतिरन्तर्णीतण्यर्थो द्रष्टव्यः। संगमय संबन्धय। धनमस्मभ्यं देहीत्यर्थः। न च केवलेन राया। किं तर्हि। समिळाभिरा। इळेत्यन्ननाम। आकारः समुच्चयार्थः।

देवेभ्यश्च पितृभ्य आ। ऋ. वे. १०. १६. ११.

इति यथा। अन्नैश्च संमिमिक्ष्व। सं द्युम्नेन। द्युम्नं द्योततेर्यश इहाभिप्रेतम्। यशसा च संमिमिक्ष्व। कीदृशेन। विश्वतुरा। तुर्वितिः हिंसार्थः। सर्वशत्रूणां हिंसित्रा। अन्तकर्त्रेत्यर्थः। हे उषः महि सं वाजैः। वाजशब्दोऽत्र बलवचनः। बलैश्च संमिमिक्ष्व हे वाजिनीवति। उषोनामैतत्। उषः। प्रत्युपसर्गं चाख्यातानुषंगाद्दाख्यातभेदाच्च वाक्यभेदाद्वाजिनिवतीत्येतस्योषः इत्येतेन सह पर्यायवत्वेऽप्यपुनरुक्तत्वम्। संबन्धिशब्दो वोषस एव विशेषणम्। वाजिनीशब्दोऽन्ननामधेयम्। अन्नवती। अथवा वाजीत्यश्वनाम। तस्मात् स्त्रियामीकारः। वाजिन्यो बडबास्तद्वती वाजिनीवती ॥ १६

उषो॑ भ॒द्रेभि॒रा ग॑हि दि॒वश्चि॑द्रोच॒नादधि॑ ।
वह॑न्त्वरु॒णप्स॑व॒ उप॑ त्वा सो॒मिनो॑ गृ॒हम् ॥ १

हे उषः भद्रेभिः कल्याणैरश्वैरागहि आगच्छ। कुतः। दिवश्चिद्रोचनादधि। चिच्छब्दः पदपूरणः। रोचनशब्दो दीप्तिवचनः। अधीत्युपरिभावे दिव इत्यनेन च संबन्धयितव्यः। दिवोऽधि दिव उपर्यवस्थिताद्रोचनात् दीप्तादादित्यमण्डलादागच्छ। किंच। वहन्त्वरुणप्सवः। अरुणः आरक्तो वर्णः। प्सुः इति रूपानाम। आरक्तरूपा अश्वाः। कम्। त्वा त्वाम्। क्व। उप सोमिनो गृहम्। उपशब्दः प्रतिशब्दस्यार्थे गृहमित्यनेन च संबन्धयितव्यः। सोमवतो यजमानस्य गृहं प्रति ॥ १

सु॒पेश॑सं सु॒खं रथं॒ यम॒ध्यस्था॑ उष॒स्त्वम् ।
तेना॑ सु॒श्रव॑सं॒ जनं॒ प्राव्ना॒द्य दु॑हितर्दिवः ॥ २

सुपेशसं सुरूपं सुखं च रथं यमध्यस्याः अधिष्ठितवती आरूढवत्यसि । हे उषः त्वं तेना सुश्रवसम् । श्रव इत्यन्ननाम । शोभनं हविर्लक्षणमन्नं यस्य सः सुश्रवाः । तं सुश्रवसं सुहविष्कं यजमानं जनं प्राव प्रकर्षेणागच्छ अद्य । हे दुहितर्दिवः ॥ २

वयश्चित्ते पतत्रिणो द्विपच्चतुष्पदर्जुनि ।
उषः प्रारन्नृतूँरनु दिवो अन्तेभ्यस्परि ॥ ३

वयश्चित्ते । चिच्छब्दोऽत्र उपमायाम् । वय इव पक्षिण इव ते तव स्वभूताः पतत्रिणः । पतनशीला गमनशीला अश्वाः । द्विपच्चतुष्पत् द्विपाच्चतुष्पाच्च प्रति । हे अर्जुनि । अर्धुनः शुक्लो वर्ण उच्यते । शुक्लवर्णे । हे उषः प्रारन् । अर्तिर्गत्यर्थः । प्रकर्षेण गच्छन्ति । ऋतून् । ऋतुशब्दः कालवचनः । अनुशब्दो लक्षणे कर्मप्रवचनीयः प्रतिशब्देन समानार्थः । कालान् प्रति । यो यो गमनकालस्तत्र तत्रेत्यर्थः । कुतः प्रारन् । उच्यते । दिवो अन्तेभ्यः द्युलोकस्यान्तेभ्यः । परिशब्दस्तुधिपरी अनर्थकौ (पा. १. ४. ९३.) इति कर्मप्रवचनीयः पदपूरणः । अथवा परिशब्दोऽन्तशब्दात् पूर्वो द्रष्टव्यः । अकृतसमासोऽपि च कृतसमासार्थे । दिवः पर्यन्तेभ्यः प्रारन् ॥ ३

व्युच्छन्ती हि रश्मिभिर्विश्वमाभासि रोचनम् ।
तां त्वामुषर्वसूयवो गीर्भिः कण्वा अहूषत ॥ ४

व्युच्छन्ती हि । हिशब्दः पदपूरणः । तां त्वामिति च तच्छब्दाद्यच्छब्दोऽध्याहर्तव्यः । यां त्वां व्युच्छन्ती आत्मीयैः रश्मिभिः विश्वमाभासि । अन्तर्णीतण्यर्थोऽयं भातिः सामर्थ्याद्द्रष्टव्यः । सर्वं जगदाभासयसि । प्रकाशयसीत्यर्थः । रोचनं प्रकाशस्वभावकम् । तां त्वां हे उषः वसूयवः धनकामाः गीर्भिः स्तुतिलक्षणाभिः गीर्भिः कण्वा कण्वपुत्रा अहूषत आहूतवन्तः । आत्मन एवेदं परोक्षरूपेण प्रथमपुरुषेणाभिधानम् । अहं कण्वपुत्रः प्रस्कण्वनामा हुतवानित्यर्थः ॥ ४



उदु त्यं जातवेदसं देवं वहन्ति केतवः ।
दृशे विश्वाय सूर्यम् ॥ १

उदुत्यं सौर्यमुत्तरम् ।

सूर्यदेवतमुत्तरं सूक्तम् । तच्छब्दश्रुतेर्योग्यार्थसंबन्धो यच्छब्दोऽध्याहार्यः । यं सर्वप्राणिनो नमस्यन्ति त्यं तं जातवेदसं जातप्रज्ञानं देवं दानादिगुणं उद्वहन्ति ऊर्ध्वं वहन्ति । के । सामर्थ्यादश्वाः । कीदृशाः । केतवः । केतुरिति प्रज्ञानाम । सत्वतत्वाः ।

सूर्यस्य हि स्वयं प्रज्ञानसत्त्वादश्वैरपि प्रज्ञानसत्त्वैरेव भवितव्यम् । अथवा केतवो रश्मयः । प्रज्ञानसत्त्वात् ते उद्वहन्ति । किमर्थम् । दृशे द्रष्टुम् । दर्शनार्थमित्यर्थः । कस्य । विश्वाय । षष्ठ्यर्थे एषा चतुर्थी । सर्वस्य भूतजातस्य । उदिते हि सूर्ये सर्वं भूतजातं द्रष्टुं समर्थं भवति नानुदिते । कमुद्वहन्ति । सूर्यम् ॥ १

अप त्ये तायवो यथा नक्षत्रा यन्त्यक्तुभिः ।

सूराय विश्वचक्षसे ॥ २

त्ये इति नक्षत्रसामानाधिकरण्याद्व्यत्ययेन पुंलिङ्गता । तानीत्यर्थः । तच्छब्दश्रुतेश्च योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । यानि रात्रावदृश्यन्त तानि । तायवो यथा । तायुरिति स्तेननाम । चोरा इव । नक्षत्राणि अपयन्ति अपगच्छन्ति । अदृश्यतां प्रतिपद्यन्त इत्यर्थः । न च केवलानि । किं तर्हि । अक्तुभिः । अक्तुरिति रात्रिनाम । सहयोगलक्षणा चैषा तृतीया । रात्रिभिस्सह । कुतोऽपयन्ति । सूराय । सूरशब्दः सूर्यपर्यायः । पञ्चम्यर्थे चतुर्थी । सूर्यात् । सूर्योदयोत्तरकालं हि नक्षत्राणि रात्रयश्च न दृश्यन्ते । कीदृशात् सूर्यात् । विश्वचक्षसे स्वज्योतिषा सर्वस्य दर्शयितुर्द्रष्टुर्वा ॥ ०२

अदृश्रमस्य केतवो वि रश्मयो जनाँ अनु ।

भ्राजन्तो अग्नयो यथा ॥ ३

अदृश्रम् । लडर्थेऽयं लुङ् । छन्दसि लुङ्लङ्लिटः (पा ३. ४. ६.) इति कर्मणि च प्रथमपुरुषबहुवचनस्य स्थाने व्यत्ययेनेदमुत्तमपुरुषैकवचनम् । दृश्यन्त इत्यर्थः । कुत एतत् । केतव इत्यादिष्वभिहितकर्मत्वनिमित्तायाः प्रथमाया दर्शनात् । के दृश्यन्ते । उच्यते । अस्य सूर्यस्य स्वभूताः केतवः प्रज्ञानतत्वा रश्मयः । विशब्दस्तु भ्राजन्त इत्येतेन संबन्धयितव्यः । क्व दृश्यन्ते । जनान्मनुष्यान् अनु प्रति । मनुष्यान् व्याप्य अवस्थिता इत्यर्थः । विभ्राजन्तः विविधं भ्राजमाना दीप्यमानाः । कथम् । अग्नयो यथा अग्नय इव । अथवा अदृश्रमित्युत्तमपुरुषश्रुतिसामर्थ्यात् रश्मीनां च दर्शनकर्मत्वात् केतव इत्यादिषु द्वितीयार्थे व्यत्ययेन प्रथमा । अदर्शमहमस्य केतून् रश्मीन् जनाननु विभ्राजमानानग्नीनिव ॥ ३

तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य ।

विश्वमा भासि रोचनम् ॥ ४

तरणिरिति क्षिप्रनाम । क्षिप्रस्त्वं विश्वदर्शतः सर्वस्य हि दर्शनीयो द्रष्टा वा । ज्योतिष्कृत् ज्योतिषश्च कर्ता त्वमसि । हे सूर्य विश्वमाभासि सर्वं च जगदाभासयसि । रोचनं प्रकाशस्वभावकम् ॥ ४

प्रत्यङ् देवानां विशः प्रत्यङ्ङुदेषि मानुषान् ।
प्रत्यङ् विश्वं स्वर्दृशे ॥ ५

प्रत्यङ् इत्येतस्योदेषीत्येतेन सम्बन्धः । उदेतुश्चेदं सूर्यस्य विशेषणं नोदयतिक्रियायाः । कुत एतत् । पुल्लिङ्गत्वात् । प्रतीच्यां च दिशि सूर्योदयस्यासंभवात् । प्रत्यङ् उदेषि प्राच्यां दिशि पश्चान्मुखः स्थित्वा त्वं उदेषीत्यर्थः । किमर्थम् । देवानां विशः । साकांक्षत्वाद्दृशे इत्येतत् पुरस्ताच्छ्रुतं सर्वत्रानुषक्तव्यम् । दृशेशब्दश्च द्रष्टुमित्यस्यार्थे वर्तते । दृशे विख्ये च (पा. ३. ४. ११) इति तुमर्थे निपातनात् । देवानां स्वभूता या विशः तान् दृशे द्रष्टुम् । पुरस्तादुदितस्य भवतः पश्चादवस्थितान् सर्वदेवान् द्रष्टुमित्यर्थः । न च देवविश एव केवलाः । किं तर्हि । प्रत्यङ्ङुदेषि मानुषान् मनुष्यानपि द्रष्टुम् । प्रत्यङ्विश्वं सर्वं जगत् द्रष्टुं स्वर्दृशे । स्वर्शब्दोऽत्र द्युनाम । द्युलोकंच द्रष्टुम् । यावदिदं किञ्चित् सर्वं पश्चादवस्थितं द्रष्टुं सर्वतः पूर्वं पश्चान्मुखः त्वमुदेषीति समस्तार्थः ॥ ५

येना पावक चक्षसा भुरण्यन्तं जनाँ अनु ।
त्वं वरुण पश्यसि ॥ ६

येन हे पावक पावयितः चक्षसा दर्शनेन ज्योतिराख्येन । भुरण्यन्तम् । भुरण्यतिर्गतिकर्मा । गच्छन्तं सूर्यं जनान् अनु मनुष्यान् प्रति । मनुष्यलोकं प्राप्तवन्तमित्यर्थः । त्वं हे वरुण पश्यसि । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । साकांक्षत्वाच्च वाक्यस्य तेनाद्य वयं स्तुम इति वाक्यशेषः । एवमत्र सत्यपि वरुणस्यामन्त्रणे अथापि प्रत्यक्षकृतास्तोतारो भवन्ति परोक्षकृतानि स्तोतव्यानि (नि. ७. २.) इत्येतेन न्यायेन सूर्यस्यैव प्राधान्यं न वरुणस्य । सौर्यं हीदं सूक्तं न वारुणम् । अथवा सूर्यस्य सूक्तभाक्त्वाद्वरुण इति क्रियाशब्देन सूर्यस्यैवामन्त्रणम् । भुरण्यच्छब्दस्तु क्षिप्रकारिवचनः । क्षिप्रनामसु भुरण्यनामशब्दस्य पाठात् । सर्वनाम्नां चाख्यातजत्वात् । भुरण्यतिः क्षिप्रत्वार्थोऽपि न गतिकर्मैवेति गम्यते । येन हे पावक चक्षसा अनुग्रहात्मकेन दर्शनेन भुरण्यन्तं क्षिप्रं यागान् स्तुतींश्च कुर्वन्तं मनुष्यं जनाननु मनुष्यान्

प्रति वर्तमानम्। मनुष्यमध्यगतमित्यर्थः । त्वं हे वरुण ज्योतिषा कृत्स्नस्य जगत आवरितः सूर्यं पश्यसि। साकांक्षत्वाद्वाक्यस्य पूर्ववत्तेन वयं स्तुम इति वाक्यशेषः। आशीरर्थो वा वाक्यशेषोऽध्याहर्तव्यः । तेनास्मानपि पश्येति । अथवा यच्छब्द-श्रुतेस्तच्छब्दोऽध्याहृत्य पूर्वयर्चैकवाक्यता योज्या। येन चक्षसा भुरण्यन्तं पश्यसि तेन प्रत्यङ्ङुदेषीति। परया वा येन चक्षसा भुरण्यन्तं पस्यासि तेन वि द्यामेषीति॥ ६

वि द्यामे॑षि रज॑स्पृ॒थ्वहा॒ मिमा॑नो अ॒क्तुभि॑ः।
पश्य॒न् जन्मा॑नि सूर्य ॥ ७

द्यां द्युलोकं वि एषि विविधं गच्छसि। रजस्पृथु विस्तीर्णं चान्तरिक्षलोकम्। अहा अहानि मिमानः निर्मिमानः कुर्वन् । केन। अक्तुभिः। अक्तुशब्दोऽयं ज्योति-र्वचनः।

अक्तुनाह्नां वयुनानि साधत्। ऋ. वे २. १९. ३.

इति यथा। आत्मीयैः ज्योतिर्भिः। रश्मिभिर्हि सूर्योऽहानि करोति। अथवा अक्तुसब्दो रात्रिनामैव। सहयोगलक्षणा च तृतीया। अहानि निर्मिमानोऽक्तुभिः रात्रिभिः सह। केन। निर्मिमानः। स्वोदयास्तमयाभ्याम्। उदयेन हि सूर्योऽहानि करोति अस्तमयेन रात्रिम्। पश्यन्ननुग्राह्यतया अनुगृह्णन्नित्यर्थः । जन्मानि जननधर्माणि भूतजातानि हे सूर्य॥ ७

स॒प्त त्वा॑ ह॒रितो॒ रथे॒ वह॑न्ति देव सूर्य ।
शो॒चिष्के॑शं विचक्षण ॥

सप्त त्वा सप्तसंख्याकास्त्वां हरितः । हरिच्छब्दो हरितशब्दपर्यायः नीलवर्ण-वचनः। हरिवर्णा बडबाः। रथे । सप्तमीनिर्देशादत्र स्थितमिति वाक्यशेषः । रथे स्थितं वहन्तिं हे देव सूर्य। कीदृशम्। शोचिष्केशम् । शोचिर्दीप्तिः रश्म्याख्या। सा केशस्थानीया यस्य स शोचिष्केशः । तं शोचिष्केशम् । दीप्तरश्मिकमित्यर्थः । हे विचक्षण सर्वस्य द्रष्टः॥ ७

अयु॑क्त स॒प्त शु॒न्ध्युवः॒ सूरो॒ रथ॑स्य न॒प्त्य॑ः।
ताभि॑र्याति॒ स्वयु॑क्तिभिः॥ ९

ताभिर्यातीति तच्छब्दश्रुतेर्यच्छब्दोध्याहार्यः । अयुक्त युक्तवान् सप्तसंख्याका बडबाः। शुन्ध्युवः। शुन्ध्युरादित्यो भवति शोधनात्। तस्य स्वभूताः। आत्मन एव

स्वभूता इत्यर्थः। अथवा उदकचरो मरुन्नाम यश्शकुनिः स शुन्ध्युरुच्यते। द्वितीयाबहुवचनं चेदम्। मरुसदृशामित्यर्थः। क्रियाशब्दो वा शुन्ध्युशब्दः। शोधयित्रीः शुन्ध्यवः। कोऽयुक्त। उच्यते। सूरः सूर्यः। रथस्य नप्त्यः। नपाच्छब्दस्यापत्यनाम्नोऽयं नप्त्यादेशः। रथस्यापत्यभूतः। अत्र चेतिहासमाचक्षते। पुरा किलानश्वः सूर्यरथः आसीत्। सोऽह्नास्तं गन्तुं नाशक्नेत्। त सूर्योऽह्नास्तं गच्छन्तमैच्छत्। तस्मात् रथात् सप्त हरितवर्णा बडबा अजायन्त। ता एनं अन्हास्तमनयान्निति। तदेतदुच्यते रथस्य नप्त्य इति। अथवा नप्त्य इति तु नप्तृशब्दपर्यायः प्रथमैकवचनान्तं सूर्यस्य विशेषणम्। नप्ता सूर्य इति। कस्य नप्ता। सामर्थ्यादपाम्। अद्भ्यो हि वैद्युतात्मना अग्निर्जायते। अग्नेः सूर्यः। अग्नेर्वा आदित्योऽजायत इति श्रुतिः। अथवा नप्त्य इति क्रियाशब्दो द्वितीयाबहुवचनान्तो बडवानामेव विशेषणार्थः। न न पतन्ति पतन्त्येव यास्ता नप्त्यः। सततगामिनीरित्यर्थः। ताभिर्याति। कीदृशीभिः। स्वयुक्तिभिः। स्वयमेव या रथे युज्यन्ते ताः स्वयुक्तयः। ताभिः स्वयुक्तिभिः॥ ९

उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम्।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम्॥ १०

उदित्युपसर्गो गन्मेत्याख्यातेन संबन्धयितव्यः। वयं तमसस्परि। तमोऽभिभूय व्यवस्थितमित्यर्थः। सौर्यं ज्योतिः पश्यन्तः उत्तरं उन्नततरमत्यन्तोत्कृष्टम्। पश्यन्त इति चायं लक्षणहेत्वो· क्रियायाः (पा. ३, २. १२६) इत्येवं शतृप्रत्ययो हेतौ द्रष्टव्यः। देवेषु देवानां मध्ये सूर्यमुदगन्म ऊर्ध्वं गताः प्राप्ताः। सूर्येण सहैकात्मकतां सूर्यलोकं वा प्राप्ताः स्म इत्यर्थः। प्राप्तिहेतोश्च दर्शनस्य भूतकालत्वात् प्राप्तेरेवायं हेतुभूतकालसंप्रेषितत्वाद्वेत्येवं भूतकालप्रत्ययेनापदेशः। देवश्चेदद्य वर्षिष्यति संपन्नाः शालयः इति यथा। कीदृशं सूर्यम्। उच्यते। ज्योतिरुत्तमम्। उत्तमं हि ज्योतिर्भगवान् सूर्यः। तथाहि वाजसनेयिनां इयमेका ऋगवभृथब्राह्मणे पठ्यते। उद्वयं तमसस्परीति। पाप्मा वै तमः। पाप्मानमेव तमोऽपहते स्वः पश्यन्तः। उत्तरमिति। अयं वै लोकोऽद्भ्य उत्तरोऽस्मिन्नेव लोके प्रतितिष्ठति। देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तममिति। स्वर्गो वै लोकः। सूर्यो ज्योतिरुत्तमः। स्वर्ग एव लोकेऽन्ततः प्रतितिष्ठति अनपेक्षमेत्याहवनीयमुपतिष्ठते। (श. ब्रा. १२. ९. २. ८) इति॥ १०

उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवम्।
हृद्रोगं मम सूर्य हरिमाणं च नाशय॥ ११

उद्यन्नद्येत्युपनिषत् ।

उद्यन्नद्य इत्ययं तृच उपनिषत् । उपनिषदिति विद्योच्यते । रोगघ्नी चेयं विद्याभिप्रेता । तथा हैतिहासिकास्तावदाचक्षते । हृद्रोगदुर्वर्णतामापन्नः प्रस्कण्वस्तृचमपश्यत् इति । बृहद्देवताकारोऽप्याह —

रोगघ्नस्तृच उत्तमः । बृ. दे ३. ११३.

इति । उद्यन्नुद्गच्छन्नद्य हे मित्रमह । महपूजायाम् । मित्राणां पूजयिता पूज्यो वा । आरोहंश्च उत्तरामुदात्ततरां ऊर्ध्वं दिवं हृद्रोगं हृदयरोगं मम हे सूर्य हरिमाणं च हरितवर्णं च नाशय ॥ ११

शुकेषु मे हरिमाणं रोपणाकासु दध्मसि ।

अथो हारिद्रवेषु मे हरिमाणं नि दध्मसि ॥ १२

शुकेषु मे मम स्वभूतं हरिमाणं रोपणाकासु । रोपणाका नाम हरितकटिका । तासु च दध्मसि । आशिषि लिङर्थेऽयं लट् द्रष्टव्यः । निधेयामेत्याशास्महे । अथो हारिद्रवेषु । हारिद्रवा नामात्यन्तशीघ्रगामिनः पक्षिणः । अथो शब्दश्चार्थे । हारिद्रवेषु च मे मम हरिमाणं निदध्मसि ॥ १२

उदगादयमादित्यो विश्वेन सहसा सह ।

द्विषन्तं मह्यं रन्धयन्मो अहं द्विषते रधम् ॥ १३

उदगात् उद्गतोऽयमादित्यः अदितेः पुत्रः । विश्वेन सर्वेण सहसा रश्मिसमूहलक्षणेन बलेन सह । अथवा ये यक्षगन्धर्वादय आदित्यमण्डले निवसन्ति तत्समूहलक्षणमत्र अभिप्रेतम् । यक्षादिभिः परिवृतमित्यर्थः । द्विषन्तं शत्रुं मह्यं रन्धयन् । रध्यतिर्वशगमने । मम वशं नयन्नित्यर्थः । मो अहं द्विषते रधम् । अस्य भगवतः प्रसादान्माहं शत्रोर्वशं गच्छेयम् ॥ १३

—⁘—

अभि त्यं मेषं पुरुहूतमृग्मियमिन्द्रं गीर्भिर्मदता वस्वो अर्णवम् ।

यस्य द्यावो न विचरन्ति मानुषा भुजे मंहिष्ठमभि विप्रमर्चत ॥ १

इच्छन्निन्द्रसमं पुत्रमभ्यध्यादङ्गिरा ऋषिः ।

सव्योऽभीतीन्द्र एवास्य पुत्रोऽस्मादभ्यजायत ॥

इन्द्रतुल्यं पुत्रं कामयमानोऽभिध्यानमकरोदङ्गिरा ऋषिः । तस्य सव्यो नाम अभित्यंमेषमित्येवमादेर्द्रष्टा इन्द्र एव योगबलेन तस्मादभिध्यानात् पुत्रोऽजायत । पुत्रतामापन्न इत्यर्थः । तस्येन्द्रस्य सव्यतामापन्नस्यैतदार्षम् ।

ऐन्द्रः सव्यः शतर्चिषु ।
प्रथमे मण्डले ज्ञेया ऋषयस्तु शतर्चि नः ।

इति । प्रथमे मण्डले ऋषयः शतर्चिन उच्यन्ते । निर्धारणे चैषा सप्तमी द्रष्टव्या । शतर्चिनां मध्ये सव्यसंस्तव ऐन्द्रः प्रत्येतव्यः । अभीत्युपसर्गो मदतेत्याख्यातेन संबन्धयितव्यः । त्यं मेषमित्यत्रेतिहासमाचक्षते । मेध्यातिथिः किलेन्द्रमुवाच मेषरूपो भूत्वा मामुपगच्छेति । स तं मेषो भूत्वा उपजगाम । तद्वक्षति ।

इत्था धीवन्तमाद्रिवः काण्वं मेध्यातिथिम् ।
मेषोभूतोऽभियन्नयः । ऋ. वे. ८. २. ४०.

इति । तदिदमत्रोच्यते । मेषमितीन्द्रस्याभिधानम् । तं मेषं मेषरूपं पुरुहूतं बहुभिर्यजमानैराहूतं ऋग्मियम् । ऋचस्तुतौ । अर्चनमृक् स्तुतिः । तद्वन्तं ऋग्मियम् । अर्चनीयं वा इन्द्रम् । गीर्भिः स्तुतिलक्षणाभिर्वाग्भिः अभिमदत । पनति मदति सरतीत्यचतिकर्मसु पाठात् अर्चतिकर्मायम् । पुत्रादीनां वायं प्रैषः सहायानां वर्त्विजाम् । मया सहाभिष्टुत हे मत्पुत्राद्य ऋत्विजो वा । कीदृशम् । वस्वो धनस्य अर्णवं समुद्रस्थानीयम् । समुद्रवद्धनानामाश्रयमित्यर्थः । कस्य । इन्द्रस्य । किम् । उच्यते । यस्य द्यावः द्युलोकाः न विचरन्ति । न विगच्छन्ति । नातिक्रामन्तीत्यर्थः । किम् । मानुषा मननानि ज्ञानानि अभिप्रायलक्षणानि । यस्य सर्वं द्युलोकं वशवर्ति इत्यर्थः । अथवा द्यावो नेति नशब्द उपरिष्टादुपाचार उपमार्थीयः । मानुषशब्दोऽपि मनुष्यजातिवचनः । यस्य स्वभूतानि यष्टृणि मानुषाणि द्यावो न द्युलोका इव । यथा द्युलोका दीप्तिमन्तः एवं दीप्तित्युक्तानि विचरन्ति । समस्तायां पृथिव्यां परिभ्रमन्तीत्यर्थः । किमर्थमभिष्टवाम । उच्यते । भुजे पालनायात्मनः । मंहिष्ठम् । मंहतिर्दानकर्मा । दातृतमम् । विप्रं मेधाविनं अभ्यर्चत अभिष्टुत ॥ १

अभीमवन्वन्त्स्वभिष्टिमूतयोऽन्तरिक्षप्रां तविषीभिरावृतम् ।
इन्द्रं दक्षास ऋभवो मदच्युतं शतक्रतुं जवनी सूनृतारुहत् ॥ २

ईशब्द एनमित्यस्यार्थे । एनमभ्यवन्वन् । वनतेः संभक्त्यर्थस्यैतद्रूपम् । संभक्तवत्यः । सेवितवत्य इत्यर्थः । स्वभिष्टिम् । यजेरिषेर्वैतद्रूपम् । सुष्ठुभियष्टव्यं सुष्ठु वाभ्येषणशीलं शत्रूणाम् । ऊतयः । ऊतिशब्दोऽत्र पालनाद्गमनाद्वा मरुदादिसेनासु वर्तते । मरुदादिसेनाः । अन्तरिक्षप्राम् । प्रा पूरणे । स्वबलेनान्तरिक्षस्य पूरयितारम् । तविषीभिः अन्यैरपि बलैः आवृतं परिवृतम् । कम् । इन्द्रम् । न च

केवला ऊतयः । किं तर्हि । दक्षास ऋभवः । दक्षतिरुत्साहार्थीयः । उत्साहिन ऋभवः । अथवा दक्षशब्दोऽत्रात्मपर्यायः ।

श्रेयांसं दक्षं मनसा जगृभ्यात् । ऋ. वे. १०. ३१. २.

इति यथा । सामर्थ्याच्चान्तर्णीतमत्वर्थः । आत्मवन्तः । आत्मवत्तया चात्र यत्नवत्ता लक्ष्यते । सर्वार्थेषु यत्नवन्त ऋभवः इत्यर्थः । मदच्युतम् । मदः सोमः मदकरत्वात् । तं प्रति च्यवते गच्छतीति मदच्युत् । तं मदच्यतम् । अथवा मदो गर्वः । च्यवतिरपि सामर्थ्यादन्तर्णीतण्यर्थः । शत्रूणां मदस्य गर्वस्य च्यावयितारम् । किंच । शतक्रतुं बहुकर्माणं बहुप्रज्ञं वा इन्द्रम् । जवनी वेगेन गन्त्री सूनृता स्तुतिलक्षणा वाक् । स्तोतुमारुहत् आरोहति आरूढवती वा । अथवा सूनृता माध्यमिका वाक् । सेन्द्रमारुहत् मेघवधकाले व्याप्नोतीत्यर्थः ॥ २

त्वं गोत्रमङ्गिरोभ्योऽवृणोरपोतात्रये शतदुरेषु गातुवित् ।
ससेन चिद्विमदायावहो वस्वाजावद्रिं वावसानस्य नर्तयन् ॥ ३

त्वं गोत्रम् । मेघनामैतत् । त्वं गोत्रमंगिरोभ्यः अंगिरसामर्थाय अवृणोरप अपावृणोः उद्घारितवान् । उतात्रये । अत्रेतिहासमाचक्षते । अत्रिमसुरा शतमोहनद्वारेषु यज्ञगृहेषु प्राक्षिपन् । तत्र मूढो निर्गन्तुमशक्नुवन्निन्द्रमस्तौत् । तमिन्द्रो निरगमयत् इति । तदेतदुच्यते । उतात्रये अत्रेरप्यार्थाय । शतदुरेषु शतं मोहनद्वाराणि येषु तानि शतद्वराणि । तेषु । गातुवित् । गातुर्निर्गमनमार्गः । विदिर्लाभार्थो ज्ञानार्थो वा । निर्गमनमार्गस्य लब्धा ज्ञाता वा । अथवा शतदुराः सोमयागा अत्रोच्यन्ते । तेषु प्राग्वंशसदो हविर्धानसम्बन्धीनि बहूनि द्वाराणि । गातुविदित्यपि गातुशब्दो गमनवचनः । अत्र स्वभूतेषु शतदुरेषु बहुद्वारेषु सोमयागेषु गातुवित् गमनज्ञः । अनुभूतगमनः । नित्यगमन इत्यर्थः । किंच । ससेन चित् । ससमित्यन्ननाम । संहयोगलक्षणा चैषा तृतीया । चिच्छब्दः पदपूरणः चार्थे वा । अन्नेन च सह । विमदाय ऋषये अवहः प्रापितवान् । दत्तवानित्यर्थः । वसु धनं आजौ तदीयैः शत्रुभिस्सह संग्रामे । अद्रिम् । अद्रिविकारत्वादद्रिर्वज्रोऽत्राभिप्रेतः । पाषाणमयं वज्रं वावसानस्य स्वबलेनाच्छादयतः । आत्मन एव स्वभूतं नर्तयन् हस्ततलस्थमुत्पातयन्नित्यर्थः ॥ ३

त्वमपामपिधानावृणोरपाधारयः पर्वते दानुमद्वसु ।
वृत्रं यदिन्द्र शवसावधीरहिमादित्सूर्यं दिव्यारोहयो दृशे ॥ ४

त्वं मेघस्थानामपां अपिधाना निर्गमनबिलघट्टनानि अवृणोः उद्घाटितवान्। अपाधारयः धारितवांश्चासि। पर्वते। मेघनामैतत्। मेघे। दानुमत् दानुरत्र माध्यमिका वाक्। तद्वत्। वसु वृष्ट्युदकलक्षणं धनम्। यथाकालमुदकनिर्गमनार्थं त्वमेव मेघस्य द्वाराणि अपावृणोः त्वमेव च मेघे उदकमधारय इत्यर्थः। अथवा अधारयः पर्वत इति पर्वतोऽत्र शिलोच्चय एवाभिप्रेतः। धारितवानस्यात्मीये दुर्गपर्वते। किम्। दानुमद्वसु। दानुर्नामासुराणां माता। सा यस्मिन्नन्तर्गतास्ति तदिदं दानुमद्वसु धनम्। असुरान् पराजित्य तेषां मातरं धनं च स्वर्गे निहितवानित्यर्थः। किंच वृत्रं यदिन्द्र। अत्रेतिहासमाचक्षते। वृत्रः किल महत्तमस्ततान। तमसा वृतं सर्वमन्धं प्रज्ञातं बभूव। तदिन्द्रो वृत्रं हत्वा तमसोऽपनोदनार्थं सूर्यं दिव्यारोहयांचकार इति। तदेतदुच्यते। वृत्रं यद्यदा इन्द्र शवसा बलेन अवधीः हतवानसि। अहिमहन्तव्यमन्येन हन्तुमशक्यम्। आदित्। यदेति वचनादाच्छब्दोऽयं तदेत्यस्यार्थे। इच्छब्दः पदपूरणः। सूर्यं दिव्यारोहयः दृशे सर्वप्राणिनां दर्शनाय। तदेतन्मधुच्छन्दसाप्युक्तम्।

इन्द्रो दीर्घाय चक्षस आ सूर्यं रोहयद्दिवि। ऋ. वे. १. ७. ३.

इति॥ ४

त्वं मायाभिरप मायिनोऽधमः स्वधाभिर्ये अधि शुप्तावजुह्वत।
त्वं पिप्रोर्नृमणः प्रारुजः पुरः प्र ऋजिश्वानं दस्युहत्येष्वाविथ॥ ५

त्वं स्वाभिर्मायाभिः मायिनः मायावतोऽसुरान् अपाधमः स्वस्थानेभ्यो निष्कालितवान्। किं कुर्वन्। उच्यते। स्वधाभिः। स्वधेत्यन्ननाम। अधि। अधिपरी अनर्थकौ (पा. १. ४. ९३.) इति कर्मप्रवचनीयः पदपूरणः। शुप्तिशब्द आस्यवचनः। आत्मीये आस्ये अजुह्वत प्रक्षिप्तवन्तः। स्वशरीरभोगपरा इत्यर्थः। किंच। त्वं पिप्रोः पिप्रुनाम्नोऽसुरस्य स्वभूताः। हे नृ मनः यस्य स नृमणाः। तस्य संबोधनं हे नृमणः। प्रारुजः। रुजिर्भंगे। प्रकर्षेण भग्नवानसि। पुरः नगराणि। तच्च कुर्वन् ऋजिश्वानं ऋजिश्वनामानं ऋषिं विदथिनः पुत्रं दस्युहत्येषु। दस्यवो हन्यन्ते येषु तेदस्युहत्याः संग्रामाः तत्काला वा। तेषु प्राविथः प्रकर्षेण रक्षितवान्। तदेतद्वामदेवोऽपि वक्ष्यति।

त्वं पिप्रुं मृगयं शूशुवांसमृजिश्वने वैदथिनाय रन्धीः। ऋ. वे. ४. १६. १३.

इति॥ ५

त्वं कुत्सं शुष्णहत्येष्वाविथारन्धयोऽतिथिग्वाय शम्बरम्।
महान्तं चिदर्बुदं नि क्रमीः पदा सनादेव दस्युहत्याय जज्ञिषे॥ ६

त्वं कुत्सं कुत्सनामानमृषिं शुष्णहत्येषु । शुष्णो नामासुरः । तस्य हननेषु संग्रामेषु तत्कालेषु वा आविथ रक्षितवान् । अरन्धयः । रन्धतिर्वशगमने । वशं च नीतवानसि । अतिथिग्वाय । अतिथीन् प्रति परिचारकतया गच्छतीति अतिथिग्वो दिवोदासः । कुत एतत् ।

दिवोदासमतिथिग्वं यत् । ऋ. वे. ४. २६. ३.

इत्यादिषु दर्शनात् । तस्मा अतिथिग्वाय । शंबरं शम्बरनामानमसुरम् । महान्तं चित् । चिच्छब्दः पदपूरणः चार्थे वा । महान्तं च अर्बुदं अर्बुदनामानमसुरम् । निक्रमीः । नि इत्येष आ इत्येतस्य स्थाने । आक्रान्तवान् । पदा पदेन । किं बहुना । सनादेव । सनाच्छब्दश्चिरादित्यस्यार्थे । पञ्चमीनिर्देशाच्च प्रभृतीति वाक्यशेषः । चिरादेव प्रभृति दस्युहत्याय दस्युहननाय जज्ञिषे जातस्त्वम् । जन्मन एव प्रभृति त्वं शत्रूनवधीरित्यर्थः ॥ ६

त्वे विश्वा तविषी सध्र्यग्घिता तव राधः सोमपीथाय हर्षते ।
तव वज्रश्चिकिते बाह्वोर्हितो वृश्चा शत्रोरव विश्वानि वृष्ण्या ॥ ७

त्वे त्वयि विश्वा सर्वत्र तविषी बलं सध्र्यक् । सहाञ्चति गच्छतीति । सध्रीचीति स्त्रीलिङ्गता तविषीसामानाधिकरण्यात् । सध्र्यगिति व्यत्ययेनात्र नपुंसकता । सध्र्यक् सध्रीची सर्वैरवयवैः सह गामिनी । पिण्डितेत्यर्थः । हिता निहिता । यावत् किंचित् बलं सर्वं पिण्डीकृतं त्वयि निहितमित्यर्थः । किंच । तव राधः सोमलक्षणं धनं सोमपीथाय सोमपानाय हर्षते इन्द्रो मां पास्यतीति प्रीत्या हृष्यतीव । किंच । तव वज्रश्चिकिते शत्रुहननेन ज्ञायते । बाह्वोर्हितः निहितः । निहितं वज्रं गृहीत्वा शत्रून् घ्नन् निर्व्यापारो न तिष्ठसीत्यर्थः । य ईदृशोऽसि सः वृश्च शत्रोरव अववृश्चत् । अधश्छिन्धि । आत्मीयस्यास्मदीयस्य वा शत्रोर्विश्वानि सर्वाणि वृष्ण्या । अपठितमपि बलनामैतत् द्रष्टव्यम् । बलानि ॥ ७

वि जानीह्यार्यान् ये च दस्यवो बर्हिष्मते रन्धया शासदव्रतान् ।
शाकी भव यजमानस्य चोदिता विश्वेत्ता ते सधमादेषु चाकन ॥ ८

वि जानीहि आर्यान् साधुवृत्तान् । यागपरानित्यर्थः । ये च दस्यवः यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । ये च दस्यवः देवानां शत्रुभूता अयागपरास्तान् यष्टॄंश्च विजानीहीत्यर्थः । ज्ञात्वा च बर्हिष्मते यजमानाय रन्धय वशं गमय । शासत् अनुशासत् । निगृह्णन्नित्यर्थः । कान् । अव्रतान् अकर्मणः यागकर्मवर्जितान् । अयष्टॄनित्यर्थः ।

किंच । शाकी भव । शग्धि पूर्धि इति याच्ञाकर्मसु पाठात् शकिरिह याच्ञाकर्मा । याच्ञया चात्र तत्पूर्वकं दानं लक्ष्यते । दाता भवेत्यर्थः । कस्मै सामर्थ्याद्यजमानाय । न च दातैव केवलम् । किं तर्हि । यजमानस्य यागकर्मणि चोदिता नोदयिता प्रेरयितापि भव । यानि चैतानि मयोक्तानि विश्वेत्ता । इच्छब्दः पदपूरणः । सर्वाणि तानि ते तव स्वभूतानि सधमादेषु । सह माद्यन्ति येषु देवता ते सधमादा यज्ञाः । तेषु । आत्मनोऽभ्यर्थयाहं चाकन । कान्तिकर्मायम् । कामयते । प्रार्थयते इत्यर्थः ॥　८

अनुव्रताय रन्धयन्नपव्रतानाभूभिरिन्द्रः श्नथयन्ननाभुवः ।
वृद्धस्य चिद्वर्धतो द्यामिनक्षतः स्तवानो वम्रो वि जघान संदिहः ॥ ९

अनुव्रताय । अनुव्रतशब्दो भक्तपर्यायः । अनुव्रताय भक्ताय रन्धयन् अपव्रतान् अपगतयागकर्मणः । अभक्तानित्यर्थः । आभूभिः । आभूशब्दोऽपठितः सर्वत्र महन्नाम द्रष्टव्यः । करणे चैषा तृतीया सहयोगलक्षणा वा । महद्भिर्वा मरुद्भिस्सह इन्द्रः श्नथयन् ताडयन् । अनाभुवः अमहतः । वृद्धस्य चिद्वर्धतः वृद्धस्यापि पुनरतिशयेन वर्धमानस्य शत्रोः । कियत्या वृध्या । उच्यते द्यामिनक्षतः । इन्वति नक्षति इत्यस्य व्याप्तिकर्मसु पठितस्य तक्षतृक्षणक्ष गतावित्यस्य वा गत्यर्थस्य । इनक्षतः अयमिकारश्छान्दसः आगमो द्रष्टव्यः । व्याप्नुवतः गच्छतो वेत्यर्थः । स्तवानः स्तूयमानः । वम्रः । ह्रस्वनामैतद्द्रष्टव्यम् । वम्रक इति हि स्वार्थीकृतं ह्रस्वनामसु पठितम् । ह्रस्वोऽपि परिमाणतः विजघान विविधं हन्ति हतवान् वा । सन्दिहः । दिह उपचयात् । एतदुक्तं भवति । ये तावदभक्ता अमहान्तः तान् महद्भिः प्रहारैर्महद्भिर्वा मरुद्भिस्सह ताडयन् भक्ता अप्यत्यन्तमहान्तस्तेषामपि भक्तैः स्तूयमान उपचयात् विहन्तीति ॥ ९

तक्षद्यत्त उशना सहसा सहो वि रोदसी मज्मना बाधते शवः ।
आ त्वा वातस्य नृमणो मनोयुज आ पूर्यमाणमवहन्नभि श्रवः ॥ १०

तक्षत् । तक्षतिः करोतिकर्मा । शुब्दोऽपि चात्र........................

.......................................................................

मन्दिष्ट यदुशने काव्ये सचाँ इन्द्रो वङ्कू वङ्कुतराधि तिष्ठति ।
उग्रो ययिं निरपः स्रोतसासृजद्वि शुष्णस्य दृंहिता ऐरयत्पुरः ॥ ११

आ स्मा रथं वृषपाणेषु तिष्ठसि शार्यातस्य प्रभृता येषु मन्दसे ।
इन्द्र यथा सुतसोमेषु चाकनोऽनर्वाणं श्लोकमा रोहसे दिवि ॥ १२

अदा॑दा अर्भां म॒हते॑ वच॒स्यवे॑ क॒क्षीव॑ते वृच॒यामि॑न्द्र सुन्व॒ते ।
मेना॑भवो वृषण॒श्वस्य॑ सुक्रतो॒ विश्वेत्ता ते॒ सव॑नेषु प्र॒वाच्या॑ ॥ १३

इन्द्रो॑ अश्रायि सु॒ध्यो॑ निरे॒के प॒ज्रेषु॒ स्तोमो॒ दुर्यो॒ न यूपः॑ ।
अ॒श्व॒युर्ग॒व्यू र॑थ॒युर्व॑सू॒युरिन्द्र॒ इद्रा॒यः क्ष॑यति प्रय॒न्ता ॥ १४

..........................................................................

मे । स यथा स्तवनार्हो वेदिद्वारे भवो यूपो वेदिं यज्ञं वाश्रितः तद्वदङ्गिरसो हीन्द्रस्य सहायाः । तथाहि । सरमा इन्द्रमङ्गिरसश्च तुल्यवत् प्रसंख्या वक्ष्यति ।

नाहं वेद भ्रातृत्वं नो स्वसृत्वमिन्द्रो विदुरङ्गिरसश्च घोराः । ऋ.वे .१०. १०८. १०.

इति । तस्मादुपपन्नमिन्द्रस्य संग्रामेष्वंगिरआश्रयत्वम् । अथवैवमन्यथास्यार्धर्चस्यार्थयोजना । अश्रायीति णिच् स्वामर्थ एव कर्मणि । श्रयतिः शुद्धोऽपि सामर्थ्यादुत्पूर्वार्थे । उदश्रायि अतिशयवद्गुणाभिधानेन गुणैरुच्छ्रितः कृत इत्यर्थः । क्व । सुध्यः सुप्रज्ञस्य सुकर्मणो वा मम स्वभूते निरेके । रमेरिदम् । नियमेन रम्यते येन यत्र वा तं निरमणं निरेकं स्तोत्रमिहाभिप्रेतम् । तत्र । कथमुदश्रायि । उच्यते । पज्रेषु स्तोमः अंगिरस ऋत्विजो वा प्रज्ञा अभिप्रेता । लुप्तोपमं चेदं द्रष्टव्यम् । पज्रेष्विव स्तोमः । दुर्यो न यूपः द्वारि भव इव च यूपः । यथाङ्गिरस ऋषयः ऋत्विजो वा उच्छ्रितं महान्तं स्तोमं कुर्वन्ति यथा च यूपमुच्छ्रितं कुर्वन्ति तद्वदित्यर्थः । कीदृश इन्द्रः । उच्यते । अश्वायुर्गव्युरथयुर्वसूयुः । अन्यत्रेच्छायां क्यज्विधानात् तदन्ता च क्याच्छन्दसि (पा. ३. २. १७०) इति कर्तरि यकारविधानाद्यशब्द एषितृवचनः । इहतु देवतानां पर्याप्तकामार्थादेषणासंभवाद्यशब्दः सामर्थ्यान्मत्वर्थे । अश्वैर्गोभी रथैर्धनैश्च तद्वानित्यर्थः । किंच । इन्द्र इत् । इच्छब्दः एवार्थे । इन्द्र एव रायः । यावत् किंचित् त्रैलोक्ये धनं तस्य सर्वस्य क्षयति ईष्टे । प्रयन्ता दाता च स्तोतृभ्यः ॥ १४

इ॒दं नमो॑ वृष॒भाय॑ स्व॒राजे॑ स॒त्यशु॑ष्माय त॒वसे॑ऽवाचि ।
अ॒स्मिन्नि॑न्द्र वृ॒जने॒ सर्व॑वीराः॒ स्मत्सू॒रिभि॒स्तव॒ शर्म॑न्त्स्याम ॥ १५

इदं नमः तेन सूक्तेन नमः स्तुतिलक्षणं वृषभाय वर्षित्रे स्वराजे स्वयमेव दीप्ताय सत्यशुष्माय सत्यबलाय तवसे । तुवि वृद्धौ । वृद्धाय अवाचि उक्तमस्माभिः । यत एवमतो ब्रूमः । अस्मिन् हे इन्द्र वृजने । बलनामैतत् सामर्थ्याच्चान्तर्णीतमत्वर्थः । बलवति संसारे संग्रामे वा । अथवा वर्ज्यते यत्र वैगुण्यं स वृजनो यज्ञ इहाभिप्रेतः । तत्र ।

सर्ववीराः सर्वैःपुत्रैः पौत्रैश्चोपेताः । सत् सूरिभिः । सच्छब्दोऽत्र सहार्थे । सह सर्वैः स्तोतृभिः । तव शर्मन् शरणे वा गृहे वा सुखे वा स्याम । त्वया दत्तं शरणं गृहं सुखं वा प्राप्नुयामित्यर्थः ॥　　　　१५

---

त्यं सु मेषं महया स्वर्विदं शतं यस्य सुभ्वः साकमीरते ।
अत्यं न वाजं हवनस्यदं रथमेन्द्रं ववृत्यामवसे सुवृक्तिभिः ॥　　　१

त्यं तं इन्द्रं मेषं मेषरूपं सुमहया । याचतिकर्मायम् । आत्मनः एव चायमन्तरात्मनः प्रैषः ऋत्विगन्तरस्य वा । सुष्ठु स्तुहि हे अन्तरात्मन् ऋत्विग्वा । स्वर्विदम् । स्वर्शब्दः सर्वपर्यायः । विदिर्ज्ञानार्थो लाभार्थो वा । सर्वस्य ज्ञातारं लब्धारं वा । शतम् । बहुनामैतत् । बहवो यस्य सुभ्वः । अपठितमपि महन्नामैतत् । महान्तः । के ते । सामर्थ्यात् स्तोतारः । साकं सह ईरते प्रेरयन्ति । उच्चारयन्तीत्यर्थः । किं तत् । सामर्थ्यात् स्तुतीः । बहवो महान्तश्च स्तोतारः यं सह स्तुवन्तीत्यर्थः । अथवा सुभ्व इति स्त्रीलिङ्गमेतत् । शतं यस्य स्वभूताः सुभ्वो महत्यः । कास्ताः । मरुदादिसेनाः । साकमीरते सह गच्छन्ति शत्रूणामुपरि । अहमपि अत्यं न अश्वमिव । यथा कश्चिदश्वमावर्तयेत्तद्वत् । वाजम् । द्वितीयाश्रुतेश्चात्र कर्मप्रवचनीयः प्रतिशब्दोऽध्याहार्यः । सोमलक्षणमन्नं प्रति । अथवा वाजमित्यपठितमपि बलनाम सामर्थ्याच्चान्तर्णीतमत्वर्थम् । बलवन्तम् । हवनस्यदं आह्वानानि प्रति गन्तारम् । केन । रथम् । तृतीयार्थे द्वितीयैषा । रथेन । कम् । इन्द्रम् । आववृत्यां अत्यर्थं पुनः पुनः व्यावर्तयेयमित्याशासे । किमर्थम् । अवसे तर्पणाय । केन । सुवृक्तिभिः सुष्ठु वर्जितदोषाभिः स्तुतिभिः ॥　　　　१

स पर्वतो न धरुणेष्वच्युतः सहस्रमूतिस्तविषीषु वावृधे ।
इन्द्रो यद्वृत्रमवधीन्नदीवृतमुब्जन्नर्णांसि जर्हृषाणो अन्धसा ॥　　　२

स पर्वतो न धरुणेषु । पर्वत इति मेघनाम । धरुणमित्युदकनाम । तृतीयार्थे चैषा सप्तमी । वावृधे इत्यस्य चेदमुपमानम् । मेघ इवोदकैर्वावृधे । मेघोऽत्यन्तबहुनोदकेन वर्धते अत्यन्तं महान् भवति । एवं अच्युतः यत्र स्थितः तस्मात् स्थानादप्रच्युतः । तत्रैव स्थितस्सन्नित्यर्थः । सहस्रमूतिः । सहस्रमिति बहुनाम । ऊतिः सेना पालनं वा । बहुसेनो बहुपालनो वा । तविषीषु । बलनामैतत् । तृतीयार्थे चात्र सप्तमी । शारीरैः सामर्थ्यलक्षणैर्बलैः । वावृधे अवर्धिष्ट वर्धते वा । अथवा स पर्वतो

नेति पर्वतः शिलोच्चय एवाभिप्रेतः। अच्युतः इत्येतस्य त्विदमुपमानम्। यथा पर्वतोऽच्युतः स्थिरस्तद्वद्योऽच्युत इति। धरुणेऽपीत्यपि यस्य च भावेन (पा. २-३-३६) इत्येवं सप्तमी। तद्भुतेश्च लक्षणभूतयोग्यक्रियापदाध्याहारः। उदकेषु प्राप्तव्येषु। उदकार्थमित्यर्थः। किं करोति। उच्यते। सहस्रमूतिस्तविषीषु वावृधे। कः। उच्येते। इन्द्रः। कदा। उच्यते। यत् यदा वृत्रं मेघं अवधीत् हतवान् हन्ति वा। नदीवृतम्। नद्यः शब्दकारिण्य आपः। तासामावरितारम्। उब्जन् ऋजून् कुर्वन्। भूमिपाताभिमुखानि कुर्वन्नित्यर्थः। कानि। अर्णांसि मेघस्थान्युदकानि। जर्हृषाणः अत्यर्थं हृष्यन्। केन। अन्धसा सोमलक्षणेनान्नेन ॥ २

स हि द्वरो द्वरिषु वव्र ऊधनि चन्द्रबुध्नो मदवृद्धो मनीषिभिः।
इन्द्रं तमह्वे स्वपस्यया धिया मंहिष्ठरातिं स हि पप्रिरन्धसः ॥ ३

हि शब्दः पदपूरणः। स इन्द्रः द्वरो द्वरिषु। द्वृ वरणे। शुद्धेऽपि चात्राङ्पूर्वार्थे द्रष्टव्यः। द्वरिष्विति च निर्धारणे सप्तमी। आवरितॄणां मध्ये यावन्तः केचनावरितारः तेषां सर्वेषां मध्येऽतिशयेनावरितेत्यर्थः। वव्रः। अत्यर्थं च वरणीयः याचितव्यः। किम्। सामर्थ्याद्यद्यदिष्टम्। क। ऊधनि सोमलक्षणे। रसानुप्रदानसामान्यादृशोऽत्र ऊध उच्यते। तत्र। कीदृशः। चन्द्रबुध्नः। चन्द्रः चन्दतेः कान्तिकर्मणः कान्तिरुच्यते। बुध्नमन्तरिक्षं निवासस्थानतया यस्य संभूतं स चन्द्रबुध्नः। मदवृद्धः सोममदेन परिवृद्धः स्सन्। केन वव्रः। मनीषिभिः मेधाविभिर्ऋषिभिः ऋत्विग्भिर्वा। इन्द्रं तमह्वे आह्वयामि स्वपस्यया शोभनकर्मेच्छया युक्ताः। धिया प्रज्ञया। कीदृशम्। मंहिष्ठरातिम्। महतिः पूजार्थोऽत्र। पूज्यतमदानम्। किं कारणम्। उच्यते। स हि पप्रिरन्धसः। हिशब्दोऽत्र यस्मादर्थे। पृणातिश्च दानार्थः। यस्मात् सः दाता अन्नस्य ॥ ३

आ यं पृणन्ति दिवि सद्मबर्हिषः समुद्रं न सुभ्वः स्वा अभिष्टयः।
तं वृत्रहत्ये अनु तस्थुरूतयः शुष्मा इन्द्रमवाता अह्रुतप्सवः ॥ ४

आ यं पृणन्ति। यमापृणन्ति आपूरयन्ति। दिवि व्यास्थितम्। के। सद्मबर्हिषः। सद्म सदनं बर्हिर्येषां ते सद्मबर्हिषः सोमाः। कथमापृणन्ति। समुद्रं न समुद्रमिव सुभ्वः महत्यो नद्यः स्वा आत्मीयाः। कस्य। सामर्थ्यात् समुद्रस्य। कीदृश्यः। अभिष्टयः। इषिर्गत्यर्थः इच्छार्थो वा। अभिगन्त्र्यः अभिकामिन्यो वा। तं वृत्रहत्ये वृत्रहनन-

काले अनुतस्थुः । तिष्ठतिरत्र सामर्थ्यात् गत्यर्थः । अनुगतवत्यः अनुगच्छन्ति वा । अथवा तं वृत्रहत्ये अन्वित्यनुशब्दः तृतीयार्थे (पा. १. ४. ८५) इत्येवं कर्मप्रवचनीयः। तेन सह वृत्रहननकाले स्थिता इत्यर्थः । काः । उच्यते । ऊतयः सेना मरुदादीनाम् । शुष्माः । बलनामैतत् अन्तर्णीतमत्वर्थं च । बलवत्यः । कं तम् । उच्यते । इन्द्रम् । कीदृश्यः । अवाताः वातरहिताः । अथवा अविद्यमानोविनियन्ता वातो यासांता अवाताः । वायुनापि रोध्दुमशक्या इत्यर्थः । अह्रुतप्सवः अहिंसितरूपाः ॥　　४

अभि स्ववृष्टिं मदे अस्य युध्यतो रघ्वीरिव प्रवणे सस्रुरूतयः ।

इन्द्रो यद्वज्री धृषमाणो अन्धसा भिनद्वलस्य परिधीँरिव त्रितः ॥　५

अभीत्युपसर्गः सस्रुरित्याख्यातेन संबन्धयितव्यः । स्वा वृष्टिर्यस्य सः स्ववृष्टिः वृष्टेः स्वामी । कोऽसौ इन्द्रः । मद इति यस्य च भावेन (पा. २. ३. ३७.) इत्येवं सप्तमी । तच्छ्रुतेश्च लक्षणभूतयोग्यक्रियापदाध्याहारः । अस्य युध्यत इत्यस्य शब्देनानुदात्तेन प्रकृतत्वादिन्द्रस्यानुदेशः । स्ववृष्टिमित्येतत्सामानाधिकरण्याच्चोभयत्र द्वितीयार्थे षष्ठी । सोममदे प्राप्ते स्ववृष्टिमिममिन्द्रं युध्यमानम् । रघ्वीरिव प्रवणे । प्रवण-शब्दो निम्नवचनः । यथा निम्ने प्रदेशे रघ्वी लघुगामिन्य आपः अभिगच्छेयुः तद्वत् अभिसस्रुः अभिगतवत्योऽभिगच्छन्ति वा ऊतयः मरुदादिसेनाः । कदा । उच्यते । यत् यदा वज्री गृहीतवज्रः धृषमाणः । धृष्टेरयं छान्दसो धकारः । धृष्यन् अन्धसा सोमलक्षणेनान्नेन । सोमेन जन्यमानहर्षः सन्नित्यर्थः । भिनत् भिन्नवान् भिनत्ति वा वलस्य । मेघनामैतत् । द्वितीयार्थे चात्र षष्ठी । मेघम् । कथम् । परिधीँरिव त्रितः यथा परिधीन् त्रितः भिन्नवान् तद्वत् । अत्रेतिहासमाचक्षते — त्रितं यजन्तं रक्षांस्यभि-दुद्रुवुः । सोऽग्निमुवाच । जह्येतानीति । तान्यग्निर्न शशाक हन्तुम् । स क्रुद्धोऽग्नेः परिधीन् भङ्क्त्वा तैस्तानि रक्षांसि जघान इति । तदेतदिहोच्यते परिधीँरिव त्रितः इति । अथवा वलस्येति स्वार्थ एव षष्ठी । परिधीतितूत्तम्भनानि परिधय उच्यन्ते सर्वतो निधीयमानत्वात् । मेघस्योत्तम्भनान्यभिनदित्यर्थः । इव शब्दस्तूपमार्थीयः अस्त्युपमार्थस्य संप्रत्यर्थे प्रयोगः (नि. ७. ३१.) इति पदपूरणः । त्रित इत्यपि त्रिशब्दादाद्यादित्वात् सप्तम्यास्तसिः । त्रिषु प्रदेशेषु अग्रमध्यमूलेषु अभिनदिति । अथवा त्रित इति प्रथमान्तमिन्द्रविशेषणम् । त्रितस्त्रिस्थान इन्द्रः ॥　　५

परी घृणा चरति तित्विषे शवोऽपो वृत्वी रजसो बुध्नमाशयत् ।

वृत्रस्य यत्प्रवणे दुर्गृभिश्वनो निजघन्थ हन्वोरिन्द्र तन्यतुम् ॥　६

·पर्सी घृणा । ईमिति पदपूरणः । परिचरातिरपि लिडर्थेऽयं लट् । परिचचार सर्वतो भ्रान्तवतीत्यर्थः । का । घृणा दीप्ता स्तनयित्नुलक्षणा त्वदीया वाक् । तित्विषे दीप्तवच्च शवः त्वदीयं मरुल्लक्षणम् । कदा । उच्यते । अपो वृत्वीत्यादि । अत्रैकवाक्यताप्रसिध्यर्थं यत्तच्छब्दावध्याहर्तव्यौ । यः अपः उदकानि वृत्वी आवृत्य रजसः अन्तरिक्षलोकस्य बुध्नं अधोभागमाशयत् । शेतिरिह स्थानार्थः । आस्थितवान् तस्य वृत्रस्य मेघस्य असुरस्य वा । यत् यदा प्रवणे निम्ने प्रदेशे । कीदृशस्य वृत्रस्य । उच्यते । दुर्गृभिश्वनः । दुर्गृभिशब्दो दुर्ग्रह वचनः । आशु इति च शु इति च क्षिप्रनामनी । शु अननंश्वा । क्षिप्रश्वासः दुर्ग्रहो यस्य स दुर्गृभिश्वा । दुस्सहश्वास इत्यर्थः । तस्य दुर्गृभिश्वनः । दुस्सहश्वासताप्रतिपादनाय चात्र ब्राह्मणपठितमितिहासमाचक्षते । इन्द्रो वै वृत्रं हनिष्यन् सर्वा देवता अब्रवीत् । अनुमोपतिष्ठध्वमुप मा ह्वयध्वमिति । तथेति तं हनिष्यन्त आद्रवन् । सोऽवेन्मां वै हनिष्यन्त आद्रवन्ति । हन्तेमान् भीषया इति । तानभिप्राश्वसीत् । तस्य श्वसथादीषमाणा विश्वे देवा अद्रवन् (ऐ. ब्रा. ३. २०. १.) इति । निजघन्थ । हन्तिरत्र गत्यर्थः । सामर्थ्याच्चात्रान्तर्णीतण्यर्थः । नियमेन गमितवानसि । हन्वोः हनुप्रदेशे हे इन्द्र तन्यतुं विस्तीर्णं शब्दकारिणं वा वज्रम् ॥ ६

इदं न हि त्वा न्यृषन्त्यूर्मयो ब्रह्माणीन्द्र तव यानि वर्धना ।
त्वष्टा चित्ते युज्यं वावृधे शवस्ततक्ष वज्रमभिभूत्योजसम् ॥ ७

इदं न हि । हिशब्दः पदपूरणः ऊर्मय इत्येतद्धदं नेत्यनोपमानेन संबध्यते । ह्रदमिवोर्मयः । यथा ह्रदं प्रभूता उदकोर्मयो घृषेयुः तद्वत् त्वा न्यृषन्ति । ऋष गमने । नियमेन गच्छन्ति । ब्रह्माणि स्तुतिलक्षणानि हे इन्द्र तव यानि वर्धनानि वृद्धिकराणि । स्तूयमाना हि देवता वीर्येण वर्धन्ते । अत एवमुच्यते तवयानि वर्धना इति । किम् । त्वष्टा चित् त्वष्टापि देवशिल्पी ते तव युज्यं योग्यं वा वृधे वर्धितवान् । शवो बलम् । ततक्ष कृतवांश्च वज्रमभिभूत्योजसं अभिभवितृबलयुक्तम् ॥ ७

जघन्वाँ उ हरिभिः संभृतक्रतविन्द्र वृत्रं मनुषे गातुयन्नपः ।
अयच्छथा बाह्वोर्वज्रमायसमधारयो दिव्या सूर्यं दृशे ॥ ८

जघन्वानिति शत्रर्थे क्वसुच् । उ इति तु पदपूरणः । घ्नन् हरिभिरात्मीयैरश्वैः । तृतीयानिर्देशात् गत्वेति शेषः । हे संभृतक्रतो संभृतकर्मन् संभृतप्रज्ञ वा इन्द्र । कं घ्नन् । उच्यते । वृत्रम् । किमर्थम् । मनुषे मनो राज्ञ ऋषेर्वा मनुष्यस्य वार्थाय ।

गातुयन् गमनमिच्छन्। कस्य। अपां वृष्टिलक्षणानामुदकानाम्। अयच्छथाः निर्बद्धवानसि। बाह्वोः बाहुभ्यां अत्र संबन्धाद्धस्तौ लक्ष्येते। हस्ताभ्यां गृहीतवानसीत्यर्थः। किम्। वज्रम्। कीदृशम्। आयसं लोहमयम्। किंच अधारयः धारितवान् स्थापितवानसि। दिवि द्युलोके। आकारो मर्यादायाम्। कम्। सूर्यम्। दृशे दर्शनाय। तदेतत्पुरस्तादपि उक्तम्।

वृत्रं यदिन्द्र शवसा वधीरहिमादित्सूर्यं दिव्यारोहयद्दृशे। ऋ. वे. १. ५१. ४. इति ॥　　८

बृहत्स्वश्चन्द्रममवद्यदुक्थ्य१मकृण्वत भियसा रोहणं दिवः।
यन्मानुषप्रधना इन्द्रमूतयः स्वर्नृषाचो मरुतोऽमदन्ननु ॥　　९

बृहत् महत् परिमाणतः सारतो वा स्तुतिरूपं स्वश्चन्द्रम्। चन्द्रं चन्दतेः कान्तिकर्मणः। स्वयमेव कान्तम्। अमवत्। अमशब्द आत्मपर्यायः। तेन चात्र प्रयत्नो लक्ष्यते। आत्मवत् प्रयत्नवत्। महता प्रयत्नेनेत्यर्थः। यत् उक्थ्यं प्रशस्यम्। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। तत् अकृण्वत कृतवन्तोऽस्मदीया ऋत्विजः पुत्रपौत्रादयो वा। भियसा परिचर्यावैगुण्यभयेन। कीदृशम्। रोहणं दिवः द्युलोकारोहणसमर्थम्। साद्गुण्याद्यज्ञविध्वंसकरैरसुरै रक्षोभिर्वान्तरावलोप्तुमशक्यमत्यन्तसगुणमित्यर्थः। कदा। उच्यते। यत् यदा मानुषप्रधनाः। मनुष्यार्थो मानुषः। प्रधन इति संग्रामनाम। असुरैर्मेघैर्वा सह मनुष्यार्थः संग्रामो येषां ते मानुषप्रधनाः। इन्द्रमित्येतत्तु अन्त्येनानुशब्देन सह संबन्धयितव्यः। कीदृशाः। ऊतयः अवितारः। रक्षितारो गन्तारो वेत्यर्थः। स्वः। सर्वपर्यायोऽयम्। सर्वे नृषाचः। नृभिर्ये सेव्यन्ते सेवन्ते वा नॄन् वृष्टिप्रदानादिना ते नृषाचः। के ते। उच्यते। मरुतः। किं कृतवन्तः। उच्यते। अमदन् इन्द्रमनु। तृतीयार्थे (पा. १. ४. ८५.) इत्ययमनुः कर्मप्रवचनीयः। सहार्थश्चात्र तृतीयार्थः। सोमेन मत्ता इन्द्रेण सहेत्यर्थः॥　　९

द्यौश्चिदस्यामवाँ अहेः स्वनादयोयवीद्भियसा वज्र इन्द्र ते।
वृत्रस्य यद्बद्बधानस्य रोदसी मदे सुतस्य शवसाभिनच्छिरः ॥　　१०

द्यौश्चिदस्य। चिच्छब्दोऽप्यर्थे। द्यौरपि। किमुतान्ये देवाः। कीदृशी द्यौः। अमवान् आत्मवान् प्रयत्नवान्। किं कृतवान्। उच्यते। अस्याहेः अहन्तव्यस्यान्येन हन्तुमशक्यस्य वृत्रस्य स्वभूतात् स्वनात् श्वासशब्दात् अयोयवीत्। यौतिः पृथग्भावार्थः। पृथग्भूतः। नष्ट इत्यर्थः। कम्पनार्थो वा यौतिः सामर्थ्यात्। अकम्पतेत्यर्थः-

भियसा भयेन । वृत्रश्वासात् बिभ्यतस्त्वद्वर्जं सर्वे देवा नष्टा इत्यर्थः । अत्र च ब्राह्मणम् । ते तानभिप्राश्वसीत् । तस्य श्वसथादीषमाणा विश्वे देवा अद्रवन् (ऐ. ब्रा. ३. २०. १) इति । अयमितिहासो दर्शयितव्यः । कदा पुनरयोयवीत् । उच्यते । वज्रः हे इन्द्र ते तव स्वभूतः वृत्रस्य यत् यदा बद्बधानस्य । बाधतेरिदम् । अभ्यस्तानामुपधाह्रस्वत्वम् । अचि इत्येव ह्रस्वत्वम् । वृष्टिप्रतिबन्धकरणेनात्यर्थं बाधमानस्य । रोदसी उभे अपि द्यावापृथिव्यौ । रोदसी इति चानुदात्तत्वप्रसिध्यर्थं व्यत्ययेन द्वितीयायाः स्थाने आमन्त्रितप्रथमा द्रष्टव्या । मदे सुतस्य । मदे इति यस्य च भावेन (पा. २. ३. ३७.) इत्येवं सप्तमी । तच्छ्रुतेश्च लक्षणभूतयोग्यक्रियापदाध्याहारः । सुतस्य सोमस्य संबन्धिनि मदे प्राप्ते । सोमेन मत्तस्य सतस्त्वेत्यर्थः । शवसा बलेन अभिनत् भिन्नवान् । किम् । शिरः मूर्धानम् । अस्यामृच्यप्रकृतत्वात् अहेरस्येत्येतस्यान्वादेशत्वासंभवाच्छान्दसमनुदात्तत्वं व्याख्येयम् । अन्वादेशार्थं वोत्तरोऽर्धर्चः पूर्वं योजयितव्यः । पश्चात् पूर्वः । यदा त्वदीयो वज्रो वृत्रस्य शिरोऽभिनत्तदास्याहेः स्वनादिति ॥ १०

यदिन्न्विन्द्र पृथिवी दशभुजिरहानि विश्वा ततनन्त कृष्टयः ।
अत्राह ते मघवन् विश्रुतं सहो द्यामनु शवसा बर्हणा भुवत् ॥ ११

यदिन्विन्द्र । यच्छब्दो यदिशब्दस्यार्थे । इन्नु इति पदपूरणम् । यदि शब्दश्रुतेश्च तत्संबन्धयोग्यक्रियापदाध्याहारः । यदि स्यात् हे इन्द्र पृथिवी दशभुजिः दशभोगा । दशगुणेत्यर्थः । अहानि च विश्वा सर्वाणि ततनन्त एकत्र संघात्य विस्तारयेयुः । कृष्टयो मनुष्याः । अत्र यदिति प्रक्रान्तत्वादत्रशब्दः अथेत्यस्य स्थाने । अर्थादपीत्यस्यार्थे । अह ते । अहेति विनिग्रहार्थीयः एवशब्देन समानार्थः तेशब्दाच्च परोद्रष्टव्यः । ते अह तवैव मघवन् विश्रुतं विख्यातं सहः सेनालक्षणं बलम् । द्यामनु दिवं प्रति । द्युलोके व्यवस्थितं सदित्यर्थः । शवसा सामर्थ्यलक्षणेन बलेन बर्हणा परिवृद्धं भवत् भवेत् । दशगुणायाः पृथिव्याः सर्वेभ्यश्च संहतेभ्योऽहोभ्यः सकाशात्तवैव महत्तरं बलमिति समस्तार्थः ॥ ११

त्वमस्य पारे रजसो व्योमनः स्वभूत्योजा अवसे धृषन्मनः ।
चकृषे भूमिं प्रतिमानमोजसोऽपः स्वः परिभूरेष्या दिवम् ॥ १२

त्वमस्य पारे । पारमन्तम् । सप्तमीनिर्देशाच्च योग्यक्रियाध्याहारः । त्वमस्य पारे अन्ते तिष्ठसि । रजसः लोकस्य व्योमनः व्योम्नः अन्तरिक्षाख्यस्य । कीदृशः ।

स्वभूत्योजाः । स्वभूतिः स्वसामर्थ्यम् । सा बलं यस्य स स्वभूत्योजाः । किमर्थम् । अवसे । तुमर्थे सेप्रत्ययः । अवितुम् । कृत्स्नं जगद्वृष्टिप्रदानद्वारेण पालयितुमित्यर्थः । हे घृषन्मनः शत्रुधर्षणचित्त शत्र्वभिभवशील इत्यर्थः । किंच चकृषे कृतवानसि । भूमिं प्रतिमानं उपमानं ओजसः आत्मीयस्य बलस्य । अपः अन्तरिक्षं च । आप इति बहुवचनान्तोऽपच्छब्दोऽन्तरिक्षनामासु पठितः । स्वः दिवं च । त्रयो लोकाः समुदिताः तव बलस्योपमा भवति परिभूः । परिपूर्वो भवतिः सर्वत्र परिग्रहे । यावत् किंचित् सर्वस्य परिगृहीत्वा त्वं पषि आ आगच्छसि च । सोमं पीत्वा पृथिवीतः दिवं द्युलोकम् ॥ १२

त्वं भुवः प्रतिमानं पृथिव्या ऋष्ववीरस्य बृहतः पतिर्भूः ।
विश्वमाप्रा अन्तरिक्षं महीत्वा सत्यमद्धा नकिरन्यस्त्वावान् ॥ १३

त्वं भुवो भवसि प्रतिमानम् । पृथिव्याः । पृथिव्यपि त्वयोपमीयते । किं पुनरन्यान्युपमेयानि । सर्वत्र त्वमुत्कृष्ट इत्यर्थः । किंच ऋष्ववीरस्य । ऋष्व इति महन्नाम । वीरशब्दः शूरपर्यायः । महान्तो वीरा यस्मिन् सैन्ये तदृष्ववीरम् । तस्य बृहतो महतः पतिः स्वामी भूः भवसि त्वम् । महद्भिः शूरैरुपेतं तव महत्सैन्यमित्यर्थः । किंच विश्वमाप्राः आपूरयसि अन्तरिक्षं महित्वा महत्वेन । किं बहुना । सत्यमद्धा । द्वे अप्येते सत्यनामनी । अभ्यासे भूयांसमर्थं मन्यन्ते यथाहो दर्शनीयाहो दर्शनीय (नि. १०. ४२) इत्येवमर्थभूयस्त्वेनापुनरुक्तिः । अत्यन्तसत्यमेतत् । नकिः न कश्चिदन्यस्त्रैलोक्ये त्वावान् । वतुप्प्रकरणे युष्मदस्मभ्यां छन्दसि सादृश्य उपसंख्यानं (वा ५. २. ३९—१) इत्येवमयं सादृश्ये वतुप्प्रत्ययः । त्वत्सदृश इत्यर्थः ॥ १३

न यस्य द्यावापृथिवी अनु व्यचो न सिन्धवो रजसो अन्तमानशुः ।
नोत स्ववृष्टिं मदे अस्य युध्यत एको अन्यच्चकृषे विश्वमानुषक् ॥ १४

न यस्य द्यावापृथिवी । नेति प्रतिषेधे । यस्य तव न द्यावापृथिवी अनु व्यचः । व्याप्तिनामैतच्छाकपूणिना पठितम् । व्याप्तिम् । न च सिन्धवः । स्यन्दनात् सिन्धवः आदित्यरश्मय इहोच्यन्ते । ते रजसः । ज्योती रज उच्यते । ज्योतिषस्तेजसः । अन्तमनु आनशुः अनु प्राप्नुवन्ति । यतो व्याप्ता द्यावापृथिव्यौ न्यूनतरेण तेजसा चादित्यरश्मय इत्यर्थः । अथवा सिन्धव इति नदीनाम । रज इत्युदकमुच्यते । यतो व्याप्ते द्यावापृथिव्यौ न्यूनतरे यस्य च स्वभूतस्य वृष्टिलक्षणस्योदकस्यान्तं नद्यो न व्याप्नु-

वन्ति । वृष्ट्येकदेशेन ह्रियन्ते । न सर्वां वृष्टिं प्रति गच्छन्तीत्यर्थः । अथवैवमन्यथा-स्यार्धर्चस्यार्थयोजना । द्यावापृथिवी अनुव्यचः इत्यनुशब्दो लक्षणे (पा. १. ४. ८६.) इत्येवं कर्मप्रवचनीयः । अन्वर्जुनं योद्धारः इति यथा । द्यावापृथिवी इति कर्मप्रवच-नीययोगलक्षणा द्वितीयान्तम् । व्यचः इत्यपि प्रथमान्तम् । यस्य तव द्यावापृथिव्योः सकाशान्न्यूना व्याप्तिरित्यर्थः । न सिन्धवो रजसो अन्तमानशुरित्ययं तु पादो द्विधा पूर्ववद्व्याख्येयः । नोत स्ववृष्टिं मदे अस्य युध्यतः । उत शब्दोऽप्यर्थे । स्वा वृष्टिर्यस्य सः स्ववृष्टिः । वृष्टेः स्वामी । तं स्ववृष्टिम् । मदे इति यस्य च भावेन (पा. २. ३. ३७) इत्येवं सप्तमी । तच्छ्रुतेश्च लक्षणयोग्यक्रियाध्याहारः । अस्य युध्यत इति प्रकृतत्वा-दिन्द्रस्यायमन्वादेशः । स्ववृष्टिमित्येतत्सामानाधिकरण्याच्चोभयत्र द्वितीयार्थे षष्ठी । नापि यं व्याप्नुवन्ति वृष्टेः स्वामिनं सोममदे प्राप्ते भवन्तमेनं युध्यमानमित्यर्थः । के न व्याप्नुवन्ति । सामर्थ्याच्छत्रवः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः । स त्वं एकः सहायवर्जितः अन्यत् विश्वं सर्वं चकृषे करोषि कृतवान् वा । आनुषक् आनुपूर्व्ये-णात्मानुगुणं स्ववशवर्तीत्यर्थः ॥ १४

आर्चन्नत्र मरुतः सस्मिन्नाजौ विश्वे देवासो अमदन्ननु त्वा ।

वृत्रस्य यद्भृष्टिमता वधेन नि त्वमिन्द्र प्रत्यानं जघन्थ ॥ १५

आर्चन् । अर्चतिः स्तुत्यर्थः । स्तुवन्ति स्तुवन्तो वा मरुतः । ऋत्विङ्नामैतत् । ऋत्विजः । अत्र सस्मिन् । सर्वशब्दस्यायमेकाक्षरलोपः पर्यायान्तरं वा । सर्वस्मिन्नाजौ । संग्रामनाम । संग्रामस्थानीये दुस्तरे यज्ञे । यावान् कश्चिदयं पृथिव्यां यज्ञः तत्र सर्वत्रे-त्यर्थः । अथवा ।

य उग्रा अर्कमानृचुः । ऋ. वे. १. १०. ४.

इति मरुतां स्तोतृत्वदर्शनादिन्द्रसखा देवा एवात्र मरुतः उच्यन्ते । आजिरित्यपि संग्राम एवोच्यते न तत्स्थानीयो यज्ञः । प्रहर भगवो जहि वीरयस्व (ऐ. ब्रा. ३. २०. १) इत्येव-मादिभिर्वचनैः । अथ सर्वस्मित् संग्रामे मरुतस्त्वां स्तुवन्त इत्यर्थः । विश्वे देवासः सर्वे च देवा अमदन् सोमेन माद्यन्ति मत्ता वा अनु त्वा । तृतीयार्थे (पा. १. ४. ८५.) इत्येवमयमनुशब्दः कर्मप्रवचनीयः । सहार्थश्चात्र तृतीयार्थः । त्वया सहेत्यर्थः । कस्मात् कदा वा आर्चन् । उच्यते । वृत्रस्य यत् यस्मात् यदा वा भृष्टिमता । भृष्टि-शब्दोऽश्रीवचनः । अश्रीमता । वधेन । वज्रनामैतत् । वज्रेण । त्वं हे इन्द्र आनं प्राणं नि प्रति जघन्थ । प्रतिशब्दोऽत्र धात्वर्थानुवादी । नियमेन हतवान् हंसि वा ॥ १५

न्यू॑ ३ षु वाचं॒ प्र म॒हे भ॑रामहे॒ गिर॒ इन्द्रा॑य॒ सद॑ने वि॒वस्व॑तः ।
नू चि॒द्धि रत्नं॑ सस॒ताम्ि॒वावि॑दन्न दु॑ष्टु॒तिर्द्र॑वि॒णोदे॑षु शस्यते ॥ १

नि प्र इत्युपसर्गौ भरामह इत्याख्यातेन संबन्धयितव्यौ । उ सु इति पदपूरणौ । शास्त्रलक्षणां वाचं महे महते नि प्रभरामहे । हरतेरिदम् । हृग्रहोर्भश्छन्दसि हस्य (वा. ८. २. ३२-१) इति भत्वम् । नियमेन प्रभरामः प्रापयामः । उच्चारयाम इत्यर्थः । नच केवलां शास्त्रलक्षणां वाचम् । किं तर्हि । अन्या अपि गिरः लौकिकस्तुतिलक्षणाः यजुस्सामलक्षणा वा वाचः । कस्मै । इन्द्राय । क्व सदने यज्ञगृहे विवस्वतः । यजमाननामैतच्छाकपूणिना पठितम् । यजमानस्य स्वभूते । कस्मात् । उच्यते । नू चिद्धि । नु इति क्षिप्रनाम । चिच्छब्दः पदपूरणः । हिशब्दो यस्मादर्थे । यस्मात् क्षिप्रमिन्द्रः रत्नं धनं ससतामिव स्वपतामिव अत्यन्तनिष्प्रतिकाराणां शत्रूणां अविदत् । विन्दतेरिदं रूपम् । अविन्दत् लब्धवान् । प्रभूतवानित्यर्थः । यस्माच्चास्येन्द्रस्य न दुष्टुतिः कुत्सिता स्तुतिः केचिदपि द्रविणोदेषु । ऋत्विजोऽत्र द्रविणोदा उच्यन्ते यजमाना वा हविर्लक्षणस्यैव धनस्य दातृत्वात् । तेषु शस्यते । शास्त्रधर्मेण क्रियते । यस्माच्चास्य न कश्चिदप्यृत्विक् यजमानो वा अयोग्यां स्तुतिं करोतीत्यर्थः ॥ १

दु॒रो अश्व॑स्य दु॒र इ॑न्द्र॒ गोर॑सि दु॒रो यव॑स्य॒ वसु॑न इ॒नस्पतिः॑ ।
शि॒क्षा॒न॒रः प्र॒दिवो॒ अका॑मकर्शनः॒ सखा॒ सखि॑भ्य॒स्तमि॒दं गृ॑णीमसि ॥ २

सर्वस्तोतॄणां दुरः द्वारं निमित्तभूमिः । दातेत्यर्थः । कस्य । अश्वस्य । जात्यभिप्रायमेतदेकवचनम् । अश्वानाम् । न केवलानाम् । किं तर्हि । दुर इन्द्र गोरसि । गवां च द्वारमसि हे इन्द्र । दुरो यवस्य यवानां च द्वारमसि । वसुनः धनस्य च सर्वस्य इन ईश्वरस्त्वमसि । पतिः पालयिता च कृत्स्नस्य जगतः । शिक्षानरः । शिक्षतिर्दानकर्मा । छान्दसश्चात्र चतुर्थीसमासः पूर्वनिपातश्च । नरेभ्यो दाता धनानां शिक्षानरः नचेदानींतनः । किं तर्हि । प्रदिवः । पुराणनामैतत् । चिरन्तनः । एवं न चाल्पदः । किं तर्हि । अकामकर्शनः कामानामकर्शयिता अतनूकर्ता । यान् काम्यते ततोऽधिकस्य दातेत्यर्थः । सखा चासि सखिभ्यः सखीनां यजमानानाम् । तं भवन्तमेवंरूपं वयमिदं गृणीमसि । स्तुम इत्यर्थः ॥ २

शची॑व इन्द्र पुरुकृद्द्युमत्तम॒ तवेदि॒दम॒भित॑श्चेकिते॒ वसु॑ ।
अतः॑ सं॒गृभ्या॑भिभूत॒ आ भ॑र॒ मा त्वा॑य॒तो ज॑रि॒तुः काम॑मूनयीः ॥ ३

शचीवः कर्मवन् प्रज्ञावन् वा इन्द्र । पुरुकृत् बहूनां वृत्रवधादीनां कर्मणां कर्तः । द्युमत्तम अतिशयेन दीप्तिमन् । तवेदिदम् । इच्छब्दः पदपूरणः । यदिदं तवाभितः उभयतः दक्षिणे वामे च पार्श्वे चेकिते ज्ञायते । दृश्यत इत्यर्थः । वसु प्रभूतं धनम् । अतः संगृभ्य गृहीत्वैकदेशं हे अभिभूते अभिभवितः शत्रूणाम् । आभर आहर । देहीत्यर्थः । मा च त्वायतः त्वमिच्छतः जरितुः स्तोतुः मम काममिच्छां ऊनयीः न्यूनीकार्षीः । यावदहमिच्छामि तावद्देहि मा स्तोकमित्यर्थः ॥ ३

एभिर्द्युभिः सुमना एभिरिन्दुभिर्निरुन्धानो अमतिं गोभिरश्विना ।
इन्द्रेण दस्युं दरयन्त इन्दुभिर्युतद्वेषसः समिषा रभेमहि ॥ ४

एभिर्द्युभिः । सप्तम्यर्थे तृतीयैषा । द्यु इति चाह्नो नामधेयम् । एतेष्वहस्सु । सांप्रतमेवेत्यर्थः । सुमनाः । उत्तरार्धर्चस्थैः भूयोभिर्बहुवचनान्तैः सामानाधिकरण्यात् बहुवचनान्तस्य स्थान इदमेकवचनम् । सुमनसः । प्रीतियुक्ताः सन्तः इत्यर्थः । एभिरिन्दुभिः सोमैर्निरुन्धानः । इदमपि बहुवचनान्तस्यैव स्थान एकवचनम् । निरुन्धानाः । प्रतिबध्नन्तः । अमतिं अज्ञानम् । अथवा मन्यतेरर्चतिकर्मणः कर्तर्ययं क्तिन् । इन्द्रस्यास्तोतारमात्मीयं शत्रुम् । गोभिरश्विना । अश्वित्ववचनादश्वशब्दादश्वैभिर्वायमिनिर्द्रष्टव्यः । सार्थिको वा । बहुवचनस्य स्थान एकवचनम् । तृतीयानिर्देशाच्च युक्ता इति वाक्यशेषः । गोरश्वैर्युक्ता इत्यर्थः । इन्द्रेण दस्युं आत्मीयं शत्रुं दरयन्तः दारयन्तः । केन । इन्दुभिः सोमैः । सोमैर्मत्तेनेन्द्रेण स्वशत्रून् घातयन्त इत्यर्थः । युतद्वेषसः । यौतिः पृथग्भावार्थः । अत्र द्वेषशब्दो द्वेषवचनो द्वेष्टृवचनो वा । पृथग्भूतद्वेषसः अपगतजनद्वेष्यत्वात् अपगतजनद्वेष्टृका वेत्यर्थः । समिषा रभेमहि । लभेरिदम् । कपिलादित्वात् रत्वम् । सम्यक् लभेमहीत्याशास्महे । किम् । सामर्थ्याद्धनं यशो वा । न च केवलम् । किं तर्हि । इषा अन्नेन सह । अथवा इषेति द्वितीयार्थे तृतीया । इषं सम्यक् लभेमहि ॥ ४

समिन्द्र राया समिषा रभेमहि सं वाजेभिः पुरुश्चन्द्रैरभिद्युभिः ।
सं देव्या प्रमत्या वीरशुष्मया गोअग्रयाश्वावत्या रभेमहि ॥ ५

समिन्द्र राया । पुनः पुनः संशब्दश्रुतेः प्रतिसंशब्दं रभेमहीत्याख्यातमनुषक्तव्यम् । संरभेमहि सम्यक् लभेमहीत्याशास्महे । हे इन्द्र राया । द्वितीयार्थे सर्वत्रात्र तृतीया । सहयोगलक्षणा वा तृतीया । तैर्वा सुखं वा गृहं वा यशो वा पूजां वेति वाक्यशेषः । धनं धनेन वा सह सुखादीनां किञ्चित् । समिषा रभेमहि सम्यग्लभे-

माहि इषमन्नं अन्नेन वा सह सुखादीनां किञ्चित् । सं वाजेभिः इषेत्यनेनान्नस्य उपात्तत्वाद्वाजशब्दोऽत्र बलवचनः । सम्यग्लभेमहि बलानि बलैर्वा सह सुखादीनां किञ्चित् । कीदृशैर्वाजेभिः । पुरुश्चन्द्रैः बहूनां कान्तैः । अभिद्युभिः अभिगतदीप्तिभिः । स्वदीप्त्या दीप्तैरित्यर्थः । सं देव्या । दीव्यतिर्द्योतनार्थः । स्वदीप्त्या द्योतमानां द्योतमानया सह सुखादीनां किञ्चित् । कया देव्या । उच्यते । प्रमत्या प्रकृष्टया मत्या ज्ञानेन । कीदृश्या । वीरशुष्मया । वीराः पुत्राः । ते बलं यस्याः सा वीरशुष्मा । तया । बलवत्पुत्रसहितया तया । गोअग्रया गावोऽग्रभुता यस्याः सा गोअग्रा । प्रधानभूताभिर्गोभिस्सहिता । तया । अश्वावत्या अश्वसहितया । सं रभेमहि सम्यग्लभेमहीत्याशास्महे ॥ ५

ते त्वा मदा अमदन्तानि वृष्ण्या ते सोमासो वृत्रहत्येषु सत्पते ।
यत्कारवे दश वृत्राण्यप्रति बर्हिष्मते नि सहस्राणि बर्हयः ॥ ६

ते त्वा त्वां सुरालक्षणा मदा अमदन् । तानि वृष्ण्या । अपठितमपि बलनामैतत् । बलानि ते सोमासः वृत्रहत्येषु वृत्रहननेषु हे सत्पते सतां पालयितः । यत् यैः कारवे । कार्विति स्तोतृनाम । स्तोतुरर्थाय । दश वृत्राणि । वृत्रशब्दः शत्रुवचनः । सहस्राणीत्येतेन चास्य संबन्धः । सहस्रशब्दश्चोभयवचनः । उभयवचनत्वेऽपीह संख्यामात्रवचनो न संख्येयवचनः । कुत एतत् दशेत्येतेन सामानाधिकरण्यात् । दशसंख्यया च सहस्रसंख्या परिच्छिद्यते । न तत्संख्येयाः । अतोऽत्र सहस्रशब्दस्य संख्यामात्रवचनत्वात् वृत्राणीत्येतस्य च तत्संख्यया प्रतिनिर्देशार्थत्वात् षष्ठ्यर्थे द्वितीया । वृत्राणां शत्रूणाम् । अप्रति । वृत्राणामिदं विशेषणम् । इन्द्रस्य वा । प्रतिशब्दश्चायमुपसर्गः । उपसर्गाश्च पुनरेवमात्मकाः । यत्र कश्चित् क्रियावाची तत्र क्रियाविशेषणमाहुः । यत्र खलु क्रियावाची शब्दो न प्रयुज्यते ससाधनां तत्र क्रियामाहुः । अतोऽत्रावतिष्ठतेर्बध्नातेर्वा ससाधनस्यार्थे प्रतिशब्दः । अप्रत्यवतिष्ठमानः अप्रतिबन्ध्यमानो वेत्यर्थः । कस्मै कारवे । उच्यते । बर्हिष्मते यजमानाय । कानि दश । उच्यते । सहस्राणि निबर्हयः । वधकर्मायम् । हतवानसि ॥ ६

युधा युधमुप घेदेषि धृष्णुया पुरा पुरं समिदं हंस्योजसा ।
नम्या यदिन्द्र सख्या परावति निबर्हयो नमुचिं नाम मायिनम् ॥ ७

युधा युद्धेन युधं प्रतियोद्धारं उप घेदेषि । भूते लट् । उपैषि उपगतवानसि । घ इदिति तु पदपूरणौ । कथं च पुनरुपैषि । धृष्णुया । प्रथमैकवचनस्यायं या आदेशः ।

धृष्णुः प्रगल्भः । निश्शंकस्सन्नित्यर्थः । न केवलं युधा युधम् । किं तर्हि पुरा पुरम् । पूःशब्दः शरीरवचनः । शरीरेण च शरीरम् । यो योद्धा अस्त्रवान् अस्त्रयुद्धेनोप-गन्तव्यः तं तेनोपगतवानसि । यो बाहुयुद्धार्थी शरीरेणेत्यर्थः । एवमिदं शत्रुबलं संहसि । नम्याऽपि सह । सम्यग्गतवानसि । ओजसा आत्मीयेन बलेन । कदा । उच्यते । नम्या । इन्द्रं प्रति प्रणतस्याम् नमी सखुना सहोच्यते ।

प्रावन्नमीं साप्यम् ऋ. वे ६. २०. ६.

इति यथा । नम्येन सखुरूपेण सह यत् यदा सख्या स्वसखेन परावति दूरे स्थितं निबर्हयः हतवानसि । नमुचिं नामासुरं मायिनं मायावन्तम् ॥ ७

त्वं करञ्जमुत पर्णयं वधीस्तेजिष्ठयातिथिग्वस्य वर्तनी ।
त्वं शता वङ्गृदस्याभिनत्पुरोऽनानुदः परिषूता ऋजिश्वना ॥ ८

त्वं करञ्जनामानमेतमसुरं उत पर्णयं पर्णयनामानमपरं अवधीः । तेजिष्ठया तीक्ष्णतमया वर्तनी वर्तन्या धारया । कस्य । सामर्थ्याद्वज्रस्य । कस्यार्थाय उच्यते । अतिथिग्वस्य । अतिथीन् प्रति परिचारकत्वेन गच्छतीत्यतिथिग्वो दिवोदास इहो-च्यते । कुत एतत् ।

दिवोदासमतिथिग्वम् । ऋ. वे. ४. २६. ३.

इत्यादिषु दर्शनात् । षष्ठीनिर्देशश्चार्थायेति वाक्यशेषः । तादर्थ्यचतुर्थ्यर्थे वा षष्ठी । अतिथीनां परिचरितुर्दिवोदासनाम्नो राज्ञोऽर्थायेत्यर्थः । किंच त्वं शता । द्वितीयैक-वचनस्यायमाकारः आदेशः । शतं वङ्गृदस्य वङ्गृदनाम्नोऽसुरस्य स्वभूता अभिनत् भिन्नवानसि । काः । पुरः नगराणि । कीदृशोऽयम् । उच्यते । अनानुदः । अनुददा-तीत्यनुदः । अविद्यमानोऽनुदो यस्य सोऽनानुदः । यदीयं दानं प्राभूत्यादन्योऽनुकर्तु-मपि न शक्नोतीत्यर्थः । कीदृशीः पुरः । उच्यते । परिषूताः । षूङ् प्रेरणे । सर्वतः प्रेरिताः स्वेभ्यः स्थानेभ्यः । भयेनेतश्च प्रणाशितलोकाः सन्तीत्यर्थः । केन परिषूताः । उच्यते । ऋजिश्वना । ऋजिश्वा नाम राजा विदथिनः पुत्रः यस्य मन्त्रान्तरेष्वपि दर्शनम् ।

त्वं पिप्रुं मृगयं शूशुवांसमृजिश्वने वैदथिनाय रन्धीः । ऋ. वे. ४. १६. १३.

इति । तेन । अथवा ऋजिश्वनेति तादर्थ्यचतुर्थ्यर्थे तृतीया । ऋजिश्वनो राज्ञोऽर्थाय त्वं वङ्गृदस्याभिनच्छतं पुरः ॥ ८

त्वमेताञ्जनराज्ञो द्विर्दशाबन्धुना सुश्रवसोपजग्मुषः ।
षष्टिं सहस्रा नवतिं नव श्रुतो नि चक्रेण रथ्या दुष्पदावृणक् ॥ ९

त्वमेतान् जनराज्ञः आत्मीयानां जनानां राज्ञः । स्वराज्येषु प्रतिष्ठितान् सत इत्यर्थः । कियतः । द्विर्दश द्विरावृत्तं दश । विंशतिमित्यर्थः । कान् । अबन्धुना । द्वितीयार्थे तृतीयैषा । अबन्धून् बन्धुवर्जितान् । वैरिणोऽसुरानित्यर्थः । सुश्रवसा । श्रव इति धननाम । शोभनेन धनेन उपजग्मुषः । कर्मण्ययं व्यत्ययेन क्वसुर्द्रष्टव्यः । उपगतानन्वितान् । धनेन समृद्धान् सत इत्यर्थः । अथवा अबन्धुना सुश्रवसेति द्वे अपि तृतीयान्ते समानाधिकरणे । बन्धुरिति तु धननाम । श्रव इत्यन्ननाम । उपजग्मुष इत्यपि स्वार्थे कर्तर्येव क्वसुः । धनवर्जितेन शोभनेनान्नेनोपगतान् । पक्वान्नमात्रे फल्गुना करेणोपगतान् । सुवर्णरजतमणिक्यशुक्तिकादिधनं सारभूतं करमददत इत्यर्थः । न च विंशतिमेव केवलान् । किं तर्हि । षष्टिं सहस्रा सहस्राणि नवतिं च नव च श्रुतो विख्यातस्त्वम् । चक्रेण रथ्या सूर्यरथस्यावयवभूतेन । दुष्पदा । पदिर्गत्यर्थः । दुर्गमेण । तीक्ष्णधारित्वात् दुस्सहेनेत्यर्थः । न्यपृणक् । पृणक्तीति वधकर्मा । नियमेनावधीरित्यर्थः । अत्रेतिहासमाचक्षते । असुराः किल ब्रह्मणा दत्तवरत्वाद्ब्रस्यावध्या आसन् । तानिन्द्रः सूर्यरथाच्चक्रमपहृत्य तेनाहन् इति । तदेतदिहोच्यते । नि चक्रेण रथ्या इति । मन्त्रान्तरेऽपि चैतद्दृश्यते ।

यत्रोत बाधितेभ्यश्चक्रं कुत्साय युध्यते । मुषाय इन्द्र सूर्यम् ऋ. वे. ४. ३०. ४. इत्यादौ ॥ ९

त्वमा॑विथ सु॒श्रव॑सं॒ तवो॒तिभि॒स्तव॒ त्राम॑भिरिन्द्र॒ तूर्व॑याणम् ।
त्वम॑स्मै॒ कुत्स॑मतिथि॒ग्वमा॒युं म॒हे राज्ञे॒ यूने॑ अरन्धनायः ॥ १०

त्वमाविथ पालितवानसि सुश्रवसं नाम राजानं तव योग्याभिरूतिभिः पालनैः । किंच त्वं न केवलं सुश्रवसम् । किं तर्हि । तव योग्यैस्त्रामभिः पालनैः हे इन्द्र तूर्वयाणं नामापरं राजानम् । किंच त्वमस्मै । तूर्वयाणस्यायमन्वादेशः । तादर्थ्ये चात्र चतुर्थी । अस्य तूर्वयाणस्यार्थाय । स्ववशत्वं कुत्सं नाम ऋषिम् । अतिथिग्वं अतिथीन् प्रति परिचरितृतयोपगन्तारं दिवोदासं नाम राजानम् । आयुं चोर्वश्याः पुत्रम् । कीदृशायास्मै । उच्यते । महे महते राज्ञे यूने तरुणाय । अरन्धनायः । अरन्धतिर्वशगमने । आत्मनो वशमनैषीः । तूर्वयाणस्य कार्येषु नियोगार्थं कुत्सादीनपि स्ववशेऽकार्षीरित्यर्थः ॥ १०

य उ॒दृची॑न्द्र दे॒वगो॑पाः॒ सखा॑यस्ते शि॒वत॑मा॒ असा॑म ।
त्वां स्तो॑षाम॒ त्वया॑ सु॒वीरा॒ द्राघी॑य॒ आयुः॑ प्रत॒रं दधा॑नाः ॥ ११

ये वयमुदृचि । ऋक् स्तुतिः । उद्गता स्तुतिर्यस्मिन् स उदृग्यज्ञः । तत्र । अथवा सुष्टु सुवीरं यज्ञस्यायुर उदृचम् । इति प्रैषेषु प्रयोगदर्शनात् उदृक्शब्दः समाप्तिवचनः । उदृचि समाप्तौ । कस्य । सामर्थ्यादिन्द्रस्य वा स्तुतीनां वा । हे इन्द्र देवगोपाः । देवा गोपारो येषां ते देवगोपाः । सर्वैर्देवैः पाल्यमाना इत्यर्थः । सखायस्ते शिवतमाः सुखतमाः । सुखकरीणां स्तुतीनां कर्तार इत्यर्थः । असाम भवाम । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । ते त्वां स्तोषाम नित्यं त्वां स्तूयामेत्याशास्महे । त्वया । हेतावियं तृतीया । त्वया हेतुना । सुवीराः शोभनैर्वीरैर्युक्ताः । त्वदनुग्रहाच्छोभनैः पुत्रैः पौत्रैश्च युक्ता इत्यर्थः । द्राघीयः अतिशयेन दीर्घं आयुर्जीवितं प्रतरं प्रकृष्टतरं श्लाघ्यं दधानाः धारयन्तः । चिरं श्लाघ्यं च जीवन्त इत्यर्थः ॥ ११

---

मा नो अस्मिन् मघवन् पृत्स्वंहसि नहि ते अन्तः शवसः परीणशे ।
अक्रन्दयो नद्यो३ रोरुवद्वना कथा न क्षोणीर्भियसा समारत ॥ १

मा नो अस्मिन् । मेति प्रतिषेधात् नः इति च कर्मश्रुतेर्योग्यक्रियाध्याहारः । मा त्याक्षीः नः अस्मान् । अस्मिन् हे मघवन् । पृत्सु । संग्रामनामैतत् । एकवचनस्य स्थानेऽत्र बहुवचनम् । संग्रामे । अंहसि पापे अत्यन्तभयानके । किं कारणम् । उच्यते । नहि ते अन्तः शवसः बलस्य परीणशे । नशिर्व्याप्तिकर्मा । कृत्यार्थे चायं कन्प्रत्ययः । शक्यार्थश्चात्र कृत्यार्थः । व्याप्तुं शक्य इत्यर्थः । किंच अक्रन्दयः शब्दवतीरकरोः अकार्षीर्वा । नद्यः गंगाद्या नदीः । रोरुवत् स्तनयित्नुलक्षणं शब्दं कुर्वन् । वना । वनमित्युदकनाम । तृतीयाबहुवचनस्यायमाकार आदेशः । वनैरुदकैर्गर्जन् । वृष्टिलक्षणैरुदकैरापूरयन् शब्दवतीर्नदीरकरोः करोषि वेत्यर्थः । एतच्च कर्म कुर्वतो भवतः कथा कथं न क्षोणीः माध्यमिका वाक् । भियसा भयेन समारत । समित्येष निरित्येतस्य स्थाने । अर्तिर्गत्यर्थः । मेघान्निर्गताः निर्गच्छन्ति वेत्यर्थः । अथवा समित्येष स्वार्थ एव । सामर्थ्यात्त्वन्येन सह संगतिरभिप्रेता । कथमन्येन सह संगता । कथं त्वत्तो न नष्टा न नश्यन्ति वेत्यर्थः ॥ १

अर्चा शक्राय शाकिने शचीवते शृण्वन्तमिन्द्रं महयन्नभि ष्टुहि ।
यो धृष्णुना शवसा रोदसी उभे वृषा वृषत्वा वृषभो न्यृञ्जते ॥ २

अर्चेत्यात्मन एवान्तरात्मनः प्रैषः ऋत्विगन्तरस्य वा । स्तुहि हे अन्तरात्मन् ऋत्विग्वा । शक्राय । द्वितीयार्थ एताश्चतुर्थ्यः । शक्रमिन्द्रम् । शाकिने शक्तिमन्तम् ।

शचीवते कर्मवन्तं वा प्रज्ञावन्तं वा । मा च विप्रकृष्टं निरादरं वा । किं तर्हि । शृण्वन्तमिन्द्रम् । सन्निकृष्टं सादरं वा सन्तमित्यर्थः । स्वयमपि च मा निरादरः । किं तर्हि । महयन् । मह पूजायाम् । नमस्काराञ्जलिपुटकरणादिना पूजयन् । अभिष्टुहि । यः इन्द्रः किं करोति । उच्यते । यो धृष्णुना शत्रूणामभिभवित्रा शवसा रोदसी उभे अपि वृषा वर्षिता वृषत्वा वर्षितृत्वेन । वृष्टिप्रदानेनेत्यर्थः । न च सकृद्वर्षिता । किं तर्हि । वृषभः पुनः पुनर्वर्षिता । वर्षशील एवेत्यर्थः । न्यृञ्जते । ऋञ्जतिः प्रसाधनकर्मा । प्रसाधनं च भूषणं वशीकरणं वा । नियमेन प्रसाधयति भूषयति स्ववशे वा कुरुते इत्यर्थः । उभयमपि ह्येतत् वृष्टिप्रदानेन द्यावापृथिव्योरिन्द्रः करोति ॥ २

अर्चा॑ दि॒वे बृ॑ह॒ते शू॒ष्यं॑१ वचः॒ स्वक्ष॑त्रं॒ यस्य॑ धृष॒तो धृ॒षन्मनः॑ ।
बृ॒हच्छ्र॑वा॒ असु॑रो ब॒र्हणा॑ कृ॒तः पु॒रो हरि॑भ्यां वृष॒भो रथो॒ हि षः ॥ ३

अर्चेतिरत्र सामर्थ्यादुच्चारणार्थः । आत्मन एव चायमन्तरात्मनः प्रैषः । उच्चारय । हे अन्तरात्मन् । दिवे बृहते । तादर्थ्ये चतुर्थ्यावेते । दीप्तस्य महतश्चेन्द्रस्यार्थाय । शूष्यं बलस्य निमित्तम् । बलवृद्धिकरमित्यर्थः । वचः स्तुतिलक्षणम् । स्तूयमाना हि देवता वीर्येण वर्धन्ते । अत एवमुच्यते उच्चारयेन्द्राय शूष्यं वच इति । यस्येन्द्रस्य । किम् । उच्यते । स्वक्षत्रम् । क्षत्रमित्यपठितमपीह बलनाम द्रष्टव्यम् । स्वबलं परानाश्रितम् । यस्य धृषतः शत्रूनभिभवतः धृष्टं प्रगल्भं मनः । यस्य बलेन शत्रून् घ्नन् न कुतश्चिन्मनसा बिभेमीत्यर्थः । बृहच्छ्रवाः । रथो हि ष इति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । यो बृहच्छ्रवाः । श्रव इति धननाम । महाधनः । असुरः वृत्रः अन्यो वा कश्चित् । बर्हणा कृतः बर्हिर्वृध्यर्थः । इन्द्रस्य चेदं विशेषणम् । परिवृद्धेनेन्द्रेण कृतः । अथवा बर्हणा हिंसोच्यते । निबर्हयतेर्वधकर्मत्वात् । बर्हणया हिंसया कृतः । कदा । उच्यते । पुरो हरिभ्याम् । प्राग्घरिप्राप्तेरप्राप्तेन । तदीयं स्थानं स्वस्थानम् । स्थेनैव सतेत्यर्थः । कीदृशम् । उच्यते । वृषभः वर्षिता । करद इत्यर्थः । न च केवलं करदः । किं तर्हि । रथो हि षः । रथो रंहतेर्गतिकर्मणो गन्ता इहोच्यते । हि शब्दश्चार्थे । रंहिता च सः कृतः । आत्मनोऽनुगन्ता च स कृत इत्यर्थः । अथवा रूढिबलाद्रथशब्दो रथ वचन एवान्तर्णीतमत्वर्थः । रथवांश्च स कृतः । रथेन च स सेवकः कृत इत्यर्थः । अथवा बृहच्छ्रवा इति श्रूयमाण च्छ्रवः स्तनयित्नुलक्षणः शब्द इहाभिप्रेतः । असुर इत्यपि प्रज्ञावत्त्वात् प्राणवत्त्वाद्वा मेघ उच्यते । बर्हणाशब्दो विविधवचनः । निबर्हयतेर्वधकर्मकत्वात् । ये नेन्द्रेण महान् स्तनयित्नुलक्षणशब्दो मेघो वधेन प्राग्घरिप्राप्तेः दूरस्थेनैव सता वृषभः कृतः । वृष्टिप्रदः कृत इत्यर्थः । मा च मंस्थाः

क्रियानयं पुरुषकार इति । किं कारणम् । रथो हि षः । हिशब्दो यस्मादर्थे । यस्मात् इन्द्रः रंहिता गन्ता वृषा । स मेघानां वर्षणात् च दुर्हेण इत्यर्थः ॥ ३

त्वं दिवो बृहतः सानु कोपयोऽव त्मना धृषता शंबरं भिनत् ।

यन्मायिनो व्रन्दिनो मन्दिना धृषच्छितां गभस्तिमशनिं पृतन्यसि ॥

त्वं दिवः । यद्यप्यसुरा अपि द्युलोकैकदेशवासिन एव ततोऽत्र द्युशब्दो द्युलोकवचन एव । अथ न ततो दीप्तिवचनः । त्वं द्युलोकस्य दीप्तस्य वा असुरपुरस्य बृहतः सानु समुच्छ्रितं प्रदेशं कोपयः भग्नवानसि । किम् । त्मना आत्मनैव त्वं धृषता धृष्टेन निश्शङ्केन मनसा शंबरं नामासुरं अवभिनत् अवाभिनत् । अवभिन्नवान् । चूर्णीकृतवानित्यर्थः । कदा । उच्यते । यत् यदा मायिनो मायावतः व्रन्दिनः । व्रन्दी व्रन्दतेर्मृदुभावकर्मणः । अत्यन्तबलवत्त्वात् परबलानां मृदूकर्तुः मायावतः । अत एव च बलवतः शंबरस्य स्वभूतामित्यर्थः । मन्दिना । मन्दतिरर्चतिकर्मा । स्तुतिमता स्तुत्येन वज्रेण मनसा वा । धृषत् धृष्टं निःशङ्कम् । शितां निशितां तीक्ष्णां गभस्तिम् । बाहुनामैतत् । तात्स्थ्यात्तत्रस्थाशनौ वर्तते । बाहुस्थां अशनिं शक्तिं पृतन्यसि अपृतन्यः योधितवान् । यदाशनिहस्तेन शंबरेण सहायुध्यत इत्यर्थः ॥ ४

नि यद्वृणक्षि श्वसनस्य मूर्धनि शुष्णस्य चिद्व्रन्दिनो रोरुवद्वना ।

प्राचीनेन मनसा बर्हणावता यदद्या चित्कृणवः कस्त्वा परि ॥ ५

यत् यस्मात् निवृणक्षि । वृणक्तीति वृणक्तीति वधकर्मसु पाठात् वधार्थोऽयम् । लड् भूते काले द्रष्टव्यः । नियमेन हतवानसि । श्वसनस्य श्वासकारिणः । महाश्वासस्येत्यर्थः । मूर्धनि । द्वितीयार्थे सप्तम्येषा । मूर्धानं मस्तकम् । कस्य । उच्यते । शुष्णस्य शुष्णनाम्नोऽसुरस्य । चिच्छब्दस्तु पदपूरणः । कीदृशस्य । व्रन्दिनः अत्यन्तबलवत्त्वात् परबलानां मृदूकर्तुः । अत्यन्तबलवत इत्यर्थः । रोरुवत् शब्दं कुर्वन् । वना ।

नहि मे अस्त्यघ्न्या न स्वधितिर्वनन्वति । ऋ. वे. ८. १०२. १९.

इत्यादिप्रयोगदर्शनात् वनशब्दस्तीक्ष्णवचनः । तृतीयैकवचनस्य चायं याआदेशो द्रष्टव्यः । तीक्ष्णेन वज्रेण । वधवचनः सामर्थ्याद्वनशब्दः वधेन प्रहारेणेत्यर्थः । किंच प्राचीनेन प्रागञ्चितेन गतेन अपराङ्मुखेन । उत्साहवतेत्यर्थः । केन । मनसा । कीदृशेन । बर्हणावता वृद्धिमता हिंसावता वा । यत् यस्मात् अद्या चित् अद्यापि कृणवः करोषि ईदृशानि कर्माणि । यस्मादिति वचनात्तस्मादित्यध्याहार्यः । तस्मात् कस्त्वा परि । परिशब्दोऽध्यर्थे । कस्तवाधिकः अन्यः कः तवोपरि । सर्वस्य त्वमुपरीत्यर्थः ॥ ५

त्वमा॑विथ॒ नर्यं॑ तु॒र्वशं॒ यदुं॒ त्वं तु॒र्वीतिं॑ व॒य्यं॑ शतक्रतो ।
त्वं रथ॒मेत॑शं॒ कृत्व्ये॒ धने॒ त्वं पुरो॑ नव॒तिं द॑म्भयो॒ नव॑ ॥ ६

त्वमाविथ पालितवानसि नर्यं नरेषु भवं साधुं वा मनुष्यं मनुष्यहितं वेत्यर्थः । कम् । तुर्वशं नाम राजानं ऋषिं वा । यदुं च । त्वमेव तुर्वीतिं नाम राजानमृषिं वा असुरैरगाध उदके प्रक्षिप्तं गाधकरणेन पालितवानसि । तदेतन्नोधा अपि वक्ष्यति ।

तुर्वितये गाधं तुर्वणिः कः । ऋ. वे. १. ६१ ११.

इति । त्वमेव वय्यं नामापरं राजानमृषिं वा पालितवानसि । हे शतक्रतो । त्वं रथमेतशम् । अत्रेतिहासमाचक्षते । संग्रामेऽसुराः सूर्यस्य रथं भङ्क्तुमैच्छन् अश्वं चापहर्तुम् । ताविन्द्रो रक्षितवान् इति । तदेतदुच्यते । त्वमेव रथं चैतशं च पालितवानसीति । एतश इत्यश्वनाम । कृत्व्ये कर्मणे । धने । निमित्ते एषा सप्तमी । धनार्थे यत् कर्मेत्यर्थः । कतमत् पुनस्तत् । संग्रामः । संग्रामार्थमश्वरथौ पालितवानित्यर्थः । अथवा कृत्व्यशब्दः कर्तव्यवचनः । सप्तमी चैषा । धनार्थे यः कर्तव्यः संग्रामः तत्रेत्यर्थः । त्वमेव पुरः नगराणि दम्भयः । दम्नातिर्वधकर्मा । स्वार्थे च णिच् छान्दसत्वात् । विष्णुसहितो हतवानसि । कियतीः । नवतिं च नव च । कस्य स्वभूताः । शंबरस्य कुत एतत् ।

इन्द्राविष्णू दृंहिताः शंबरस्य नव पुरो नवतिं च श्नथिष्टम् । ऋ. वे. ७. ९९. ५.
इति मन्त्रान्तरेषु दर्शनात् ॥ ६

स घा॒ राजा॒ सत्प॑तिः शूशुव॒ज्जनो॑ रा॒तह॑व्यः॒ प्रति॒ यः शास॒मिन्व॑ति ।
उ॒क्था वा॒ यो अ॑भिगृ॒णाति॒ राध॑सा॒ दानु॑रस्मा॒ उप॑रा पिन्वते दि॒वः ॥ ७

स राजा सत्पतिः सतां पालयिता । शूशुवत् सर्वाभिर्वृद्धिभिः वर्धते । जनः । पञ्चजना इति मनुष्यनामसु पाठान्मनुष्यनामैतत् । अन्यो वा मनुष्यः । रातहव्यः दत्तहविष्कः । यः प्रति शासम् । कृत्स्नस्य जगतः शासितृत्वाच्छास इन्द्रः । तं प्रति । इन्वतिर्गतिकर्मा । व्याप्तिकर्मा वायम् । गच्छति व्याप्नोति वा । य इन्द्रं दत्तेन हविषा उपसर्पति व्याप्नोति वेत्यर्थः । उक्थशब्दः स्तोत्रवचनः । तृतीयाबहुवचनस्यायमाकारः । स्तोत्रैर्वा यः अभिगृणाति अभिष्टौति । न च शूशुवदेव केवलम् । किं तर्हि । राधसा दानुरस्मै । राधसेतीत्थंभूतलक्षणे वा तृतीया । तृतीयानिर्देशाद्वा योग्यक्रियाध्याहारः । दानुरिति स्तनयित्नुलक्षणा माध्यमिका वागुच्यते । धनेन युक्तायास्मै माध्यमिका वाक् । उपरा । मेघनामैतत् द्वितीयाबहुवचनस्यायं-

आकारः। मेघान् पिन्वते। पिन्विः सेचनार्थोऽन्तर्णीतण्यर्थश्च द्रष्टव्यः। सेचयति। प्रक्षालयतीत्यर्थः। दिवः द्युलोकान्। धनं च अस्य भवति। मेघाश्च गर्जन्तो वर्षन्तीत्यर्थः॥ ७

असमं क्षत्रमसमा मनीषा प्र सोमपा अपसा सन्तु नेमे।
ये त इन्द्र ददुषो वर्धयन्ति महि क्षत्रं स्थविरं वृष्ण्यं च॥ ८

असमं अतुल्यमन्यैर्मनुष्यैः। क्षत्रं धनम्। असमा मनीषा प्रज्ञा च। प्र। उपसर्गोऽयम्। उपसर्गाश्च पुनरेवमात्मकाः। यत्र कश्चित् क्रियावाची शब्दः प्रयुज्यते तत्र क्रियाविशेषमाहुः। प्रवचन्ति प्रकरोतीति। यत्र तु क्रियावाची शब्दो न प्रयुज्यते ससाधनां तत्र क्रियामाहुः। अतोऽत्र शुद्धोऽपि प्रशब्दः प्रवृद्धशब्दार्थे। प्रवृद्धाश्च पुत्रादिभिः सोमपाः सोमस्य पातारः। यष्टार इत्यर्थः। केन प्रवृद्धाः। उच्यते। अपसा यागकर्मणा। सन्तु भवन्तु। धनप्रज्ञे एषामतुल्ये स्ताम्। पुत्रादिभिश्च प्रवृद्धाः यागेन यष्टारः सन्त्वित्यर्थः। किं सर्वे। न। किं तर्हि। नेमे अर्धाः। कतमे। उच्यते। ये ते हे इन्द्र ददुषः धनानि दत्तवन्तः वर्धयन्ति। महि क्षत्रं हविराख्यं धनं स्थविरं वृष्ण्यं च परिवृद्धं च। स्तूयमाना हि देवता वीर्येण वर्धन्ते। अतोऽत्र बलवर्धनेन तत् कारणं स्तुतिकरणं प्रतिपद्यते। ये तव धनदानोत्तरकालं हवींषि वर्धयन्ति स्तुतीश्च कुर्वन्तीत्यर्थः॥ ८

तुभ्येदेते बहुला अद्रिदुग्धाश्चमूषदश्चमसा इन्द्र पानाः।
व्यश्नुहि तर्पया काममेषामथा मनो वसुदेयाय कृष्व॥ ९

तुभ्येति तादर्थ्ये चतुर्थी। त्वदर्थाः। एते बहुलाः बहवः। अद्रिदुग्धाः अभिषवग्रावभिः क्षारिताः। चमूषदः। अधिषवणफलके अत्र चमूशब्देनोच्येते।

उच्छिष्टं चम्वोर्भर। ऋ. वे. १. २८. ९.

इति यथा। तत्सादिनः। अधिषवणफलकयोरभिषुता इत्यर्थः। चमसाः। तात्स्थ्यात्तात्स्थ्य एतत्। चमसस्थाः। के ते। सामर्थ्यात् सोमाः। अथवा चम्यमानत्वाच्चमसाः सोमा एवोच्यन्ते। ते। हे इन्द्र पानाः पानार्हाः। सम्यक् संस्कृता इत्यर्थः। एतत् ज्ञात्वा व्यश्नुहि विविधमेतान्याप्नुहि। पिबेत्यर्थः। मा चाल्पान्। किं तर्हि। तर्पय आत्मीयं काममेषाम्। तृतीयार्थे षष्ठ्येषा। एतैर्यावदिच्छमेतान् पिबेत्यर्थः। पीत्वा च अथानन्तरं आत्मीयं मनः। वसुदेयाय धनदानाय। धनदानाभिमुखं इत्यर्थः। कृष्व। कृणुष्व। धनं मह्यं देहीत्यर्थः॥ ९

अपामतिष्ठद्धरुणह्वरं तमोऽन्तर्वृत्रस्य जठरेषु पर्वतः।
अभीमिन्द्रो नद्यो वव्रिणा हिता विश्वा अनुष्ठाः प्रवणेषु जिघ्नते॥१०

अपामिति षष्ठीनिर्देशात् निरोधाय इति वाक्यशेषः। एकवाक्यताप्रसिध्यर्थं च यत्तच्छब्दावध्याहर्तव्यौ। यद्वृष्टिलक्षणानामपां निरोधाय अतिष्ठत्। लडर्थे लङ्। तिष्ठति। धरुणह्वरम्। धरुणमित्युदकनाम। ह्व कौटिल्येऽन्यत्र। इह तु सामर्थ्यात् निरोधसामर्थ्ये। उदकस्य ह्वारकम्। निरोधसमर्थमित्यर्थः। किं तत्। उच्यते। मेघलक्षणं तमः। तस्यान्तः मध्ये वृत्रस्य। मेघनामैतत्। मेघाख्यस्य तमसः अन्तः। कुत्र। उच्यते। जठरेषु। जठरमुदरम्। एकवचनस्य स्थाने बहुवचनमेतत्। उदरे। पर्वतः। वज्र इह पर्ववत्त्वात् पर्वतशब्देनोच्यते।

अभि जहि रक्षसः पर्वतेन। ऋ. वे ७. १०४. १९.

इति यथा। साकांक्षत्वाच्चातिष्ठदिति एतदेवाख्यातमनुषक्तव्यम्। अत्रापि वज्रोऽतिष्ठत्। वृष्टिनिरोधायावस्थितस्य मेघस्योदर इन्द्रो वज्रं क्षिपतीत्यर्थः। अभाम्। अभीत्युपसर्गो जिघ्नते इत्याख्यातेन संबध्यते। ईं एवमित्यस्यार्थे। एवमिन्द्रो नद्यः शब्दकारिणीरपः। वव्रिणा आवरणशीलेन मेघेन हिताः। विश्वाः सर्वाः बह्वीर्वा। अनुष्ठाः। अपामिदं विशेषणं द्वितीयाबहुवचनान्तम्। इन्द्रस्य वा प्रथमाबहुवचनान्तम्। तृचादीनामनुष्ठात्रीरपः। अनुपधादीनामनुष्ठातेन्द्रः। प्रवणेषु निम्नेषु प्रदेशेषु। अभिजिघ्नते। हन्तिरत्र गत्यर्थः। सामर्थ्याच्चान्तर्णीतण्यर्थः। छान्दसत्वाच्च एकवचनस्य स्थाने बहुवचनम्। अभिहन्ति अभिगमयति। पातयतीत्यर्थः। अथवा जिघ्नत इति हन्तिर्वधार्थ एव।

अधि सानौ निजिघ्नते। ऋ. वे. १. ८०. ६.

इति यथा। प्रवणेष्विति तु सप्तमीनिर्देशात् स्थिता इति वाक्यशेषः। निम्नेषु मेघप्रदेशेषु स्थिता आपः अभिजिघ्नते अभिहन्ति। पातयन्तीत्यर्थः॥ १०

स शेवृधमधि धा द्युम्नमस्मे महि क्षत्रं जनाषाळिन्द्र तव्यम्।
रक्षा च नो मघोनः पाहि सूरिन् राये च नः स्वपत्या इषे धाः॥ ११

य उक्तगुणोऽसि स शेवृधम्। शेवशब्दस्य सुखनाम्नोऽयं वकारलोपो द्रष्टव्यः। शेवपर्यायो वा शेशब्दः। सुखस्य वर्धयितृ। अधिधाः। अधिशब्दः अधिपरी अनर्थकौ (पा. १. ४. ९३.) इति कर्मप्रवचनीयः पदपूरणः। दधातिर्दानार्थः। देहि। द्युम्नमन्नम्। अथवा शेवृधमिति सुखनाम। सुखं च द्युम्नं च देहि। अस्मे अस्मभ्यम्। महि क्षत्रं महच्च धनम्। जनाषाट् शत्रुजनस्याभिभवितृ। हे इन्द्र तव्यम्। तवतेर्वृद्धि-

कर्मणस्तवो वृद्धिः। तस्य निमित्तं तव्यम्। वृद्धिकरमित्यर्थः। रक्षा च नः अस्मान् मघोनः धनवतः। न च केवलानस्मान् पाहि। रक्ष सूरीन् स्तोतॄन् नः अस्माकं स्वभूतान्। राये च। द्वितीयार्थे सर्वत्रात्र चतुर्थी। धनं च। स्वपत्यै इषे। शोभनापत्ययुक्तं चान्नं धाः देहि अस्मदीयेभ्यः स्तोतृभ्यः॥ ११

---

दि॒वश्चि॑दस्य वरि॒मा वि प॑प्रथ॒ इन्द्रं॒ न म॒ह्ना पृ॑थि॒वी च॒न प्रति॑।
भी॒मस्तुवि॑ष्मांश्चर्ष॒णिभ्य॑ आत॒पः शिशी॑ते॒ वज्रं॒ तेज॑से॒ न वंस॑गः॥ १

दिवश्चिदस्य। चिच्छब्दोऽप्यर्थे। दिव इति षष्ठीनिर्देशात् सकाशादिति वाक्यशेषः। द्युलोकस्यापि अस्येन्द्रस्य वरिमा उरुत्वं विपप्रथे विविधं प्रथितम्। इन्द्रं प्रति न मह्ना महत्वेन पृथिवी चन। चनशब्दोऽप्यर्थे। पृथिवी अपि उभे अपि द्यावापृथिव्याविन्द्रान्महत्वेन न्यूनतरे इत्यर्थः। किंच भीमः भयानकः शत्रूणाम्। तुविष्मान्। तुविशब्दस्य बहुनाम्नोऽयं सकार आगमो द्रष्टव्यः। पर्यायान्तरं वा। बहुभिः बलैस्तद्वान्। चर्षणिभ्यः। षष्ठ्यर्थे एषा चतुर्थी। शत्रुभूतानां मनुष्याणाम्। आतपः आतापयिता सन्तापकरः। शिशीते निशयति। वज्रं तेजसे तेजनाय। तीक्ष्णत्वायेत्यर्थः। हिंसावचनो वा सामर्थ्यात् तेजतिः। शत्रूणां हिंसनायेत्यर्थः। कथं पुनः शिशीते। उच्यते। न वंसगः। वननीयगमनत्वाद्वंसगो वृषभ उच्यते। नशब्दश्च पुरस्तादुपचारोऽपि सामर्थ्यादत्रोपमार्थीयः। वृषभ इव। यथा नदीकूलेऽन्यत्र वा वृषभोऽवस्किरमाणः स्वशृङ्गे द्वे निश्येत् तद्वदित्यर्थः॥ १

सो अ॑र्ण॒वो न न॒द्यः॑ समु॒द्रियः॒ प्रति॑ गृभ्णाति॒ विश्रि॑ता॒ वरी॑मभिः।
इन्द्रः॒ सोम॑स्य पी॒तये॑ वृषायते स॒नात्स यु॒ध्म ओज॑सा पनस्यते॥ २

य उक्तगुण इन्द्रः सः अर्णवो न नद्यः समुद्रियः। अर्णवानुदकवानुच्यते। समुद्रिय इति घप्रत्ययः स्वार्थे द्रष्टव्यः। समुद्र एव समुद्रियः। यथोदकवान् पार्थिवः समुद्रो नदीं तद्वत्। प्रतिगृभ्णाति। किम्। सामर्थ्यात् स्तुतीः। कीदृशीः। उच्यते। विश्रिताः विविधं श्रिताः। केन। वरीमभिः। प्रत्ययोऽयं भावे मनिप् द्रष्टव्यः। वरणैः। विविधं वरणीया इत्यर्थः। किंच इन्द्रः सोमस्य पीतये वृषायते सनात्। चिरपर्यायोऽयम्। पञ्चमीनिर्देशाच्च प्रभृतीति वक्यशेषः। चिरात्प्रभृति। स इन्द्रः युध्मः योद्धा। ओजसा स्वेनैव बलेन। परमनाश्रित्येत्यर्थः। पनस्यते स्तूयते च स्तोतृभिः॥ २

त्वं तमिन्द्र पर्वतं न भोजसे महो नृम्णस्य धर्मणामिरज्यसि ।
प्र वीर्येण देवताति चेकिते विश्वस्मा उग्रः कर्मणे पुरोहितः ॥　　३

तच्छब्दश्रुतेर्यच्छब्दार्थसंबन्धो यच्छब्दोऽध्याहर्तव्यः । यं स्तोतार इच्छन्ति त्वं तं हे इन्द्र पर्वतम् । मेघनामैतत् । मेघम् । न शब्दस्तूपरिष्टादुपाचारादुपमार्थः । उपमार्थत्वात्अस्त्युपमार्थस्य संप्रत्यर्थे प्रयोगः ( नि ७. ३१. ) इति पदपूरणः । भोजसे भोजनाय । साकांक्षत्वात् करोषीति वाक्यशेषः । यं स्तोतार इच्छन्ति तं मेघं वृष्टिप्रदानेन तेषां भोग्यं करोषीत्यर्थः । अथवा पर्वत इह शिलोच्चय एवाभिप्रेतः । उपमार्थीय एव च नशब्दः । तमिति तु शत्रोः मेघस्य वा प्रतिनिर्देशः । यं स्तोतार इच्छन्ति तं शत्रुं मेघं वा पर्वतमिव फलादिना तेषां भोग्यं करोषीत्यर्थः । किंच महः महतः नृम्णस्य बलस्य धर्मणां धारयितृणां मरुत्प्रभृतीनां इरज्यसि ईशिषे त्वम् । परोक्षकृतः परोऽर्धर्चः । वीर्येण देवता । इत्थंभूतलक्षतृतीयान्ते एते । वीर्येण देवतात्वेन च युक्त इन्द्रः । अति प्रचेकिते सुष्ठु प्रज्ञायते । वीर्यवान्देवश्च नेन्द्रसदृशोऽपरोऽस्तीत्येवं सुष्ठु प्रज्ञायत इत्यर्थः । अथवा देवतेति प्रथमैवैषा । इन्द्राख्या देवता वीर्यवतीत्येवं सुष्ठु प्रज्ञायते इत्यर्थः । किंच विश्वस्मै कर्मणे । विश्वशब्दः सर्वपर्यायो बहुनाम वा । सर्वस्य बहुनो वा वृत्रवधादेः कर्मणोऽर्थाय । उग्रः अप्रसह्यः इन्द्रः पुरोहितः पुरो निहितः । अग्रतः कृतः । सर्वाणि बहूनि वा वृत्रवधादीनि कर्माणि कर्तुः प्रधानीकृतः इत्यर्थः । केन । सामर्थ्याद्देवैः ॥　　३

स इद्वने नमस्युभिर्वचस्यते चारु जनेषु प्रब्रुवाण इन्द्रियम् ।
वृषा छन्दुर्भवति हर्यतो वृषा क्षेमेण धेनां मघवा यदिन्वति ॥　　४

इच्छब्द एवार्थे स एवेन्द्रः । वने वननीये यज्ञे । नमस्युभिः पूजयितृभिः । वचस्यते । स्तुत्यर्थोऽयं द्रष्टव्यः । स्तूयते चारु शोभनम् । जनेषु मनुष्येषु । प्रब्रुवाणः । लुप्तोपममेतद्द्रष्टव्यम् । तैस्तैर्वृत्रवधादिभिः वीरकर्मभिः प्रब्रुवन्निव । इन्द्रियं वीर्यमात्मीयम् । किंच वृषा वर्षणशील इन्द्रः । छन्दुः । छन्दतिरर्चतिकर्मा । स्तुत्यः । अथवा मन्यते छंसच्चाकनदिति कान्तिकर्मसु पाठात् ।

तादिन्मे छंसद्वपुषः । ऋ. वे. १०. ३२. ३.

इति च प्रयोगदर्शनात् छन्दतिः कान्त्यर्थः । कामयिता हविषां स्तुतीनां वा भवति । हर्यतो वृषा । हर्यतिः कान्त्यर्थः । कामयमानस्य यजमानस्य वर्षिता भवति । यष्टृणामर्थाय वर्षतीत्यर्थः । कदा । उच्यते । क्षेमेण अविघ्नेन धेनाम् । धेट् पाने इत्यस्य धेना

आहुतिरुच्यते स्तुतिर्वा । ताम् । मघवा इन्द्रः यत् यदा इन्वति व्याप्नोति । यदा इज्यते स्तूयते वेत्यर्थः ॥ ४

स इन्महानि समिथानि मज्मना कृणोति युध्म ओजसा जनेभ्यः ।

अधा चन श्रद्दधति त्विषीमत इन्द्राय वज्रं निघनिघ्नते वधम् ॥ ५

स इन्महानि समिथानि । समिथ इति संग्रामनाम । वृत्रादिभिः सह महतः संग्रामात् । मज्मना बलेन सेनाख्येन । कृणोति । भूतेऽयं लट् । कृतवान् । युध्मः युद्धशीलः । ओजसा बलेन । जनेभ्यः मनुष्याणामर्थाय । अधा चन । अधशब्द एतस्मादित्यस्यार्थे द्रष्टव्यः । चनशब्द एवार्थे । एतस्मादेव कारणात् । श्रद्दधति सत्यतया प्रतिपद्यन्ते । त्विषीमते इन्द्राय । षष्ठ्यर्थे चतुर्थ्येषा । दीप्तिमत इन्द्रस्य । वज्रम् । तृतीयार्थे द्वितीयैषा । वज्रेण । निघनिघ्नते । यङ्लुगन्तमेतत् । अत्यर्थं निघ्नता । वधं हननार्हम् । अस्माकं मनुष्याणामर्थाय वृत्रादिभिः सह महतः संग्रामान् कृतवान् । तस्मादन्यमपि वधार्हं वज्रेण जिघांसतः इन्द्रस्य निःसंशयमयं हन्तीत्येवं श्रद्दधतीति समस्तार्थः ॥ ५

स हि श्रवस्युः सदनानि कृत्रिमा क्ष्मया वृधान ओजसा विनाशयन् ।

ज्योतींषि कृण्वन्नवृकाणि यज्यवेऽव सुक्रतुः सर्तवा अपः सृजत् ॥ ६

स हि । हिशब्दः पदपूरणः । स इन्द्रः श्रवस्युः । श्रव इत्यन्ननाम । तस्य हविर्लक्षणस्य कामयिता श्रवस्युः । हविरिच्छन्नित्यर्थः । क्ष्मया वृधानः । क्ष्मेति पृथिवीनाम । वृधिरप्यन्तर्णीतण्यर्थः । समस्तया पृथिव्या वर्धयमानः । यावन्तः केचन पृथिव्यां यष्टारः तैः सर्वैः स्तुतिभिः हविर्भिश्च वर्धयमान इत्यर्थः । दुर्भिक्षनिमित्तकानां रक्षःपिशाचादीनां सदनानि स्थानानि कृत्रिमा कृत्रिमाणि ओजसा बलेन विनाशयन् । हेतावयं शतृप्रत्ययः । प्रयोजनस्य च हेतुत्वेन विवक्षा । दुर्भिक्षनिमित्तरक्षःपिशाचादिस्थानविनाशार्थमित्यर्थः । ज्योतींषि ऐश्वर्यलक्षणानि कृण्वन् । अयमपि पूर्ववद्धेतावेव शतृप्रत्ययः । ऐश्वर्याणि च कर्तुमित्यर्थः । कीदृशानि । अवृकाणि । वृक वृक आदाने । आदातृवर्जितानि । अनपहार्याणीत्यर्थः । यज्यवे । यष्टृणामर्थाय । यष्टॄन् वा अनपहार्यैरैश्वर्यैरीश्वरान् कर्तुमित्यर्थः । सुक्रतुः सुप्रज्ञः सुकर्मा वा । सर्तवै पृथिवीं प्रति गमनाय । वृष्टिलक्षणा अपः अवासृजत् अधः क्षिपति । पातयति वर्षतीत्यर्थः ॥ ६

दानाय मनः सोमपावन्नस्तु तेऽर्वाञ्चा हरी वन्दनश्रुदा कृधि ।
यमिष्ठासः सारथयो य इन्द्र ते न त्वा केता आ दभ्नुवन्ति भूर्णयः ॥ ७

दानाय अस्मान् प्रति दानाय मनः हे सोमपावन् सोमानां पातः । अस्तु ते । अर्वाञ्चा अस्मदभिमुखौ हरी । हे वन्दनश्रुत् स्तुतीनां श्रोतः । आकृधि । करोति रत्रान्तर्णीतण्यर्थः । मर्यादया कारय । केन । उच्यते । यमिष्ठासः अतिशयेन यन्तारः सारथयः । ये हे इन्द्र ते तव स्वभूताः । यच्छब्दश्रुतेस्तैरिति वाक्यशेषः । किं कारणम् । उच्यते । यस्मान्न त्वां केताः । कित ज्ञाने ज्ञातारोऽप्यसुराः आदभ्नुवन्ति । वधकर्मायम् । हिंसन्ति भूर्णयः भ्रमणशीलाः । यस्माज्ज्ञानन्तोऽप्यनवस्थायिनोऽपि च सन्तोऽसुराः न त्वामागच्छन्तो हिंसितुं शक्नुवन्ति तस्मादागमनार्थमर्वाञ्चा हरी कारयेत्यर्थः ॥ ७

अप्रक्षितं वसु बिभर्षि हस्तयोरषाळ्हं सहस्तन्वि श्रुतो दधे ।
आवृतासोऽवतासो न कर्तृभिस्तनूषु ते क्रतव इन्द्र भूरयः ॥ ८

अप्रक्षितं अप्रक्षीणं वसु बिभर्षि धारयसि हस्तयोः । अक्षयं धनं तवास्तीत्यर्थः । अषाळ्हं सहः अनभिभूतं च बलं तन्वि स्वशरीरे श्रुतः विख्यातः त्वं दधे । व्यत्ययेनायमुत्तमपुरुषः । धारयसि । स्वशरीरेण चानभिभूतपूर्वबलयुक्तोऽसीत्यर्थः । किंच आवृतासः परिवृताः । के । सामर्थ्यात्त्वदर्थाः सोमाः । कथम् । अवतासो न कूपा इव उदकार्थिभिः । केन परिवृताः । उच्यते । कर्तृभिः ऋत्विग्भिः । त्वदर्थान् संस्कृतान् सोमान् परिवृता ऋत्विजः त्वत्प्रतीक्षा आसते इत्यर्थः । किंच तनूषु । व्यत्ययेनेदं बहुवचनम् । शरीरे ते तव क्रतवः प्रज्ञाः कर्माणि वा । हे इन्द्र भूरयः बहवः । स्वशरीरेण च त्वं बहुप्रज्ञो बहुवृत्रवधादिकर्मयुक्तो वेत्यर्थः ॥ ८



एष प्र पूर्वीरव तस्य चम्रिषोऽत्यो न योषामुदयंस्त भुर्वणिः ।
दक्षं महे पाययते हिरण्ययं रथमावृत्या हरियोगमृभ्वसम् ॥ १

एषः । तच्छब्दश्रुतेर्यच्छब्दमध्याहृत्यैषशब्दो द्वितीये पादे योजयितव्यः । प्रशब्दस्तूपसर्गः पायत इत्याख्यातेन संबन्धयितव्यः । अवेत्युपसर्गः उदयंस्त इत्याख्यातेन संबन्धयितव्यः । य एष इन्द्रः । अत्यो न योषां अत्य इत्यश्वनाम । योषा स्त्री । यथाश्वो मैथुनकाले वडवां स्त्रियं तद्वत् । अव उदयंस्त । उदित्येष नीत्येतस्य

स्थाने। अवन्ययंस्त । अधो नियच्छत्यात्मनः । किम् । अनिर्देशात् कृत्स्नं जगत्। भुर्वणिः। भुर्वतेरत्तिकर्मण इदं रूपम्। सोमभक्षणशीलाः। पूर्वीः पूर्वाः। चम्रिषः। चम्यन्ते इति चम्रिषः सोमा इहाभिप्रेताः । पूर्वस्मिंस्तावत्काले ये सोमाः ते तस्येत्यर्थः। न च केवलाः। किं तर्हि। इदानीमपि दक्षम् । दक्षशब्द इहात्मवचनः।

श्रेयांसं दक्षं मनसा जगृभ्यात्। ऋ. वे. १०. ३१. २.

इति यथा। आत्मानं महे महते। कस्मै। सामर्थ्यात् संग्रामाय । पाययते हिरण्ययं हिरण्मयसदृशं सोमम् । किं पुनः सोमहिरण्मययोः शादृश्यम् । उज्ज्वलत्वं प्रियता वा।



प मन्महे शवसानाय शूषमाङ्गूषं गिर्वणसे अङ्गिरस्वत् ।
सुवृक्तिभिः स्तुवत ऋग्मियायार्चामार्कं नरे विश्रुताय ॥ १

द्वे इन्द्रदेवत्ये ।

मन्मह इति यद्यपि याञ्चाकर्मा पठितः तथापीह याच्ञाया असंभवान्मन्यतेरर्चतिकर्मण इदं रूपम् । प्रमन्महे । प्रकर्षेण स्तुम इत्यर्थः । किम् । उच्यते । शवसानाय शूषम् । शवसानायेति शवतेर्गतिकर्मण अयं असानप्रत्ययः । छन्दस्यसानजूभ्याम् । षष्ठ्यर्थे चतुर्थी । शत्रून् प्रति गन्तुरिन्द्रस्य स्वभूतं सेनालक्षणं बलम् । अथवा शव इति बलनाम सामर्थ्याच्चेहान्तर्णीतमत्वर्थः । बलवानिवाचरति शवस्यते । ताच्छील्ये चानश् । छान्दसत्वाच्चार्धधातुकः । शवसानस्य शूषम् । बलवतां यदाचरणं तच्छीलस्येन्द्रस्य स्वभूतं बलमित्यर्थः । केन आङ्गूषम् । तृतीयार्थे द्वितीयैषा । आङ्गूषेण स्तोमेन । कीदृशस्येन्द्रस्य । उच्यते । गिर्वणसे । इयमपि षष्ठ्यर्थ एव चतुर्थी । स्तुतिभिर्वननीयस्य । कथम् । अङ्गिरस्वत् । अङ्गिरसे इव ऋषये । न केवलं शूषम् । किं तर्हि । स्वयमपि सुवृक्तिभिः स्तुवते । कर्मण्ययं व्यत्ययेन शतृप्रत्ययः । सर्वत्र द्वितीयार्थे चतुर्थी । दोषैर्वर्जिताभिः स्तुतिभिरन्यैरपि स्तोतृभिः स्तूयमानम् । ऋग्मियाय ऋग्मियं स्तुत्यर्हं स्तुतिमन्तं वा । अर्चाम स्तुमः । अर्कं देवम् । नरं मनुष्याकारं विश्रुतं विख्यातम् । सर्वत्राथवा स्तुवते इत्याद्यास्तादर्थ्ये स्वार्थे एव चतुर्थ्यः । अर्चतिस्तु सामर्थ्यादुच्चारणार्थः ।

पितुमदर्चता वचः ऋ. वे १. १०१. १.

इति यथा । अर्कशब्दोऽपि मन्त्रवचनः । स्तूयमानत्वादिगुणस्येन्द्रस्यार्थाय उच्चारयामः स्तुतिलक्षणं मन्त्रं इत्यर्थः ॥ १

प्र वो महे महि नमो भरध्वमाङ्गूष्यं शवसानाय साम ।
येना नः पूर्वे पितरः पदज्ञा अर्चन्तो अङ्गिरसो गा अविन्दन् ॥ २

वः इति प्रथमार्थे द्वितीया । पुत्रपौत्रस्य चायं प्रतिनिर्देशः ऋत्विजां वा । हे मदीयाः पुत्राः पौत्राश्च ऋत्विजो वा यूयम् । महि नमः सोमलक्षणमन्नम् । महे महते इन्द्राय प्रभरध्वं प्रापयत । दत्तेत्यर्थः । आङ्गूष्यं स्तोमार्हम् । शवसानाय । न च केवलं

नमः । किं तर्हि । सामवचो मन्त्रलक्षणम् । कीदृशम् । उच्यते । येना नः अस्माकं पूर्वे पितरः पदज्ञाः । पदमत्र कृत्स्नस्य जगत आश्रयत्वात् कारणात्मोच्यते । तज्ज्ञाः । अर्चन्तः इन्द्रं स्तुवन्तः अंगिरस ऋषयः पणिभिरपहृतास्सतीर्गा अविन्दन् प्रतिलब्धवन्तः ॥ २

इन्द्रस्याङ्गिरसां चेष्टौ विदत्सरमा तनयाय धासिम् ।

बृहस्पतिर्भिनदद्रिं विदद्गाः समुस्रियाभिर्वावशन्त नरः ॥ ३

इन्द्रस्य तत्सखानां चाङ्गिरसामृषीणामिष्टौ प्रेषणे । सप्तमीनिर्देशाद्वर्तमानेति वाक्यशेषः । इन्द्रेण चाङ्गिरोभिश्च प्रेषिता सतीत्यर्थः । विदत् पणिभिः गिरिदुर्गे निहितं ज्ञातवती लब्धवती वा । का । सरमा नाम देवशुनी । किमर्थम् । तनयायापत्यभूतस्य सर्वजनस्यार्थाय । किम् । धासिम् । अन्ननामैतत् । इह तु पयआद्यन्नकारणत्वात् गोष्ठप्रयुक्ताः पणिभिरपहृताः सतीर्गा इत्यर्थः । बृहस्पतिः । भिनदद्रिम् । अद्रिरिति पर्वतनाम । अभिनत् दुर्गं पर्वतम् । भित्वा च विदल्लब्धवान् गाः । लब्धाभिश्च ताभिरुस्रियाभिर्गोभिस्सह संवावशन्त । वाशृ शब्दे । संशब्दनं कृतवन्तः । नरो मनुष्याकारा देवाः । यथा स्वं देवा गा आहुतवन्तः गावोऽपि रंभ्याशब्दं कुर्वन्त्यो गृहे प्रविष्टा इत्यर्थः । इन्द्रस्येष्टौ वर्तमानानामिदं सर्वमभवदित्येवमिन्द्रप्राधान्यादैन्द्रत्वस्याविरोधः ॥ ३

स सुष्टुभा स स्तुभा सप्त विप्रैः स्वरेणाद्रिं स्वर्यो३ नवग्वैः ।

सरण्युभिः फलिगमिन्द्र शक्र वलं रवेण दरयो दशग्वैः ॥ ४

य उक्तगुणोऽसि सः सुष्टुभा । स्तोभतिरर्चतिकर्मा । शोभनया स्तुत्या । स एव स्तुतिमात्रेण । सप्त सप्तभिः । कैः । सामर्थ्याद्दृषिभिः । कतमैः । ये एवैते सर्वलोकप्रसिद्धाः सप्तर्षयः ।

सप्तर्षयो भरद्वाजः कश्यपो गौतमोऽत्रिः ।

विश्वामित्रो जमदग्निर्वसिष्ठः सप्तमः स्मृतः ।

इति । कीदृशैः । विप्रैर्मेधाविभिः । स्वरेण । स्वरति वेनतीत्यर्चतिकर्मसु पाठात् स्वरशब्द इह स्तोतृवचनः । अन्येन च स्तोत्रा जनेन । स्वर्यः स्तुत्यः । नवग्वैः । नवा सर्वदैव श्रमवर्जिता गतिर्येषां ते नवग्वाः । नवनीते वा गतिरभिलाषो येषां ते नवग्वाः अंगिरसः । कुत एतत् ।

अंगिरसो नः पितरो नवग्वाः । ऋ. वे. १०. १४. ६.

अयास्यो अंगिरसो नवग्वाः । ऋ. वे. १०. १०८. ८.

इत्यादिषु नवग्वा इत्यस्यांगिरसः सुप्रसिद्धत्वात् । तैश्च । कीदृशैः । सरण्युभिः सरणकामैः । सखित्वात् सर्वत्र त्वया सह सरणकामैः इत्यर्थः । अद्रिं दुर्गं पर्वतं तत्स्थं च फलिगमसुरम् । हे इन्द्र शक्र शक्त वलं च वलं नामासुरम् । रवेण शब्देनैव महता । दरयः विदारितवानसि । दशग्वैः । दशमासैः सिद्धिं गतत्वाद्दशग्वा भृगव उच्यन्ते । स्वर्यः इत्येतेन चास्य संबन्धः । भृगुभिश्च स्तुत्यः । यस्त्वं सुष्टुभा स्तुत्स्यो स्तुतिमात्रेण च सप्तभिश्चान्येन च स्तोत्रा जनेनांगिरोभिश्च भृगुभिश्च स्तुत्यः सोऽद्रिं फलिगं महता शब्देनैव व्यदारयः इति समस्तार्थः । अथवा स सुष्टुभा स स्तुभा इति तृतीयानिर्देशात् स्तुतः सन्निति वाक्यशेषः । सप्त विप्रैरित्याद्याश्च सहयोगलक्षणा तृतीया । स्वरेण स्वर्यः इत्येतावपि स्वृ शब्दोपतापयोरित्यस्योपतापयितृवचनौ । यस्त्वं स्वर्य उपतापयिता शत्रूणां सुष्टुभा स्तुतिमात्रेण च स्तुत्यः सन् सप्तर्षिभिरंगिरोभिर्भृगुभिश्च सह स्वरेण शत्रूणामुपतापयित्रा वज्रेण रवेण शब्देन च महता अद्रिं व्यदार्भूइति तथा च योद्धृनृषीनपि समरमादर्शयिष्यति ।

एह गमन्नृषयः सोमशिताः । ऋ. वे. १०. १०८. ८.

इति ।

बृहस्पतिर्या अविन्दन्निगूळ्हास्सोमो ग्रावाण ऋषयश्च विप्राः । ऋ. वे. १०. १०८ ११.

इति च ॥ ४

गृणानो अङ्गिरोभिर्दस्म वि वरुषसा सूर्येण गोभिरन्धः ।
वि भूम्या अप्रथय इन्द्र सानु दिवो रज उपरमस्तभायः ॥ ५

गृणानः स्तूयमानोऽङ्गिरोभिः । हे दस्म शत्रूणामुपक्षपयितः । वि वः विवृतमकार्षीः । केन । उषसा सूर्येण च । गोभिः । रश्मयोऽत्र गाव उच्यन्ते ।

यत्र गावो भूरिशृङ्गाः । ऋ. वे १. १५४. ६.

इति यथा । रश्मिभिश्चान्धः । तमोऽत्रान्ध उच्यते । गवामदर्शनाय यत्पणिभिः कृतं तमस्तत् । सर्वैर्ज्योतिर्भिः प्रकाशमकार्षीरित्यर्थः । अथवा वरित्युषसा सूर्येणेत्येताभ्यामेव द्वाभ्यां संबध्यते । गोभिरित्येतत्तु गृणान इत्येतेन संबध्यते । गोशब्दश्च स्तुतिवचनः ।

गोभिर्यदीमन्ये अस्मत् । ऋ. वे. ८. २. ६.

इति यथा । स्तुतिभिः स्तूयमान इत्यर्थः । अथवा गोशब्दः साक्षादिमद्वचन एव । सहयोगलक्षणा तु तृतीया । अन्ध इत्यन्ननाम । दुर्गस्थं यत् पणीनामन्नं तदपहृताभिर्गोभिः सह प्रकाशमकार्षीरित्यर्थः । एतस्मिंश्चार्थे उषसा सूर्येण इति तृतीया सहयोगलक्षणापि संभवति । उषसा सूर्येण च सह विवृतमकार्षीः इति । किंच वि भूम्या अप्रथयः । विशब्दोऽत्र विगमे । पणीनां स्वभूतायाः भूमेः वि अप्रथयः । विगतप्रथन-

मकरोः। हे इन्द्र सानु उच्छ्रितं प्रदेशम्। पणीनामुच्चानि गिरिदुर्गाणि पातितवानसी-त्यर्थः। किंच दिवो रज उपरम्। रजो लोकः। उपरि भवति इति उपरः। दिव उपरि भवो लोकः महआख्यः तपआख्यो वा। तमपि त्वमेवास्तभायः। स्तभ्नातिः प्रति-बन्धार्थः। सोऽपि त्वत्प्रतिबन्ध एवेत्यर्थः॥ ५

तदु प्रयक्षतममस्य कर्म दस्मस्य चारुतममस्ति दंसः।

उपह्वरे यदुपरा अपिन्वन् मध्वर्णसो नद्यश्चतस्रः॥ ६

तदु। उकार एवार्थे। तदेव प्रयक्षतमम्। यक्ष पूजायाम् प्रकर्षेण पूज्यतमम्। अस्य इन्द्रस्य कर्म दस्मस्य शत्रूणामुपक्षयितुः। चारुतममस्ति दंसः। एकवाक्यता-प्रसिध्यर्थं यद्यपि तथापीत्येतद्द्वयमप्यत्राध्याहर्तव्यम्। यद्यपि चारुतमं शोभनतम-मन्यदस्ति दंसः कर्म असुरवधादि तथापि त्रैलोक्यस्थितिहेतुत्वात्तदेव प्रयक्षतमम-स्येति। कतमत्। उच्यते। उपह्वरे। ह्वरतिरत्तिकर्मा। ह्वरो भक्षः। तस्य समीपे उपह्वरे। हविर्भक्षणानन्तरं सोमपानानन्तरं चेत्यर्थः। अथवा उपह्वरोऽन्तरिक्षप्रदेशः। तत्र यदुपराः। मेघनामैतत्। जात्यपेक्षं चात्र स्त्रीलिंगम्। मेघजातिः अपिन्वन्। अन्तर्णीतण्यर्थोऽत्र पिन्विर्द्रष्टव्यः। अपिन्वयत् असेचयत्। क्षारितवानित्यर्थः। कीदृशीः। मध्वर्णसः मधुरोदकाः। नद्यः शब्दकारिणीश्चतस्रः चतुःसंख्याकाः। अथवा चतस्र इति कर्मप्रवचनीययोगलक्षणा द्वितीया। तच्छ्रुतेश्च कर्मप्रवचनीयः प्रतिशब्दोऽध्याहार्यः। चतस्रो दिशः प्रति। चतसृष्वपि दिक्ष्वित्यर्थः॥ ६

द्विता वि वव्रे सनजा सनीळे अयास्यः स्तवमानेभिरर्कैः।

भगो न मेने परमे व्योमन्नधारयद्रोदसी सुदंसाः॥ ७

द्विता। द्विताशब्दो द्विधाशब्दस्यार्थे। विशब्दश्चात्रानेकत्वप्रतिपादनमात्रपरः। अनेकधापि वव्रे संभुक्तवान्। सनजा। सनशब्दश्चिरपर्यायः। चिरजाते। के। सामा-र्थ्यात् द्यावापृथिव्यौ। कीदृश्यौ। सनीळे समानस्थाने। सृष्टिकालोत्पन्ने एकस्मिन् कारणात्मनि व्यवस्थिते उभे। अपि द्यावापृथिव्यावनेकधा संभक्तवानित्यर्थः। की-दृशः। उच्यते। अयास्यः। अयास्यो नामांगिरसोऽभिप्रेताः। कथमवगम्यते।

एह गमन्नृषयः सोमशिता अयास्यो अंगिरसो नवग्वाः। ऋ. वे. १०. १०८. ८. इति दर्शनात्। स्तवमानेभिः। प्रथमार्थे तृतीयैषा। इन्द्रं स्तुवन्। अर्कैः मन्त्रैः। इन्द्रप्रसादादित्यर्थः। अथवा आनीतुमशक्यत्वादयास्य इन्द्र एवोच्यते। स्तवमानेभि-रिति तु कर्मणि शतृप्रत्ययो द्रष्टव्यः। मन्त्रैः स्तूयमान इन्द्र उभे अपि द्यावापृथिव्यौ संभजत इत्यर्थः। किंच भगो न मेने। भग आदित्यः। मेने स्त्रियौ रात्र्युषसाविहाभि-

प्रेते । यथादित्यो रात्र्युषसोस्तदायत्तत्वात् तत्स्थलेः । एवं परमे व्योमन् स्थाने कारणात्माख्ये । अधारयद्रोदसी सुदंसाः सुकर्मा इन्द्रः । कृत्स्नस्य हि जगतो धारणं धर्मायत्तम् । धर्माधर्मौ वृष्टिद्वारकत्वादिन्द्रायत्तौ । अत एतदुच्यते । अधारयद्रोदसी सुदंसाः इति ॥ ७

सनादिवं परि भूमा विरूपे पुनर्भुवा युवती स्वेभिरेवैः ।
कृष्णेभिरक्तोषा रुशद्भिर्वपुर्भिरा चरतो अन्यान्या ॥ ८

सनादिति पञ्चमीनिर्देशात् प्रभृतीति वाक्यशेषः । चिरात्प्रभृति । दिवं परि द्युलोकं प्रति । भूमशब्दोऽत्र भूतजातवचनः ।

द्यावा च भूमा जनुषस्तुजेते । ऋ. वे. १. ६१. १४.

इति यथा । सर्वं भूतजातम् । विरूपे पुनर्भुवा पुनः पुनर्भाविन्यौ । युवती सर्वदैव तरुण्यौ जरावर्जिते । नित्ये इत्यर्थः । स्वेभिरेवैः । अवतेर्गत्यर्थस्य एवान्यागमनान्यत्राभिप्रेतानि । आत्मीयैर्नियतकालैरागमनैः । कृष्णेभिरक्ता । शुद्धोऽपि चात्रानुपूर्वार्थे द्रष्टव्यः । कृष्णैरनुरक्ता । कासौ । सामर्थ्याद्रात्रिः । उषाः रुशद्भिः दीप्तैः शुक्लैः । अनुगता । कैः । वपुर्भिः । रूपनामैतत् । तमोलक्षणैर्ज्योतिर्लक्षणैश्च रूपैः । आचरतः गच्छतः । न केवलां दिवं भूतजातं च प्रति । किं तर्हि । अन्यान्या अन्योन्यं च । रात्रिर्हि तमोलक्षणेन रूपेणोषसं प्रत्यागच्छति उषः कालेऽपि तमसोऽनुगमनदर्शनात् । उषाअपि ज्योतिर्लक्षणेन रूपेण रात्रिं प्रत्यागच्छति । रात्रावपि कियतश्चित् प्रकाशस्यानुगमदर्शनादिति । चिरादेव प्रभृति विरूपत्वादिगुणे रात्र्युषसौ कृष्णशुक्लाभ्यां तमोज्योतीरूपाभ्यामनुगता नियतकालैरात्मीयैरागमनैर्दिवं सर्वं च भूजातमन्योन्यं च प्रत्यागच्छतः इति समस्तार्थः । एवमियमृक् स्वरूपेणैव रात्र्युषःकर्मकीर्तनमात्ररूपत्वाद्रात्र्युषोदेवता प्राप्नोति । ऐन्द्रं चेदं सूक्तम् । अतो यत्तच्छब्दावध्याहृत्य पूर्वयर्चैकवाक्यता योज्या परया वा । ये विरूपत्वादिगुणे रात्र्युषसौ दिवं भूतजातमन्योन्यं च प्रत्यागच्छतस्ते अप्यधारयन् न केवलेरोदसी इत्येवं पूर्वयैकवाक्यता । परयातु ये विरूपत्वादिगुणे रात्र्युषसौ दिवं भूतजातमन्योन्यं च प्रत्यागच्छतस्ताभ्यां सह इति ॥ ८

सनेमि सख्यं स्वपस्यमानः सूनुर्दाधार शवसा सुदंसाः ।
आमासु चिद्दधिषे पक्वमन्तः पयः कृष्णासु रुशद्रोहिणीषु ॥ ९

सनेमि इति पुराणनाम। चिरन्तनं सख्यं स्वपस्यमानः। शोभनानि कर्माणि येषां ते स्वपाः। स्थिरप्रकृतयोऽत्यन्तमहात्मानः। तद्वदाचरन् स्वपस्यमानः। आत्मीययोर्माता-पित्रोः सूनुः पुत्रः। दाधार धारयति। शवसा स्वेन बलेन सुदंसाः सुकर्मा इन्द्रः। रात्र्युषोभ्यां सह पूर्वप्रवृत्तं सख्यं न जहामीत्येवमिह व्याख्यातव्यः। परोऽर्धर्चः प्रत्यक्षकृतो भिन्नं वाक्यम्। आमासु चित्। आममपक्वम्। अपक्वास्वपि अभक्षयोग्या-स्वपि सतीष्वित्यर्थः। दधिषे वृष्टिद्वारेण धारयसि। पक्वं भक्षयोग्यम्। अन्तः मध्ये। पयः क्षीरम्। कृष्णास्वपि गोषु रुशद्दीप्तम्। शुक्लमित्यर्थः। रोहिणीषु रोहितासु च। एतदुक्तं भवति। सर्वत्र कारणानुरूपं कार्यम्। भवतस्त्वेतन्माहात्म्यादभक्ष्यासु कृष्ण-रोहितासु च गोषु भक्ष्यं शुक्लं च पय इति॥ ९

सनात्सनीळा अवनीरवाता व्रता रक्षन्ते अमृताः सहोभिः।
पुरु सहस्रा जनयो न पत्नीर्दुवस्यन्ति स्वसारो अह्रयाणम्॥ १०

सनात् चिरादेव प्रभृति सनीळाः समानमिन्द्राख्यं स्थानं यासां ताः सनीळाः। केवलेन्द्रविषया इत्यर्थः। काः पुनरेताः। स्तुतयः। कीदृश्यः। अवनीः। अर्वतेः प्रीत्यर्थस्येदं रूपम्। प्रीतिजनन्यः। अवाताः। वातिर्गतिकर्मा। अगतपूर्वा अन्यत्र स्तुत्ये। व्रता वृत्रवधादीनीन्द्रस्य कर्माणि। रक्षन्ते अमृता नित्याः। सहोभिः बलैः सह। अकीर्त्यमानानि हीन्द्रस्य कर्माणि च बलानि च विस्मरणाद्विलयं गच्छेयुः। तानि कीर्तयत्यः स्तुतयो रक्षन्तीत्युच्यते। कियत्यः स्तुतयो व्रतानि वा। उच्यते। पुरु सहस्रा बहूनि सहस्राणि। कथं पुना रक्षन्ति। उच्यते। जनयो न पत्नीः। जनिशब्दोऽत्र जननीवचनो द्रष्टव्यः। नशब्दश्चोपमार्थीयः पत्नीरित्यत्राप्यनुषक्तव्यः। जनन्य इव पत्न्य इव च। यथा मातरो भार्या वा महता यत्नेन पुत्रं पतिं वा रक्षयेयुः तद्वदि-त्यर्थः।............................................................ १०

सनायुवो नमसा नव्यो अर्कैर्वसूयवो मतयो दस्म दद्रुः।
पतिं न पत्नीरुशतीरुशन्तं स्पृशन्ति त्वा शवसावन्मनीषाः॥ ११

अत्रैकवाक्यताप्रसिध्यर्थं यत्तच्छब्दावध्याहर्तव्यौ। यस्त्वं नमसा नमस्कारेण नव्यः स्तुत्यः। अर्कैर्मन्त्रैश्च। तं सनायुवश्चिरकामाः वसूयवो धनकामाः। मतयोऽ-स्मदीयाः स्तुतयः। चिरं धनमिच्छन्त्योऽस्मदीयाः स्तुतय इत्यर्थः। यश्च स्तोतॄणां कामः स स्तुतिषु पूर्यते। किं कुर्वन्ति। उच्यते। हे दस्म दद्रुः गच्छन्ति त्वा। गत्वा च

पतिं न पत्नीरुशतीरुशन्तं स्पृशन्ति त्वा शवसावन्मनीषाः इति । त्वया सह संबध्यन्त इत्यर्थः । हे शवसावन् बलवन्मनीषाः मनसेषणीयाः । अत्यन्तोत्कृष्टा इत्यर्थः । स्तुतिवचनो वा मनीषाशब्दः । मतय इत्येनेन च गमनसंबाधित्वेन स्तुतय उपात्ताः न स्पर्शसंबन्धित्वेनेत्येवमपुनरुक्तत्वम् ॥ ११

सनादेव तव रायो गभस्तौ न क्षीयन्ते नोप दस्यन्ति दस्म ।

द्युमाँ असि क्रतुमाँ इन्द्र धीरः शिक्षा शचीवस्तव नः शचीभिः ॥ १२

सनात् चिरादेव प्रभृति तव रायो धनानि गभस्तौ। बाहुनामैतत्। तत्सम्बन्धात्विह हस्ते वर्तते। सप्तमीनिर्देशाच्च स्थितानीति वाक्यशेषः । हस्ते स्थितानि न क्षीयन्ते। नाप्युपदस्यन्ति क्षयस्य समीपीभवन्ति दस्म। तव यानि धनानि तानि नेदानीं क्षीयन्ते । नाप्यागामिनि काले इत्यर्थः। किं च द्युमान् दीप्तिमानसि क्रतुमान् कर्मवांश्च। हे इन्द्र धीरः प्रज्ञावांश्च। य ईदृशोऽसि तं ब्रूमः। शिक्षा देहि हे शचीवः कर्मवन् प्रज्ञावन् वा। नः अस्मभ्यं तव शचीभिः कर्मभिः यागाख्यैर्हेतुभूतैः । यस्मात्त्वां यजामहे तस्मादित्यर्थः॥ १२

सनायते गोतम इन्द्र नव्यमतक्षद्ब्रह्म हरियोजनाय ।

सुनीथाय नः शवसान नोधाः प्रातर्मक्षू धियावसुर्जगम्यात् ॥ १३

सनायते चिरं कामयमानाय तुभ्यं गोतमः । सोयमित्यभिसम्बन्धात् पितृशब्दोऽयं पुत्रे प्रयुक्तः । गोतमपुत्रः । हे इन्द्र नव्यं नवं अन्यैः स्तोतृभिरकृतपूर्वम् । अतक्षत् । तक्षतिः करोतिकर्मा । व्यत्ययेन च उत्तमपुरुषस्य स्थाने प्रथमपुरुषः । स्तुतिलक्षणं ब्रह्म । कीदृशाय मह्यम्। उच्यते । हरियोजनाय । सुनीथाय सुस्तुतये च । नः । प्रथमैकवचनस्य स्थाने द्वितीयाबहुवचनमेतत् । अहं हे शवसान शत्रून् प्रति गन्तः । बलवतामाचारवत् वा नोधा नामर्षिः । परस्तु पादः प्रत्यक्षकृतः भिन्नं वाक्यमुक्तार्थश्च ॥ १३



त्वं महाँ इन्द्र यो ह शुष्मैर्द्यावा जज्ञानः पृथिवी अमे धाः ।

यद्ध ते विश्वा गिरयश्चिदभ्वा भिया दृळ्हासः किरणा नैजन् ॥ १

त्वं महान् हे इन्द्र यो ह शुष्मैः। हशब्दः पदपूरणः । य आत्मीयैर्बलैः द्यावापृथिवी जज्ञानः जायमानः । जन्मन एव प्रभृतीत्यर्थः । अमे। भयमिह अमशब्देनोच्यते।

सेनेव सृष्टामं दधाति। ऋ. वे. १. ६६. ८.

इति यथा। भये धाः दधासि। जन्मन एव प्रभृति द्यावापृथिव्योर्भयमुदपीपद इत्यर्थः। यत् यस्य । षष्ठ्या अत्र लुक् । हः पदपूरणः चार्थे वा । यस्य ते विश्वा सर्वाणि भूतानि गिरयश्चित् । चिच्छब्दश्चार्थे। पर्वताश्च। अभ्वा भिया। अभ्व इति महन्नाम। महता भयेन । दृळ्हासः । गिरीणामिदं विशेषणम् । दृढा अपि सन्तो गिरयः। किरणा नैजन्। किरणा इति रश्मिनाम। एजृ कम्पने। यथोदकेऽन्यत्र वाऽऽदित्यस्य रश्मयः कंपन्ते तद्वत् कम्पन्त इत्यर्थः। तदेतत् पुरस्तादप्युक्तम्।

अस्येदु भिया गिरयश्च। ऋ वे. १. ६१. १४.

इति॥ १

आ यद्धरी इन्द्र विव्रता वेरा ते वज्रं जरिता बाह्वोर्धात्।

येनाविहर्यतक्रतो अमित्रान् पुर इष्णासि पुरुहूत पूर्वीः॥ २

आ यत्। यदिति व्यत्ययेन नपुंसकता । यश्च हरी प्रति हे इन्द्र । कीदृशौ। विव्रता विविधकर्माणौ आवेः। वेतेर्गतिकर्माणः विदेर्वा ज्ञानार्थस्येदं रूपम्। रथे योक्तुमागच्छसि वेत्सिवेत्यर्थः । यस्य ते वज्रं जरिता स्तोता बाह्वोः। बाहुसम्बन्धाद्धस्तावत्र बाहुशब्देनोच्येते । हस्तयोराधादाधत्ते। स्तुतिभिश्च स्तोता शत्रुवधार्थं हस्ताभ्यां ग्राहयतीत्यर्थः। अथवा भिन्नमेव वाक्यं पूर्वानपेक्षम् । यद्धरी इति तु यच्छब्दो यदाशब्दस्यार्थे । तच्छ्रुतेश्च तदेत्यध्याहर्तव्यम् । यदा रथे हरी योक्तुं प्रत्यागच्छसि तदा ते वज्रं जरिता हस्तयोराधत्त इति । येन वज्रेण किं क्रियते । उच्यते । येन हे अविहर्यतक्रतो । हर्यतिः कान्तिकर्मा । अविगतो हर्यतः कामो यस्य सोऽविहर्यतः कामवान् । क्रतुरिति वज्रनाम। अविहर्यतः क्रतुर्यस्य सोऽविहर्यतक्रतुः। स्तुतीर्हवींषि च प्रति कामयमानचित्त इत्यर्थः। अथवा हर्यतिः प्रेप्साकर्मा। प्राप्तुमशक्यत्वात् अप्रेप्सनीयः क्रतुः प्रज्ञा कर्म वा यस्य सोऽविहर्यतक्रतुः। तस्य संबोधनं हे अविहर्यतक्रतो । अमित्रान् पुरः नगराणि चैषामिष्णासि। इषु आभीक्ष्ण्ये। हननविषयं चात्राभीक्ष्ण्यमभिप्रेतम् । अभीक्ष्णं हिंसीत्यर्थः। हे पुरुहूत पूर्वीः। पुरामिदं विशेषणम् । चिरन्तनीः पुरः॥ २

त्वं सत्य इन्द्र धृष्णुरेतान्त्वमृभुक्षा नर्यस्त्वं षाट् ।
त्वं शुष्णं वृजने पृक्ष आणौ यूने कुत्साय द्युमते सचाहन् ॥ ३

त्वं सत्यः अविसंवादी । हे इन्द्र धृष्णुः धर्षयिता च । साधु चाभिभवितेत्यर्थः । कम् । एतान्छत्रून् । त्वमृभुक्षाः महान् । नर्यः नरेषु साधुः नरेभ्यो वा । नराणां चानुग्रहपर इत्यर्थः । त्वमेव षाट् असुराभिभवनशीलः । त्वमेव शुष्णं नामासुरम् । वृजने ऋग्भिः वर्जनीये । बलनाम वा वृजनशब्दः । सामर्थ्याच्चात्रान्तर्णीतमत्वर्थः । पृक्षे शूरैः सम्पर्चनीये । आणौ । संग्राममनामैतत् । संग्रामे । यूने कुत्साय द्युमते । तादर्थ्ये एताश्चतुर्थ्यः । यूनश्च दीप्तिमतश्च कुत्सनाम्न ऋषेरर्थाय । सचा सह कुत्सेनैव मरुद्भिर्वा अहन् हतवानसि ॥ ३

त्वं ह त्यदिन्द्रचोदीः सखा वृत्रं यद्वज्रिन् वृषकर्मन्नुभ्नाः ।
यद्ध शूर वृषमणः पराचैर्वि दस्यूँर्योनावकृतो वृथाषाट् ॥ ४

हशब्दः पदपूरणः । त्वं त्यत् तदा । हे इन्द्र । चोदीः वृत्रवधाय चोदितवानसि । सखा । द्वितीयाबहुवचनस्य स्थान इदं प्रथमैकवचनम् । सखीन् मरुतः । अथवा प्रत्यक्षकृतत्वात् मन्त्रस्य सखेत्येतदव्यतिरिक्तप्रातिपदिकार्थप्रथमान्तं यत्तच्छब्दावध्याहृत्य एकवाक्यतान्नेयम् । यस्त्वं मरुतां सखा स चोदितवानसि । कम् । सामर्थ्यात् मरुतः । कदा । उच्यते । वृत्रं यत् यदा हे वज्रिन् वृषकर्मन् वृष्टिकर्मक । सर्वदैव वृष्टिकारीत्यर्थः । उभ्नाः । उभ उम्भ पूरणेऽन्यत्र । इह तु सामर्थ्याद्वधार्थः । हतवानसि । यदा च हे शूर वृषमणः वृष्टिपरमनस्क पराचैः । अञ्चतिर्गत्यर्थः । परागमनैः । तदीयस्थानप्राप्तिमात्रेणैवेत्यर्थः । दस्यून्योनौ स्वस्मिन्नेव स्थाने स्थितवान् व्यकृतः । कृतलेर्वधकर्मण इदं रूपम् । विविधं हतवानसि । वृथाषाट् । अव्यतिरिक्तप्रातिपदिकार्थप्रथमान्तत्वात् यत्तच्छब्दावध्याहृत्यैकवाक्यता नेया । यस्त्वं वृथाषाट् अयत्नेनैवाभिभविता स यदा दस्यून्योनौ व्यकृतः इति ॥ ४

त्वं ह त्यदिन्द्रारिषण्यन् दृळ्हस्य चिन्मर्तानामजुष्टौ ।
व्य१स्मदा काष्ठा अर्वते वर्घनेव वज्रिञ्छ्नथिह्यमित्रान् ॥ ५

य उक्तगुणस्त्वं त्यत् । व्यत्ययेनात्र नपुंसकता । सः त्वं हे इन्द्र अरिषण्यन् अस्मानहिंसन् । अस्मद्धिंसापरिहारार्थमित्यर्थः । दृढस्यापि मेघस्य वृष्टिनिरोधेन

मर्तानामनुष्ठौ अग्रीनौ वर्तमानस्य स्वभूताः। अस्मत्। षष्ठ्यर्थे पञ्चम्येषा। अस्माकं स्वभूताय। आ। मर्यादार्थोऽयम्। मर्यादया काष्ठाः अर्वते अश्वाय। अश्वग्रहणं चात्र कृत्स्नस्य द्विपदश्चतुष्पदश्चोपलक्षणार्थं द्रष्टव्यम्। यावत् किंचिदस्माकं स्वभूतं द्विपाच्चतुष्पाच्च सर्वस्यार्थायेत्यर्थः। विवः। विवृणु प्रकाशीकुरु। पातयेत्यर्थः। किंच घनेव यथा घनेन लोहकारो लोहं हन्ति तद्वत्। हे वज्रिन् श्नथिहि। वधकर्मायम्। जहि अस्मदीयान् शत्रून्॥ ५

त्वां ह त्यदिन्द्रार्णसातौ स्वर्मीळ्हे नर आजा हवन्ते।

तव स्वधाव इयमा समर्य ऊतिर्वाजेष्वतसाय्या भूत्॥ ६

त्वामित्येतेन सामानाधिकरण्यात् द्वितीयास्थाने प्रथमा। व्यत्ययेन चात्र नपुंसकता। य उक्तगुणस्तं त्वां ह इन्द्र अर्णसातौ। अर्ण उदकम्। तत्संभजनवेलायाम्। मेघवधोत्तरकालं उदकदानवेलायामित्यर्थः। स्वर्मीळ्हे उदकार्थे च मेघेन सह संग्रामे नरो मनुष्याः। आजा अन्यस्मिंश्च संग्रामे हवन्ते। उदकसंभजनवेलायां दानार्थमुदकार्थे संग्रामे युद्धार्थमन्यस्मिंश्च साहाय्यार्थमाह्वयन्तीत्यर्थः। य ईदृशोऽसि तं ब्रूमः। तव हे स्वधावः इयं आ मर्यादया समर्ये संग्रामे। ऊतिः पालनम्। वाजेषु। निमित्त एषा सप्तमी। प्रयोजनस्य च निमित्तत्वेन विवक्षा। समर्य इत्येतेन चास्य सम्बन्धः। अन्नेषु च यः संग्रामः। अन्नार्थो यः संग्रामः तत्रेत्यर्थः। अतसाय्या। तसु उपक्षय इत्येतस्य अत सातत्य गमन इत्यस्य वैतद्रूपम्। अनुपक्षीणा सन्ततगामिनी वा भूत् भवतु। यदेतदन्नार्थसंग्रामे प्रवृत्तं पालनमेतदक्षीणं सततगामि वा भवन्त्वित्यर्थः। कस्य। सामर्थ्यादस्माकं स्तोतॄणां वा॥ ६

त्वं ह त्यदिन्द्र सप्त युध्यन्पुरो वज्रिन्पुरुकुत्साय दर्दः।

बर्हिर्न यत्सुदासे वृथा वर्गंहो राजन्वरिवः पूरवे कः॥ ७

त्वं ह त्यत् सः हे इन्द्र असुराणां स्वभूताः सप्त पुरो युध्यन् असुरैः सह वज्रिन्। पुरुकुत्साय पुरुकुत्सनाम्नो राज्ञोऽर्थाय दर्दः दारितवान् नाशितवान्। योऽहं किं कृतवान्। उच्यते। बर्हिर्न दर्भानिव आमूलात् यत् यः सुदासे। सुदा नाम राजा। अस्य। षष्ठ्यर्थे चात्र चतुर्थी। सुदासो राज्ञः। वृथा अयत्नेनैव वर्क्। ओवृश्चू छेदने। भिन्नवानसि। अंहोः। अंहुशब्दस्यांहःपर्यायस्य द्वितीयार्थे षष्ठी। अंहः पापम्। यश्च हे राजन् दीप्त ईश्वर वा वरिवः। धनं पूरवे राज्ञे कः कृतवान्। दत्तवानित्यर्थः॥ ७

त्वं त्वां न इन्द्र देव चित्रामिषमापो न पीपयः परिज्मन् ।
यया शूर प्रत्यस्मभ्यं यंसि त्मनमूर्जं न विश्वध क्षरध्यै ॥ ८

त्वं नः अस्माकं हे इन्द्र देव चित्रां पूजनीयां विचित्रां वा । इषं सोमलक्षणमन्नम् । यथा वसतीवर्येकधाना आपो वर्धयन्ति तद्वत् । पीपयः अवर्धयः । परिज्मन् । अजेर्गत्यर्थस्येदं रूपम् । सर्वतो गच्छन् । यत्र तत्र वर्तमान इत्यर्थः । या कीदृशी इट् । यया निमित्तभूतया हे शूर अस्मभ्यमस्मदर्थं प्रति यंसि । यमु बन्धने । प्रतिबध्नासि । त्मनमात्मानम् । क । सामर्थ्यात् वेद्याम् । यामस्मदनुग्रहार्थं वा पातुमस्मदीयां वेद्यामात्मानं व्यवस्थापयसीत्यर्थः । ऊर्जं न यथा महता यत्नेन कश्चित् क्वचिद्व्यवस्थापयेत् तद्वत् । किमर्थं पुनर्वर्धयानि । उच्यते । विश्वध क्षरध्यै सर्वदा क्षरितुम् । कथं नाम सर्वदा यजत्स्वस्मासु त्वदर्थः सोमः क्षरेदित्येवमर्थमित्यर्थः ॥ ८

अकारि त इन्द्र गोतमेभिर्ब्रह्माण्योक्ता नमसा हरिभ्याम् ।
सुपेशसं वाजमा भरा नः प्रातर्मक्षू धियावसुर्जगम्यात् ॥ ९

अकारीति बहुवचनस्य स्थाने एकवचनम् । अकारिषन्त । ते त्वदर्थानि । हे इन्द्र गौतमपुत्रैरस्माभिः स्तुतिलक्षणानि ब्रह्माणि ओक्ता मर्यादयोक्तानि । नमसा नमस्कारेण सह हविर्लक्षणेनान्नेन वा । हविरपि दत्तमित्यर्थः । एतत् ज्ञात्वा हरिभ्यां सुपेशसं सुरूपम् । वाजमन्नम् । आभर आहर नः अस्मदर्थम् । प्रातरित्ययं तु पादः प्रत्यक्षकृतत्वात् भिन्नं वाक्यं उक्तार्थश्च ॥ ९

---

वृष्णे शर्धाय सुमखाय वेधसे नोधः सुवृक्तिं प्र भरा मरुद्भ्यः ।
अपो न धीरो मनसा सुहस्त्यो गिरः समञ्जे विदथेष्वाभुवः ॥ १

मारुतं सूक्तम् ।

मरुद्देवतमिदं सूक्तम् । वृष्ण इत्यादि गणापेक्षमेकवचनम् । वर्षित्रे गणाय । शर्धाय उत्साहिने । सुमखाय सुयज्ञाय । वेधसे प्राज्ञाय । हे नोधः । आत्मनः एवायं शरीरात्मनः प्रैषः । हे मदीय शरीरात्मन् । सुवृक्तिं सुष्ठु वर्जितां दोषैः स्तुतिं प्रभर प्रहर । उच्चारयेत्यर्थः । मरुद्भ्यः । षष्ठ्यर्थे चतुर्थ्येषा । तच्छ्रुतेश्च गणशब्दाध्याहारः । मरुतां गणाय । अथवा शुद्धोऽपि मरुच्छब्दस्तद्धितार्थे द्रष्टव्यः । एकवचनस्य स्थाने बहुवचनम् । मारुताय । मरुत्समूहाय इत्यर्थः । अहमप्यन्तरात्मा अपो न यथेन्द्रो वृष्टिलक्षणा

अपोऽभिव्यनक्ति तद्वद्धीरः प्रज्ञावान्। मनसा सह सुहस्त्यः। सुवर्णालंकृतहस्तवान् सुहस्त्यो गिरः। समञ्जे। अञ्जिः व्यक्त्यर्थः। समभिव्यनज्मि। विदथेषु यज्ञेषु। आभुवः। अपठितमपि महन्नामैतत्। महतीः। अहमन्तरात्मा मरुद्गणस्यार्थाय मनसा सह स्तुतीरभिव्यनज्मि। त्वं तु नोधः शरीरात्मन् ता उच्चारयेत्यर्थः॥ १

ते जज्ञिरे दिव ऋष्वास उक्षणो रुद्रस्य मर्या असुरा अरेपसः।

पावकासः शुचयः सूर्या इव सत्वानो न द्रप्सिनो घोरवर्पसः॥ २

ते मरुतः जज्ञिरे दिवः सकाशात्। द्यौरेषां मातेत्यर्थः। यत्त्वैतिहासिकमदितौ काश्यपाज्जन्म मरुतां स्मरन्ति तन्माहाभाग्यादेव जन्मान्तरं द्रष्टव्यम्। ऋष्वासो महान्तः। उक्षणः सेक्तारः। वर्षितार इत्यर्थः। रुद्रस्य। षष्ठीनिर्देशात् पुत्रा इति वाक्यशेषः।

रुद्रस्य ये मीळ्हुषः सन्ति पुत्राः। ऋ. वे. ६. ६६. ३.

यामन् रुद्रस्य सूनवः। ऋ. १. ८५. १.

इत्यादिषु रुद्रपुत्रत्वदर्शनात्। मर्याः मनुष्याकाराः। असुराः प्राणवन्तः प्रज्ञावन्तो वा। अरेपसः पापवर्जिताः। पावकासः शोधयितारः। शुचयो दीप्ताः। कथम्। सूर्या इव। सत्वानो न। षणु दान इत्यस्यैतद्रूपम्। नशब्दश्चोपमार्थीयत्वात् अस्त्युपमार्थस्य संप्रत्यर्थे प्रयोगः (नि. ७. ३१.) इति पदपूरणः। दातारः। द्रप्सिनः वृष्ट्युदकलक्षणेन रसेन रसवन्तः। अथवा सत्वानो नेति नशब्दश्रुतिसामर्थ्याद्यथेन्द्रप्रभृतयो दातारो द्रप्सिनः तथा द्रप्सिन इत्येवं योजयितव्यम्। घोरवर्पसः घोररूपाः॥ २

युवानो रुद्रा अजरा अभोग्घनो ववक्षुरध्रिगावः पर्वता इव।

दृळ्हा चिद्विश्वा भुवनानि पार्थिवा प्रच्यावयन्ति दिव्यानि मज्मना॥ ३

युवानः तरुणाः रुद्राः। सोयमित्यभिसम्बन्धात् पितृशब्दस्यैष पुत्रे प्रयोगः। रुद्रपुत्राः। अजराः जरावर्जिताः। अभोग्घनः यागादिना यस्तेषामभोग्यस्तस्य हन्तारः। ववक्षुः। विवक्षिथ इति महन्नामसु पाठात् विवक्षतिर्महत्वार्थः। बहुवचनस्य स्थान एकवचनम्। विवक्षवः। महान्त इत्यर्थः। अध्रिगावः। गौः द्यौः। तत्राधृताः व्यवस्थातारः अध्रिगावः। अधार्यगमना वा अध्रिगावः। पर्वता इव दृळ्हा चित् पर्वतवत् यानि दृढानि तान्यपि विश्वा भुवनानि भूतानि यानि न रोचन्ते तानि पार्थिवा पार्थिवानि च। स्वेभ्यः स्थानेभ्यः प्रच्यावयन्ति दिव्यानि मज्मना स्वेन बलेन॥ ३

चि॒त्रैर॒ञ्जिभि॒र्वपु॑षे॒ व्य॑ञ्जते॒ वक्ष॑स्सु रु॒क्माँ अधि॑ येतिरे शु॒भे ।
अंसे॑ष्वेषां॒ नि मि॑मृक्षुर्ऋ॒ष्टयः॑ सा॒कं ज॑ज्ञिरे स्व॒धया॑ दि॒वो नरः॑ ॥

चित्रैरञ्जिभिः । अञ्जिर्मरुतां रत्नप्रायः आभरणविशेषः । विविधैरञ्जिभिः । वपुषे रूपाय । शोभार्थमित्यर्थः । व्यञ्जते । अञ्जिसामर्थ्यादिह भूषायां द्रष्टव्यः । विविधं भूषयन्त्यात्मानमित्यर्थः । वक्षस्सु रुक्मान् अधि । वक्षो हृदयप्रदेशः । रुक्म आभरणविशेषः । अधिशब्द उपरिभावे । हृदयप्रदेशानां चोपरि रुक्मानधियेतिरे । यततिरत्र बन्धने द्रष्टव्यः । आबध्नन्ति । शुभे शोभार्थम् । अंसेषु चैषां व्यवस्थिताः निमिमृक्षुः । निशब्दः प्रकर्षे । मृक्षतिरपि ।

प्रयज्यवो मरुतो भ्राजदृष्टयः । ऋ. वे. ५. ५५. १.

इत्येवमादिषु ऋष्टीनां भ्राजितृत्वदर्शनाद्भ्राजनार्थः । सुष्ठु भ्राजन्ते । शोभन्त इत्यर्थः । के । उच्यते । ऋष्टयः ।

अंसेषु व ऋष्टयः । ऋ. वे. ५. ५४. ११.

इत्यंसदर्शनात् तोरणाः शक्तयो वा ऋष्टय उच्यन्ते । साकं जज्ञिरे सह च ते जाताः । न च केवलाः । किं तर्हि । स्वधया अन्नेन सह । दिवः सकाशात् । नरो मनुष्याकाराः ॥ ४

ई॒शा॒न॒कृतो॒ धुन॑यो रि॒शाद॑सो॒ वाता॑न् वि॒द्युत॒स्तवि॑षीभिरक्रत ।
दु॒ह॒न्त्यूध॑र्दि॒व्यानि॒ धूत॑यो॒ भूमिं॒ पिन्व॑न्ति॒ पय॑सा॒ परि॑ज्रयः ॥ ५

ईशानकृतः स्तोतॄणामीश्वराणां कर्तारः । धुनयः कंपयितारः शत्रूणाम् । रिशादसः । रिशतिर्हिंसार्थः । असु क्षेपणे । हिंसितुः क्षेप्तारः । प्रतिहिंसितार इत्यर्थः वातान् विद्युतश्च । तविषीभि र्बलैः । अक्रत कुर्वन्ति । कृत्वा च दुहन्त्यूधः । ऊधस्सादृश्यात् ऊधश्शब्देन मेघ इहोच्यते । प्रक्षारयन्ति मेघम् । दिव्यानि अत्यन्तोत्कृष्टान्युदकानि । धूतयः धुनयितारो मेघस्य । दुग्ध्वा च भूमिं पिन्वन्ति । पिवि सेचने । सिञ्चन्ति । पयसा वृष्टिलक्षणेनोदकेन । परिज्रयः । अजेर्गत्यर्थस्येदं रूपम् । सर्वतोगामिनः ॥ ५

पिन्व॑न्त्य॒पो म॒रुतः॑ सु॒दान॑वः॒ पयो॑ घृ॒तव॑द्वि॒दथे॑ष्वा॒भुवः॑ ।
अत्यं॒ न मि॒हे वि न॑यन्ति वा॒जिन॒मुत्सं॑ दुहन्ति स्त॒नय॑न्त॒मक्षि॑तम् ॥ ६

पिन्वतिरिह सामर्थ्यात् क्षरणार्थः न सेचनार्थः । क्षारयन्ति वृष्टिलक्षणा अपः मरुतः । न चाप एव केवलाः । किं तर्हि । पयो घृतवत् क्षीरं च घृतसंयुक्तं वर्षयन्ति

वृष्टिद्वारेणैव गाः प्रभूतक्षीराः कुर्वन्तीत्यर्थः । क्व । विदथेषु । यज्ञनामैतत् । इह तत्सम्बन्धेषु देशेषु । येषु यज्ञाः क्रियन्ते तेष्वित्यर्थः । आभुवः महान्तः । किंच अत्यं न मिहे । अत्य इत्यश्वनाम । मिह सेचने । यथा कश्चिदश्वसेचनाय इतश्चेतश्च नयेत् तद्वत् विनयन्ति विविधमितश्चेतश्च नयन्ति । कीदृशम् । वाजिनम् । वाजमित्यपठितमपि बलनाम वेगवचनं वा । उपमानभूतस्य चात्यस्येदं विशेषणम् । बलवन्तं वेगवन्तं वाश्वमिव । अथवा वाज इत्यन्ननाम । इह च तत्कारणत्वाद्वृष्टिलक्षणे उदके प्रवृत्तम् । वक्ष्यमाणमेघस्येदं विशेषणम् । वृष्ट्युदकवन्तम् । उत्सम् । उत्सशब्दोऽत्र मेघवचनः ।

अदर्दरुत्सम् । ऋ. वे. ५. ३२. १.

इति यथा । मेघं विनीय दुहन्ति क्षारयन्ति । स्तनयन्तं गर्जन्तम् अक्षितमक्षीणम् । प्रभूतोदकमित्यर्थः । अथवा अक्षितमहिंसितपूर्वमन्येन केनचित् ॥ ६

म॒हि॒षासो॑ मा॒यिन॑श्चि॒त्रभा॑नवो गि॒रयो॒ न स्वत॑वसो रघु॒ष्यदः॑ ।
मृ॒गा इ॑व ह॒स्तिनः॑ खादथा॒ वना॒ यदारु॑णीषु॒ तवि॑षी॒रयु॑ग्ध्वम् ॥ ७

खादथेति मध्यमपुरुषसंयोगात् प्रत्यक्षकृतोऽयं मन्त्रः । नचैतानि संबोधनानि । अतो यत्तच्छब्दावध्याहृत्यैकवाक्यतां नेयानि । ये यूयं महिषासः महान्तः । मायिनो मायाविनः । चित्रभानवः विचित्रदीप्तयः । गिरयो न स्वतवसः पर्वता इव स्वबलाः । रघुष्यदः । स्यन्दतिर्गतिकर्मा । लघुगमनाः । शीघ्रगामिन इत्यर्थः । मृगा इव हस्तिनः खादथ वना । इवशब्दो हस्तिन इत्यत्राप्यनुषक्तव्यः । वनशब्दश्च वृक्षवचनः । यथा मृगास्तृणानि खादन्ति यथा च हस्तिनो वृक्षान् भङ्क्त्वा खादन्ति तद्वद्यूयं खादथ । किम् । सामर्थ्याच्छत्रून् अथवा मृगा इह सिंहा व्याघ्रा वा अभिप्रेताः नान्ये । वनमित्युदकनाम । सामर्थ्याच्चेहान्तर्णीतमत्वर्थम् । यथा सिंहा व्याघ्रा वा गत्वा हस्तिनः खादन्ति तद्वद्यूयमुदकवतो मेघानित्यर्थः । कदा । उच्यते । यदारुणीषु । द्वितीयार्थे सप्तमी । अरुणिः बडबाः । यद्यपीदं आरुण्यो गाव उषसाम् (निघ. १. १५) इत्युषसामादिष्टोपयोजनं तथापि माहाभाग्यात् देवतानां मरुतामप्यविरुद्धम् । तविषीम् । बलनामैतत् । इह चान्तर्णीतमत्वर्थम् । बलवतीरयुग्ध्वं युद्धार्थं स्वरथे न्ययुग्ध्वम् । यथा युध्यध्वमित्यर्थः ॥ ७

सिं॒हा इ॑व नानदति॒ प्रचे॑तसः पि॒शा इ॑व सु॒पिशो॑ वि॒श्ववे॑दसः ।
क्षपो॒ जिन्व॑न्तः॒ पृष॑तीभिर्ऋ॒ष्टिभिः॒ समित्स॒बाधः॒ शव॒साहि॑मन्यवः ॥ ८

सिंहा इव नानदति अत्यर्थं नदन्ति मरुतः । कीदृशाः । प्रचेतसः प्रवृद्धज्ञानाः । पिङ्गलवर्णत्वात् पिशा इहाग्नय उच्यन्ते । सुपिश इति पेश-

शब्दस्य रूपनाम्न इदमुपधाह्रस्वत्वम् । व्यत्ययेन च नपुंसकत्वैकवचने । अग्नय इव सुपेशसः सुरूपा इत्यर्थः । विश्ववेदसः बहुधनाः । किं कुर्वन्तो नानदति । उच्यते । क्षपो जिन्वन्तः । क्षप इत्युदकनाम । जिन्वतिः प्रीतिकर्मान्यत्र । इह तु क्षरणार्थः । समित् सबाध इत्ययं च संशब्द उपसर्गोऽपकृष्य जिन्वन्त इत्यनेन संबन्धयितव्यः । उदकं मेघात् संक्षारयन्त इत्यर्थः । केन । पृषतीभिः पृषद्वर्णाभिः बडबाभिः । ऋष्टिभिः शक्तिभिश्च तोरणैर्वा । सर्वैर्युद्धोपकरणैरित्यर्थः । समिदिति इच्छब्दः पदपूरणः । कीदृशाः । सबाधः सहभूतानामपि शत्रूणां बाधितारः । शवसा स्वेन बलेन । अहिमन्यवः । हि गतौ । मन्युर्मन्यतेः दीप्तिकर्मणः । अगता अविनष्टा दीप्तिरेतेभ्यः ते अहिमन्यवः । दीप्तिमन्त इत्यर्थः । अथवा अहीनदीप्तयोऽहिमन्यवः उत्कृष्टदीप्तय इत्यर्थः । अथवा अहिर्मेघोऽसुरो वा । मन्युरित्यपि क्रोधनाम । अहिविषयः क्रोधो येषां तेऽहिमन्यवः । दीप्तिमन्त इत्यर्थः ॥ ८

रोदसी आ वदता गणश्रियो नृषाचः शूराः शवसाहिमन्यवः ।
आ वन्धुरेष्वमतिर्न दर्शता विद्युन्न तस्थौ मरुतो रथेषु वः ॥ ९

आकारोऽत्र प्रतिशब्दस्यार्थे । उभे अपि द्यावापृथिव्यौ प्रतिवदत । गर्जतेत्यर्थः । हे गणश्रियः गणमाश्रिताः । गणरूपा इत्यर्थः । नृषाचः यागकाले मनुष्याणां सेवितारः शूराः । केन वदामः । उच्यते । शवसा स्वबलेन । अहिमन्यवः । नेदं संबोधनम् । प्रत्यक्षकृतश्चायं मन्त्रः । अतो यत्तच्छब्दावध्याहृत्यैकवाक्यतां नेया । ये येत्यूयमहिमन्यवः ते । किंच वन्धुरेषु सारथिस्थानेषु । अमतिर्न दर्शता । अमतिरिति रूपनाम । सामर्थ्याच्चेहान्तर्णीतमत्वर्थः । यथा काचिद्रूपवती स्त्री दर्शनीया तद्वद्दर्शनीया । विद्युन्न आतस्थौ आतिष्ठति । व्यवतिष्ठत इत्यर्थः । नशब्दस्तु पुरस्तादुपाचार उपमार्थीयत्वात् अस्त्युपमार्थीयस्य संप्रत्यर्थे प्रयोगः (नि. ७. ३१.) इति पदपूरणः । अथवा विद्युन्नेति नशब्दश्रुतिसामर्थ्यादुभे अप्येते उपमाने । यथा रूपवती काचिद्दर्शनार्हा स्त्री कचिद्व्यवतिष्ठते यथा विद्युद्दीप्यमाना व्यवतिष्ठते एवं वन्धुरेषु व्यवतिष्ठत इत्यर्थः । कः । सामर्थ्यात् सारथिः । क ये वन्धुराः । उच्यते । हे मरुतः रथेषु वः युष्माकं स्वभूतेषु ॥ ९

विश्ववेदसो रयिभिः समोकसः संमिश्लासस्तविषीभिर्विरप्शिनः ।
अस्तार इषुं दधिरे गभस्त्योरनन्तशुष्मा वृषखादयो नरः ॥ १०

विश्ववेदसः सर्वज्ञाः बहुधना वा । रयिभिः समोकसः । समित्येकीभावे । ओकः स्थानम् । धनैः सहैकस्थानाः । स्वसन्निधौ धनानां स्थापयितार इत्यर्थः । संमिश्लासः

नविपीभिः बलैः संमिश्राः । बलवन्त इत्यर्थः । त्रिरप्शिनः । महन्नामैतत् । महान्तः । अस्तारः क्षेप्तारः शत्रूणामायुधानां वा । इषुं दधिरे धारयन्ति । गभस्त्योः । बाहुनामैतत् । तत्सम्बन्धादिह हस्तयोः प्रयुक्तम् । आत्मीययोर्हस्तयोः । अनन्तशुष्माः बहुबलाः । वृषखादयः वर्षितुर्मेघस्य खादितारः । अथवा खादिशब्द इह कवचस्य वचनः कटरिकाकारायुधविशेषवचनो वा । कुत एतत् ।

अंसेषु व ऋष्टयो पत्सु खादयः । ऋ. वे. ५. ५४. ११.

त्वेषं गणं तवसं खादिहस्तम् । ऋ. वे. ५. ५८ २.

इत्यादिषु दर्शनात् । ........ ...खादयो येषां ते वृषखादयः । नरः मनुष्याकाराः ॥ १०

हिरण्ययेभिः पविभिः पयोवृध उज्जिघ्नन्त आपथ्यो३ न पर्वतान् ।
मखा अयासः स्वसृतो ध्रुवच्युतो दुध्रकृतो मरुतो भ्राजदृष्टयः ॥ ११

हिरण्ययेभिः पविभिः । पवी रथनेमिरुच्यते । हिरण्मयीभिः रथचक्रधाराभिः - पयोवृधः उदकस्य वर्धयितारः । उज्जिघ्नन्ते । उच्छब्द ऊर्ध्वतायाम् । प्रदर्शनार्थं चोर्ध्वतोपादानम् । ऊर्ध्वमधस्तिर्यक् च घ्नन्ति । कथम् । आपथ्यो न ।

आपथयो विपथयोऽन्तस्पथा अनुपथाः । ऋ. वे. ५. ५२. १०.

इति प्रयोगदर्शनात् आपथयो मरुत उच्यन्ते । तेषां स्वभूता आपथ्यः । अथवा अविद्यमानो नियतः पन्था यस्मिन् तदपथं अन्तरिक्षम् । तत्र भवा आपथ्यः । का एताः । वृष्टिलक्षणा आपः । यथा वृष्टिलक्षणा आपो नद्यादिभावेन व्यवस्थिताः कूलादीनि घ्नन्ति तद्वदित्यर्थः । किं घ्नन्ति । उच्यते । पर्वतान् । मेघनामैतत् । मेघानामुपरि चङ्क्रम्यमाणाः । रथचक्रधाराभिः मेघान् भिन्दन्तीत्यर्थः । श्यावाश्वोऽपि वक्ष्यति

उत पव्या रथानामद्रिं भिन्दन्त्योजसा । ऋ वे ५ ५२. ९.

इति । कीदृशाः । उच्यते । मखाः । अपठितमपि महन्नामैतत् द्रष्टव्यम् । महान्तः । अथवा मखा इति यज्ञनामैतत् मखयतेर्वैदिकर्मणः । तं कुर्वन्तीति मखाः । वृष्टिद्वारेण यज्ञस्य कर्तारः । अयासो गमनशीलाः । स्वसृतः सर्वत्र स्वयंगामिनः । ध्रुवच्युतः स्थिराणामपि च्यावयितारः । दुध्रकृतः । कृन्ततिर्वधकर्मा । दुर्धराणां कर्तारः । अत्यन्तमपि बलवतां हन्तार इत्यर्थः । अथवा कृन्ततेरेवैतद्रूपम् । दुध्रशब्दस्तु दुर्धरतायां द्रष्टव्यः । आत्मनो दुर्धरतायाः कर्तारः । के । उच्यते । मरुतो भ्राजदृष्टयः दीप्तशक्तयो दीप्ततोरणा वा ॥ ११

धृषुं पावकं वनिनं विचर्षणिं रुद्रस्य सूनुं हवसा गृणीमसि ।
रजस्तुरं तवसं मारुतं गणमृजीषिणं वृषणं सश्चत श्रिये ॥ १२

घृ क्षरणदीप्त्योः। घृषुं दीप्तम्। अथवा घृषुरित्यपठितमपि महन्नाम। महान्तः परिमाणतः। पावकं शोधयितारं गन्तारं वा शत्रून् प्रति। वनिनं उदकवन्तं संभक्तारं वा यष्टृणाम्। विचर्षणिं विद्रष्टारं सर्वस्य। रुद्रस्य सूनुमपत्यभूतम्। हवसा। ह्वयतिरर्चतिकर्मा। आह्वानं हवः स्तुतिः तया। गृणीमसि स्तुमो वयं। यूयमपि हे मदीयाः पुत्राः पौत्राश्च ऋत्विजो वा रजस्तुरम्। रज उदकम्। तुर्वतिर्हिंसार्थः। उदकार्थं मेघानां हिंसितारम्। तवसं महान्तं वीर्यतः। मारुतं गणमृजीषिणम्। यत् सोमस्य पूयमानस्यातिरिच्यते तदृजीषम्। तत्तु हर्योर्भागो न मरुताम्। अतोऽत्र ऋजीषेण स्वसंबन्धि सोमो लक्ष्यते। ऋजीषसंबन्धिसोमवन्तमित्यर्थः। वृषणं वर्षितारम्। सश्चत। सश्चतिर्गतिकर्मा। शुद्धोऽपि सोपसर्गार्थे द्रष्टव्यः। स्तुतिभिर्हविर्भिश्च उपगच्छत। किमर्थम्। श्रिये यज्ञफललक्षितायाः श्रियोऽर्थाय॥ १२

प्र नू स मर्तः शवसा जनाँ अति तस्थौ व ऊती मरुतो यमावत।
अर्वद्भिर्वाजं भरते धना नृभिरापृच्छ्यं क्रतुमा क्षेति पुष्यति॥ १३

प्रशब्दः प्रकर्षे तस्थावित्येतेन च संबन्धयितव्यः। नु इति क्षिप्रनाम। क्षिप्रं स मर्तः शवसा जनान् अति। जनानिति कर्मश्रुतेः अतीति चोपसर्गाद्योग्यक्रियाध्याहारः। जनानतीत्य प्रतस्थौ प्रकर्षेण तिष्ठति। व ऊती युष्माकं पालनेन हे मरुतः यमावत पालयत यूयम्। यं मनुष्यं पालयथ यूयं स युष्मत्पालनेनान्येभ्योऽधिकं बलं प्राप्नोतीत्यर्थः। न च बलमेव केवलम्। किं तर्हि। अर्वद्भिरश्वैः सह वाजमन्नं भरते हरत्यात्मानं प्रति प्रापयति। लभत इत्यर्थः। धनानि च। नृभिः परिचारकमनुष्यैः सह। आपृच्छ्यं क्रतुं सर्वार्थेषु चाप्रश्नार्हां प्रज्ञाम्। अथवा नृभिरित्येतदापृच्छ्यमित्येतेन संबध्यते। सर्वार्थेषु सर्वमनुष्यैराप्रश्नार्हां च प्रज्ञामिति। आक्षेति सर्वदा च स्वस्मिंस्थाने निवसति। पुष्यति सर्वप्रकारां च पुष्टिं प्राप्नोति॥ १३

चर्कृत्यं मरुतः पृत्सु दुष्टरं द्युमन्तं शुष्मं मघवत्सु धत्तन।
धनस्पृतमुक्थ्यं विश्वचर्षणिं तोकं पुष्येम तनयं शतं हिमाः॥ १४

चर्कृत्यम्। कृन्ततिर्वधकर्मा। अत्यर्थं शत्रूणां हन्तृ। हे मरुतः। पृत्सु संग्रामेषु दुष्टरम्। अवतरतीति वधकर्मसु पाठात् तरतिर्वधार्थः। शत्रुभिः दुर्हणम्। द्युमन्त दीप्तिमत्। शुष्मं बलम्। मघवत्सु धनवत्सु। धत्तन स्थापयत। पूर्वमस्मभ्यं धनं दत्त। ततो धनवभ्द्यः ~~स्मभ्यो बलमि~~त्यर्थः। किंच धनस्पृतम्। स्पृ प्रीतिपालनयोः। धनेन

प्रीयमाणं धनस्य च पालयितारम्। उक्थ्यं प्रशस्यम्। विश्वचर्षणिं सर्वस्य विद्रष्टारम्। अशेषस्य जगतो ज्ञातारमित्यर्थः। तोकं पुत्रम्। पुष्येम। दैवादिकः पुषिः वृध्यर्थत्वादकर्मकः। क्र्यादिकस्तु वर्धनार्थत्वात् सकर्मकः। इह तु तोकं कर्म श्रुतम्। अतोऽयं व्यत्ययेन क्र्यादिकस्य पुषेः श्यन् द्रष्टव्यः। युष्मत्प्रसादेन पुष्णीयाम तनयं पौत्रं च। अथवा पुष्येमेति दैवादिकस्य पुषेः रूपम्। धनस्पृतमित्यादि द्वितीया तृतीयार्थे। धनस्पृतादिगुणेन तोकेन तनयेन च वर्धिषीमहीत्यर्थः। कियन्तं कालम्। उच्यते। शतं हिमाः शतवर्षम्॥ १४

नू ष्ठिरं मरुतो वीरवन्तमृतीषाहं रयिमस्मासु धत्त।
सहस्रिणं शतिनं शूशुवांसं प्रातर्मक्षू धियावसुर्जगम्यात्॥ १५

क्षिप्रं हे मरुतः वीरवन्तं पुत्रैः पौत्रैश्च युक्तम्। ऋतीषाहम्। गन्तव्यत्वादृतयः शत्रवः इहोच्यन्ते। तेषामभिभवितारम्। रयिमस्मासु धत्त। सहस्रिणं शतिनं सहस्रसंख्याकं शतसंख्याकं च। अत्यन्तबह्वित्यर्थः। शूशुवांसम्। श्वयतिः वृध्यर्थः। प्रवर्धमानम्। प्रातर्मक्षित्ययन्तु पादः प्रत्यक्षकृतत्वात् भिन्नं वाक्यं उक्तार्थश्च। गणापेक्षं चात्रैकवचनं द्रष्टव्यम्॥ १५



पश्वा न तायुं गुहा चतन्तं नमो युजानं नमो वहन्तम्।
सजोषा धीराः पदैरनु ग्मन्नुप त्वा सीदन् विश्वे यजत्राः॥ १

शाक्त्यः पराशरः।

पश्वा न तायुमित्येवमादि शक्तिपुत्रः पराशरो नामापश्यत्।

ततोऽग्नेः।

यत्पूर्वं मारुतमुक्तं ततः परमिदं सूक्तपञ्चदशकमग्निदेवत्यं प्रत्येतव्यम्। प्रागित्थाहि सोमादित्यर्थः। पश्वा न तायुमित्येतस्मिन् ऋग्द्वये इतिहासमाचक्षते। अग्निर्यमीं च वरुणानीं च कामयाञ्चक्रे। तं परदाराभिमर्शनात् जराविवेश। अथ तयाविष्टो हवींषि वोढुमशक्नुवन् वज्राच्च वषट्काराच्च बिभ्यत् अनाशनं उष्ट्वा च अप्स्वौषधीषु च प्रविवेश। तमापः स्वेनामृतरसेन वर्धयांचक्रुः। देवा अपि यमवरुणपुरस्सरा उपगम्य अजरमायुस्तस्य कृत्वा प्रयाजानूयाजांश्च प्रतिज्ञाय पुनरपि हविषां वोढारं च नियुयुजे। इति। तदेतद्विस्तरेण।

महत्तदुल्पम् । ऋ. वे. १०. ५१. १.

इत्यत्र वक्ष्यति । संक्षेपेण त्विहोच्यते पश्वा न तायुमिति । पश्वेतीत्थंभूतलक्षणे तृतीया । तायुरिति स्तेननाम । पशुनेवापहृतेन सम्बद्धं स्तेनं गुहा गूढं प्रच्छन्नम् । चतन्तम् ।

तेभिष्ट्वा चातयामसि । ऋ. वे. १०. १५५. १.

इति दर्शनात् चतयतिर्नाशने प्रसिद्धः । अतोऽत्र प्रकृत्यन्तरश्चततिर्नाशनार्थः । नश्यन्तं त्वाम् । नष्ट्वा च नमो युजानम् । नमःकारणत्वादापोऽत्र नमःशब्देनोच्यन्ते । तृतीयार्थे चैषा द्वितीया । अन्नकारणेनाब्लक्षणेन युज्यमानम् । अप्सु प्रविशन्तमित्यर्थः । प्रविश्य च नमो वहन्तं अमृतरसलक्षणमन्नमात्मानं प्रति प्रापयन्तम् । अमृतरसं पिबन्तमित्यर्थः । सजोषा सहप्रीतयः । धीराः प्राज्ञाः । त्वदीयैरेव पदैः त्वामनुग्मन् अनुगतवन्तः । अनुगम्य च उपासीदन् त्वां विश्वे यजत्राः यष्टव्याः देवाः ॥ १

ऋतस्य देवा अनु व्रता गुर्भुवत्परिष्टिर्द्यौर्न भूम ।
वर्धन्तीमापः पन्वा सुशिश्विमृतस्य योना गर्भे सुजातम् ॥ २

गतस्याग्नेरप्सु देवा यमप्रभृतयः अनु व्रता गुः गमनाख्यानि कर्माण्यनुगतवन्तः । यतो यतो निर्गतस्ततोऽनुगतवन्त इत्यर्थः । भुवत्परिष्टिः नष्टस्य चाग्नेरभवत् पर्येषणा । कियती । उच्यते । द्यौर्न भूम । विस्तीर्णपर्यायोऽत्र भूमशब्दः । न बहुवचनः । भूतजातवचनो वा । द्यौरिवै विस्तीर्णा । सर्वस्मिन् जगतीत्यर्थः । वर्धन्ति ईम् । भूतेऽत्र लट् द्रष्टव्यः । ईंशब्दश्च एनमित्यस्यार्थे । अवर्धयंश्चैनमग्निमापः । पन्वा पननीयेन स्तुत्येनामृतरसेन । सुशिश्विम् । श्वयतिर्वृध्यर्थः । सुष्ठु वृद्धम् । अथवा शिशुशब्दस्येदं रूपम् । सुष्ठु शिशुं सन्तम् । अत्यन्तं क्षीणमित्यर्थः । क्व प्रदेशे । उच्यते । ऋतस्य योना । ऋतमित्युदकनाम । उदकस्य योनौ गर्भे । गर्भस्थानमत्र गर्भशब्देनोच्यते । आत्मन एव योनौ यः प्रदेशो गर्भस्थानं तत्रेत्यर्थः । सुजातं सुष्ठु शोभनं वा जातम् ॥ २

पुष्टिर्न रण्वा क्षितिर्न पृथ्वी गिरिर्न भुज्म क्षोदो न शंभु ।
अत्यो नाज्मन्त्सर्गप्रतक्तः सिन्धुर्न क्षोदः क ईं वराते ॥ ३

उपमानोपमेयसाधारणगुणवचनानां शब्दानां सर्वत्रोपमेयवृत्तित्वदर्शनात् इह चाग्नेः पुंलिङ्गस्योपमेयत्वात् रण्वेत्यादिषु व्यत्ययेन स्त्रीलिङ्गनपुंसकलिंगत्वे । रण्वेत्यपि रमे रूपम् । धनादिपुष्टिरिव रमणीयः प्रीतिकरदर्शनोऽग्निः । क्षितिर्न पृथ्वी ।

क्षितिरिति पृथिवीनाम । दावरूपस्य वाग्नेरिदमुपमानम् । पृथिवीव च पृथुः दावरूपः सन् । गिरिर्न भुज्म पर्वत इव फलादिनोपभोग्यः । क्षोदो न शंभु । क्षोद इत्युदकनाम । उदकमिव तृट्छेदादिना सुखस्य भावयिता । अत्यो न । एते अपि द्वे दावरूपस्यैवोपमाने । अश्व इव चाज्मन् गमने । सर्गप्रतक्तः । सर्गशब्दो वेगवचनः । तक्षतिर्गतिकर्मा । वेगगामिदावररूपः । सिन्धुर्न क्षोदः । सिन्धुर्नदी । षष्ठ्यर्थे चैषा प्रथमा । सिन्धोरिव चोदकम् । कः ईं एनं दावरूपं सन्तं वराते वारयति । न कश्चिद्वारयितुं शक्नोतीत्यर्थः ॥ ३

जामिः सिन्धूनां भ्रातेव स्वस्रामिभ्यान्न राजा वनान्यत्ति ।
यद्वातजूतो वना व्यस्थादग्निर्ह दाति रोमा पृथिव्याः ॥ ४

वैद्युतस्याग्नेरनेन पादेन स्तुतिः । जामिः ज्ञातिः । वैद्युतोऽग्निः सिन्धूनाम् । आपोऽत्र सिन्धव उच्यते ।

यः सिन्धूनामुपोदये सप्त स्वसा स मध्यमः । ऋ. वे. ८. ४१. २

इति यथा । वृष्टिलक्षणानामपाम् । कथम् । भ्रातेव स्वस्रां भगिनीनां यथा भ्राता अत्यन्तसन्निकृष्टो ज्ञातिस्तद्वदित्यर्थः । परैस्त्रिभिः पादैः दावरूपस्याग्नेः स्तुतिः । इभ्यान्न राजा । इभा हस्तिनः । तेषु भवाः साधवो वा इभ्याः हस्त्यारोहाः । यथा इभ्यान् राजा आक्रम्योपभुङ्क्ते तद्वत् । दवाग्निः वनानि वृक्षान् । अत्ति भक्षयति । दहतीत्यर्थः । कदा । उच्यते । यद्वातजूतः वातेन पूरितः? वनानि व्यस्थात् । विपूर्वस्तिष्ठतिर्गत्यर्थः । विविधं गच्छतीत्यर्थः । तदैव चाग्निः दावरूपः । हशब्दः पदपूरणः । दाति पुनाति । रोमस्थानीयं तृणं पृथिव्याः । तदैव पृथिव्यास्तृणान्यपि दहतीत्यर्थः॥ ४

श्वसित्यप्सु हंसो न सीदन् क्रत्वा चेतिष्ठो विशामुषर्भुत् ।
सोमो न वेधा ऋतप्रजातः पशुर्न शिश्वा विभुर्दूरेभाः ऽ ५

श्वसिति तृणादीनि दहन्नग्निः श्वसनसदृशं शब्दं करोति । कथम् । अप्सु हंसो न । हंस इव श्रान्तः निषीदन् । कीदृशः । क्रत्वा चेतिष्ठः प्रज्ञावतां मध्ये प्रज्ञया प्रज्ञावत्तमः । विशाम् । षष्ठीनिर्देशादर्थायेति शेषः । मनुष्याणां अर्थाय । उषर्भुत् उषःकाले विबोद्धा । यदग्निहोत्रहोमार्थमुषःकाले अग्निर्विबोध्यते तदभिप्रायमुषर्भुदित्येतत् विशेषणम् । सोमो न वेधाः मेधावी । ऋतप्रजातः । ऋतमित्यादित्यः उदकं वा । तत उत्पन्नः । उदीचीहि प्रथमावृत्त आदित्ये कंसं वा मणिं वा परिमृज्य प्रतिस्वरे यत्र शुष्कगोमयसंस्पर्शं धारयति तत्प्रदीप्यते । तेनाग्निरादित्यादुत्पद्यते

वैद्युतात्मनोदकात् । कथंपुनः प्रजातः । उच्यते । पशुर्न शिश्वा । प्रथमायाः स्थाने तृतीयैषा । पशुरिव शिशुः । यथा शिशुकः पशुः यस्मात् पशोः प्रजायते तद्व-दित्यर्थः । विभुरीश्वरः सर्वस्य । दूरेभाः । भा दीप्तौ । दूर एव व्यवस्थितो दीप-यिता ॥ ५



रयिर्न चित्रा सूरो न संदृगायुर्न प्राणो नित्यो न सूनुः ।
तक्वा न भूर्णिर्वना सिषक्ति पयो न धेनुः शुचिर्विभावा ॥ १

रयिर्न चित्रा धनमिव चित्रः पूजनीयो ऽग्निः । सूरो न सन्दृक् सूर्य इव सन्द्रष्टा सन्दर्शनीयो वा । आयुर्न प्राणः । प्राणहेतुरत्र प्राण उच्यते । अन्नमिव च प्राणहेतुः । जाठरात्मना ह्यग्निराहारविपरिणामकरत्वात्तदायत्तत्वाच्च प्राणस्य भवति प्राणहेतुः । किंच नित्यो न सूनुः । नित्यशब्दो ध्रुववचनः । कृतकाद्यपेक्षया च औरसः पुत्रो नित्य उच्यते । यथौरसः पुत्रोऽग्निरपि तद्वत् । साकांक्षत्वाद्योग्यत्वाच्च इष्टानां लोकानां प्रापकः सुखो वेति वाक्यशेषः । अथवा पुरस्तादुपचारत्वेऽपि नशब्दस्य न सूनुः इत्येतावन्मात्रमेव उपमानम् । नित्य इत्येतत्तूपमेयम् । नित्योऽग्निः सूनुरिव । यथा त्रैवर्णिकैः पितॄणामनृणत्वाय पुत्रोऽवश्यमुत्पाद्यः एवं देवानामनृणत्वायाग्निरपि अव-श्यमाधेय इत्यर्थः । किंच तक्वा न भूर्णिः । तक्वेति स्तेननाम । भूर्णिरित्यपि भ्रमे रूपं द्रष्टव्यं न बिभर्तेः । यथा भ्रमणशील आटविकश्चोरो वनानि सेवते तद्वद्दावरूपोऽग्निः वनानि सिषक्ति सेवते । किंच पयो न धेनुः । षष्ठ्यर्थे प्रथमैषा । क्षीरमिव धेनोः स्वभूतम् । शुचिः शुद्धः । विभावा दीप्तिमांश्चाग्निः ॥ १

दाधार क्षेममोको न रण्वो यवो न पक्वो जेता जनानाम् ।
ऋषिर्न स्तुभ्वा विक्षु प्रशस्तो वाजी न प्रीतो वयो दधाति ॥ २

दाधार धारयति क्षेमम् । क्षेमं करोतीत्यर्थः । ओको न रण्वः । यवो न पक्वः । ओक इति गृहनाम यवोऽपि सस्यावस्थ इहाभिप्रेतः । द्वे अपि चैते रण्व इत्यस्योप-माने । गृहमिव च यव इव च पक्वः सर्वस्य रमणीयोऽग्निः । प्रीतिकर इत्यर्थः । जेता जनानां जेता च शत्रुजनानाम् । ऋषिर्न स्तुभ्वा । स्तोभतिरर्चतिकर्मा । होतृत्वादग्निः ऋषिरिव स्तोता देवानाम् । स्वयमपि च विक्षु । तृतीयार्थे सप्तमी । विड्भिः मनुष्यैः प्रशस्तः । शंस स्तुतौ । प्रकर्षेण स्तुतः । कथम् । वाजी न अश्व इवोत्कृष्टः प्रीतश्च सन्नग्निः । वयोऽन्नं दधाति ददाति स्तोतृभ्यः । अथवा वाजीनेत्येतत् वयो दधातीत्य-

स्योपमानं न प्रशस्त इत्येतस्य । अश्व इव च वयो दधाति । यथा संग्रामाश्वः संग्रामं जित्वा तद्द्वारेणान्नं ददाति तद्वत् प्रीतस्सन्नग्निः ददातीत्यर्थः ॥ २

दुरोकशोचिः क्रतुर्न नित्यो जायेव योनावरं विश्वस्मै ।
चित्रो यदभ्राट् श्वेतो न विक्षु रथो न रुक्मी त्वेषः समत्सु ॥ ३

दुष्करमोको यस्याम् । यत्र व्यवस्थातुं न शक्यत इत्यर्थः । स दुरोकाः । छान्दसत्वात् सकारलोपः । दुरोकाः शोचिर्दीप्तिर्यस्य स दुरोकशोचिः दुस्सहदीप्तिकः । क्रतुर्न नित्यः क्रतुः कर्म प्रज्ञा वा तद्वन्नित्यः । जायेव योनौ । योनिरिति गृहनाम । यथा सर्वमनुष्याणां भार्या गृहे पर्याप्ता सर्वस्मै कार्याय एवमग्निरलं पर्याप्तः सर्वस्मै कार्याय । स्तोतॄणां सर्वकार्याणि कर्तुं समर्थ इत्यर्थः । कीदृशः । उच्यते । चित्रो यदभ्राट् । यदिति व्यत्ययेन नपुंसकता । विचित्रो यो भ्राजते । श्वेतवर्णत्वाच्छ्वेत आदित्यः । आदित्य इव । विक्षु मनुष्येषु । यश्च रथो न रुक्मी त्वेषः सुमत्सु । रुक्ममिति हिरण्यनाम । यथा रुक्मवान् रूपेण सुवर्णेन वा खचितावयवो रथः संग्रामेषु दीप्तिः स्यात्तद्वत्त्वेषो दीप्तः ॥ ३

सेनेव सृष्टामं दधात्यस्तुर्न दिद्युत्त्वेषप्रतीका ।
यमो ह जातो यमो जनित्वं जारः कनीनां पतिर्जनीनाम् ॥ ४

यथा सेना सेनापतिना सृष्टा विसृष्टा अभ्यनुज्ञाता सती यान् प्रति गच्छति तेषां भयं दधाति एवमतिप्रज्वलितोऽग्निरमम् । अमशब्दोऽत्र भयवचनः ।

द्यावा चिदस्मै पृथिवी अमे ध्याः । ऋ. वे. १. ६३. १.

इति यथा । भयं ददाति । जनयतीत्यर्थः । कस्य । अनिर्देशात् कृत्स्नस्य जगतः रक्षसां वा । अस्तुर्न दिद्युत् । इदमपि भयाधानस्यैव द्वितीयमुपमानम् । विद्युदिति वज्रनाम । वज्रनामानि चायुधमात्रवचनानि नेन्द्रायुधविशेषवचनान्येव । तेनात्र विद्युच्छक्तिरुच्यते । यथा चास्तुः क्षेपणशीलस्य स्वभूता शक्तिर्यं प्रति क्षिप्यते तस्य भयं ददाति तद्वत् । कीदृशी या शक्तिः । उच्यते । त्वेषप्रतीका । प्रतीकं दर्शनमुच्यते । दीप्तदर्शना । उज्ज्वलेत्यर्थः । किंच यमो ह जातः । युगपज्जातत्वाद्यमोऽत्राग्निरुच्यते । तेन पुनः सहानीय युगपज्जातः इन्द्रेण । कुत एतत् ।

समानो वां जनिता भ्रातरा युवमयमाविहेह मातरा । ऋ.वे.३.५४.२.

इति मन्त्रान्तरे दर्शनात् । अथवा प्रयच्छति स्तोतृभ्यः कामानिति यमः । हशब्दस्तु विनिग्रहार्थीय एवार्थे । यम एव जातः । यम एव जनित्वम् । कर्तर्ययं व्यत्ययेन त्वं

द्रष्टव्यः । जनिष्यमाणः । यावत्किंचित् सर्वमग्न्यायत्तत्वादग्निरेवेत्यर्थः । किंच जारः कनीनां जरयिता कन्यकानामग्निः । अग्निसन्निधौ व्यूढानां कन्यकानां कन्यात्वं व्यावर्त्यते । अत एवमुच्यते जारः कनीनामिति । पतिर्जनीनाम् । जनयन्त्यपत्यानीति जनयो भार्याः तासां पतिः । यावती काचित् स्त्री सर्वस्याः प्रथममग्निः पतिर्भवति पश्चान्मनुष्यः । तथाहि वक्ष्यति ।

सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः ।
तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ॥ ऋ. वे. १०.८५.४०.

इति । पालयितृवचनो वा पतिशब्दः । अथवा कनतिः कान्तिकर्मा । कमनीयत्वात् कनय ओषधय इहोच्यन्ते । जनयोऽप्योषधय एव जायमानत्वात् । तासां ऋबीसात्मना फलपाककरत्वात् जारोऽग्निः । पतिश्च स्वामित्वात् पालयितृत्वाद्वा ॥ ४

तं व॑श्च॒राथा॑ व॒यं व॑स॒त्यास्तं॒ न गावो॒ नक्ष॑न्त इ॒द्धम् ।
सिन्धु॒र्न क्षोदः॒ प्र नीची॒रैनो॒न्नव॑न्त॒ गावः॒ स्व॑१॒॑र्दृशी॑के ॥ ५

व इति द्वितीयैकवचनस्य स्थाने बहुवचनम् । य उक्तगुणोऽसि तं त्वां चराथा । चरतिर्गत्यर्थः । चरतीति चराथा पशुः । तत्प्रभवा या हृदयाद्यवदानाहुतिः । सापि कारणधर्मस्य कार्येषूपचारदर्शनात् चराथोच्यते । तया । वयं वसत्या । वसतीति वसतिः स्थावररूपा व्रीहियवाद्योषधीः । तत्प्रभवाः पुरोडाशाद्याहुतीरपि वसतीति । तया च । अस्तं न गावः । अस्तमिति गृहनाम । यथा गृहं गावो व्याप्नुवन्ति उपगच्छन्ति वा तद्वत् । नक्षन्ते । इन्वति नक्षतीति व्याप्तिकर्मसु पाठात् व्याप्त्यर्थोऽयम् । व्यत्ययेन चोत्तमस्य स्थाने प्रथमपुरुषः । नक्षामहे व्याप्नुमः । अथवा तृक्ष स्तृक्ष णक्ष गतौ । शुद्धोऽपि चात्र सोपसर्गार्थे प्रष्टव्यः । उपगच्छाम इत्यर्थः । इद्धं आहवनीयात्मना दीप्तं सन्तम् । परोऽर्धर्चः परोक्षकृतत्वात् भिन्नं वाक्यम् । सिन्धुर्न क्षोदः सिन्धोरिवोदकम् । प्र नीचीरैनोत् । इङो वा गत्यर्थस्य एवतेर्वा गतिकर्मण इदं रूपम् । दावरूपोऽग्निः आमूलादोषधीर्दग्धुं प्रकर्षेण नीचैर्गच्छति । किंच नवन्त गावः । स्तुतयोऽत्र गाव उच्यन्ते ।

गोभिर्यदी मन्ये असत् । ऋ. वे. ८ २. ६.

इति यथा । स्तोतारो वा ।

गोभिः क्राणा अभिद्यवः । ऋ. वे. १. १३४. २.

इति यथा । अग्निं स्तुवन्ति स्तुतयः स्तोतारो वा । शाकपूणिस्तु ।

य उग्रा अर्कमानृचुः । ऋ. वे. १. १९. ४.

आर्चन्नत्र मरुतः । ऋ. वे. १. ५२. १५.

इत्यादिषु मरुतां स्तोतृत्वदर्शनात् मरुतोऽत्र गाव उच्यन्त इति मन्यते । अग्निं स्तुवन्तो मरुतः । स्वः सर्वे सर्वस्मिन् वा दृशीके दर्शनीये वेद्यादौ स्थाने । अथवा दृशीकेशब्दो द्रष्टुमित्यस्य चार्थे । स्वर्दृशीके अग्निप्रकाशितं सर्वं द्रष्टुमित्यर्थः । द्युनाम वा स्वर्शब्दः । द्युलोकं द्रष्टुम् । स्वर्गं प्राप्तुमित्यर्थः ॥ ५

---

वने॑षु जा॒युर्मर्ते॑षु मि॒त्रो वृ॑णी॒ते श्रु॒ष्टिं राजे॑वाजु॒र्यम् ।
क्षेमो॒ न सा॒धुः क्रतु॒र्न भ॒द्रो भुव॑त्स्वा॒धीर्होता॑ हव्य॒वाट् ॥ १

वनेषु जायुः दावरूपेण जननशीलोऽग्निः । मर्तेषु मित्रः । मर्तेष्विति षष्ठ्यर्थे सप्तमी । मनुष्याणां मित्रम् । वृणीते संभजते । किम् । अजुर्यं अजराम् । न कदाचिज्जीर्यत इत्यर्थः । कथं वृणीते । उच्यते । श्रुष्टिं राजेव । श्रुष्टिशब्दोऽत्र दूतवचनः न क्षिप्रनाम । दूतमात्मीयं परकीयं वा राजेव । क्षेमो न साधुः । क्षेम इति द्वितीयार्थे प्रथमा । क्षेममिव च साधुः । यो हि साधुः न तस्य कुतश्चिदक्षेममस्ति । क्रतुर्न भद्रः । क्रतुरितीयमपि द्वितीयार्थे एव प्रथमा । विज्ञानमिव च भद्रः पुरुषः । अथवा क्षेमः क्रतुरिति स्वार्थ एव प्रथमाक्षेमकरस्तु । क्षेम उच्यते । नकारस्तु पुरस्तादुपचारोऽप्युपमार्थीयः साधुरित्येतेन संबध्यते । साधुरिव क्षेमकरोऽग्निः । विज्ञानमिव भद्र इत्यर्थः । किंच भुवत् स्वाधीः स्वाध्यानः कल्याणचित्तोऽग्निः । को भवति । उच्यते । होता च हव्यवाट् च सर्वयजमानानाम् ॥ १

हस्ते॒ दधा॑नो नृ॒म्णा विश्वा॒न्यमे॑ दे॒वान्धा॒द्गुहा॑ नि॒षीद॑न् ।
वि॒दन्ती॒मत्र॒ नरो॑ धियं॒धा हृ॒दा यत्त॒ष्टान्मन्त्राँ॒ अशं॑सन् ॥ २

हस्ते दधानः नृम्णा । नृम्णमिति धननाम । हविर्लक्षणानि धनानि विश्वानि । गृहीतसर्वहविष्कस्सन्नित्यर्थः । अमे भये । देवान् धात् निदधाति । अदृश्यमानत्वात् भयं देवानामुत्पादयतीत्यर्थः । किं कुर्वन् । उच्यते । रक्षोऽसुरपचनार्थं गुहा गूढं प्रच्छन्नं निषीदन् । सदिरत्र गत्यर्थः । नियमेन गच्छन् । विदन्ति ईं अत्र नरः । ईंशब्दः एनमित्यस्यार्थे । मनुष्यास्तु विदन्त्येनमत्राध्यवस्थयावर्तमानम् । कीदृशाः । धियंधाः यागकर्मणा प्रज्ञया वा धारयितारः । यष्टारः प्रज्ञा

वन्तो वेत्यर्थः । कतमे । उच्यते । हृदा यत् ये तष्टान् कृतान् । मनसा संकल्पितानि- त्यर्थः । मन्त्रानग्निस्तुतिरूपानशंसन् । शंसतिरत्र सामर्थ्यादुच्चारणार्थः । अथवा शंसतिः स्तुत्यर्थ एव । तष्टान् मन्त्रानिति तृतीयास्थाने द्वितीया । ये हृदयेन संकल्पि- तैर्मन्त्रैः स्तुवन्तीत्यर्थः । २

अजो न क्षां दाधार पृथिवीं तस्तम्भ द्यां मन्त्रेभिः सत्यैः ।
प्रिया पदानि पश्वो नि पाहि विश्वायुरग्ने गुहा गुहं गाः ॥ ३

अजातत्वादजः प्रजापतिः । स यथा तद्वदग्निः क्षां पृथिवीं दाधार धारयति । न च केवलाम् । किं तर्हि । पृथिवीमपि । अन्तरिक्षनामैतत् । अन्तरिक्षं च । तस्तंभ द्याम् । स्तम्नातिः प्रतिबन्धार्थः । दिवं च प्रतिबध्नाति । केन । उच्यते । मन्त्रेभिः सत्यैः । होतृत्वादग्निः सत्यैर्मन्त्रैः यागाख्ये धर्मे देवताः स्तुवन् धर्मायत्तस्थितीन् त्रीनपि लोकान् प्रजापति रिव धारयतीत्यर्थः । परोऽर्धर्चः प्रत्यक्षकृतत्वाद्भिन्नं वाक्यम् । इह परत्र च लोके प्रियाणि पदानि स्थानानि पश्वः पशुसदृशस्य मम नि- पाहि नियमेन रक्ष । अथवा पश्व इति दृशेरिदं रूपं द्वितीयाबहुवचनान्तम् । यानि तव प्रियाणि पदानि तानि पश्यतो जानतः अस्मान् रक्षेत्यर्थः । किंच विश्वायुः सर्वाग्निः । गृहीतास्मदीयहविष्कः सन्नित्यर्थः । गुहा गुहं गाः । रक्षोऽसुरपचनार्थं गूढात् गूढतरं गच्छन् । अत्यन्तगूढं गच्छन्नित्यर्थः ॥ ३

य ईं चिकेत गुहा भवन्तमा यः ससाद धारामृतस्य ।
वि ये चृतन्त्यृता सपन्त आदिद्वसूनि प्र ववाचास्मै ॥ ४

य एनमग्निश्चिकेत जानाति गुहा भवन्तं हविर्गृहीत्वा गूढं भवन्तम् । यश्च आस- साद आसीदति । करोतीत्यर्थः । धारां स्तुतिलक्षणां वाचं ऋतस्य गतस्य सतः परोक्षस्य सतः । परोक्षस्यापीत्यर्थः । ये विचृतन्ति । चृती हिंसाग्रन्थयोः । विविधं सूक्ताध्यायादिलक्षणान् स्तुतिग्रन्थानेव कुर्वन्ति । ऋता ऋतं सत्यं गतवानग्निः । सपन्तः । सपतिरर्चतिकर्मा । स्तुवन्तः । आदित् । उभावप्येतौ पदपूरणौ । वसूनि प्रववाच युष्मभ्यमेतानि धनानीत्येवं प्रकर्षेण ब्रवीति । ददातीत्यर्थः । अस्मै । बहु- वचनस्य स्थाने इदमेकवचनम् । एभ्यः सर्वेभ्यो निर्दिष्टेभ्यः ॥ ४

वि यो वीरुत्सु रोधन्महित्वोत प्रजा उत प्रसूष्वन्तः ।
चित्तिरपां दमे विश्वायुः सद्मेव धीराः संमाय चक्रुः ॥ ५

योऽग्निर्वीरुत्सु। वीरुधः ओषधयः। तासु। विरोधत्। रुहेरयं हकारस्य छान्दसो धकारः। विविधमारोहति। महित्वा स्वेन महिम्ना। उत प्रजाः। प्रजायन्त इति प्रजाः। सप्तम्यर्थे चैषा प्रथमा। प्रजायमानासु। उत प्रसूषु प्रसूतासु। क्व प्रदेशे आरोहति। उच्यते। अन्तर्मध्येऽपि न बहिरेव केवलम्। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। स त्रित्तिः ज्ञाना। अपां वृष्टिलक्षणानाम्। अथवा आप इत्यन्तरिक्षनाम। साहचर्यात्त्रयोऽपि लोकाः अप्शब्देनोच्यन्ते। त्रयाणामपि लोकानामित्यर्थः। दमे यज्ञगृहे। साकांक्षत्वाद्धोतृत्वेन निषीदति स्तूयते वेति वाक्यशेषः। विश्वायुः सर्वान्नः। यत् कीदृशं यज्ञगृहम्। उच्यते। सद्मेव। गृहनामैतत्। एकवाक्यताप्रसिध्यर्थं च यत्तच्छब्दावध्याहर्तव्यौ। यल्लौकिकमिव गृहं धीराः प्रज्ञावन्तः सम्माय सम्यक् मित्वा चक्रुः कृतवन्तः तत्र॥ ५



श्रीणन्नुप॑ स्थादि॒वं॑ भु॑र॒ण्युः स्था॒तुश्च॒रथ॑म॒क्तून्व्यू॑र्णोत्।
परि॒ यदे॑षा॒मेको॒ विश्वे॑षां॒ भुव॑द्दे॒वो दे॒वानां॑ महि॒त्वा॥ १

श्रीणन्। श्रीञ् पाकेऽन्यत्र। इह तु सामर्थ्याद्दाहार्थः। दावरूपोऽग्निः तृणौषधिवनस्पतीन्दहन्तु। उपस्थाद्दिवः दिवमुपतिष्ठति। दिवं स्पृशतीत्यर्थः। भुरण्युः। भुरण्यतेर्गतिकर्मण इदं क्षिप्रनाम। क्षिप्रगामी। किंच स्थातुः स्थातृ चरथं गन्तृ च। स्थावरं जंगमं चेत्यर्थः। अक्तून्। रात्रिनामैतत्। रात्रींश्च। व्यूर्णोत्प्रकाशयति। कृत्स्नं स्थावरं जंगमं च प्रकाशयत्यग्निः। रात्रींश्च तमोरूपास्सतीः स्वेन ज्योतिषा प्रकाशरूपाः करोतीत्यर्थः। अथवा अक्तूनिति सप्तम्यर्थे द्वितीया। स्थावरं जंगमं रात्रिषु प्रकाशयतीत्यर्थः। कीदृशः। उच्यते। परि यत्। परीत्युपसर्गश्रुतेर्योग्यक्रियापदाध्याहारः। यदिति व्यत्ययेन नपुंसकता। हविर्नयनादिना परिगृहीताय एको विश्वेषां भुवत् भवति। देवो देवानां महित्वा स्वेन माहात्म्येन। अथवा परीत्ययं भुवदित्येतेनैव संबध्यते। परिपूर्वश्च भवतिः परिग्रहे। एषामित्यादिषु तु द्वितीयार्थे षष्ठी। परिगृह्णाति य एतान्॥ १

आदित्ते॒ विश्वे॒ क्रतुं॑ जुषन्त॒ शुष्का॒द्यद्दे॑व जी॒वो जनि॑ष्ठाः।
भज॑न्त॒ विश्वे॑ देव॒त्वं नाम॑ ऋ॒तं सप॑न्तो अ॒मृत॒मेवैः॑॥ २

आत् इत् इति पदपूरणौ अपिचेत्यनयोर्वार्थे। अपिच ते तव विश्वे सर्वे मनुष्याः देवा वा क्रतुं हविर्नयनादिकर्म प्रज्ञां वा जुषन्त सेवन्ते। योऽहं कीदृशः। उच्यते।

शुष्कादपि काष्ठाद्यत् यः हे देव जीवः जनिष्ठा जायसे । सर्वत्र हि कारणधर्मानुविधायि कार्यम् । त्वं तु निर्जीवादपि काष्ठात् स्वमाहात्म्येन जीव एव जायस इत्यर्थः । किंच भजन्त विश्वे बहवो मनुष्याः । किम् । उच्यते । यदेतद्देवत्वं नाम प्रख्यातम् । बहवो मनुष्याः देवत्वं प्राप्ता इत्यथः । किं कुर्वन्तः । उच्यते । ऋतं सपन्तः सत्यं सर्वगतं वा स्तुवन्तः । अमृतं एवैः तैस्तैर्देवत्वप्राप्त्यादिकामैर्युक्ताः ॥ २

ऋतस्य प्रेषा ऋतस्य धीतिर्विश्वायुर्विश्वे अपांसि चक्रुः ।
यस्तुभ्यं दाशाद्यो वा ते शिक्षात्तस्मै चिकित्वान् रयिं दयस्व ॥ ३

ऋतस्य सत्यस्य सर्वगतस्य वा भवतः प्रेषाः । पाशुकाः सोमिकाश्च प्रैषाः । यावन्तः केचन प्रैषाः ते होतृत्वात् सर्वे तवेत्यर्थः । ऋतस्य धीतिः । कर्म वा प्रज्ञा वा स्तुतिर्वा धीतिरुच्यते । साप्यृतस्य तवैव । कीदृशस्य । उच्यते । विश्वायुः । षष्ठ्यर्थे प्रथमैषा । विश्वायुषः सर्वान्नस्य । विश्वे अपांसि चक्रुः । एकवाक्यताप्रसिध्यर्थे यत्तच्छब्दावध्याहर्तव्यौ । यान्यपि सर्वे मनुष्याः यागादिकर्माणि कुर्वन्ति तान्यपि तवैव । ईदृशाय यस्तुभ्यं दाशात् हविर्ददाति । यो वा ते शिक्षात् । दानकर्मायं सन्नन्तस्य चार्थे द्रष्टव्यः । तस्मै चिकित्वाञ्जानन् भक्त्यादि । रयिं दयस्व धनं देहि ॥ ३

होता निषत्तो मनोरपत्ये स चिन्न्वासां पती रयीणाम् ।
इच्छन्त रेतो मिथस्तनूषु सं जानत स्वैर्दक्षैरमूराः ॥ ४

सचिन्न्वासामिति तच्छब्दाद्यच्छब्दोऽध्याहार्यः । योऽग्निः होता निषत्तः निषण्णः निषीदति वा । मनोरपत्ये । जात्यपेक्षमेकवचनम् । मनोरपत्यभूतायां जातौ । मनुष्येष्वित्यर्थः । सः । चिन्नु इति पदपूरणः । आसां हविर्लक्षणानां पतिः स्वमी रयीणाम् । कस्य स्वभूतानाम् । उच्यते । इच्छन्त रेतः । एकवाक्यताप्रसिध्यर्थं यत्तच्छब्दावध्याहर्तव्यौ । ये इच्छन्ति रेतः मिथः सहभूताया अपि । न केवलाया एव । तनूषु आत्मीयेषु शरीरेषु । स्वशरीरं वा रेतः । इच्छया चात्र तत्कारणकौरसप्रजेच्छा प्रतिपाद्यते । येऽग्निपरिचर्याय समुदिता अपि सन्तः स्वशरीररेतःकारणिकामौरसीं प्रजामिच्छन्ति तेषां स्वभूतानां हविषां नान्येषामित्यर्थः । ये च संजानत सम्यग्जानन्त्यग्निम् । स्वैः दक्षैः । दक्षशब्दः

चित्तिं दक्षस्य सुभगत्वम् । ऋ. वे. २. २१. ६.
श्रेयांसं दक्षम् । ऋ. वे. १०. ३१. २.

इत्यादिषु मनस्यात्मनि च प्रसिद्धः । इह तु सोऽयमित्यभिसम्बन्धात् तत्प्रभवे ज्ञाने वर्तते । आत्मीयैर्मनःप्रभवैरात्मप्रभवैर्वा ज्ञानैरित्यर्थः । अमूरा अमूढाः विविक्तप्रज्ञावन्तः ॥ ४

पितुर्न पुत्राः क्रतुं जषन्त श्रोषन् ये अस्य शासं तुरासः ।
वि राय और्णोद्दुरः पुरुक्षुः पिपेश नाकं स्तृभिर्दमूनाः ॥ ५

यथा पितुः पुत्रा एवमग्नेः क्रतुं प्रज्ञानं जुषन्त सेवन्त । अग्नेः स्वभूतां प्रज्ञां प्राप्नुवन्तीत्यर्थः । श्रोषन् शृण्वन्ति । येऽस्याग्नेः शासं शासनम् । येऽस्यानुशासने वर्तन्त इत्यर्थः । तुरासस्त्वरिताः । सादरा इत्यर्थः । अथवा तुरास इति तुर्वतेर्हिंसार्थस्य रूपम् । अग्निप्रसादादेव शत्रूणां हिंसितार इत्यर्थः । किम् । वि राय और्णोत् दुरः धनस्य च यानि द्वाराणि । यैर्धनं प्राप्यते तानि । तेषां व्यौर्णोत् विविधं प्रकाशयति उद्घाटयति । धनं ददातीत्यर्थः । पुरुक्षुः । क्षुशब्दोऽत्र कीर्तिवचनः ।

कृधि क्षुमन्तं वाजम् । ऋ वे. २. ४. ८.

इति यथा । बहुकीर्तिरग्निः । किंच पिपेश । पिश अवयवे पठितः । इह तु सामर्थ्यात् रूपवत्करणे द्रष्टव्यः । रूपवतीं चकार । नाकं दिवम् । स्तृभिर्नक्षत्रैः । दमूना दान्तः । उपशमात्मक इत्यर्थः । धर्ममूलत्वात् सर्वस्य धर्मस्य चाग्निमूलत्वादिदमुच्यते पिपेश नाकमिति ॥ ५

---

शुक्रः शुशुक्वाँ उषो न जारः पप्रा समीची दिवो न ज्योतिः ।
परि प्रजातः क्रत्वा बभूथ भुवो देवानां पिता पुत्रः सन् ॥ १

शुक्रः शुक्रवर्णोऽग्निः शुशुक्वान् दीप्तश्च । उषो न जारः । उष इति षष्ठ्यर्थे प्रथमा । उषस इव जरयिता आदित्यः । पप्रा पूरयति च । समीची संगते । उभे अपीत्यर्थः । के । सामर्थ्यात् द्यावापृथिव्यौ । केन । सामर्थ्यात् ज्योतिषा । कथमिव । दिवो न ज्योतिः दिव इव संबन्धि ज्योतिरादित्याख्यम् । आदित्य इवेत्यर्थः । परोऽर्धर्चः प्रत्यक्षकृतत्वात् भिन्नं वाक्यम् । प्रजातः जातमात्र एव सन् त्वं क्रत्वा कर्मणा हविर्नयनादिना प्रज्ञया वा । परिबभूथ । परिपूर्वो भवतिः परिग्रहे । परिगृह्णासि सर्वम् । भुवः भवसि च । देवानाम् । दीव्यतेः स्तुत्यर्थत्वात् स्तोतारोऽत्र देवा उच्यन्ते । स्तोतॄणां यजमानानां पिता पितृस्थानीयः पालयिता वा । पुत्रः सन् । अग्निर्हि यजमानैर्जन्यते । अत एवमुच्यते पुत्रस्सन्निति ॥ १

वेधा अदृप्तो अग्निर्विजानन्नूधर्न गोनां स्वाद्मा पितूनाम् ।
जने न शेव आहूर्यः सन्मध्ये निषत्तो रण्वो दुरोणे ॥ २

वेधाः मेधावी । अदृप्तः । दृप हर्षमोहनयोः । अमूढोऽग्निः विजानन् । किम् । सामर्थ्यात् भक्ततां यजमानानाम् । ऊधर्न गोनां यथा गवामयं अवयवभूतमूधः पय आदिना स्वादुतामन्नानां करोति तद्वत् पाकेन स्वाद्म स्वादुतां करोतीति वाक्यशेषः । कस्य । पितूनामन्नानां हविर्लक्षणानां सर्वेषां वा । किंच जने न शेवः । जनयितृत्वाज्जनः पिताभिप्रेतः । प्रथमार्थे चैषा सप्तमी । पितेव सुखकरोऽग्निः सर्वयजमानानामाहूर्यः सन् । हृ कौटिल्ये । चञ्चलत्वाज्ज्वालानां कुटिलस्सन् । किंच मध्ये निषत्तः वेद्या मध्ये निषण्णः । रण्वः रमणीयोऽग्निः । दुरोणे यज्ञगृहे । अथवा जनशब्दो लोकवचनः स्वार्थः एव सप्तमी । दुरोण इत्येतस्य सप्तम्यन्तस्येदमुपमानम् । यथा लोके सुखा तद्वदाहूर्यस्सन् वेद्या मध्ये निषण्णः रमणीयोऽग्निर्गृहेऽपि सुख इत्यर्थः ॥ २

पुत्रो न जातो रण्वो दुरोणे वाजी न प्रीतो विशो न तारीत् ।
विशो यदह्वे नृभिः सनीळा अग्निर्देवत्वा विश्वान्यश्याः ॥ ३

पुत्रो न यथा पुत्रो जातः तद्वद्रण्वः रमणीयः प्रीतिकरोऽग्निः । दुरोणे यज्ञगृहे । किंच वाजी न यथा संग्रामः-संग्रामजयद्वारेण वर्धयति तद्वत् प्रीतस्सन्नग्निः विशः स्तोतॄन् यष्टॄंश्च मनुष्यान् वितारीत् । विपूर्वस्तरतिः सर्वत्र वृध्यर्थः । विविधं वर्धयति । किंच विशः देवविशः । देवानित्यर्थः । यत् यः यदा वा अह्वे आह्वयति । नृभिः मनुष्यैः ऋत्विगाख्यैः सनीळाः । समानं नीळं स्थानं यासां देवविशां ताः सनीळाः । एकस्वर्गाख्यस्थानाः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः । सः तदा वा अग्निः देवत्वा विश्वानि । स्वार्थिकोऽत्र भावप्रत्ययो द्रष्टव्यः चातुर्वर्ण्यं चातुराश्रम्यं इति यथा । देवान् सर्वानस्मदर्थमश्याः । व्यत्ययेनायं मध्यमः । अश्यात् व्याप्नुयादित्याशास्महे ॥ ३

नकिष्ट एता व्रता मिनन्ति नृभ्यो यदेभ्यः श्रुष्टिं चकर्थ ।
तत्तु ते दंसो यदहन्त्समानैर्नृभिर्यद्युक्तो विवे रपांसि ॥ ४

नकिरिति निपातः प्रतिषेधेन समानार्थः । न केचित्ते तव एता व्रता एतानि दहनपचनादीनि कर्माणि । मिनन्ति । मीङ् हिंसायां इत्यस्यैतद्रूपम् । हिंसन्ति ।

हिंसितुं शक्नुवन्तीत्यर्थः। न च केवलानि दहनादीनि। किंतु नृभ्यो यदेभ्यः यच्च एभ्यः स्तोतृभ्यः यष्टृभ्यश्च मनुष्येभ्यः। शुष्टिम्। अपठितमपि सुखनामैतद्द्रष्टव्यम्। सुखं चकर्थ करोषि। तदपि न कश्चिद्धिंसितुं शक्नोति। एवमतिशयवदनेककर्मयुक्तस्यापि तच्चु ते दंसः तदेव तव कर्मात्यन्तप्रकृष्टमित्यर्थः। यत् कतमत्। उच्यते। यदहन् हिंसितवान्। किम्। सामर्थ्यात्तमो वा रक्षांसि वा। समानैर्नृभिः यद्युक्तः यच्च समानैरात्मनो योग्यैः ऋत्विगाख्यैः मनुष्यैर्युक्तः यागकरणद्वारेण। विवेः। वेतेरन्तर्णीतण्यर्थस्य रूपम्। गमयसि। नाशयसीत्यर्थः। रपांसि। रप्रो रिप्रमिति पापनामनी। पापानि यजमानानाम्॥ ४

उषो न जारो विभावोस्रः संज्ञातरूपश्चिकेतदस्मै।
त्मना वहन्तो दुरो व्यृण्वन्नवन्त विश्वे स्व१र्दृशीके॥ ५

उषो न उषस इव जरयितादित्यः। विभावा दीप्तिमानग्निः उस्रः। उस्रेति गोनाम तत्साहश्यादिहाग्नौ प्रयुक्तम्। वृषभसदृशश्चेत्यर्थः। संजातरूपः प्रख्यातरूपश्च। चिकेतत् अस्मै। कित ज्ञाने। व्यत्ययेन चेदं बहुवचनस्य स्थाने एकवचनम्। अस्मै इत्यपि द्वितीयार्थे चतुर्थी। तादर्थ्यचतुर्थीश्रुतेर्वा स्तुतिं हवींषि वा कर्तुमिति वाक्यशेषः। एकवाक्यताप्रसिध्यर्थं यत्तच्छब्दावध्याहर्तव्यौ। ये जानन्त्येतमग्निं अस्य वाऽग्नेरर्थाय स्तुतिं हवींषि वा कर्तुं ते। त्मना आत्मना वहन्तः अग्निं प्रति स्तुतिं हवींषि वा प्रापयन्तः। दुरो द्वाराणि। कस्य। धनस्य। कुत एतत्।

वि राय और्णोत् दुरः। ऋ वे. १. ६८. ५.

इति मन्त्रान्तरे दर्शनात्। व्यृण्वन् विविधं गच्छन् प्राप्नुवन्ति। धनं लभन्त इत्यर्थः। किंच नवन्त स्तुवन्त्यग्निम्। विश्वे सर्वे मनुष्याः। स्वः सर्वस्मिन् दृशीके दर्शनीये वेद्यादौ स्थाने। अथवा दृशीकेशब्दोऽत्र द्रष्टुमित्यस्यार्थे। सर्वमग्निप्रकाशितं द्रष्टुम्। द्युनाम वा स्वःशब्दः। दिवं द्रष्टुम्। स्वर्गं प्राप्तुमित्यर्थः॥ ५



वनेम पूर्वीरर्यो मनीषा अग्निः सुशोको विश्वान्यश्याः।
आ दैव्यानि व्रता चिकित्वाना मानुषस्य जनस्य जन्म॥ १

वनेम वयम्। ताः संभजमहीत्येनदाशास्महे। किम्। पूर्वीः चिरन्तनीः। काः। सामर्थ्यात्समृद्धीराशिषो वा। अयमर्य ईश्वरः। मनीषा। स्तुतिरत्र मनी-

षोच्यते । सहयोगलक्षणा चैषा तृतीया । मनीषया स्तुत्या सहाग्निः शुशोकः सुदीप्तिः । विश्वानि सर्वाणि अस्मदीयानि हवींषि । अश्याः व्याप्नुयादित्याशास्महे । कीदृशो योऽग्निः । उच्यते । दैव्यानि व्रता देवानां स्वभूतानि हविर्नयनादिकर्माणि । आचिकित्वात् मर्यादया यो ज्ञातवान् । आ मानुषस्य जनस्य मनुष्यस्य च कृत्स्नस्य जनस्य जन्म आचिकित्वान् । हविर्नयनादि कर्मणा मनुष्याणां च जन्मनो ज्ञातेत्यर्थः ॥

गर्भो॒ यो अ॒पां गर्भो॒ वना॑नां॒ गर्भ॑श्च स्था॒तां गर्भ॑श्च॒रथा॑म् ।
अद्रौ॑ चिदस्मा अ॒न्तर्दु॑रो॒णे वि॒शां न विश्वो॑ अ॒मृतः॑ स्वा॒धीः ॥ २

अग्निरपां गर्भः । वैद्युतात्मना ह्यग्निः अद्भ्य उत्पद्यते । अतोऽपां गर्भ उच्यते । यश्च गर्भो वनानां वृक्षाणाम् । ततोऽप्यग्नेरुत्पत्तिदर्शनात् । गर्भश्च स्थातां स्थावराणां च । यो गर्भस्तृणौषध्यादीनाम् । ततोऽप्यग्नेरुत्पत्तिदर्शनात् । गर्भश्चरथाम् । चरतिर्गत्यर्थः । जंगमानां मनुष्यादीनां यो गर्भः । तदुदरेषु जाठरात्मना विद्यमानत्वात् । अग्न्यादिभ्यो वोत्पत्तिदर्शनात् । यस्य चाद्रौ चित् । षष्ठ्यर्थेचात्र सप्तमी । अन्तरित्येतेन चास्य सम्बन्धः । अद्रेरप्यन्तः पर्वतस्यापि मध्ये । अस्मै । इयमपि षष्ठ्यर्थे चतुर्थी । अस्याग्नेः । दुरोणे । प्रथमार्थे एषा सप्तमी । दुरोणं गृहम् । यस्याग्नेः गृहाणामपि मध्ये स्थानमित्यर्थः । यश्च विशां यष्टॄणां स्तोतॄणां मनुष्याणाम् । विश्वः सर्वः । सर्वकार्यकरत्वाच्च सर्व इति व्यपदेशः । नशब्दस्तु उपरिष्टादुपचार उपमार्थीयत्वात् अस्त्युपमार्थीयस्य संप्रत्यर्थे प्रयोगः (नि. ७. ३१) इति पदपूरणः । कीदृशः । अमृतः मरणवर्जितः । स्वाधीः कल्याणचित्तः । य ईदृशः तस्य किमित्युत्तरयर्चैकवाक्यता ॥ २

स हि क्ष॒पावाँ॑ अ॒ग्नी र॑यी॒णां दा॒शद्यो॑ अ॑स्मा॒ अरं॑ सू॒क्तैः ।
ए॒ता चि॑कित्वो॒ भूमा॒ नि पा॑हि दे॒वानां॒ जन्म॒ मर्ता॑श्च वि॒द्वान् ॥ ३

हि शब्दः पूरणः । सः क्षपावान् । क्षपेति रात्रिनाम । रात्रिमान् । यद्यपि चोभाभ्यां अहोरात्राभ्यां अग्निस्सम्बद्धः तथापि रात्रावतिशयेन दीप्तियोगादयं तद्व्यपदेशः । अथवा क्षपयन्ति निर्वीर्यतामिति क्षपस्स्तुतय इहोच्यन्ते । स्तुतयो हि वीर्यवृद्धिकरत्वाद्देवतानां निर्वीर्यतां क्षपयन्ति । तद्वानग्निः । रयीणाम् । द्वितीयार्थे षष्ठ्येषा । धनानि दाशत् ददाति । कस्मै । उच्यते । यः अस्मै अग्नये अरं समर्थैः ऋक्समुदायलक्षणैः सूक्तैः । तृतीयानिर्देशात् स्तोतुमिति वाक्यशेषः । य एवमग्निं

सूक्तैः शक्नोति स्तोतुमित्यर्थः । परोऽर्धर्चः प्रत्यक्षकृतत्वात् भिन्नं वाक्यम् । एताः एतानि हे चिकित्वः ज्ञातः । भूम भूतान्यस्मदीयानि । निपाहि नियमेन रक्ष । देवानां जन्म मर्ताश्च विद्वान् । यावत् किञ्चित् सर्वं जानन्नित्यर्थः ॥ ३

वर्धान्यं पूर्वीः क्षपो विरूपाः स्थातुश्च रथमृतप्रवीतम् ।

अराधि होता स्वर्निषत्तः कृण्वन् विश्वान्यपांसि सत्या ॥ ४

वर्धान् वर्धयन् यमग्निं पूर्वीः क्षपाः रात्रयस्तुतयो वा । विरूपाः नानारूपाः । स्थातुश्च स्थावरस्य च । चशब्दात् जंगमस्येति वाक्यशेषः । ओषधीहविषः पशुहविषश्चेत्यर्थः । रथं रथस्थानीयम् । वोढारमित्यर्थः । ऋतप्रवीतम् । ऋतो यज्ञः । तत्र प्रज्ञातं प्रगतं वा यज्ञार्थमुत्पन्नं यज्ञे वा व्यवस्थितं सन्तमित्यर्थः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः । स अराधि आराधयति देवान् । होता स्वः सर्वत्र यज्ञे । निषत्तः निषण्णः । कृण्वन् विश्वानि अपांसि हविर्नयनादीनि स्वकर्माणि यागकर्माणि वा । सत्या अविसंवादीनि ॥ ४

गोषु प्रशस्तिं वनेषु धिषे भरन्त विश्वे बलिं स्वर्णः ।

वि त्वा नरः पुरुत्रा सपर्यन् पितुर्न जिव्रेर्वि वेदो भरन्त ॥ ५

गोषु प्रशस्तिं प्रशंसाम् । वनेषु वननीयेषु चाश्वादिषु । उदकनाम वा वनशब्दः । उदकेषु । धिषे धारयसि त्वम् । गा वननीयांश्चाश्वादीनुदकानि वा प्रशस्तानि त्वं करोषीत्यर्थः । किंच भरन्त हरन्ति त्वां प्रति प्रापयन्ति । तुभ्यं ददतीत्यर्थः । विश्वे बलिं हविर्लक्षणम् । स्वः सर्वम् । यावत् दातुं योग्यं तत्समस्तमित्यर्थः । नः अस्माकं स्वभूताः ऋत्विजः पुत्रादयो वा । किंच त्वा नरः पुरुत्रा बहुषु स्थानेषु विसपर्यन् विविधं परिचरन्ति । पितुर्न जिव्रेः । यथा च पितुः जीर्णस्य स्वभूतं धनं निवृत्तरजासि मातरि पित्रानुज्ञाताः पुत्रा विभजन्ते एवं देवास्त्वदीयं धनं विभरन्त विविधं हरन्ति आत्मानं प्रति प्रापयन्ति । विभजन्तीत्यर्थः । अथवा वेदोऽत्र हविर्लक्षणं धनमभिप्रेतम् । यथा पितुर्जीर्णस्य पुत्राः आदरेण विविधमन्नमुपहरन्ति एवं भवतो हविरित्यर्थः ॥ ५

साधुर्न गृध्नुरस्तेव शूरो यातेव भीमस्त्वेषः समत्सु ॥ ६

साधुः न गृध्नुः साधुरिव गृध्नुः अभिकांक्षिता। यथा साधुः पुरुषः न्यायेनैवार्थानभिकांक्षति एवमग्निः स्तुतीर्हवींपि चेत्यर्थः । अस्तेव शूरः यथायुधक्षेपणशीलः पुरुषस्तद्वदग्निः शूरः । यातेव भीमः । यातिरत्र वधार्थः ।

अहेर्यातारम् । ऋ. वे. १. ३२. १४.

इति यथा । हंतेव भयानकः । त्वेषः समत्सु दीप्तश्च संग्रामस्थानीयेषु यज्ञेषु संग्रामेष्वेव वा ॥ ६



उप प्र जिन्वन्नुशतीरुशन्तं पतिं न नित्यं जनयः सनीळाः ।
स्वसारः श्यावीमरुषीमजुष्रञ्चित्रमुच्छन्तीमुषसं न गावः ॥ १

उपेत्युपसर्गश्रुतेर्योग्यक्रियापदाध्याहारः । उपगम्य प्रजिन्वन् । जिन्वतिः प्रीतिकर्मा । प्रीणयन्ति । प्रीणितवत्यो वाग्निम् । काः । सामर्थ्यादाहुतयः । कथम् । उशतीरुशन्तं पतिं न नित्यं कौमारं जनयो जायाः सनीळाः समानगृहाः । यथैकगृहवासिन्यो भार्याः परस्परस्पर्धया तैस्तैरुपचारविशेषैः कौमारं भर्तारं कामयमानं प्रीणयेयुः तद्वदित्यर्थः । स्वसारः । लुप्तोपममेतद्द्रष्टव्यम् । स्वसार इव । यथा च भगिन्यः भ्रातरं प्रीणयेयुः तद्वदित्यर्थः । अथवा सनीळाः स्वसार इत्येताभ्यां आहुतयः प्रतिनिर्दिश्यन्ते । समानमग्न्याख्यं स्थानं यासां ताः सनीळा आहुतयः । अग्नेरेवैकस्य योग्याः नान्यस्य कस्यचिदित्यर्थः । ता एवैकयजमानप्रभवत्वात् स्वसारः स्वयं सारित्वाद्वा । किंच अजुषन् चित्रं सेवन्ते सेवितवत्यो वा विचित्रं पूजनीयं वाग्निम् । कथम् । श्यावीमरुषीमुच्छन्तीमुषसम् । अरुषतिर्गत्यर्थः । यथा श्याववर्णां गां गमनस्वभाविकां च तमांसि विवासयन्तीं उषसं सेवेरन् तद्वत् । का अजुषन् । उच्यते । गावः । स्तुतयोऽत्रगाव उच्यन्ते ।

गोभिर्यदीमन्ये अस्मत् । ऋ. वे. ८. २. ६.

इति यथा । यथा आहुतयोऽग्निं प्रीणयन्ति प्रीणितवत्यो वा स्तुतयोऽपि स्तुवन्ति स्तुतवत्यो वेत्यर्थः ॥ १

वीळु चिद्दृळ्हा पितरो न उक्थैरद्रिं रुजन्नङ्गिरसो रवेण ।
चक्रुर्दिवो बृहतो गातुमस्मे अहः स्वर्विविदुः केतुमुस्राः ॥ २

वीळू । वीळयतिः संस्तंभनकर्मा । संस्तब्धमपि । अत्यन्तप्रणतमप्यसुरवर्गमित्यर्थः । दृळ्हानि चासुरपुराणि । पितरः नः अस्माकम् । उक्थैः । तृतीयानिर्देशात्

योग्यक्रियाध्याहारः। उक्थाख्यैः शस्त्रविशेषैः स्तुवन्तः। कम्। प्रकरणसामर्थ्यादग्निम्। अद्रिं तु पर्वतं चा[illegible] स्वभूतम्। रुजन् भग्नवन्तोऽङ्गिरसः। रवेण शब्देनैव महता। कथं पुनरेतत्। उच्यते। अग्निं स्तुवन्तो रुजन्निति। [illegible]नेन्द्रेण सहांगिरसो[illegible] नाग्निना। उच्यते। इन्द्रसाहित्यमंगिरसां सखित्वात्। [illegible] अत एतदुच्यते [illegible] स्तुवन्तो रुजन्निति। एवं चास्या ऋचः आग्नेयत्वमुपपद्यते। किंच चक्रुः। दिवो बृहतो गातुमस्मे। अस्मानपि [illegible]द्वारेण स्वर्गगमनयोग्यानङ्गिरसोऽग्निप्रसादेनैव चक्रुरित्यर्थः। किंच अहः। अहःशब्दोऽत्र कालमात्रोपलक्षणार्थः। कालं स्वः आदित्यं च विविदुः अग्निप्रसादेनैवाङ्गिरसो ज्ञातवन्तः। कीदृशः स्वः। उच्यते। केतुं प्रज्ञानवन्तम्। कीदृशाः अंगिरसः। उच्यते। उस्राः उत्स्राविणः। दातार इत्यर्थः। कस्य। सामर्थ्यात् भोगानां पुष्टेर्वा। अथवा उस्रा इति गोसदृशाः। अत्यन्तजवाः सन्त इत्यर्थः। अथवैवमन्यथा उत्तरस्यार्धर्चस्यार्थयोजना। चक्रुरिति सामर्थ्याद्देवानां प्रतिनिर्देशः। कृतवन्तो देवाः। दिवो बृहतो गातुं हवींषि गृहीत्वा महान्तं द्युलोकं प्रतिगन्तारम्। कम्। सामर्थ्यादग्निम्। अस्मे अस्माकं मनुष्याणामर्थाय। किंच अहः स्वर्विविदुः केतुमुस्राः। विविदुरिति विन्दतेर्लाभार्थस्य इदं रूपम्। उस्रा इति रश्मिनाम। अहश्चादित्यश्च रश्मयश्च अग्निप्रसादेन केतुं प्रज्ञानं प्रकाशरूपतां लब्धवन्त इत्यर्थः॥ २

अथ कृत्स्नस्य जगतो धर्ममूलत्वात् तस्य चाग्निमुखत्वात्।

दध॑न्नृ॒तं ध॒नय॑न्नस्य धी॒तिमादिद॒र्यो दि॑धि॒ष्वो॒३॒॑ विभृ॑त्राः।
अतृ॑ष्यन्तीर॒पसो॒ यन्त्यच्छा॑ दे॒वाञ्जन्म॒ प्रय॑सा व॒र्धय॑न्तीः॥ ३

दधन् धारयन्ति अस्मदीयाः स्तुतयः। ऋतं सर्वगतमग्निम्। गुणधारणाच्चेतदग्नेर्धारणमुच्यते। अग्नेर्गुणान् कीर्तयन्त्यः तेषामपि स्मरणं लोके कुर्वन्तीत्यर्थः। धनयन्। धन धान्ये पठितः। इह तु सामर्थ्यात् प्रीणनार्थः। धिनोतेर्वा प्रीणनार्थस्येदं रूपम्। प्रीणयन्ति च तस्याग्नेः धीतिम्। अपठितमपि प्रज्ञानामैतत्। प्रज्ञाम्। मनश्चास्याग्नेः प्रीणयन्तीत्यर्थः। आदिदिति पदपूरणौ। कीदृशस्य स्तुतयः। अरिरीश्वर उच्यते। ईश्वराः अप्रतिहताग्निगुणप्रकाशनसामर्थ्या इत्यर्थः। दिधिष्वः सर्वेषामग्निगुणानां धारयित्र्यः। सर्वैरग्निगुणैर्युक्ता इत्यर्थः। विभृत्राः विभृता। अत्यन्तविभिन्नरूपा इत्यर्थः। प्रीणयित्वा चाग्नेर्मनः अतृष्यन्तीः। तृषात्र कारणभूतः श्रमो लक्ष्यते। अश्राम्यन्त्य इत्यर्थः। अपसः। कर्मनामैतत् साहचर्यात् स्तुतिषु प्रयुक्तम्। आहुत्या-

दिकर्मसहचरिताः। सहाहुत्यादिभिरित्यर्थः। यन्ति गच्छन्ति आप्तमन्यानपि देवान्। जन्म। जननात् जन्म भूतजातमुच्यते। कृत्स्नं भूतजातम्। प्रयसा वृष्टिद्वारेणान्नेन। वर्धयन्तीः॥ ३

मथी॒द्यदीं॑ वि॒भृ॒तो मा॒त॒रिश्वा॑ गृ॒हेगृ॑हे श्ये॒तो जेन्यो॒ भूत्।
आदीं॒ राज्ञे॒ न सही॑यसे॒ सचा॒ सन्ना॑ दू॒त्यं१॒॑ भृग॑वाणो विवाय॥ ४

अत्रेतिहासमाचक्षते। सर्वमिदमन्धं तम आसीत्। अथ मातरिश्वाकाशे सूक्ष्ममग्निमपश्यत्। तममथ्नात्। मथित्वा चानयदिति। तदेतदुच्यते। मथीत् मथितवान्। यत् यदा ईं एनमग्निं मातरिश्वा। मथित्वा चानयत् कुत एतत्।

आ दूतो अग्निमभरद्विवस्वतः। ऋ. वे. ६. ८. ४.

इति मन्त्रान्तरे दर्शनात्। यदेति वचनात्ततः प्रभृतीत्यध्याहार्यम्। ततः प्रभृति विभृतः। विहृतः। गृहे गृहे श्येनः श्वेतवर्णोऽग्निः। जेन्यो जेता तमसां शत्रूणां वा भूत् अभवत्। तत एव च प्रभृति आदीं राज्ञे न सहीयसे। आत् ईं इति पदपूरणौ। यथा कश्चित् राज्ञो बलवतोऽर्थाय सर्वाभिप्रेतार्थसिद्धिं कुर्वन् दौत्यं गच्छेत् एवं सचा सह। केन। स्वैर्भ्रातृभिः। कुत एतत्।

अग्नेः पूर्वे भ्रातरो अर्थमेतम्। ऋ. वे. १०. ५१. ६.

इत्यादिषु भ्रातृणामप्यग्नेः दूत्यस्य दर्शनात्। प्रशस्तोऽग्निः दूत्यं दूतकर्म भृगवाणः। भृस्जो पाक इत्यस्य रूपं प्रथमान्तं षष्ठ्यन्तं वा। हविषां पक्ता पचतो यजमानस्य हवींषि आविवाय आजगाम। तत एव प्रभृति यजमानानां दूतकर्मापि करोति इत्यर्थः॥ ४

म॒हे यत्पि॒त्र ईं॒ रसं॑ दि॒वे कर॒व त्स॑रत्पृश॒न्य॑श्चिकि॒त्वान्।
सृ॒जद॑स्ता धृष॒ता दि॒द्युम॑स्मै॒ स्वायां॑ दे॒वो दु॑हि॒तरि॒ त्विषिं॑ धात्॥ ५

महे यत् महते यदा सर्वलोकस्य पितृभूताय। रसम्। अन्ननामैतत्। हविर्लक्षणमन्नं दिवे कः करोति अग्निः। द्युलोकेन चात्राधारेणाधेयास्तन्निवासिनो देवा लक्ष्यन्ते। मञ्चाः क्रोशन्तीति यथा। महति सर्वलोकस्य पितृभूते लोके निवसतां देवानामर्थाय यदा हविरग्निः करोतीत्यर्थः। कृत्वा च अवत्सरत्। त्सरतिर्गतिकर्मा। हविर्गृहीत्वा गच्छति। पृशन्यः।

ता अस्य पृशनायुवः। ऋ. वे. १. ८४. ११.

इति प्रयोगदर्शनात् पृशनाशब्दोऽमृतरसरूपवचनः। तत्र साधुः पृशन्यः अमृतरसरूपाणामपि हविषाम्। अमृतरूपरसकारीत्यर्थः। चिकित्वान् ज्ञातवान् स्वमधिकारं यष्टॄणां वा भक्तताम्। यदेति वचनात् तदेत्यध्याहार्यम्। तदा सृजत् सृजति। क्षिपतीत्यर्थः। अस्ता क्षेपणशील इन्द्रः। धृषता प्रगल्भमनसा। निश्शंकः सन्नित्यर्थः। दिद्युं वज्रं अस्मै। अग्नेरयमन्वादेशः। अस्मादर्थाय। ये रक्षआदयोऽग्नेर्हविःपरिपन्थिनः तान् हन्तुमित्यर्थः। तदैव च स्वायां देव इन्द्रः। दुहितरि। वृष्ट्या सस्यरूपेण जन्यमानत्वाद्दुहिता क्षितिरत्राभिप्रेता। तस्यां त्विषिं सस्यसंपत्तिलक्षणां दीप्तिम्। अधात् दधाति। यस्मिन् संवत्सरेऽग्निर्देवानामर्थाय हवींषि करोति तस्मिन्नेवेन्द्रोऽपि सस्यसंपत्तिं करोति नान्यत्रेत्यर्थः। अथवा जन्यमानत्वाद्दुहिता स्तुतिरत्राभिप्रेता। स्वस्यां स्तुतौ देवोऽग्निः ओजस्वित्वलक्षणां दीप्तिं आधत्ते। यया स्तुत्या होतृत्वेनावस्थितः स्वयं स्तौति तामोजस्विनीं करोतीत्यर्थः॥ ५

स्व आ यस्तुभ्यं दम आ विभाति नमो वा दाशादुशतो अनु द्यून्।
वर्धो अग्ने वयो अस्य द्विबर्हा यासद्राया सरथं यं जुनासि॥ ६

आकारोऽत्र मर्यादायाम्। तुभ्यमित्यपि द्वितीयार्थे चतुर्थी। यस्त्वां स्वे दमे गृहे मर्यादया आविभाति। भा दीप्तौ। अन्तर्णीतण्यर्थश्चात्र द्रष्टव्यः। आदीपयति। नमो वा दाशात् अन्नं वा हविर्लक्षणं ददाति। उशतः उशते कामयमानाय तुभ्यम्। अनु द्यून्। अन्वत्र वीप्सायां कर्मप्रवचनीयः। द्यु इत्यहर्नाम। दिवसं दिवसमनु। प्रतिदिवसमित्यर्थः। वर्धो। वर्ध उ वर्धो। वृद्धिश्चात्रान्तर्णीतण्यर्थो द्रष्टव्यः। उकारस्तु पदपूरणः। वर्धय हे अग्ने। वयोऽन्नम्। अस्य द्विबर्हाः। बृहिर्वृध्यर्थः। हविर्नयनद्वारेण द्वयोरपि देवमनुष्यलोकयोर्वर्धयिता। प्रत्यक्षकृतत्वाच्चास्य मन्त्रस्यानामन्त्रितमेतत्। अतो यत्तच्छब्दावध्याहृत्यैकवाक्यता नेया। यस्त्वं द्विबर्हाः अग्ने त्वं वर्धय वयो अस्येति। किंच यासत्। लिङर्थे लेट्। मध्यमपुरुषस्य स्थाने च प्रथमपुरुषः। यायास्त्वम्। राया धनेन सह। केन। रथेन। कं प्रति। उच्यते। यं स्तोतारं यष्टारं प्रति जुनासि। जुनातिर्गतिकर्मा। गच्छसि। तस्मै दातुम्। यस्मिन्नेव रथे स्वमारोहसि धनान्यपि तत्रैवारोप्य गच्छेरित्यर्थः॥ ६

अग्निं विश्वा अभि पृक्षः सचन्ते समुद्रं न स्रवतः सप्त यह्वीः।
न जामिभिर्वि चिकिते वयो नो विदा देवेषु प्रमतिं चिकित्वान्॥ ७

अग्निं त्वां विश्वाः सर्वाः पृक्षः सर्वाण्यन्यदेवतान्यपि हविर्लक्षणानि अन्नानि अभिसचन्ते । सचतिर्गतिकर्मा हूयमानान्यभिगच्छन्ति । कथम् । समुद्रं न स्रवतः । व्यत्ययेनात्र पुंलिङ्गता । समुद्रमिव स्रवन्त्यो नद्यः सप्तगंगाद्याः । यह्वीः महत्यः । किंच न जामिभिः सजातीयैः । विचिकिते विज्ञायते । वयः अन्नं नः अस्माकम् । अल्पत्वादप्रख्यातमन्नमस्माकम् । तत् बहु ददत् प्रख्यातं कुर्वित्यर्थः । किंच विदाः विद्धि जानीहि । शृण्वित्यर्थः । देवेषु । निर्धारण एषा सप्तमी । देवानां मध्ये । प्रमतिम् । मन्यतिरर्चतिकर्मा । प्रकृष्टां स्तुतिम् । चिकित्वान् । शत्रर्थे क्वसुः । जानन् । अस्मत्प्रभृतीनां भक्तताम् ॥ ७

आ यदिषे नृपतिं तेज आनट्छुचि रेतो निषिक्तं द्यौरभीके ।
अग्निः शर्धमनवद्यं युवानं स्वाध्यं जनयत्सूदयच्च ॥ ८

यदिति व्यत्ययेन नपुंसकता । यमिषे हविर्लक्षणायान्नाय । नृपतिं मनुष्याणां स्वामिनम् । तेजः दीप्तिलक्षणम् । आनट् मर्यादया व्याप्नोति । यो हविरर्थं मर्यादया दीप्यत इत्यर्थः । यच्छब्दात्तच्छब्दोऽध्याहार्यः । सः शुचि रेतः उदकम् । कतमत् । उच्यते । निषिक्तं द्यौरभीके । द्यौरिति षष्ठ्यर्थे प्रथमा । अभीक इत्यासन्ननाम । यदादित्यरश्मिभिराहृत्य दिवः समीपे निषिक्तं स्थापितम् । आगामिवृष्टिलक्षणमित्यर्थः । न च तदेव केवलम् । किं तर्हि । अग्निः शर्धं बलमुत्साहं वा । कीदृशम् । अनवद्यं अगर्ह्यम् । युवानं तरुणं च पुत्रम् । स्वाध्यं कल्याणचित्तम् । जनयत् जनय त्वमस्माकम् । सूदयच्च । सूदयतिरत्र संस्कारार्थः । संस्करोतु च ॥ ८

मनो न योऽध्वनः सद्य एत्येकः सत्रा सूरो वस्व ईशे ।
राजाना मित्रावरुणा सुपाणी गोषु प्रियममृतं रक्षमाणा ॥ ९

मन इव योऽग्निः अध्वनः देवलोकमार्गान् । सद्य एति । शीघ्रं गच्छतीत्यर्थः । एकश्च सत्रा सदा सूरः सूर्यसदृशः । वस्वो धनस्य ईशे ईष्टे । यच्छब्दात्तच्छब्दोऽध्याहार्यः । सः राजाना दीप्तौ मित्रावरुणा सुपाणी गोषु सर्वलोकप्रियं पयआख्यममृतं वृष्टिद्वारेण रक्षमाणा । साकांक्षत्वादस्मदर्थं यजत्विति वाक्यशेषः । प्रदर्शनार्थं चात्र मित्रावरुणयोर्ग्रहणम् । सर्वदेवता यजत्वित्यर्थः ॥ ९

मा नो अग्ने सख्या पित्र्याणि प्र मर्षिष्ठा अभि विदुष्कविः सन् ।
नभो न रूपं जरिमा मिनाति पुरा तस्या अभिशस्तेरधीहि ॥ १०

माशब्दः प्रमर्षिष्ठा इत्येतेन संबन्धयितव्यः । नः अस्माकं हे अग्ने सख्या पित्र्याणि पितुरागतानि। पितुरारभ्य प्रवृत्तानीत्यर्थः । मा प्रमर्षिष्ठाः अभि । मृषिरत्र सामर्थ्यात् विस्मरणार्थः । अभिशब्दोऽत्र धात्वर्थानुवादी लम्बते प्रलम्बत इति यथा । मा विस्मार्षीः । अथवा मृजेरिदं रूपम् । मा प्रमार्जि । मापनैषीरित्यर्थः । विदुः वेदिता अस्मद्भक्ततायाः । कविः मेधावी च सन् । किं अप्रमृष्यन् करवाणि । उच्यते । नभो न आदित्य इव तमांसि रूपमस्माकं जरिमा जरत्वम् । मिनाति हिनस्ति । एतत् ज्ञात्वा पुरा तस्या जरायाः । अभिशस्तेः हिंसातः । अधीहि अधिगच्छ प्राप्नुहि अस्मान् । यावत् सर्वरूपहारिण्या जरया न हिंस्यामहे तावत् प्राप्यास्माञ्जरातो रक्षेत्यर्थः ॥ १०

---

नि काव्या वेधसः शश्वतस्कर्हस्ते दधानो नर्या पुरूणि ।
अग्निर्भुवद्रयिपती रयीणां सत्रा चक्राणो अमृतानि विश्वा ॥ १

कविर्मेधाव्यग्निः । तस्य कर्माणि हविर्नयनादीनि काव्यानि । वेधसः मेधाविनः । शश्वतः । बहुनामैतत् । बाहोर्यजमानस्य । निकः नियमेन करोत्यग्निः । हस्ते दधानः ददत् । अयत्नेनैवेत्यर्थः । किम् । उच्यते । नर्या नरेषु भवानि नृभ्यो वा हितानि यज्ञफलानि । पुरूणि बहूनि । किंच अग्निर्भुवत् भवति । रयीणां पतिः रयिपतिरित्येवान्वाख्यायते । तथापि प्रवीणशब्दादिवत् स्वामिमात्रवचनइह द्रष्टव्यः । स्वामी । कस्य । रयीणां हविर्लक्षणानां सर्वेषां यजमानधनानाम् । कस्मात् । उच्यते । सत्रा चक्राणः । सत्रेति सत्यनाम सदाशब्दपर्यायो वा । चक्राण इति शानजर्थेऽयं कानच् द्रष्टव्यः । कानच्येव छान्दसत्वात्सुः । हेतुश्चात्र शानजर्थः ।

शयाना वर्धते दूर्वा ।

इति यथा । यस्मात् सत्यानि सदा वा करोतीत्यर्थः । कानि । उच्यते । अमृतानि नित्यानि हविर्नयनादीनि । विश्वा सर्वाणि । यद्धविर्नयनादीनि सर्वाणि करोति तस्माद्धविषां यजमानधनानां स्वामी भवतीत्यर्थः ॥ १

अस्मे वत्सं परि षन्तं न विन्दन्निच्छन्तो विश्वे अमृता अमूराः ।
श्रमयुवः पदव्यो धियंधास्तस्थुः पदे परमे चार्वग्नेः ॥ २

अस्मे इति तादर्थ्ये चतुर्थी । अस्मदर्थं अस्माकं हविर्नयनार्थं इत्यर्थः । वत्सं परि षन्तं न । नशब्दोऽयमुपमार्थीयो व्यवहितेनापि वत्समित्येतेन सम्बन्धयितव्यः ।

वत्समिव सर्वतो भवन्तम्। हविर्वहनभयेन इतश्चेनश्च वत्समिव नश्यन्तमित्यर्थः। विन्दन् लब्धवन्तः। सौचोकमग्निमिच्छन्तः कामयमानाः। विश्वे सर्वे। अमृताः मरणवर्जिताः देवाः। आमूरा अमूढचेतसः। श्रमयुवः। युशब्दोऽत्र मत्वर्थे।

अश्वयुर्गव्यू रथयुः। ऋ वे. १. ५१. १४

इति यथा। श्रमवन्तः। अग्न्यन्वेषणात् उपजातश्रमाः सन्त इत्यर्थः। पदव्यः। पदशब्देनात्र कृत्स्नस्य जगत आश्रयत्वात् कारणात्मोच्यते। वेत्तिरपि पश्यति कर्मा।

पदं देवस्य नमसा व्यन्तः। ऋ वे. ६. १. ४.

इति यथा। कारणात्मनो ज्ञातार इत्यर्थः। धियंधाः स्वस्य कर्मणो धारयितारः। कर्मणामत्यक्तार इत्यर्थः। कस्मादविन्दन्। उच्यते। यस्मात्तस्थुः पदे परमे चारु चारुणि। क्रियाविशेषणं वा चारु शब्दः। चारु तस्थुरिति। कस्य पदम्। उच्यते। अग्नेः। यस्माद्यतो यतो नष्टस्याग्नेः पदानि दृश्यन्ते ततस्ततोऽन्वेषतेत्यर्थः। अथवा पदव्य इति पदज्ञत्वस्येहोपादानात् तस्य च।

येना नः पूर्वे पितरः पदज्ञाः। ऋ॰ वे॰ १. ६२. २; ९. ९७. ३९.

इत्यादिषु अङ्गिरस्सु प्रसिद्धत्वात् विश्वे अमृता अमूरा इत्यादिभिरङ्गिरस उच्यन्ते न देवाः। पितरो हि सौचीकमग्निमनुसृत्य स्वं स्वं तेजोऽस्मिन्न्यदधुरित्येतत् सौचीकसूक्ते दर्शयिष्यामः। एतस्मिंश्च पक्षेऽग्निप्रसादाच्चाग्निसालोक्यं प्रतिपद्यते-त्यर्थः॥ २

तिस्रो यद॑ग्ने श॒रद॒स्त्वामिच्छुचिं॑ घृ॒तेन॒ शुच॑यः सप॒र्यान्।

नामा॑नि चिद्दधिरे य॒ज्ञिया॒न्यसू॑दयन्त त॒न्वः॑ सु॒जाताः॥ ३

यदिति प्रथमाबहुवचनान्तं द्रष्टव्यम्। ये हे अग्ने तिस्रः शरदः त्रीणि वर्षाणि। त्वामित् त्वामेव। शुचिं दीप्तं। घृतेनाज्येन। शुचयः शुद्धात्मानः। सपर्यान् परिचरन्ति। यजन्त इत्यर्थः। ये च नामानि चिद्दधिरे नामान्यपि धारयन्ति। दारिद्र्याद्यष्टुमशक्नुवन्तः भक्त्या नामान्येव केवलानि तव कीर्तयन्तीत्यर्थः। कीदृशानि। यज्ञियानि यज्ञसंपादीनि। यच्छब्दात्तच्छब्दोऽध्याहार्यः। ते सर्वे असूदयन्तः। सूदयतिः संस्कारार्थः। विद्यैश्वर्यादिभिः संस्कारैः संस्कुर्वन्ति। आत्मीयास्तन्वः सुजाताः संपूर्णाः। अव्यङ्गशरीराः विद्यैश्वर्यादीनि प्राप्नुवन्तीत्यर्थः॥ ३

आ रोद॑सी बृह॒ती वेवि॑दानाः प्र रु॒द्रिया॑ जभ्रिरे य॒ज्ञिया॑सः।

वि॒दन्मर्तो॒ नेमधि॑ता चिकि॒त्वान॒ग्निं प॒दे प॑र॒मे त॑स्थि॒वांस॑म्॥ ४

रोदसी बृहती आविविद्रानाः जानन्तः । प्रदर्शनार्थं चैतत् रोदसीग्रहणं तत्स्थाशेषज्ञेयोपलक्षणार्थं वा । अशेषं ज्ञेयं जानन्त इत्यर्थः । रुद्रियासः । रुद्र इति स्तोतृनाम । तस्य स्वभूता तस्मिन् वा भवा रुद्रिया स्तुतिः । सहयोगलक्षणतृतीयान्तं चेदं द्रष्टव्यम् । स्तुत्या सह हवींषि प्रजभिरे प्रहरन्ति अग्निं प्रति प्रापयन्ति । यज्ञियासः यज्ञसंपादिनो मनुष्याः । ज्ञताशेषज्ञेया यष्टारोऽग्निं स्तुवन्ति यजन्ति चेत्यर्थः । किंच विदन् तत्त्वतो वेत्ति । मर्तः तत्त्ववेदी मनुष्यः । नेमधिता संग्रामसदृशे यज्ञे संसारे वर्तमानः । चिकित्वान् ज्ञानी । यष्टारः स्तुवन्ति च यजन्ति च । सम्यक् ज्ञानिनोऽपि सम्यक् जानन्तीत्यर्थः । कम् । अग्निम् । क स्थितम् । उच्यते । पदे परमे तस्थिवांसं वेद्याख्ये परमात्मनि वा ॥ ४

संजानाना उप सीदन्नभिज्ञु पत्नीवन्तो नमस्यं नमस्यन् ।

रिरिक्वांसस्तन्वः कृण्वत स्वाः सखा सख्युर्निमिषि रक्षमाणाः ॥ ५

संजानानाः सम्यक् जानन्तः । उपसीदन् उपसीदन्ति अग्निं मनुष्याः । अभिज्ञु क्रियाविशेषणमेतत् । अभिगते जानुनी यस्मिन् उपसदने अभिज्ञु । भूमौ जानुनी निपात्योपसीदन्तीत्यर्थः । न च केवलाः । किं तर्हि । पत्नीवन्तः पत्नीभिः संयुक्ताः । उपसद्य च नमस्यं पूज्यमग्निं नमस्यन् पूजयन्ति । पूजयन्तश्चाग्निप्रसादेन रिरिक्वांसः । शुद्धोऽप्ययमतिपूर्वार्थो द्रष्टव्यः । अन्यतोऽतिरिच्यमानाः । प्रकृष्टीभवन्त इत्यर्थः । तन्वः कृण्वत स्वाः । करोतिः शुद्धोऽपि संपूर्वार्थे द्रष्टव्यः । विद्यैश्वर्यादिभिः संस्कारैः संस्कुर्वन्ति । विद्यैश्वर्यादीनि प्राप्नुवन्तीत्यर्थः । सखा । बहुवचनस्य स्थाने इदमेकवचनम् । सखायः । सख्युरग्नेः । निमिषि दर्शने । सप्तमीनिर्देशात् वर्तमाना इति शेषः । अग्निनाऽनुग्राह्यदर्शनेन दृश्यमाना इत्यर्थः । तत्प्रसादादेव सर्वापभ्य आत्मानं रक्ष्यमाणाः । अथवा निमिषि इति तृतीयार्थे सप्तमी । रक्ष्यमाणा इत्यपि व्यत्ययेन कर्मणि कर्तृप्रत्ययः । अग्नेरनुग्राह्यदर्शनेन सर्वापभ्यो रक्ष्यमाणा इत्यर्थः ॥ ५

त्रिः सप्त यद्गुह्यानि त्वे इत्पदाविदन्निहिता यज्ञियासः ।

तेभी रक्षन्ते अमृतं सजोषाः पशूञ्च स्थातॄञ्चरथं च पाहि ॥ ६

अत्रेतिहासमाचक्षते । अग्नौ किल एकविंशतिरपि छन्दांसि गुह्यानि देवैर्निहितान्यासन् । तान्यग्निमाराध्याङ्गिरसोऽजानन् इति । तदेतदिहोच्यते त्रिः सप्तेति । त्रिरावृत्तानि सप्त । एकविंशतिमित्यर्थः । कानि । इतिहासस्मृतेः छन्दांसि । कथं पुनश्छन्दसामेकविंशतित्वम् । उच्यते । गायत्र्युष्णिगनुष्टुब्बृहती पङ्क्तिस्त्रिष्टुब्जगती

इत्येतानि चतुरुत्तराणि सप्त छन्दांसि । तेषामेवैकैकं ब्राह्मदैवार्षभेदेन त्रिधा भिद्यते । ऊनत्वपूर्णत्वाधिक्यभेदेन वा । एकेन द्वाभ्यां वाऽक्षराभ्यां न्यूनं गायत्र्यादि छन्दो निचृत् विराडिति वा विशेषाख्यां लभते । न तु स्वामाख्यां जहाति । तथातिरेके भुरिक् स्वराळिति चोच्यते । न तु स्वामाख्यां न प्रपद्यते । तथा च श्रुतावप्युक्तम् : न वा एकनाक्षेरण छन्दांसि वियन्ति न द्वाभ्याम् (आ. ब्रा १.१) इति । यानि यानि तु गायत्रीभ्योऽन्यानि तानि कानिचिद्तिछन्दांसि कानिचित्तेषां विकार इति नात्र संख्यायन्ते । तदेवं गायत्र्यादीनां सप्तानमेकैकस्याः त्रिधा भेदेन तदन्येषां छन्दसामपरिसंख्यानात् । तदस्ति छन्दसामेकविंशतित्वम । तच्चैतदुच्यते त्रिस्सप्तेति । यत् यानि गुह्यानि गूहनार्हाणि । त्वे त्वयि । इच्छन्दस्तु पदपूरणः । निहिता देवैर्निहितानि । पदा पदेन । स्वेन ज्ञानेनेत्यर्थः । अविदन् त्वामाराध्य ज्ञातवन्तः । यज्ञियासः यज्ञसंपादिनोऽङ्गिरसः । तेभिः रक्षन्ते अमृतं भवन्तम् । अग्निगुणरक्षणाच्चायं तद्व्यत्ययावेव रक्षणव्यपदेशः । अकीर्त्यमाना हि छन्दोभिरग्नेर्गुणा विस्मरणात् प्रलयं गच्छेयुः । तान् छन्दोभिः रक्षन्तः अग्निमेव रक्षन्तीत्युच्यते । संजोषाः संप्रीयमाणाः । अंगिरस एव वा प्रकृतत्वात् सर्वे वा स्तोतारः । य ईदृशो महात्माऽसि तं ब्रूमः—पशून् च स्थातॄन् स्थावराणि च चरथं च जङ्गमं च पशुव्यतिरिक्तमपि पाहि रक्ष त्वम् ॥ ६

विद्वाँ अग्ने वयुनानि क्षितीनां व्यानुषक्छुरुधो जीवसे धाः ।
अन्तर्विद्वाँ अध्वनो देवयानानतन्द्रो दूतो अभवो हविर्वाट् ॥ ७

विद्वान् हे अग्ने । वयुनानि त्वद्भक्तिरूपाणि प्रज्ञानानि । क्षितीनाम् । क्षितय इति मनुष्यनाम । मनुष्याणाम् । आनुषक् आनुपूर्व्येण । यथायोग्यमित्यर्थः । शुरुधः । शुरुध आप उच्यन्ते । वृष्टिलक्षणा आपः । जीवसे जीवितुम् । विधाः हविर्नयनद्वारेण विविधं देहि । किंच अन्तर्विद्वान् । अन्तरिति वेदिमध्यमभिप्रेतम् । विद्वानिति लक्षणहेत्वोः क्रियायायां (पा. ३. २. १२६) इत्येवं हेतौ । आर्जयन् वसतीति यथा । वेदिमध्यव्यवस्थितज्ञानेन हेतुना । यस्माद्वेदिमध्य एव व्यवस्थितोऽसीत्यर्थः । किंच अध्वनः मार्गान् । देवयानान् यैर्देवाः प्रतिगम्यन्ते तान् अस्मान् । अतन्द्रः अनलसः । उत्साहीत्यर्थः । देवताह्वानार्थं सर्वयजमानानां दूतः अभवः अभूः भवसि वा । हविर्वाट् हविषां वोढा च ॥ ७

स्वाध्यो दिव आ सप्त यह्वी रायो दुरो व्यृतज्ञा अजानन् ।
विदद्गव्यं सरमा दृळ्हमूर्वं येना नु कं मानुषी भोजते विट् ॥ ८

स्वाध्यः। शोभनमाध्यानं येषां ते स्वाध्याः कल्याणचित्ताः। के ते। अंगिरसः। कुत एतत्। उत्तरस्यार्धर्चस्य भिन्नवाक्यत्वेनाग्नेयत्वप्रसंगात्। अंगिरसश्च मुक्त्वान्येन सह एकवाक्यताया असंभवात्। दिवः आसन यह्वीः। द्युशब्दोऽत्र तत्प्रभृत्युपलक्षणार्थो द्रष्टव्यः। आकाशे मर्यादायाम्। यह्व इति महन्नाम। मर्यादया द्युप्रभृतीन् सप्तलोकान्। रायो दुरः धनस्य द्वाराणि। यैर्धनं लभ्यते तानि। ऋतज्ञाः ऋतस्य यज्ञस्य ज्ञातारः। व्यजानन् अग्निप्रसादादेव विज्ञातवन्तः। प्राप्तवन्त इत्यर्थः। मरणोत्तरकालं द्युप्रभृतीन् सप्तलोकान् प्राप्तवन्तः। जीवन्तोऽपि धनं लब्धवन्त इत्यर्थः। कतमः। उच्यते विदद्गव्यमित्यादि। अत्रैकवाक्यताप्रसिध्यर्थं यैः प्रेषितेत्यध्याहार्यः। यैः प्रेषिता पणिभिरपहृतं विदत् ज्ञातवती लब्धवती वा। गव्यं गोसमूहम्। सरमा नाम देवशुनी। दळ्हं दृढम्।

ऊर्वान्दयन्त गोनाम्। ऋ. वे. ७ १६. ७

त एनमूर्वं वि भजन्त गोनाम्। ऋ. वे. १०. १०८. ८.

इत्यादौ दर्शनादूर्वशब्दः समूहवचनः। समूहम्। बहु विस्तीर्णं वेत्यर्थः। येन हेतुना। नु इति पदपूरणः। कं सुखम्। मानुषी मनुष्येषु भवा। भोजते उपभुङ्क्ते। विट् मनुष्यजातिः। देवगवीनां हि प्रसादेन मनुष्यजातिः सुखमनुभुङ्क्ते। मनुष्यगवीनां देवगविप्रभवत्वात् कामदुघत्वाच्च देवगवीनां सर्वसुखानां तत्प्रभवत्वात्॥ ८

आ ये विश्वा स्वपत्यानि तस्थुः कृण्वानासो अमृतत्वाय गातुम्।
मह्ना महद्भिः पृथिवी वि तस्थे माता पुत्रैरदितिर्धायसे वेः॥ ९

ये अंगिरसो विश्वा बहूनि धनानि। स्वपत्यानि शोभनैरपत्यैः सहितानि। आतस्थुः आस्थिताः संप्राप्तवन्त इत्यर्थः। कृण्वानासः कुर्वन्तः। अमृतत्वाय। अविद्यमानं मृतत्वं यस्य सोऽमृतत्वोऽग्निः। तदर्थम्। गातुम्। गायतिरर्चतिकर्मा। गानं गातुः स्तुतिः। ताम्। येऽङ्गिरसोऽग्निमास्तुवन्तो बहूनि धनानि शोभनानि चापत्यानि लब्धवन्त इत्यर्थः। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। तेषां मह्ना माहात्म्येन। तत्प्रसादेनेत्यर्थः। महद्भिः सस्यजननादिभिरुपकारैर्मनुष्याणाम्। पृथिवी वितस्थे विविधं स्थिता। अंगिरसां प्रसादेन पृथिवी मनुष्याणां महद्भिः सस्यजननादिभिरुपकारैरुपकरोतीत्यर्थः। अंगिरसो हीन्द्रसखत्वात् वृष्टेः कर्तारः। तदायत्ताश्च सस्यजननादयः। न केवला पृथिवी किं तर्हि। माता पुत्रैरदितिर्देवमाता चादितिः पुत्रैः सर्वैर्देवैः सह। देवा अपि हि यत् मनुष्याणामुपकुर्वन्ति तदंगिरसामेव प्रसादेन। देवोपकारस्य धर्मायत्तत्वात् धर्मस्य च वृष्ट्यायत्तत्वात् वृष्टेश्चाङ्गिरसः कर्तृत्वात्।

किमर्थं पुनर्महद्भिरुपकारैर्वितस्थे । उच्यते । धायसे । धेट् पाने आज्यपयआद्याहुतिपानाय । वेः देवान् प्रति गन्तुः ज्ञातुर्वाग्नेः । सस्यजननाद्युपकाराभावे हि यागो न शक्यते कर्तुम् । यागाभावे च नाग्निराहुतीः पिबेत् । अत एवमुच्यते धायसे वेः इति ॥ ९

अधि श्रियं नि दधुश्चारुमस्मिन्दिवो यदक्षी अमृता अकृण्वन् ।
अध क्षरन्ति सिन्धवो न सृष्टाः प्र नीचीरग्ने अरुषीरजानन् ॥ १०

दीप्तिलक्षणां श्रियं अधिनिदधुः निहितवन्तो देवाः । चारुं शोभनम् । अस्मिंस्त्वय्यग्नौ । कदा । उच्येते । दिवः यत् यदा अक्षी । द्वित्वसामान्यात् सूर्याचन्द्रमसावत्राक्षी उच्येते । अक्षिस्थानीयौ सूर्याचन्द्रमसौ । अमृता देवाः । अकृण्वन् कृतवन्तः । अहोरात्रविभागार्थं यदैव सूर्याचन्द्रमसौ देवौ उदपीपदत् तदैव त्वामग्निं दीप्तिमन्तं अकार्षुरित्यर्थः । अधशब्दोऽत्र ततःप्रभृतीत्यस्यार्थे । तत एव च प्रभृति । क्षरन्ति त्वयि । काः । सामर्थ्यादाहुतयः । कथम् । सिन्धवो न । नदीनामैतत् । नद्य इव । सृष्टाः यष्टृभिः विसृष्टाः सत्यः । नीचीरधोमुखाः । सृष्टा ह्याहुतयः क्षरन्त्यः अधोमुखाः क्षरन्ति । कीदृश्यः । उच्यते । हे अग्ने अरुषीः । अरुषतिर्गतिकर्मा । त्वां प्रति गमनशीलाः । नित्यमेव यास्त्वयि हूयन्त इत्यर्थः । किंच प्रजानन् । प्रशब्दः प्रारंभे । तत एव प्रभृति ज्ञानिनोऽपि त्वां ज्ञातुं प्रारब्धवन्त इत्यर्थः ॥ १०



रयिर्न यः पितृवित्तो वयोधाः सुप्रणीतिश्चिकितुषो न शासुः ।
स्योनशीरतिथिर्न प्रीणानो होतेव सद्म विधतो वि तारीत् ॥ १

पितृवित्त इत्येतदुपमानभूतस्य रयेर्विशेषणम् । योऽग्निर्धनमिव पितृलब्धम् । वयोधाः अन्नदाता । यथा पित्र्यं धनं क्रमेण नियमेन प्रभूतस्यान्नस्य दायकं तद्वन्नियमेन प्रभूतदायक इत्यर्थः । यश्च सुप्रणीतिः । प्रणीतिः कार्येषूपदेशः । सा शोभना यस्य स सुप्रणीतिः । कथम् । चिकितुषो न शासुः विदुष इवानुशासनम् । यश्च स्येनशीः । स्येतिरिह स्थानार्थः ।

तासामहिः पत्सुतःशीर्बभूव । ऋ. वे. १. ३२. ८.

इति यथा । सामर्थ्याच्चान्तर्णीतण्यर्थः । सुखस्य स्थापयिता । सुखकर इत्यर्थः । कथम् । अतिथिं न प्रीणानः अतिथिरिव तृप्यन् । होतेव यज्ञसाधनद्वारेण सद्म गृहं विधतः परिचरतो यजमानस्य । वितारीत् वर्धयति । तिसृष्वप्यास्वृक्षु यच्छब्दसाकांक्षस्य तं त्वा नरः इति चतुर्थ्यामृचि श्रुतेन तच्छब्देनैकवाक्यता ॥ १

देवो न यः सविता सत्यमन्मा क्रत्वा निपाति वृजनानि विश्वा ।
पुरुप्रशस्तो अमतिर्न सत्य आत्मेव शेवो दिधिषाय्यो भूत् ॥ २

यश्च देव इव सविता सत्यमन्मा सत्यज्ञानः । क्रत्वा कर्मणा यागादिना प्रज्ञया वा । निपाति नियमेन रक्षति । वृजनानि विश्वा । वृजनमिति बलनामान्यत्र । इह तु वर्जनीयत्वाद्वृजनं पापं उच्यते । सर्वाणि पापानि । यश्च पुरुप्रशस्तः बहुभिः स्तुतः । अमतिर्न सत्यः । अमतिरिति रूपनामान्यत्र । इह तु आत्ममतिरमतिरुच्यते । तद्वत् सत्यः । अथवा अम गत्यादिष्वित्यस्यायं तिप्रत्ययः कर्तरि । गमनशीलोऽमतिरादित्यः । तद्वत् सत्यः । यश्चात्मेव शेवः सुखः सर्वस्य । दिधिषाय्यः धारयिता च भूत् भवति ॥ २

देवो न यः पृथिवीं विश्वधाया उपक्षेति हितमित्रो न राजा ।
पुरःसदः शर्मसदो न वीरा अनवद्या पतिजुष्टेव नारी ॥ ३

देव इति पूर्वस्यामृचि सम्बन्धदर्शनात् दीप्तत्वाच्च सवितैवाभिप्रेतः । यस्य देव इव सविता पृथिवीं विश्वधायाः । धेट् पाने । सर्वाहुतिलक्षणं आज्यादि पेयं यस्य स विश्वधायाः । सर्वासामाहुतीनां पातेत्यर्थः । उपक्षेति उपगम्य निवसति । यथा देवः सविता पृथिवीं रश्मिभिर्व्याप्य निवसति तद्वद्व्याप्य निवसतीत्यर्थः । हितमित्रो न राजा । पूर्वस्यैवेयं द्वितीयोपमा । हितानि मित्राणि यस्य भवन्ति स हितमित्रः । यथा च हितैर्मित्रैरुपेतो राजा पृथिवीं सम्यक् पालयन्नुपभुञ्जानश्च निवसति तद्वत्सम्यक् पालयन्नुपभुञ्जानश्च निवसतीत्यर्थः । यश्च पुरस्सदः शर्मसदो न वीराः । पुरस्सीदन्तीति पुरस्सदः । सेनाया अग्रतो व्यवस्थातारः । शर्म संग्रामयज्ञसुखम् । तदर्थं सीदन्ति इति शर्मसदः । उपमानश्रुतेश्च साकांक्षत्वादत्र योग्योपमेयकर्माध्याहारः । यथा च पुरःसदः शर्मसदो न वीराः शत्रूणामभिभवितारः तद्वदभिभवितेत्यर्थः । यश्चानवद्या पतिजुष्टेव नारी । अत्रापि पूर्ववदुपमेयकर्माध्याहारः । यथानवद्या रूपवती पतिजुष्टा भर्तृसेविता नारी शोभते नित्यप्रीतियुक्ता वा तद्वच्छोभते नित्यप्रीतियुक्तो वेत्यर्थः ॥ ३

तं त्वा नरो दम आ नित्यमिद्धमग्ने सचन्त क्षितिषु ध्रुवासु ।
अधि द्युम्नं नि दधुर्भूर्यस्मिन्भवा विश्वायुर्धरुणो रयीणाम् ॥ ४

तं त्वा नरो मनुष्याः। दमे यज्ञगृहे । नित्यमिद्धं सन्तम् । हे अग्ने आसचन्त स्तुतिभिर्हविर्भिश्च आसेवन्ते । क्षितिषु ध्रुवासु । क्षितिरिति पृथिवीनाम। इह च अथापि तद्धितेन कृत्स्नवन्निगमा भवन्ति (नि. २.५) इत्येवं तदवयवेषु प्रयुक्तम्। पृथिव्यवयवेषु वेद्याख्येषु ध्रुवेषु। किंच द्युम्नं हविर्लक्षणमन्नम्। अधि निदधुः उपरि निदधति। जुह्वतीत्यर्थः। भूरि बहु। अस्मिन् त्वय्यग्नौ। य ईदृशोऽसि तं ब्रूमः। भव विश्वायुः सर्वान्नसंबद्धः सर्वेषामन्नानां दाता। हविर्भोक्तेत्यर्थः। धरुणः। धृ धारणेऽन्यत्र। इह तु सामर्थ्याद्दानवचनः। दाता रयीणां धनानाम्॥ ४

वि पृक्षो अग्ने मघवानो अश्युर्वि सूरयो ददतो विश्वमायुः।
सनेम वाजं समिथेष्वर्यो भागं देवेषु श्रवसे दधानाः॥ ५

पृक्षोऽन्नं हे अग्ने मघवानः धनवन्तः। प्रभूतहविष्करणयोग्या इत्यर्थः। व्यश्युः विविधं प्राप्नुयुः। त्वत्प्रसादेन लभेरन्नित्यर्थः। नच मघवान एव केवलाः। किं तर्हि। सूरयः स्तोतारश्च व्यश्युः। ददतः तुभ्यं हवींषि। ये च धनवन्तः प्रभूतानि हवींषि कुर्वन्ति ये च दारिद्र्यात् प्रायेण स्तुवन्त्येव न प्रभूतानि हवींषि कर्तुं शक्नुवन्ति त उभयेऽपि तुभ्यं हविर्ददतोऽन्नानि प्राप्नुयुरित्यर्थः। नच केवलान्यन्नानि। किं तर्हि। विश्वमायुः सर्वमायुश्च वर्षशतलक्षणम्। वयमपि सनेम वाजमन्नम्। समिथेषु संग्रामेषु। अर्यः अरेः स्वभूतं भागं हविर्लक्षणम्। देवेषु। संप्रदानस्येयमधिकरणत्वेन विवक्षा।

सममब्राह्मणे दानम्।

इति यथा। देवेभ्यः श्रवसे। श्रव इत्यन्ननाम। अन्नार्थम्। दधानाः ददतः। देवान्यजन्त इत्यर्थः॥ ५

ऋतस्य हि धेनवो वावशानाः स्मदूध्नीः पीपयन्त द्युभक्ताः।
परावतः सुमतिं भिक्षमाणा वि सिन्धवः समया सस्रुरद्रिम्॥ ६

हिशब्दः पदपूरणः। ऋतस्य सर्वत्र गतस्याग्नेः स्वभूताः धेनवो गावः। वावशानाः। वाशृ शब्दे। पुनःपुनर्वाश्यमानाः। स्मदूध्नीः। स्मच्छब्दः प्रशस्तवचनः। अमृतपचनत्वात् प्रशस्तमूधो यासां ताः स्मदूध्न्यः। पीपयन्त अमृतेनाप्याययन्ति अग्निम्। द्युभक्ताः दिवं या भजन्ते ता द्युभक्ताः। द्युनिवासिन्यः इत्यर्थः। किंच परावतः दूरनामैतत्। सुमतिं कल्याणचित्तमग्निम्। भिक्षमाणाः याचमानाः। अन्वेषमाणा

इत्यर्थः । सिन्धवः स्यन्दनाः अमृतस्राविण्यः । वि सस्रुः विविधमभिगच्छन्त्याग्निम् । समया अद्रिम् । समयाशब्दः सामीप्ये । अद्रिर्मेरुनामा पर्वतः । मेरोः समीपेनेत्यर्थः । अग्नेः स्वभूता गावो गव्यूतितो मेरुबुध्नेनः प्रत्यागत्य विविधमग्निं अभिगच्छन्ति । अभिगम्य च स्वेनामृतरूपेण पयसा अग्निमाप्याययन्ति इति समस्तार्थः । अथवैवमन्यथाऽस्या ऋचोऽर्थयोजना । धेनव इति धिनोतेः प्रीणनार्थस्य रूपम् । ऋतस्याग्नेः प्रीणयित्र्यः आहुतयः । वावशाना अत्यर्थं कामयमानाः । स्वदूध्नीः । यद्रसस्थानमाहुतीनां तदूधरुच्यते । अमृतरसयुक्ता इत्यर्थः । पीपयन्त द्युभक्ताः । द्युगामिन्य इत्यर्थः। परावतः दूरात् । पृथिवीन इत्यर्थः । शिष्टपदयोजना तु सदृशी ॥ ६

त्वे अ॑ग्ने सुम॒तिं भिक्ष॑माणा दि॒वि श्रवो॑ दधिरे य॒ज्ञिया॑सः ।
नक्ता॑ च च॒क्रुरु॒षसा॒ विरू॑पे कृ॒ष्णं च॒ वर्ण॑मरु॒णं च॒ सं धुः ॥ ७

त्वे इति द्वितीयैकवचनस्य शेआदेशः । त्वां हे अग्ने सुमतिं भिक्षमाणाः धनानि याचमानाः । दिवि श्रवः हविर्लक्षणमन्नम् । दधिरे स्थापयन्ति । देवेभ्यो हवींषि ददतीत्यर्थः । अथवा दिवीति सप्तमीनिर्देशात् व्यवस्थितायेति वाक्यशेषः । दिवि व्यवस्थिताय तुभ्यं श्रवो दधिरे ददति । यज्ञियासः यष्टारः । नच केवलंन कदाचिदेव । किं तर्हि । नक्ता च चक्रुः । नक्तेति रात्रिनाम । सप्तम्याश्चाकारः । रात्रौ चैतत् कुर्वन्ति । उषसा उषसि च । उषसा चात्रानन्तर्यादहर्लक्ष्यते । अहनि चेत्यर्थः । कीदृशयोरहोरात्रयोः । विरूपे । सप्तमीद्विवचनस्यायं शेआदेशः । विभिन्नरूपयोः । किंच कृष्णं च वर्णमरुणं च । अरुण आरक्तो वर्णः । सुसमिद्धस्याग्नेर्ज्वालाया उपरि कृष्णो भवति शिष्टेऽरुणः । तौ । सन्धुः सन्दधति । तथा त्वां यष्टारः समिन्धते यथा तव कृष्णारुणौ वर्णावपि भिन्नौ भवत इत्यर्थः । अथवैवमन्यथा उत्तरस्यार्धर्चस्यार्थयोजना । नक्ता च चक्रुरुषसा विरूपे इति द्वितीयान्तान्येतानि न च सप्तम्यन्तानि । दिवि श्रवो दधिरेय यज्ञियासः नक्तोषसौ विभिन्नरूपे कुर्वन्तीत्यर्थः । नक्तोषसोरेव कृष्णं च वर्णमरुणं च सन्धुः । कथं पुनः यष्टार एतत् कुर्वन्ति । उच्यते । यागकारित्वाद्यागस्य च धर्मत्वात् कृत्स्नस्य जगतो धर्ममूलत्वात् ॥ ७

यान् रा॒ये मर्ता॒न्त्सुषू॑दो अग्ने॒ ते स्या॑म म॒घवा॑नो व॒यं च॑ ।
छा॒येव॒ विश्वं॒ भुव॑नं सिसक्ष्याप॒प्रि॒वान् रोद॑सी अ॒न्तरि॑क्षम् ॥ ८

यान् राये धनाय मर्तान् सुसूदः संस्करोषि हे अग्ने । यान् धनप्राप्तियोग्यान् करोषीत्यर्थः । ते स्याम मघवानः धनेन हविर्लक्षणेन धनवन्तः । वयं च । चशब्द

एवार्थे। वयमेव। अस्मानेव धनप्राप्तियोग्यान् कुर्वित्यर्थः। चशब्दश्रुतिसामर्थ्याद्वा मघवानश्च वयं च स्यामेत्येवं व्याख्यातव्यम्। ये चान्ये हविर्लक्षणेन धनेन धनवन्तो वयं चेत्यर्थः। किंच छायेव। यथा छाया नित्यसन्निहिता एवं त्वं विश्वं भुवनं भूतजातम्। सिसक्षि दहनपचनादिना सेवसे। आपप्रिवान् स्वेन ज्योतिषा पूरयन्रोदसी अन्तरिक्षं च॥ ८

अर्वद्भिरग्ने अर्वतो नृभिर्नॄन् वीरैर्वीरान् वनुयामा त्वोताः।
ईशानासः पितृवित्तस्य रायो वि सूरयः शतहिमा नो अश्युः॥ ९

अर्वद्भिः आत्मीयैरश्वैः हे अग्ने शत्रूणां स्वभूतानर्वतोऽश्वान्। नृभिर्नॄन् मनुष्यैः मनुष्यान्। पुत्रैः पुत्रान्। वनुयाम। वनुष्यतिर्हन्तिकर्मा। हन्यामेत्येतदाशास्महे। त्वोताः त्वया रक्षिताः सन्तः। किंच ईशानासः पितृवित्तस्य पित्रा लब्धस्य रायो धनस्य। सूरयः तव स्तोतारः सन्तः। शतहिमाः वर्षशतमित्यर्थः। अत्र षष्ठीनिर्देशात् पितृवित्तस्येति वचनात् पुत्रा इति वाक्यशेषः। नः अस्माकं पुत्राः व्यश्युविविधं प्राप्नुयुरित्याशास्महे। त्वत्प्रसादेनास्मत्पुत्राः पित्र्येण धनेनोपेता वर्षशतं जीव्यासुरित्यर्थः॥ ९

एता ते अग्न उचथानि वेधो जुष्टानि सन्तु मनसे हृदे च।
शकेम रायः सुधुरो यमं तेऽधि श्रवो देवभक्तं दधानाः॥ १०

एतानि ते हे अग्ने उचथानि अस्मदीयानि स्तुतिवचनानि। हे वेधः मेधाविन्। जुष्टानि प्रियाणि सन्तु। मनसे हृदे च। मनोऽन्तःकरणम्। हृदयं तदधिष्ठानम्। तयोरुभयोरपि। किंच शकेम। शक्नोतेः कर्मभूतधात्वन्तरसापेक्षत्वात्कर्तुमिति वाक्यशेषः। शक्नुयाम कर्तुमित्येतदाशास्महे। किमर्थम्। रायः धनस्यार्थाय। किम् उच्यते। सुधुरो यमं ते। शोभना धूर्यस्य स सुधुरः रथः। तस्य यमं बन्धनम्। स्ववेद्यां धारणमित्यर्थः। ते तव स्वभूतस्य। अधिशब्दः अधिपरी अनर्थकौ (पा. १. ४. ९३) इत्येवं कर्मप्रवचनीयः पदपूरणः। श्रवः हविर्लक्षणमन्नम्। देवभक्तं देवैः सेवितं देवानां वा आहारभूतम्। दधानाः ददत। यजत इत्यर्थः॥ १०

अत्रान्तरे सौपर्णानि शौनकेनानुक्रान्तानि। तानि विशिष्टव्रतकाध्ययनत्वात् दुरध्येयानि इति प्रायेण लोको नाधीते इति अतिप्रसंगभावान्नेहास्माभिः व्याख्यायन्ते। खिलव्याख्याने तु व्याख्यास्यन्ते।

उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये।
आरे अस्मे च शृण्वते॥ १

उपप्रयन्तो गौतमो राहूगण ऋषिः स्मृतः।

उपप्रयन्त इत्येवमादि गौतमो नाम रहूगणपुत्रोऽपश्यत्। उपगच्छन्तोऽध्वरं स्तुतिलक्षणं मन्त्रम्। नित्यं वोचेमाग्नये इत्येतन्नित्यमाशास्महे। आरे सन्निकृष्टे व्यवस्थितायेति वाक्यशेषः। अस्मे अस्माकं च शृण्वते। अस्मदीयस्तुतिश्रवणं प्रति सादराय न निरादरायेत्यर्थः॥ १

किं करोत्यग्निः। उच्यते।

यः स्नीहितीषु पूर्व्यः संजग्मानासु कृष्टिषु।
अरक्षद्दाशुषे गयम्। २

योऽग्निः पूर्व्यः पूर्वः। सर्वत उत्कृष्ट इत्यर्थः। स्नीहितीषु। स्नेहतिर्वधकर्मा। हन्त्रीषु। संजग्मानासु कृष्टिषु शत्रुमनुष्यजातिषु। अरक्षत् रक्षति। दाशुषे। षष्ठ्यर्थे चतुर्थी। हवींषि दत्तवतो यजमानस्य। गयं गृहम्। तस्मै मन्त्रं वोचेमेति यच्छन्दश्रुतेः पूर्वयैकवाक्यता॥ २

उत ब्रुवन्तु जन्तव उदग्निर्वृत्रहाजनि।
धनंजयो रणेरणे॥ ३

उतशब्दोऽप्यर्थे। ब्रुवन्तु मन्त्रमग्नये। जन्तवः। जायमानत्वाज्जन्तवः पुत्रा इहाभिप्रेताः। अस्मदीयाः पुत्रा अपि ब्रुवन्तु इत्येतदाशास्महे इत्यर्थः। अग्निरपि वृत्रहा अस्मच्छत्रूणां हन्ता उदजनि ऊर्ध्वो जायताम्। अस्मद्यज्ञेषु दीप्यतामित्यर्थः। धनानां जेता सर्वसंग्रामेषु॥ ३

यस्य दूतो असि क्षये वेषि हव्यानि वीतये।
दस्मत्कृणोष्यध्वरम्॥ ४

यस्य यजमानस्य दूतः असि भवसि क्षये गृहे च वेषि । वेतिः कान्त्यर्थः । कामयसे । हव्यानि वीतये भक्षणाय । भक्षयितुमिच्छसीत्यर्थः । दस्मत् । दसि दंश-दर्शनयोरित्यस्य एतद्रूपम् । दर्शनीयं च कृणोष्यध्वरम् ॥ ४

तमित्सुहव्यमङ्गिरः सुदेवं सहसो यहो ।

जना आहुः सुबर्हिषम् ॥ ५

इच्छब्दोऽत्र एवार्थे । अंगिरः शब्दोपि कार्यशब्दः सोऽयमित्यभिसंबन्धात् कारणे प्रयुक्तः । अग्निर्ह्यङ्गिरसः कारणभूतः । एवं ह्यैतिहासिकाः स्मरन्ति

ततोऽर्चिषि भृगुर्जज्ञे अङ्गारेष्वङ्गिराः । बृ. दे. ५. ९९.

इति । अथवाऽङ्गानि शरीरावयवाः । तद्वदङ्गि शरीरम् । तस्य स्थितिहेतुरशितपीत-रसोऽङ्गिरसः । तस्य कर्ता अङ्गिराः । जाठरात्मना ह्यग्निरशितपीतं शरीरस्थितिहेतु-भूतं रसतामापादयति । तस्याग्नेः संबोधनमिदं अंगिरः इति । तमेव सुहव्यं सुदेवम् । शोभना देवा यस्य स सुदेवः । तं सुदेवम् । देवानां चानुग्राह्यमित्यर्थः । हे सहसः यहो बलस्य पुत्र । बलेन मथ्यमानोऽग्निर्जायते । तेन बलस्य पुत्र उच्यते । जना आहुः । न च केवलं सुहव्यं सुदेवं च । किं तर्हि । सुबर्हिषं च ॥ ५

आ च वहासि ताँ इह देवाँ उप प्रशस्तये ।

हव्या सुश्चन्द्र वीतये ॥ ६

उपशब्दोऽप्यपकृष्य च वहासीत्येतेन संबन्धयितव्यः । उपावह च । चशब्द-श्रुतेर्यज चेति वाक्यशेषः । पदपूरणो वा चशब्दः । तान् । तच्छब्दश्रुतेर्योग्यार्थ-सम्बन्धो यच्छब्दोऽध्याहार्यः । ये आवोढुं योग्याः तानिहास्मदीये यज्ञे देवान् । किमर्थम् । प्रशस्तये हव्या । षष्ठ्यर्थे तृतीयैषा । हविषां च । हे सुचन्द्र । चन्द्रः-चन्दतेः कान्तिकर्मणः । सुकान्त । वीतये भक्षणाय ॥ ६

न योरुपब्दिरश्व्यः शृण्वे रथस्य कच्चन ।

यदग्ने यासि दूत्यम् ॥ ७

न तव योः । यातीति युः । तस्य योः । देवलोकं गच्छत इत्यर्थः । उपब्दिः । वाङ्नामैतत् । अश्व्यः अश्वेषु भवो हेषितशब्दः शफशब्दो वेत्यर्थः । शृण्वे श्रूयते । नापि रथस्य कच्चन कदाचिदपि । कदा गच्छतः । यद्यदा हे अग्ने यासि दूत्यं दूतकर्म । यजमानानां दूततां प्रतिपद्य देवलोकं गच्छसीत्यर्थः ॥ ७

त्वोतो वाज्यह्रयोऽभि पूर्वस्मादपरः ।

प्र दाश्वाँ अग्ने अस्थात् ॥ ८

त्वया ऊतः । सर्वकालं त्वया रक्षितः । वाजी हविर्लक्षणेनान्नवान् । उपकल्पितहविष्क इत्यर्थः । अह्रयः । ह्री लज्जायाम् । शोभनत्वाद्धविषामलज्जितः । पूर्वस्मादपरः अर्वाग्देशवर्ती । नातिदूरचर इत्यर्थः । दाश्वान् यजमानः । हे अग्ने अभिप्रास्थात् । प्रपूर्वस्तिष्ठतिर्गत्यर्थः । अभिप्रतिष्ठते । हविर्भिः स्तुतिभिर्भवन्तमभिगच्छन्तीत्यर्थः । अथवैवमन्यथाऽस्या ऋचोऽर्थयोजना । त्वद्रक्षितो हविष्मानलज्जितः पूर्वस्मादपरः । पूर्वप्रस्थितादनन्तर एवेत्यर्थः । दाश्वान् हे अग्ने अभिप्रास्थात् स्वर्गलोकमभिगच्छति । मरणोत्तरकालं स्वर्गलोकं प्राप्नोतीत्यर्थः ॥ ८

उत द्युमत्सुवीर्यं बृहदग्ने विवाससि ।

देवेभ्यो देव दाशुषे ॥ ९

पूर्वस्यामृचि यद्यग्निरभिगम्यमानः ततोऽत्रोतशब्दः पदपदपूरणः । अथ स्वर्गः ततः फलसमुच्चयादुतशब्दोऽप्यर्थे । अपि मरणोत्तरकालं स्वर्गं प्राप्नोति अस्मै जीवते । द्युमत् दीप्तिमदन्नं धनं वा । सुवीर्यं शोभनेन वीर्येण सहितम् । बृहत् महत् । हे अग्ने विवाससि । विवासतिः परिचर्यायामन्यत्र । इह तु दाशुष इति संप्रदानचतुर्थीश्रुतेर्दानार्थः । ददासि । देवेभ्यः देव दाशुषे हवींषि दत्तवते । यष्ट्रे इत्यर्थः ॥ ९

---

जुषस्व सप्रथस्तमं वचो देवप्सरस्तमम् ।

हव्या जुह्वान आसनि ॥ १

सप्रथस्तमं सर्वतः पृथुतमं अत्यन्तविस्तीर्णमस्मदीयं स्तुतिलक्षणं वचः । देवप्सरस्तमम् । प्सर इति रूपनाम । देवस्याग्नेः रूपैः अतिशयेन युक्तम् । अशेषाग्निरूपप्रकाशनमित्यर्थः । हव्या जुह्वानः प्रक्षिपन् । आसनि आत्मीय आस्ये । हवींषि भक्षयन्नित्यर्थः ॥ १

अथा ते अङ्गिरस्तमाग्ने वेधस्तम प्रियम् ।

वोचेम ब्रह्म सानसि ॥ २

अथशब्द आनन्तर्ये । अतोऽप्यनन्तरम् । अतः परमित्यर्थः । ते तव हे अङ्गिरस ऋषेरतिशयेन कारणभूत शरीरस्थितिहेतोर्वा अशितपीतस्य रसस्यातिशयेन कर्तः । हे अग्ने मेधावितम् । प्रियं वोचेम स्तुतिलक्षणं ब्रह्मेत्याशास्महे । चिरं संभजनीयं वा ॥ २

कस्ते॑ जा॒मिर्जना॑ना॒मग्ने॒ को दा॒श्व॑ध्वरः ।
को ह॒ कस्मि॑न्नसि श्रि॒तः ॥ ३

कस्तव जामिर्ज्ञातिः । यजमानानां मध्ये । हे अग्ने को दाश्वध्वरः दत्ताध्वरः । पूर्वमपि कृतयाग इत्यर्थः । को ह । हशब्दोऽत्र वार्थे । को वा । साकांक्षत्वात् प्रिय इति वाक्यशेषः । कस्मिन् वा यजमाने असि श्रितः आश्रितोऽसि । कस्तव ज्ञातिः कृतोपकारः प्रियो वा । कस्मिन्नाश्रितोऽसि येन निरुद्धोऽस्मद्यज्ञं नाधिगच्छसीति आगमनविलम्बनादुपालम्भोऽयम् ॥ ३

त्वं जा॒मिर्जना॑ना॒मग्ने॑ मि॒त्रो अ॑सि प्रि॒यः ।
सखा॒ सखि॑भ्य॒ ईड्यः॑ ॥ ४

त्वं ज्ञातिस्सर्वयजमानानाम् । हे अग्ने मित्रो असि मित्रश्चासि । प्रियश्च सखा च । सखिभ्यः । षष्ठ्यर्थे चतुर्थ्येषा । सखीनां च ईड्यः स्तुत्यः ॥ ४

यजा॑ नो मि॒त्रावरु॑णा॒ यजा॑ दे॒वाँ ऋ॒तं बृ॒हत् ।
अग्ने॒ यक्षि॒ स्वं दम॑म् ॥ ५

यज नोऽस्माकमर्थाय । मित्रावरुणौ । यज अन्यानपि देवान् । ऋतं सत्यं बृहत् महत् । सुष्ठित्यर्थः । अग्ने यक्षि स्वं दमं उपशमं गृहं वा । दमशब्देन तद्गतोऽग्नेरेव याग उच्यते । उपशमवन्तमात्मानं यज्ञगृहादिगृहवन्तं वा यजेत्यर्थः ॥ ५

---

का त॒ उपे॑ति॒र्मन॑सो॒ वरा॑य॒ भुव॑दग्ने॒ शंत॑मा॒ का म॑नी॒षा ।
को वा॑ य॒ज्ञैः परि॒ दक्षं॑ त आप॒ केन॑ वा ते॒ मन॑सा दाशेम ॥ १

का तव उपेतिरुपगतिः । मनसो वराय । वरशब्दः श्रेष्ठवचनः । षष्ठ्यर्थे चैषा चतुर्थी । श्रेष्ठस्य भुवत् भवति । हे अग्ने शन्तमा सुखतमा । का वा मनीषा स्तुतिः ।

कयोपगत्यापगन्तव्यमानः स्तुत्या वा स्तूयमानस्त्वं मनसा प्रीयस इत्यर्थः । को वा यजमानः यज्ञैः दक्षं ते । दक्षशब्दोऽत्रात्मवचनः ।

श्रेयांसं दक्षं मनसा जगृभ्यात् । ऋ. वे. १०. ३१. २.

इति यथा । मनोवचनो वा ।

चित्तिं दक्षस्य सुभगत्वमस्मे । ऋ. वे. २. २१. ६.

इति यथा । तवात्मानं मनो वा पर्याप सर्वतो व्याप्नोति । केन वा ते मनसा दाशेम हवींषि ददामः । एतत्सर्वं कथय । सुखं वयं ज्ञात्वा कुर्म इत्यर्थः ॥ १

एह्यग्न इह होता नि षीदादब्धः सु पुरएता भवा नः ।
अवतां त्वा रोदसी विश्वमिन्वे यजा महे सौमनसाय देवान् ॥ २

एहि हे अग्ने । आगत्य च इहास्मद्यज्ञे होता निषीद । निषद्य च अदब्धः अहिंसितः केनचित् । सुष्ठु पुरएता सर्वकर्मस्वग्रतो गामी । भव नः । पुरएतारं च भवन्तं अवतां त्वा रोदसी विश्वमिन्वे सर्वव्यापिन्यौ । यज च महे सौमनसाय सौमनस्यायास्माकं देवान् ॥ २

प्र सु विश्वान् रक्षसो धक्ष्यग्ने भवा यज्ञानामभिशस्तिपावा ।
अथा वह सोमपतिं हरिभ्यामातिथ्यमस्मै चकृमा सुदाव्ने ॥ ३

सुष्ठु विश्वान् रक्षसः प्रधक्षि प्रदह हे अग्ने । भव अस्माकं यज्ञानामभिशस्तिपावा हिंसितुः हिंसातो वा रक्षिता । अथानन्तरं चावह सोमपतिमिन्द्रं हरिभ्याम् । किं कारणम् । उच्यते । वयमातिथ्यमस्मै चकृम कुर्मः सुदाव्ने शोभनदात्रे ॥ ३

प्रजावता वचसा वह्निरासा च हुवे नि च सत्सीह देवैः ।
वेषि होत्रमुत पोत्रं यजत्र बोधि प्रयन्तर्जनितर्वसूनाम् ॥ ४

प्रजननं प्रजाः । तद्वता । अतिशयवद्देवतागुणोत्पादनशक्तियुक्तेनेत्यर्थः । वचसा आह्वानवाक्येन । आसा । तात्स्थ्यात् ताच्छब्द्यम् । मञ्चाः क्रोशन्तीति यथा । आस्यस्थेन । स्वयमेवोच्चारितेन इत्यर्थः । वह्निः । प्रत्यक्षकृतोऽयं मन्त्रः । नचेदमामन्त्रणम् । अतो यत्तच्छब्दावध्याहृत्यैकवाक्यता नेया । यस्त्वं वह्निर्वोढा हविषां बलवान् वा सः आ च हुवे । व्यत्ययेनायं मध्यमस्य स्थाने उत्तमपुरुषः । आह्वय च देवान् । नि च सत्सि निषीद च इहास्मदीयायां वेद्याम् । आहूतैर्देवैस्सह । निषद्य च वेषि होत्रम् । वेति-

गत्यर्थः शुद्धोऽपि चात्र सोपसर्गार्थे द्रष्टव्यः। उपगच्छ होत्रनाम्। हौत्रं कुर्वित्यर्थः उत पोत्रं पोत्रकर्माणि वा। सर्वकर्माणीत्यर्थः। हे यजत्र यष्टः यष्टव्य वा। बुध्यस्व चास्मदीयाः स्तुतीरित्यर्थः। हे प्रयन्तः दातः। जनिनः उपायान्तरैश्चोपादयितः। वसूनां धनानाम्॥ ४

यथा विप्रस्य मनुषो हविर्भिर्देवाँ अयजः कविभिः कविः सन्।
एवा होतः सत्यतर त्वमद्याग्ने मन्द्रया जुह्वा यजस्व॥ ५

यथा मेधाविनो मनुष्यस्य हविर्भिर्देवानयजः मेधाविभिः ऋत्विग्भिः सह कविः सन्। एवमेव ममापि हे होतः अतिशयेन सत्य त्वमद्य हे अग्ने मन्द्रया। मदि स्तुतिमोदमदस्वप्नगतिषु। मोदयित्र्या जुह्वा। हूयमानत्वात् जुहूराहुतिरभिप्रेता। तया। यजस्व देवान्॥ ५

---

कथा दाशेमाग्नये कास्मै देवजुष्टोच्यते भामिने गीः।
यो मर्त्येष्वमृत ऋतावा होता यजिष्ठ इत्कृणोति देवान्॥ १

कथा केन प्रकारेण हवींषि दाशेम ददामाग्नये। का वास्मै एतदर्थाय। देवजुष्टा अस्य देवस्य प्रिया। अन्यैः स्तोतृभिः उच्यते। भामिने। भाम इति क्रोधनाम। स्तोतृणामुपरि क्रोधवते दीप्तिमते वा। गीः स्तुतिः कथयत भो स्तोतारः ऋषयो वा। सुखं ज्ञात्वा वयमपि तथा कुर्म इत्यर्थः। किं करोत्यग्निः। उच्यते। यो मर्त्येष्वमृत ऋतावा सत्यवान् यज्ञवान् वा। होता यजिष्ठः यष्टृतमः। इच्छब्दः पदपूरणः। कृणोति देवान्। यो मनुष्यलोके देवानाह्वयति इत्यर्थः॥ १

यो अध्वरेषु शंतम ऋतावा होता तमू नमोभिरा कृणुध्वम्।
अग्निर्यद्वेर्मर्ताय देवान्त्स चा बोधाति मनसा यजाति॥ २

यः अग्निरध्वरेषु शंतमः सुखतमः। ऋतावा होता। यज्ञेषु हौत्रं करोतीत्यर्थः। तमू। ऊकार एवार्थे। नमोभिर्नमस्कारैः अन्नैर्हविर्लक्षणैर्वा। तमेव आकृणुध्वं आत्माभिमुखं कुरुत हे मत्पुत्रा ऋत्विजो वा। कस्मात्। उच्यते। अग्निः यत् यस्मात् वेर्हवींषि गृहीत्वा गच्छति। मर्ताय मनुष्यस्यार्थाय देवान् प्रति। स चा बोधाति। च

शब्दो बोधातीत्यस्मात् परो द्रष्टव्यः । यस्माच्च सोऽग्निर्बोधयति च देवान् । किम् । सामर्थ्यात् स्तुतीः । देवान् स्तौतीत्यर्थः । मनसा यजाति चित्तेन च यजति । साद्रश्च देवान् यजतीत्यर्थः ॥ २

स हि क्रतुः स मर्यः स साधुर्मित्रो न भूदद्भुतस्य रथीः ।
तं मेधेषु प्रथमं देवयन्तीर्विश उप ब्रुवते दस्ममारीः ॥ ३

हिशब्दः पदपूरणः । सोऽग्निः कर्ता प्रज्ञानरूपो वा । स मर्यः मनुष्याकारः । स साधुः सानुग्रहचित्तः । कथम् । मित्रो न मित्र इव देवताविशेषः । अथवा मित्र इति व्यत्ययेन पुँल्लिङ्गता । मित्रमिव । यथा यद्यस्य मित्रं तत्तस्योपरि साधुः एवं सर्वस्योपरीत्यर्थः । भूत् भवति । अद्भुतस्य महतो यज्ञस्य । रथिर्नेता । तमेव मेधेषु यज्ञेषु । प्रथमं उत्कृष्टम् । देवयन्तीर्देवान् कामयमानाः । विशो ब्राह्मणादिमनुष्यजातयः । उपब्रुवते उपगम्य ब्रुवते यद्यद्विवक्षितम् । दस्मं दर्शनीयमुपक्षपयितारं वा तमसां शत्रूणां वा । कीदृश्यो विशः । उच्यते । आरीः । अर्तेर्वा गत्यर्थस्य आङ्पूर्वस्य वा रातेर्दानार्थस्येदं रूपम् । अभिगन्त्र्यः दात्र्यो वा हविषामित्यर्थः ॥ ३

स नो नृणां नृतमो रिशादा अग्निर्गिरोऽवसा वेतु धीतिम् ।
तना च ये मघवानः शविष्ठा वाजप्रसूता इषयन्त मन्म ॥ ४

सः नः अस्माकं स्वभूतानां नृणां नृतमो मनुष्याणां मध्ये प्रकृष्टो मनुष्यः । देवा अपि हि मनुष्याकारत्वात् मुनुष्या उच्यन्ते । रिशादाः रिशतामसि क्षेप्ता । हिंसतां प्रतिहिंसितेत्यर्थः । अग्निर्गिरः स्तुतीः । अवसा हविर्लक्षणेनान्नेन सह वेतु कामयताम् । धीतिं कर्म च यागाख्यम् । न च केवलानामस्माकम् । किं तर्हि । तना च । तनेति धननाम । हविर्लक्षणेन धनेन । अन्येऽपि ये मघवानो धनवन्तः सन्तः । शविष्ठाः । शवतिर्गतिकर्मा । अतिशयेनोपगन्तारः वाजप्रसूताः । षू प्रेरणे । लिप्सितेनान्नेन प्रेरिता । अन्नलाभार्थमित्यर्थः । इषयन्त । इषु गतौ । गमयति । उच्चारयतीत्यर्थः । मन्म । मन्यतेरर्चतिकर्मण इदं रूपम् । मननं स्तुतिं ये इषयन्ते तेषामपि गिरोऽवसा वेतु धीतिं चेत्येवं तच्छब्दमध्याहृत्य यच्छब्दो निराकांक्षीकर्तव्यः ॥ ४

एवाग्निर्गोतमेभिर्ऋतावा विप्रेभिरस्तोष्ट जातवेदाः ।
स एषु द्युम्नं पीपयत्स वाजं स पुष्टिं याति जोषमा चिकित्वान् ॥ ५

एवमस्माभिरग्निः गोतमेभिः ऋतावा विप्रेभिरस्तोष्ट स्तुतो जातवेदः जातप्रज्ञानः। स एषु द्युम्नं पीपयत्। एष्विति षष्ठ्यर्थे सप्तमी। द्युम्नमिति धननाम। सोऽग्निरेषामस्माकं धनं वर्धयतु। स एव वाजमन्नम्। स एव पुष्टिं याति। यातिरत्रान्तर्णीतण्यर्थो द्रष्टव्यः। लोडर्थे च लट्। यातु। दत्त्वित्यर्थः। जोषम्। जुषते हर्यति (निघ. २. ६) इति कान्तिकर्मसु पाठात् जोषशब्दोऽत्र कामवचनः। काममाचिकित्वान्। प्रार्थनां जानन्नित्यर्थः॥ ५

— ✢ —

अभि त्वा गोतमा गिरा जातवेदो विचर्षणे।
द्युम्नैरभि प्र णोनुमः॥ १

अभीत्युपसर्गः अभि प्र णोनुम इत्याख्यतेन संबध्यते। त्वां वयं गोतमनामानः गिरा हे जातवेदः विद्रष्टव्य द्युम्नैः धनैः यशोभिरन्नैर्वा हेतुभूतैः। धनादिलाभार्थमित्यर्थः। अभिप्रणोनुमः। नौतिरर्चतिकर्मा। यत्र पौनःपुन्येन उपसर्गाभ्यासः तत्र तत्सम्बन्धिनः क्रियापदस्याप्यभ्यासो द्रष्टव्यः। अभिप्रणोनुमोऽभिप्रणोनुम इति। अभ्यासे च भूयांसमर्थं मन्यन्ते यथाहो दर्शनीयाहो दर्शनीया (नि. १०. २.) इति। सुष्ठु पुनः पुनरभिष्टुम इत्यर्थः॥ १

तमु त्वा गोतमो गिरा रायस्कामो दुवस्यति।
द्युम्नैरभि प्र णोनुमः॥ २

उकारः पदपूरणः। य उक्तगुणोऽसि तं त्वा गोतमः गिरा रायस्कामः धनकामः परिचरति। स्तौतीत्यर्थः। परस्तु पाद आध्यात्मिकत्वात् बहुवचनयोगाच्च भिन्नं वाक्यम्। तेन तुल्यार्थत्वेऽप्यपुनरुक्तता॥ २

तमु त्वा वाजसातममङ्गिरस्वद्धवामहे।
द्युम्नैरभि प्र णोनुमः॥ ३

तं त्वा वाजसातमम्। षणु दाने। अन्नानां दातृतमं सुभर्तृतमं वा हविर्लक्षणानामन्नानाम्। अङ्गिरस्वत् हवामहे। आहूय च द्युम्नैरभि प्र णोनुमः॥ ३

तमु त्वा वृत्रहन्तमं यो दस्यूँरवधूनुषे।
द्युम्नैरभि प्र णोनुमः॥ ४

यो दस्यून् अनार्यानवधूनुषे । धूञ् कंपने । भयेन कंपयसि । तं त्वा वृत्रहन्तमं रहूगणाः द्युम्नैः ॥ ४

अवोचाम रहूगणा अग्नये मधुमद्वचः ।
द्युम्नैरभि प्र णोनुमः ॥ ५

वयं तावदवोचाम उक्तवन्तो वयं रहूगणाः रहूगणस्य पुत्राः । अग्नये मधुरं प्रीतिकरं स्तुतिलक्षणं वचः । इदानीमपि द्युम्नैरभि ॥ ५

---

हिरण्यकेशो रजसो विसारेऽहिर्धुनिर्वात इव ध्रजीमान् ।
शुचिभ्राजा उषसो नवेदा यशस्वतीरपस्युवो न सत्याः ॥ १

तृचो हिरण्यकेशादिरग्नये मध्यमाय वा ।

अयं तृचो हिरण्यकेशादिः मध्यमाय वा वैद्युताग्नये पार्थिवायैव वा पूर्वप्रकृताय । उज्ज्वलवर्णतया हिरण्यसदृशी दीप्तिर्यस्य स हिरण्यकेशोऽग्निः । रजस उदकस्य विसारे विगमनकाले । वृष्टिकाले इत्यर्थः । अहिर्धुनिः । अहिरिति मेघनाम । षष्ठ्यर्थे चैषा प्रथमा । मेघस्य धूनयिता कंपयिता । वृष्टिकाले वैद्युतोऽग्निर्वर्षितेत्यर्थः । कीदृशः । उच्यते । वात इव ध्रजीमान् । ध्रजिर्गतिकर्मा । गतिमान् । अत्यन्तशीघ्रगतिरित्यर्थः । शुद्धदीप्तिः । क इव उषसो नवेदाः यशस्वतीरपस्युवो न सत्याः । अपस्युवो नेति न शब्द उपमार्थीयः । शिष्टानि तूपमानभूतानां उषसां विशेषणानि । यथोषसः नवेदाः । मेधाविनामैतत् । व्यत्ययेन चात्रैकवचनम् । मेधाविन्यः । यशस्वतीः कीर्तिमत्यः हविर्लक्षणेन धनवत्यो वा । अपस्युवो यागकर्मकामाः । सत्याः अविसंवादिन्यः । शुचिभ्राजाः तद्वत् । अथवा नवेदा इत्येकवचननिर्देशादुपमेयस्याग्नेर्विशेषणं यशस्वतीरित्यादिगुणाः । यथोषसः शुचिभ्राजसः तद्वन्मेधावी अग्निः शुचिभ्राजाः । इत्येवं मध्यमेऽग्नौ योजना । पार्थिवे तु उदकं विसार्यते येन स रजसो विसारः यज्ञः । अहिरिति आङ्पूर्वस्य हि गताविंत्यस्य रूपम् । वृष्टिहेतौ यज्ञे पार्थिवोऽग्निराहवनीयात्मनागभावं गन्तेत्यर्थः । धुनिः कंपिता स्वयं भयेन वा कंपयिता शत्रूणाम् । शिष्टपदयोजना तु सदृशी ॥ १

आ ते सुपर्णा अमिनन्ताँ एवैः कृष्णो नोनाव वृषभो यदीदम् ।
शिवाभिर्न स्मयमानाभिरागात्पतन्ति मिहः स्तनयन्त्यभ्रा ॥ २

ते इति तादर्थ्ये चतुर्थी षष्ठी वा । तवार्थाय तव वा स्वभूतान् रसान् । सुपर्णाः । रश्मिनामैतत् । आदित्यरश्मयः । आ अमिनन्त । मीङ् हिंसायां । मर्यादया हिंसन्ति । आददत इत्यर्थः । एवैः अवनैः । गत्वा भुवं ततो रसानाददत इत्यर्थः । कृष्णो नोनाव वृषभः कृष्णवर्णश्च वर्षिता मेघः नोनाव । नोतिरत्र सामर्थ्याच्छब्दनार्थः । गर्जितलक्षणेन शब्देनात्यर्थं पुनःपुनर्वा शब्दयति । इदं जगत् । यदिशब्दस्तु पदपूरणो वा यदिशब्दश्रुतिसामर्थ्याद्वा पूर्वस्मिन् पादे तत इत्यध्याहार्यम् । कृष्णो नोनाव वृषभो यदि ततः सुपर्णाः अमिनन्तेति । यदि मेघो वर्षति गर्जति च ततो रसान् रश्मय आददत इत्यर्थः । उत्तरोऽर्धर्चः परोक्षकृतो भिन्नं वाक्यम् । शिवाभिर्न स्मयमानाभिः । शिवमिति सुखनाम । स्मित ईषद्धसने । यथा कश्चित्सुखाभिः हसतीभिः स्त्रीभिः सहागच्छेत्तद्वत् मध्यमोऽग्निरद्भिस्सह क्रीडमानः आगादागच्छति । अन्तरिक्षे अस्मान् वा प्रति पतन्ति च । मिहः सेक्त्र्यो वृष्टिलक्षणा आपः । स्तनयन्ति चाभ्राणि ॥ २

कदा कस्माद्वा । उच्यते ।

यदीमृतस्य पयसा पियानो नयन्नृतस्य पथिभी रजिष्ठैः ।
अर्यमा मित्रो वरुणः परिज्मा त्वचं पृञ्चन्त्युपरस्य योनौ ॥ ३

यद्यदा यस्माद्वा ईम् । ईंशब्दोऽत्रायमित्यस्यार्थे । अयं मध्यमोऽग्निः । ऋतस्यादित्यस्य । पयसा उदकेन । रश्म्याहृतेनोदकेनेत्यर्थः । पियानः वर्धमानः । नयन् । हेतावयं शतृप्रत्ययः । प्रयोजनस्य च हेतुत्वेन विवक्षा । भुवं प्रति नेतुमित्यर्थः । किम् । ऋतस्य । उदकनामैतत् । द्वितीयार्थे च षष्ठी । वृष्टिलक्षणमुदकम् । पथिभिः रजिष्ठैः ऋजुतमैः । न च केवलोऽयम् । किं तर्हि । अर्यमा मित्रः वरुणः परिज्मा सर्वतोगामी । त्वचं पृञ्चन्ति । त्वचात्रैकदेशेन कृत्स्नशरीरं लक्ष्यते । पृचिरत्र सामर्थ्याद्वधार्थः । शरीरं घ्नन्तीत्यर्थः । कस्य । उपरस्य मेघस्य । योनौ अन्तरिक्षैकदेशभूते स्थाने । अथवा योनिरित्युदकनाम । निमित्तात् कर्मसंयोगे (वा. २. ३. ३६-६) इत्येषा सप्तमी । चर्मणि द्वीपिनं हन्तीति यथा । उदके निमित्ते । उदकार्थमित्यर्थः । यदा यस्माद्वा अयं मध्यमोऽग्निर्मित्रादयश्च त्वचं पृञ्चन्त्युपरस्य तदा तस्माद्वा शिवाभिर्न स्मयमानाभिरागादित्येवमस्या ऋचः पूर्वस्या उत्तरार्धर्चेनैकवाक्यता । एवमनयोर्ऋचोर्मध्यमेऽग्नौ योजनम् । पार्थिवे तु आ ते सुपर्णा इति सुपर्णशब्दो रश्मिसादृश्यात् सुपतनाद्वा ज्वाला उच्यन्ते । आमिनन्तेत्यपि भक्षणं हिंसाभिप्रेता । कृष्णो नोनाव वृषभो

यदीदमिति च यदिशब्दात् पूर्ववत्तत इत्यध्याहार्यम् । यदि कृष्णवर्णो वर्षिता मेघो नानावेदं जगत् यदि च शिवाभिर्न स्मयमानाभिरागात् मध्यमः यदि च पतन्ति मिहः स्तनयन्ति अभ्राणि ततस्ते तव स्वभूताः सुपर्णाः आ अमिनन्त मर्यादया हिंसन्ति भक्षयन्ति । किम् । सामर्थ्यात् हवींषि । एवैः हवींषि प्रति गमनैः । यदि देवो वर्षति ततो मनुष्येषु यजत्सु तव ज्वालाः सर्वतो व्याप्य हवींषि निःसंशयं दहन्तीति समस्तार्थः । योऽहं किं करोमि । उच्यते । यदि मृतस्येत्यादि । यदिति व्यत्ययेन नपुंसकता । यो भवानृतस्य पयसा । ऋतशब्दोऽत्र यज्ञवचनः । यज्ञसंबन्धिना हविर्लक्षणेनान्नेन पियानः वर्धमानः । नयंश्च हविर्देवान् प्रति । ऋतस्य यज्ञस्य पथिभिः रजिष्ठैः । अर्यमा मित्रो वरुणश्च परिज्मा । प्रदर्शनार्थं चात्र अर्यमादिग्रहणम् । सर्वे च देवा इत्यर्थः । त्वचः पृञ्चन्ति शरीराणि संपर्चयन्ति । भवांश्च गृहीतहविष्को देवांश्च परस्परतः संपृच्यन्ते इत्यर्थः । क । उच्यते । उपरस्य योनौ । उपरि वर्तित्वादुपरो देवलोक इहाभिप्रेतः । तस्यैकदेशभूते स्थाने । स्वर्गे इत्यर्थः । यो भवानर्यमादयश्च त्वचं पृञ्चन्ति उपरस्य योनौ तस्य ते सुपर्णा अमिनन्तेत्येवं यच्छब्दश्रुतेस्तच्छब्दमध्याहृत्य पूर्वयर्चैकवाक्यता योज्या ॥ ३

अग्ने वाजस्य गोमत ईशानः सहसो यहो ।
अस्मे धेहि जातवेदो महि श्रवः ॥ ४

हे अग्ने वाजस्य गोमतः गोभिः सहितस्य ईशानः । हे सहसः यहो बलस्य पुत्र । बलेन मथ्यमानोऽग्निर्जायते इति बलस्य पुत्र उच्यते । अस्मे अस्मभ्यम् । धेहि देहि । हे जातवेदः जातप्रज्ञान । महि श्रवः धनं अन्नं वा ॥ ४

स इधानो वसुष्कविरग्निरीळेन्यो गिरा ।
रेवदस्मभ्यं पुर्वणीक दीदिहि ॥ ५

य उक्तगुणोऽसि स इधानो दीप्यमानः । वसुः प्रशस्यो धनवान् वा । कविर्मेधावी । अग्निः सर्वैः स्तोतृभिः स्तोतव्यः । गिरा स्तुत्या । परस्तु पादः प्रत्यक्षकृतत्वात् भिन्नं वाक्यम् । रेवत् धनसंयुक्तम् । धनं च ददत्वित्यर्थः । अस्मभ्यं मदर्थं हे पूर्वणीक । पुरु इति बहुनाम । अनीकमिति च लोके खड्गस्य मुखमुच्यते । इह तीक्ष्णाग्रत्वादेस्तत्सादृश्यात् ज्वाला उच्यते । बहुखड्गमुखसदृश बहुज्वालासमूह दीदिहि दीप्यस्व ॥ ५

क्षपो राजन्नुत त्मनाग्ने वस्तोरुतोषसः ।

स तिग्मजम्भ रक्षसो दह प्रति ॥ ६

क्षपेति रात्रिनाम । क्षपाया राजन् ईश्वर दीपयितर्वा आत्मनैव हे अग्ने उत वस्तोरह्नः हे राजन् उतोपसः । य उक्तगुणोऽसि सः हे तिग्मजंभ । जंभा दंष्ट्रोच्यते । ज्वालाश्चाग्नेर्दंष्ट्रास्थानीयाः । तीक्ष्णदंष्ट्रास्थानीयज्वाल । रक्षसो दह प्रति । प्रतिशब्दस्तूपसर्गो धात्वर्थानुवादी लम्बते प्रलम्बते इति यथा । अथवा प्रतिशब्दो लक्षणे कर्मप्रवचनीयः क्षपः वस्तोः उपसः इत्येतैः संबन्धयितव्यः । सर्वत्र च द्वितीयार्थे विभक्तिः । क्षपः रात्रीः प्रति । उत वस्तोः अह्नः प्रति । उतोषसः प्रति । रात्रिषु चाहनि च उषउदयवेलासु च रक्षसो दहेत्यर्थः । एवं च कृत्वा न आमन्त्रितनिमित्तत्वात् क्षप इत्येतस्य परांगवद्भावेनामन्त्रिताद्युदात्तत्वं प्रवर्तते ॥ ६

अवा नो अग्न ऊतिभिर्गायत्रस्य प्रभर्मणि ।

विश्वासु धीषु वन्द्य ॥ ७

अव पालयास्मान् हे अग्ने ऊतिभिः स्वैः पालनैः । क्व । गायत्रस्य प्रभर्मणि । गायत्रं नाम सामविशेषः साममात्रं वा गीयमानत्वात् । बिभर्तिः धारणार्थः । गायत्रं यत्र धार्यते न त्यजते । क्रियत इत्यर्थः । स गायत्रस्य प्रभर्मा सोमयागः । तत्र च । न सोमयाग एव केवले । किं तर्हि । विश्वासु धीषु सर्वेषु दर्शपूर्णमासादिषु कर्मसु हे वन्द्य ॥ ७

आ नो अग्ने रयिं भर सत्रासाहं वरेण्यम् ।

विश्वासु पृत्सु दुष्टरम् ॥ ८

नः अस्मदर्थं हे अग्ने रयिमाभर । अस्मभ्यं देहीत्यर्थः । सत्रासाहं सदा शत्रूणां अभिभवितारम् । वरणीयं उत्कृष्टम् । सर्वेषु संग्रामेषु दुष्टरम् । अवति तरति इति च वधकर्मसु पाठात् तरतिर्वधार्थः । दुर्हिंसम् । शत्रुभिः दुरपहरमित्यर्थः ॥ ८

आ नो अग्ने सुचेतुना रयिं विश्वायुपोषसम् ।

मार्डीकं धेहि जीवसे ॥ ९

अस्मभ्यं हे अग्ने सुचेतुना शोभनेनानुग्रहपरेण चित्तेन रयिं विश्वायुपोषसं सर्वस्मिन्नायुषि पोषकम् । यावज्जीवं पुष्टिकरमित्यर्थः । मार्डीकं । मृड सुखने । सुखयितारम् । धेहि आभिमुख्येन देहि जीवसे जीवनायास्माकम् ॥ ९

प्र पू॒तास्ति॒ग्मशो॑चिषे॒ वाचो॑ गोतमा॒ग्नये॑ ।

भर॑स्व सु॒म्नयु॒र्गिरः॑ ॥ १०

पूताः शुद्धा निर्दोषाः । तीक्ष्णदीप्तये वाचः हे गोतम । आत्मन एवायं अन्तरात्मन आमन्त्रणं प्रैषश्च । हे मदीयान्तरात्मन्नित्यर्थः । अग्नये प्रभरस्व प्रभर प्रापय । उच्चारयेत्यर्थः । सुम्नयुः सुखकामः सन् । गिरः स्तुतिरूपाः ॥ १०

यो नो॑ अग्ने ऽभि॒दास॒त्यन्ति॑ दू॒रे प॑दी॒ष्ट सः ।

अ॒स्माक॒मिद्वृ॒धे भ॑व ॥ ११

योऽस्मान् हे अग्ने अभिदासति उपक्षयति । अन्ति अन्तिके दूरे च । पदीष्ट सः । पदिरत्र शुद्धोऽपि सोपसर्गार्थो द्रष्टव्यः । विपद्यतां सः । विनश्यतु स इत्यर्थः । अस्माकं तु वृधे वृध्यै भव त्वम् । वृद्धिं कुर्वित्यर्थः ॥ ११

स॒ह॒स्रा॒क्षो विच॑र्षणिर॒ग्नी रक्षां॑सि सेधति ।

होता॑ गृणीत उ॒क्थ्यः॑ ॥ १२

अक्षिशब्देनात्राक्षिस्थानीयत्वात् ज्वाला उच्यन्ते । सहस्राक्षिस्थानीयज्वालः । विद्रष्टा अग्निः रक्षांसि सेधति । सेधतिरत्र सामर्थ्याद्धिंसार्थः । हिनस्ति । होता च सन् यज्ञेषु गृह्णीते स्तौति देवान् । उक्थ्यः प्रशस्यः ॥ १२

---

इ॒त्था हि सोम॒ इन्मदे॑ ब्र॒ह्मा च॒कार॒ वर्ध॑नम् ।

शवि॑ष्ठ वज्रि॒न्नोज॑सा पृथि॒व्या निः श॑शा॒ अहि॒मर्च॒न्ननु॒ स्व॒राज्य॑म् ॥ १

ऐन्द्रमुत्तरम् ।

उत्तरं सूक्तमैन्द्रं इन्द्रदैवतम् । हिर्यस्मादर्थे । यस्मादित्था अमुना वक्ष्यमाणेन प्रकारेण सत्यः वा । सोमे इत् मदे । यस्य च भावेन (पा. २. ३. ३७) इत्येषा सप्तमी । तच्छब्द-

श्रुतेश्च लक्षणभूतयोग्यक्रियापदाध्याहारः । स्तोमं मदकरे उपकल्पिते । ब्रह्मा चकार । ब्रह्मशब्दो ब्राह्मणशब्देन समानार्थः । आत्मन एवायं परोक्षरूपेण प्रथमपुरुषेण निर्देशः । अयं गोतमो नाम ब्राह्मणः होता वा करोति वर्धनं वृद्धिकरं स्तोमम् । यस्मादिति वचनात्तच्छब्दोऽध्याहार्यः । तस्मात् हे शविष्ठ वज्रिन । स्वेनौजसा । पृथिवीत्यन्तरिक्षनाम । अन्तरिक्षात् । निःशशाः । शश प्लुतगतौ । स्वान्तर्भावितण्यर्थः । निर्गमय । भूमौ पातयेत्यर्थः । कम् । उच्यते । अहिं मेघम् । वृष्टिमित्यर्थः । अर्चन्ननु । अर्च पूजायाम् । अनुपूजयन् स्वराज्यं आत्मीयं त्रैलोक्याधिपत्यम् । अग्निनानुग्रहेण ह्याधिपत्यं पूज्यते । कीदृशो हि सः प्रभुः यो नानुग्राहकः ॥　　१

स त्वा॑मद॒द्वृषा॒ मदः॒ सोमः॑ श्ये॒नाभृ॑तः सु॒तः ।
येना॑ वृ॒त्रं निर॒द्भ्यो ज॒घन्थ॑ वज्रि॒न्नोज॒सार्च॒न्ननु॒ स्व॒राज्य॑म् ॥　　२

स त्वा अमदत् । मद तृप्तौ । तर्पितवान् । वृषा वर्षिता । यत्सोमं पीत्वेन्द्रो वर्षति तदिदं सोम एवोपचर्यते । मदो मदकरः सोमः । श्येनाभृतः । अत्रैतरेयब्राह्मणाधीतमितिहासमाचक्षते । सोमो वै राजा अमुष्मिन् लोक आसीत् । तं देवा ऋषयश्चाभ्यध्यायन् कथमयमस्मान् सोमो राजा गच्छेदिति । तेऽब्रुवन् छन्दांसि यूयं न इमं सोमं राजानमाहरतेति । तानि तथेति प्रत्यपद्य सुपर्णरूपाणि भूत्वोदपतन्निति । तेषां जगति प्रथमोदपतत् । सा अर्धमध्वनो गत्वा श्राम्यत् । सा दक्षिणां तपश्चाहरत् न सोमम् । त्रिष्टुबुदपतत् । सा भूयोऽर्धादध्वनो गत्वा श्राम्यत्सा दक्षिणामाहरत् न सोमम् । अथ गायत्र्युदपतत् । सा गत्वा सोमपालान् भीषयित्वा पद्भ्यां च मुखेन च सोमं परिगृह्याहरत् (ऐ. ब्रा. ३. २५.) इति । तदेतदुच्यते श्येनभृत इति । श्येनरूपया गायत्र्या आभृतः श्येनाभृतः । सुतः अभिषुतः । यः कीदृशः सोमः । उच्यते । येन । हेतावियं तृतीया । येन हेतुना । यं पीत्वा पातुं वेत्यर्थः । वृत्रं मेघमभ्द्यः अपामर्थाय निजघन्थ निश्चयेन हंसि हतवान् वा । हे वज्रिन् स्वेन ओजसा । अर्चन्ननु स्वराज्यम् ।　　२

प्रे॒ह्य॒भी॑हि धृष्णु॒हि न ते॒ वज्रो॒ नि यं॑सते ।
इन्द्र॑ नृ॒म्णं हि ते॒ शवो॒ हनो॑ वृ॒त्रं जया॑ अ॒पोऽर्च॒न्ननु॒ स्व॒राज्य॑म् ॥　　३

प्रेहि प्रगच्छ । प्रगम्य च अभीहि अभिगच्छ । अभिगम्य च धृष्णुहि धर्षय अभिभव शत्रून् । किं कारणम् । यस्मात्ते तव वज्रो न नियंसते नियम्यते केनचित् ।

केनचिन्निरोद्धुं न शक्यत इत्यर्थः । किंच हे इन्द्र नृम्णं हि ते शवः यस्मान्नृम्णं शत्रुभूतानामपि मनुष्याणां नमनकरं तव बलं तस्मात् हनः जहि वृत्रम् । हत्वा च तदन्तर्भूता जयाः अपः । अर्चन्ननु स्वराज्यम् ॥ ३

निरिन्द्र भूम्या अधि वृत्रं जघन्थ निर्दिवः ।
सृजा मरुत्वतीरव जीवधन्या इमा अपोऽर्चन्ननु स्वराज्यम् ॥ ४

हे इन्द्र भूम्याः । अधि । अधिशब्दः अधिपरी अनर्थकौ (पा. १. ४. ९३) इत्येवं कर्मप्रवचनीयः पदपूरणः । षष्ठीनिर्देशाच्चार्थायेति वाक्यशेषः । भूम्या अर्थाय वृत्रं निर्जघन्थ निश्चयेन जहि । न च केवलाय भूम्या अर्थाय । किं तर्हि । निर्दिवः दिवोऽप्यर्थाय निर्जघन्थ । उभयोरपि देवमनुष्ययोरर्थायेत्यर्थः । अथवा भूम्या अधीत्यधिशब्दः उपरिभावे । योऽयं भूम्या दिवश्चोपरि अत्यन्तोच्चो मेघः तं निर्जगन्थ इति । निर्हत्य सृज मरुत्वतीरव अवसृज देहि मरुत्वतीः । दातृत्वेन मरुतो यासां सन्ति ता मरुत्वत्यः । त्वत्सखायो मरुतः ये दातुं समर्थाः नान्यः कश्चिदित्यर्थः । जीवधन्याः । धनमेव धन्यम् । स्वार्थिको यत्प्रत्ययः । सर्वजीवानां धनभूताः । अथवा धन्या इति धिनोतेः प्रीणनार्थस्य इदं रूपम् । सर्वजीवानां प्रीणयित्रीः । इमा आपो वृष्टिलक्षणाः । अर्चन्ननु स्वराज्यम् ॥ ४

इन्द्रो वृत्रस्य दोधतः सानुं वज्रेण हीळितः ।
अभिक्रम्याव जिघ्नतेऽपः सर्माय चोदयन्नर्चन्ननु स्वराज्यम् ॥ ५

इन्द्रो वृत्रस्य दोधतः । क्रुध्यतिकर्मायम् । क्रुध्यतः । सानुं समुच्छ्रितं प्रदेशम् । वज्रेण हीळितः क्रुद्धः सन् । अभिक्रम्य अवजिघ्नते हन्ति वृष्टिलक्षणा अपः सर्माय सरणाय भूमिं प्रति गमनाय चोदयन् । वृष्टिपातार्थमित्यर्थः । अर्चन्ननु स्वराज्यम् ॥ ५

अधि सानौ नि जिघ्नते वज्रेण शतपर्वणा ।
मन्दान इन्द्रो अन्धसः सखिभ्यो गातुमिच्छत्यर्चन्ननु स्वराज्यम् ॥ ६

अधीत्युपरि भावे । सानौ सानुनः समुच्छ्रितस्य प्रदेशस्य निजिघ्नते नियमेन मेघमत्यर्थं हन्ति । वज्रेण शतपर्वणा पर्वशतोपेतेनात्यन्तं हतेत्यर्थः । मन्दानः मोदमानः । तृप्यन्नित्यर्थः । कः । इन्द्रः । केन । अन्धसः । तृतीयार्थे षष्ठी । सोमलक्षणेन । कस्मान्निजिघ्नते । उच्यते । यस्मात् सखिभ्यः सखीनामर्थाय गातुं भूमिं प्रति गमनमिच्छति । कस्य । सामर्थ्याद्वृष्टिलक्षणानामपाम् । अर्चन् ॥ ६

इन्द्र तुभ्यमिदद्रिवोऽनुत्तं वज्रिन् वीर्यम् ।
यद्ध त्यं मायिनं मृगं तमु त्वं माययावधीरर्चन्ननु स्वराज्यम् ॥ ७

हे इन्द्र तुभ्यम् । षष्ठ्यर्थे चतुर्थ्येषा । तव हे अद्रिवः । अद्रयः सोमाभिषवग्रावाणः । तद्वन् । अथवा अद्रिर्मेघः । तेन हन्तव्येन तद्वन् । मेघानां हन्तरित्यर्थः । अनुत्तं अप्रेरितम् । अनभिभूतं वा केनचिदित्यर्थः । हे वज्रिन् वीर्यं सामर्थ्यम् । येन किं कृतम् । उच्यते । यद्धत्यम् । यत् त्यमिति विलिंगावपि समानाधिकरणौ । उभयत्र च तृतीयार्थे द्वितीया । हशब्दश्च पदपूरणः । येन तेन । मायिनं मृगं मृगनामानमसुरं मार्गणीयं वा मेघम् । तच्छब्दश्रुतेर्योग्यार्थसंबन्धो यच्छब्दोऽध्याहार्यः । यमन्ये नाशक्नुवन् हन्तुं तं त्वं स्वया मयया अवधीः । अर्चन् । ७

वि ते वज्रासो अस्थिरन् नवतिं नाव्या३ अनु ।
महत्त इन्द्र वीर्यं बाह्वोस्ते बलं हितमर्चन्ननु स्वराज्यम् ॥ ८

. ते तव स्वभूता वज्रा व्यस्थिरन् । विपूर्वस्तिष्ठतिर्गत्यर्थः । अगच्छन् । कं प्रति । उच्यते । नवतिं नाव्या अनु । अनुशब्दो लक्षणे कर्मप्रवचनीयः प्रतिशब्देन समानार्थः । नवतिं असुरपुरः प्रति । कीदृशीः । नाव्याः नावा तार्याः । सर्वत उदकेन परिक्षिप्ता इत्यर्थः । किंच महत्ते हे इन्द्र वीर्यम् । बाह्वोश्च ते बलं हितमाहितम् । स्वबाहुबलेनैव चासि बलवान् न सहायबलेनैत्यर्थः । कीदृशस्य । उच्यते । अर्चन् । ते इत्येतेन षष्ठ्यन्तेन सामानाधिकरण्यात् षष्ठ्यर्थे प्रथमैषा । अर्चतोऽनु स्वराज्यम् ॥ ८

सहस्रं साकमर्चत परि ष्टोभत विंशतिः ।
शतैनमन्वनोनवुरिन्द्राय ब्रह्मोद्यतमर्चन्ननु स्वराज्यम् ॥ ९

हे मदीयाः पुत्रपौत्राः ऋत्विजो वा सहस्रं सहस्रसंख्याकाः सन्तः साकं सह अर्चत स्तुत इन्द्रम् । परिष्टोभत विंशतिः । स्तोभतिरर्चतिकर्मा । विंशतिसंख्याकाः सन्तः परिष्टुत । सहस्रविंशतिसंख्याभ्यां चात्र संभवी संख्या लक्ष्यते । यावन्तः संभवथस्तावन्तः स्तुतेत्यर्थः । कस्मात् । उच्यते । शतैनमन्वनोनवुः बहूनि स्तोतृशतान्येनमिन्द्रमनु स्तुतवन्तः । यस्माच्च मयापीन्द्राय स्तुतिलक्षणं ब्रह्म उद्यतं उपकल्पितम् । कीदृशाय । अर्चन् । चतुर्थ्यर्थे प्रथमैषा । अर्चते नः स्वराज्यम् । अथवैवमन्यथाऽस्या ऋचोऽर्थयोजना । सहस्रमिति वसुरोचिषो नाम ऋषयः इहाभिप्रेताः । कुत एतत् ।

आयदिन्द्रश्च ददृहे सहस्रं वसुरोचिषः । ऋ वे ८. ३४. १६.

इति सहस्रसंख्याकत्वस्य तेषां प्रसिद्धत्वात् । इन्द्रस्तुतिकरत्वाच्च । अर्चत परिष्टोभतेत्येतदपि लडर्थे लोट् । व्यत्ययेन मध्यमपुरुषः । विंशतिरित्यंगिरसोऽभिप्रेताः । यद्यपि दशाङ्गिरस इति ऐतिहासिकाः स्मरन्ति तथापि बृहस्पत्यादिभ्रात्रपेक्षया विंशतिसंख्यावचनम् । सहस्रसंख्याका वसुरोचिषः विंशतिसंख्याकाश्चाङ्गिरसः महेन्द्रमस्तुवन्नित्यर्थः । शतैनमित्यपि वैखानसा नाम ऋषयोऽभिप्रेताः । ते हि प्रसिद्धशतसंख्याः । तथाच शौनकेन वक्ष्यते ।

पवस्वेत्यृषयः सूक्तं शतं वैखानसा विदुः ।

इति । शतसंख्याकाश्च वैखानसा एनमस्तुवन्नित्यर्थः । अन्यैरपि स्तोतृभिरिन्द्राय ब्रह्म उद्यतम् । अर्चन्ननु स्वराज्यम् ॥ ९

इन्द्रो॑ वृ॒त्रस्य॒ तवि॑षीं॒ निर॑हन्त्सह॑सा॒ सहः॑ ।
म॒हत्तद॑स्य॒ पौंस्यं॑ वृ॒त्रं ज॑घ॒न्वाँ अ॑सृज॒दर्च॒न्ननु॑ स्व॒राज्य॑म् ॥ १०

महत्तदस्य इति तच्छब्दाद्यच्छब्दोऽध्याहार्यः । येनेन्द्रो वृत्रस्य तविषीं सेनालक्षणं बलं निरहन् । सहसा बलेन । सहः शरीरबलं च । महत्तदस्य पौंस्यम् । किंच वृत्रं जघन्वान् घ्नन्निन्द्रः असृजत् सृजति विसृष्टवान् वा । किम् । सामर्थ्याद्वृष्टिलक्षणा आपः । अर्चन् । १०

इ॒मे चि॑त्तव॒ म॒न्यवे॒ वेप॑ते भि॒यसा॑ म॒ही ।
यदि॑न्द्र वज्रि॒न्नोज॑सा वृ॒त्रं म॒रुत्वाँ॒ अव॑धी॒रर्च॒न्ननु॑ स्व॒राज्य॑म् ॥ ११

इमे अपि तव मन्यवे । मन्युरिति क्रोधनाम । भियसेत्येतेन चास्य सम्बन्धः । तत्र च भीत्रार्थानाम् (पा. १. ४. २५) इत्यपादानत्वात् पञ्चम्यर्थे चतुर्थ्येषा । क्रोधात् भयेनैव कंपते । मही । द्यावापृथिवीनामैतत् । द्यावापृथिव्यौ । इमे अपि द्यावापृथिव्यौ भवतः क्रुद्धात् बिभ्यत्यौ कंपेते । किं पुनरन्ये प्राणिन इत्यर्थः । कदा । उच्यते । यद्यदा हे इन्द्र वज्रिन् । ओजसा वृत्रं मरुत्वान् मरुद्भिः सहितः अवधीः । अर्चन्ननुस्वराज्यम् ॥ ११

न वेप॑सा॒ न त॑न्य॒तेन्द्रं॑ वृ॒त्रो वि बी॑भयत् ।
अ॒भ्ये॑नं॒ वज्र॑ आय॒सः स॒हस्र॑भृष्टिराय॒तार्च॒न्ननु॑ स्व॒राज्य॑म् ॥ १२

वेप इति कर्मनाम । प्रत्युद्धरणादिना । नापि तन्यता स्तनयित्नुलक्षणेन शब्देन । इन्द्रं वृत्रो विबीभयत् भायितवान् । किं तर्हि । अभिनेनेन्द्रेण क्षिप्तः त्वं वृत्रं वज्रः आयसो लोहमयः गमनशीलो वा । सहस्रभृष्टिः । भृष्टिरश्रिरुच्यते । सहस्राश्रीः । आयत अभिगतै प्रासः । अभीत इन्द्रो वज्रं क्षिप्तवानेवेत्यर्थः । अर्चन्ननु स्वराज्यमित्येतत्तु वज्रस्य विशेषणम् । यच्चेन्द्रस्य स्वाराज्यार्चनं तत् तत्सम्बन्धिनो वज्रस्योपचर्यते । अथवार्चन्निति षष्ठ्यर्थे प्रथमा । अर्चनः स्वराज्यमिन्द्रस्य स्वभूतो वज्रः ॥ १२

यद्वृत्रं तव चाशनिं वज्रेण समयोधयः ।
अहिमिन्द्र जिघांसतो दिवि ते बद्बधे शवोऽर्चन्ननु स्वराज्यम् ॥ १३

यदा वृत्रं तवाशनिम् । वज्रेणाशनिशक्तिरिहोच्यते । तवेत्येतेन च व्यवहितोऽपि च वज्रो विशेष्यते नाशनिः । कुत एतत् । वज्रेण योधनासंभवान् इन्द्राशनेः । चशब्दश्चाशनिं इत्येतस्मात्परो द्रष्टव्यः । वृत्रमशनिं च तदीयां तव स्वभूतेन वज्रेण त्वमेव समयोधयः । सम्यग्योधितवान् । हतवानित्यर्थः । अथवा तवेत्येतेनाशनिरेव विशेष्यते । अशनिमिति तु तृतीयार्थे द्वितीया । यदा वृत्रं स्वभूतयाशन्या वज्रेण च त्वमेव समयोधय इति । यदेति वचनात्ततः प्रभृति अहिं हे इन्द्र जिघांसतः नित्यमेव हन्तुमिच्छतो दिवि ते बद्बधे । बध बन्धने । आबबन्ध । दिवं यावत्प्रख्यातता गतमित्यर्थः । किं तत् । उच्यते । शवः बलम् । अर्चन्निति तु शवसो विशेषणं इन्द्रस्य वा । यदि शवसः ततो व्यत्ययेन पुंल्लिङ्गत्वम् । अथेन्द्रस्य ततः षष्ठ्यर्थे प्रथमा । स्वराज्यमिच्छतस्तव शवः इति ॥ १३

अभिष्टने ते अद्रिवो यत्स्था जगच्च रेजते ।
त्वष्टा चित्तव मन्यव इन्द्र वेविज्यते भियार्चन्ननु स्वराज्यम् ॥ १४

अभिष्टनः स्तनयित्नुशब्दः । सप्तमी चात्र यस्यच भावेन (पा २ ३ ३७) इत्येवं द्रष्टव्या । तच्छ्रुतेश्च लक्षणभूतयोग्यक्रियापदाध्याहारः । स्तनयित्नुशब्दे प्रवृत्ते । ते तव स्वभूते हे अद्रिवः । अद्रिविकारत्वादद्रिर्वज्रः । तद्वन् । यत् स्थाः । यच्छब्दात्तच्छब्दोऽध्याहार्यः । यत् स्थावरं तच्च । जगच्च जंगमं च । रेजते बिभेति भयेन वा कंपते । न च केवलं स्थावरं जंगमं च । किं तर्हि । त्वष्टापि तव मन्योः क्रोधात् हे इन्द्र वेविज्यते । विजी भयचलनयोः । अत्यर्थं चलति । कंपत इत्यर्थः । भिया भयेन । त्वष्टृग्रहणं चात्र सर्वेषां देवानां प्रदर्शनार्थं द्रष्टव्यम् । देवा अपि तव क्रोधात् भयेनात्यर्थं कंपन्त इत्यर्थः । अर्चतोऽनुस्वराज्यम् ॥ १४

नहि नु यादधीमसीन्द्रं को वीर्या परः ।
तस्मिन्नृम्णमुत क्रतुं देवा ओजांसि सं दधुरर्चन्ननु स्वराज्यम् ॥ १५

नहीति निपातो न इत्यनेन समानार्थः । नु इति पदपूरणः । न वयं यात् । व्यत्ययेनात्र नपुंसकता द्वितीयायाश्च स्थाने प्रथमा । यान्तमिन्द्रं कंचिच्छत्रुं अधीमसि अधिगच्छाम । सर्वशत्रूणामुपरीन्द्रो याता न कश्चिदिन्द्रस्योपरि गन्तुं समर्थ इत्यर्थः वधार्थो वात्र यातिः ।

अहेर्यातारम् ॥ ऋ. वे १. ३२. १४.

इति यथा । न कश्चिदिन्द्रस्य हन्तारमधिगच्छाम इत्यर्थः । कस्मात् । उच्यते । यस्मादिन्द्रम् । पञ्चम्यर्थे द्वितीयैषा । इन्द्रात् । को वीर्या वीर्येण परः उत्कृष्टः । यस्माच्च तस्मिन्निन्द्रे नृम्णं धनमुत क्रतुं प्रज्ञां देवाः ओजांसि मरुदादिसेनालक्षणानि बलानि सम्यक् निहितवन्तः । अर्चन्ननु स्वराज्यम् । यस्मात् सर्वतो वीर्येणोत्कृष्टः धनप्रज्ञासेनाबलैश्चोपेत इत्यर्थः ॥ १५

यामथर्वा मनुष्पिता दध्यङ् धियमत्नत ।
तस्मिन्ब्रह्माणि पूर्वथेन्द्र उक्था समग्मतार्चन्ननु स्वराज्यम् ॥ १६

यां अथर्वा नाम ऋषिः मनुश्च पिता । कस्य । सामर्थ्यात् मानवानाम् । दध्यङ् धियं यागाख्यं कर्म अत्नत ततवन्तः । कृतवन्तः । तस्मिन् । स्त्रीलिङ्गधीःप्रतिनिर्देशार्थत्वात् व्यत्ययेनात्र पुँलिङ्गता । तस्यां ब्रह्माणि हविर्लक्षणान्यन्नानि । पूर्वथा पूर्वकर्मस्विव । इन्द्रे उक्था स्तोत्राणि च समग्मत संगतान्यभुवन् । कीदृशे इन्द्रे । उच्यते । अर्चन्ननुस्वराज्यम् । अथवा अथर्वादीनामपि महर्षीणां यागेषु हवींषि स्तोत्राणि च केवलेन्द्रविषयाण्यासन् । किं पुनरस्मद्विधानामिति समस्तार्थः ॥ १६

वलभीविनिवास्येतामृगर्थागमसंहृतिम् ।
भर्तृध्रुवसुतश्चक्रे स्कन्दस्वामी यथामति ॥

पञ्चमोऽध्यायः ॥

# अथ षष्ठोऽध्यायः ।

---

इन्द्रो मदा॑य वावृधे॒ शव॑से वृत्र॒हा नृभिः॑ ।

तमिन्म॒हत्स्वा॒जिषू॒तेमर्भे॑ हवामहे॒ स वाजे॑षु॒ प्र नो॑ऽविषत् ॥ १

चत्वार्यैन्द्राणि सूक्तानि ।

चत्वार्येतानीन्द्रदेवत्यानि । तमिन्महत्स्विति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहर्तव्यः । य इन्द्रो मदाय वावृधे स्तोमेन स्तुतिभिश्च वर्धते । शवसे बलाय च । वृत्रहा नृभिः यष्टृभिर्मनुष्यैः । तं वयं महत्स्वाजिषु सङ्ग्रामेषु उतार्भे अल्पे । हवामहे संग्रामे आह्वयामः । आहूतश्च सन् स वाजेषु संग्रामेषु प्र नोऽविषत् प्रकर्षेणास्मान् रक्षतु ॥ १

असि॒ हि वी॑र॒ सेन्यो॒ऽसि॒ भूरि॑ पराद॒दिः ।

असि॑ द॒भ्रस्य॑ चिद्वृ॒धो यज॑मानाय शिक्षसि सुन्व॒ते भूरि॑ ते॒ वसु॑ ॥ २

हिशब्दः पदपूरणः । असि भवसि त्वं हे वीर सेन्यः । स्वामिन्ययमिदमर्थे यप्रत्ययो द्रष्टव्यः । मरुदादिसेनानां पतिः । अथवा सेन्यशब्दोऽत्र सेव्यवचनः ।

असेन्या वः पणयो वचांसि । ऋ. वे १०. १०८. ६.

इति यथा । सेव्यः सर्वस्यासि । न कस्यचित्सेवक इत्यर्थः । असि भूरि परादादिः । पराशब्दोऽत्र सु इत्येतस्य स्थाने ।

यो अर्यो मर्तभोजनं परादद‌ति । ऋ. वे. १. ८१. ६.

इति यथा । बहुधनस्य सुष्ठु शोभनं वा दातासि । अथवा

मा नो मघेव निष्षपी परा दाः । ऋ. वे. १ १०४. ५.

इत्यादिषु दर्शनात् परादादातिः विनाशार्थः । बहुनोऽपि शत्रुबलस्य विनाशयितासीत्यर्थः । असि दभ्रस्य चिद्वृधः अल्पस्यापि स्वाश्रितस्य वर्धयितासि । यजमानाय शिक्षसि ददासि धनानि । सुन्वते सोमाभिषवं कुर्वते । भूरि ते वसु बहु धनम् । प्रभूतधनश्चासीत्यर्थः ॥ २

यदुदीरत आजयो धृष्णवे धीयते धना ।

युक्ष्वा मदच्युता हरी कं हनः कं वसौ दधोऽस्माँ इन्द्र वसौ दधः ॥३

यद्यदा उदीरते प्रेरयति उच्चारयति तव स्तुतीरित्यर्थः । के । आजयः । आजि शब्दः संग्रामवचनः । तात्स्थ्याच्चात्र ताच्छब्द्यं द्रष्टव्यं मञ्चाः क्रोशन्तीति यथा । संग्रामस्था योद्धारः । धृष्णवे अभिभवित्रे च योद्ध्रे । धीयते धना । द्वितीयैकवचनस्यायं आकार आदेशः । धनम् । अथवैवमन्यथास्यार्धर्चस्यार्थयोजना । यदोदीरते उदीर्यन्ते उच्चारयन्त्वित्यर्थः । आजयः । अजेर्गत्यर्थस्येदं रूपम् । त्वां प्रति गन्त्र्यः स्तुतयः । धृष्णवे च तुभ्यं धीयते धना । धिनोतेः प्रीणनार्थस्य रूपम् । धना आहुतिरिहाभिप्रेता । प्रीणयित्री सोमाहुतिरित्यर्थः । यदेति वचनात्तदेत्यध्याहार्यम् । तदा युक्ष्व स्वरथे नियुङ्क्ष्व । मदच्युता । च्यवतिर्गतिकर्मा । मदकरं सोमं प्रति गन्तारौ हरी युंक्ष्व च । आगत्य कं हनः कं वसौ दधः । कञ्चिज्जहि कञ्चिद्धने स्थापय । यो हन्तव्यस्तं जहि यस्मै धनं दातव्यं तस्मै धनं देहीत्यर्थः । तत्र चास्मानिन्द्र वसौ दधः ॥ ३

क्रत्वा महाँ अनुष्वधं भीम आ वावृधे शवः ।

श्रिय ऋष्व उपाकयोर्नि शिप्री हरिवान्दधे हस्तयोर्वज्रमायसम् ॥ ४

क्रत्वा कर्मणा महाननुष्वधम् । अन्विति पश्चाद्भावे । स्वधेत्यन्ननाम । सोमलक्षणस्यान्नस्य पश्चात् । सोमपानानन्तरमित्यर्थः । भीमः भयानकः । आवावृधे आभिमुख्येन वर्धयति । आत्मीयं शवः । सोमं पीत्वा बलवान् भवतीत्यर्थः । श्रिये श्रयर्थं च । ऋष्वा वीर्येण शरीरेण वा महान् । कस्य श्रयर्थम् । उच्यते । उपाकयोः । उपाक इत्यन्तिकनाम । अत्र तु तात्स्थ्यात् द्यावापृथिव्योर्वर्तते । अन्तिकस्थयोः द्यावापृथिव्योः । कस्य पुनः द्यावापृथिव्यावान्तिकस्थे । इन्द्रस्य । तथाह्यसौ ते उभे अपि क्षणेनैकेन सञ्चरते । अथवा परस्परस्यान्तिकस्थे द्यावापृथिव्यौ । यावद्धि मक्षिकायाः पत्रं तावत् द्यावापृथिव्योरन्तरं इत्युपनिषद्विदः पौराणिकाश्चाचक्षते । तेनोपपन्नमनयोः परस्परान्तिकस्थानत्वम् । शिप्री । शिप्रे हनू नासिके वा । (नि. ६. १७) तद्वान् । अथवा ।

शिप्राः शीर्षसु वितताः । ऋ. वे. ५. ५४. ११.

इति प्रयोगदर्शनात् शिप्राशब्दः शिरस्त्राणवचनः । तद्वान् शिप्री । हरिवानिन्द्रः निदधे निधत्ते स्थापयति । हस्तयोर्वज्रमायसम् । इन्द्रो हि वृष्ट्यर्थं हस्ताभ्यां वज्रं

गृह्णाति । वृष्ट्युत्तरकालं हि द्यौर्विमला संपन्नसस्या च पृथिवी श्रीमत्यौ भवतः । अत एतदुच्यते श्रिय ऋष्व उपाकयोः इति ॥ ४

आ पप्रौ पार्थिवं रजो बद्बधे रोचना दिवि ।

न त्वावाँ इन्द्र कश्चन न जातो न जनिष्यतेऽति विश्वं ववक्षिथ ॥ ५

आपूरयति पार्थिवं रजो लोकम् । केन । सामर्थ्याद्वृष्टिद्वारेण । बद्बधे बध्नाति । रोचना दीप्तानि नक्षत्रादीनि । क्व । द्युलोके । नक्षत्रादीनां हि दिवि व्यवस्थितानां धर्मो मूलम् । स च वृष्टिमूलम् । अत इदमुच्यते । बद्बधे रोचना दिवि इति । तदेतत् गोसूक्ती चाश्वसूक्तीच वक्ष्यतः ।

इन्द्रेण रोचना दिवो दृळ्हानि । ऋ. वे. ८. १४. ९.

इति । अथवा बद्बधे रोचनेति आदित्योऽत्र रोचनोऽभिप्रेतः । द्वितीयैकवचनस्यायमाकारादेशः । महत्तमस्तन्वन्तं वृत्रं हत्वा दर्शनार्थं दिवि सूर्यमारोपितवानित्यर्थः । तदेतत् सव्येनाप्युक्तं ।

वृत्रं यदिन्द्र । ऋ वे. १. ५१. ४.

इत्यादिना । परोऽर्धर्चः प्रत्यक्षकृतत्वात् भिन्नं वाक्यम् । न त्वावान् । इदानीं तावत् हे इन्द्र कश्चिदपि न पूर्वस्मिन् काले जातः । नाप्यागामिकाले जनिष्यते । किं तर्हि । अति विश्वं ववक्षिथ । अतीत्युपसर्गात् विश्वमिति कर्मश्रुतेर्योग्यक्रियापदाध्याहारः । विवक्षिथेत्यपि च यद्यपि वक्तेर्वा वहतेर्वा साभ्यासस्य रूपं तथापि विवक्षिथ विवक्षस इति महन्नामसु पाठाद्वचनवहनयोश्चासंभवात् अनेकार्थतायाश्च धात्वन्तराणामपि प्रसिद्धत्वात् ववक्षतिर्महद्भावार्थः । अतीत्य सर्वास्त्वं महान् भवसीत्यर्थः ॥ ५

यो अर्यो मर्तभोजनं पराददाति दाशुषे ।

इन्द्रो अस्मभ्यं शिक्षतु वि भजा भूरि ते वसु भक्षीय तव राधसः ॥६

यो अर्य ईश्वरः । मर्तभोजनम् । भोजनमिति धननाम उपभोग्यशब्दपर्यायो वा । मनुष्योपभोग्यं धनं मनुष्योपभोग्यं वान्नादि । पराददाति । परेत्येष सु इत्येतस्य स्थाने । सुष्ठु ददाति । दाशुषे यजमानाय । यच्छब्दात्तच्छब्दश्चाध्याहार्यः । स इन्द्रोऽस्मभ्यमपि शिक्षतु ददातु । वयमपि हि दाश्वांस एवेत्यर्थः । परस्तु ऋक्शेषः प्रत्यक्षकृतत्वात् भिन्नं वाक्यम् । विभजात्मीयं धनं स्तोतृभ्यो यष्टृभ्यश्च । कस्मात् । उच्यते । यस्मात् भूरि ते वसु । प्रभूतं तव धनम् । तस्मिंश्च विभागेऽहमपि भक्षीय

भजेय । लभेयेत्यर्थः । तव स्वभूतस्य राधसः । षष्ठीनिर्देशादेकदेशमिति शेषः । विभजमानो मह्यमपि भागं देहीत्यर्थः ॥ ६

मदेमदे हि नो ददिर्यूथा गवामृजुक्रतुः ।

सं गृभाय पुरू शतोभयाहस्त्या वसु शिशीहि राय आ भर ॥ ७

मद इति यस्य भावेन (पा. २. ३. ३७.) इत्येवमियं सप्तमी । तच्छ्रुतेश्च लक्षणभूतयोग्यक्रियाध्याहारः । मदे मदे प्राप्ते । सोमेन मत्तो मत्तस्सन्नित्यर्थः । हिशब्दस्तु पदपूरणः । नः अस्मभ्यं ददिः दाता । यूथा यूथानि गवाम् । बह्वीर्गा इत्यर्थः । ऋजुक्रतुः ऋजुकर्मा ऋजुप्रज्ञो वा इन्द्रः । परोऽर्धर्चो भिन्नं वाक्यम् । अतो यच्छब्दतच्छब्दावध्याहृत्यैकवाक्यता योज्या । यस्त्वं ददिः यूथा गवां स संगृभाय सम्यक् गृहाण । पुरू शता बहूनि शतानि । उभयाहस्त्या उभाभ्यां हस्ताभ्याम् । कस्य पुरू शता । उच्यते । वसु । षष्ठ्यर्थे प्रथमैषा । वसूनां धनानाम् । गृहीत्वा च शिशीहि । श्यतिः संस्कारार्थः । संस्कुरु । दानयोग्यानि कुर्वित्यर्थः । संस्कृत्य च रायः धनानि आभर आहर । देह्यस्मभ्यमित्यर्थः ॥ ७

मादयस्व सुते सचा शवसे शूर राधसे ।

विद्मा हि त्वा पुरूवसुमुप कामान्त्ससृज्महेऽथा नोऽविता भव ॥ ८

मादयस्व तृप्यस्व सुते सचा सह । सर्वैर्ऋत्विग्भिरभिषुतेऽस्मिन् सोमे । अथवा सचेत्येतन्मादयस्वेत्येतेन संबध्यते । सह तृप्यस्व । केन । सामर्थ्यात् स्वसखैर्मरुद्भिः । किमर्थम् । उच्यते । शवसे । हे शूर राधसे च । आत्मनो बलं प्राप्तमस्मभ्यं च धनं दातुमित्यर्थः । किंच विद्मा हि त्वा । हिशब्दो यस्मादर्थे । यस्माज्जानीमः । तं पुरूवसुं बहुधनम् । यस्मादिति वचनात्तस्मादित्यध्याहार्यम् । तस्मात् कामानुपसस्सृज्महे उपसृजामः त्वयि निक्षिपामः । यावत्किंचिद्याच्यं तत् सर्वं त्वां याचामह इत्यर्थः । यतश्चैतदेवम् अथ एतस्मात्कारणान्नः अस्माकमविता तैस्तैर्धनैस्तर्पयिता भव । तानि धनानि देहीत्यर्थः ॥ ८

एते त इन्द्र जन्तवो विश्वं पुष्यन्ति वार्यम् ।

अन्तर्हि ख्यो जनानामर्यो वेदो अदाशुषां तेषां नो वेद आ भर ॥ ९

एते ते तव । साकांक्षत्वात् प्रसादेनेति वाक्यशेषः । तव वा स्वभूताः हे इन्द्र जन्तवः मनुष्याः । विश्वं पुष्यन्ति वार्यम् । वारीत्युदकनाम । तत्र भवम् । यावत्

किंचिदुदकभवं तत् सर्वं त्वत्प्रसादात् वृष्ट्या पुष्यन्तीत्यर्थः । किंच अन्तशब्दोऽत्र तात्स्थ्यात् अन्तस्थे मनसि वर्तते । हिशब्दो यस्मादर्थे । ख्य इति चष्टेः पश्यतिकर्मणः ख्यादेशः । यस्मादस्यन्तरस्थं नः अन्तर्यं पश्यसि । भक्तानां जानासीत्यर्थः । यस्मादिति वचनात्तस्मादित्यध्याहार्यम् । तस्मात्तेषां अभागुणं स्वभूतं नः अस्माकं अर्थाय वेदो धनमाभर । अभक्तानां धनमाहृत्य भक्तेभ्यः अस्मभ्यं देहीत्यर्थः ॥ ९

---

उपो षु शृणुही गिरो मघवन्मातथा इव ।
यदा नः सूनृतावतः कर आदर्थयास इद्योजा न्विन्द्र ते हरी ॥ १

उपेत्युपसर्गश्रुतेर्योग्यक्रियापदाध्याहारः । उपगम्य सुष्ठु शृणुहि अस्मदीया गिरः । हे मघवन् मा अतथा इव । ननु विस्तारे । आगमनविषयश्चात्र विस्तारोऽभिप्रेतः नान्यः । मागमनविस्तारं कार्षीः । शीघ्रमागच्छ मा विलम्बिष्ठा इत्यर्थः । इवशब्दस्तु अस्त्युपमार्थस्य संप्रत्यर्थे प्रयोगः (नि. ७ ३१) इति पदपूरणः । यदा नः अस्मान् सूनृतावतः । सूनृतेत्यन्ननाम । अन्नवतः । करः करिष्यसि । यदास्मभ्यमन्नं दास्यसीत्यर्थः । आत् तदा । इच्छब्दस्तु पदपूरणः । अर्थयासे प्रार्थयेथाः । किम् । सामर्थ्याद्धविः । इदानीं तु निर्धनानामस्माकं स्तुतीरेव केवलाः शृण्वित्यर्थः । तदर्थं योज रथे नियुंक्ष्व । नु क्षिप्रं हे इन्द्र ते तव स्वभूतौ योग्यौ वा हरी ॥ १

अक्षन्नमीमदन्त ह्यव प्रिया अधूषत ।
अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी ॥ २

अक्षवृद्धिश्राद्धिकश्रावणेऽस्या ऋचो विनियोगः । अक्षन्निति अदेर्भक्षणार्थस्यायं लुङि घस्लादेशः । वृद्धिश्राद्धान्नं भक्षितवन्तः अमीमदन्त हि । मादयतिस्तृप्त्यर्थः । हिशब्दस्तु पदपूरणः चार्थे वा तृप्ताश्च । के । सामर्थ्यात् पितरः । कीदृशाः । प्रियाः इष्टाः । कस्य । सामर्थ्यादस्माकं भवतो वेन्द्रस्य वा । अधूषत । धूञ् कंपने । कंपितवन्तश्च । किम् । अतितृप्त्या वा स्वगात्रं अस्मान् वा । परिचर्यावैगुण्यभयेन सुष्ठाध्माताः यत्नेन वास्माभिः परिचरिता इत्यर्थः । अस्तोषत स्तुताश्चास्माभिः स्वभानवः स्वदीप्तयः । अपराश्रयविभूतय इत्यर्थः । विप्राः मेधाविनः । नविष्ठया मती । मन्यतिरर्चतिकर्मा । नवतमया स्तुत्या । कृतवृद्धिश्राद्धा यागयोग्या इति समस्तार्थः । एतत् ज्ञात्वास्मद्यज्ञमागन्तुं योज । अथवैवमन्यथास्या ऋचोऽर्थयोजना । अक्षन्नमीमदन्त च

प्रियः नव । के । सामर्थ्यात्त्वदनुचरा मरुदादयः । मादयित्वा अवाधूषत भयेन कंपितवन्तः शत्रून् । अस्तोषत स्तुताश्चास्माभिः स्वभानवः विप्राश्च । अथवाऽयमात्मन एव परोक्षरूपेण प्रथमपुरुषेण निर्देशः । स्तुवन्तश्च वयं भवन्त इत्यर्थः । स्वभानवः भवत्प्रसादादपराश्रयविभूतयः । विप्राश्च । सानुचरस्य भवतो वयं यागं स्तुतीश्च कृतवन्तः इति समस्तार्थः । एतत् ज्ञात्वा स्वगृहं गन्तुं योज ॥ २

सुसन्दृशं त्वा वयं मघवन् वन्दिषीमहि ।

प्र नूनं पूर्णवन्धुरः स्तुतो याहि वशाँ अनु योजा न्विन्द्र ते हरी ॥ ३

सुखं शोभनो वा यः सन्दृश्यते स सुसन्दृक् । तं सुसन्दृशं त्वां वयं हे मघवन् वन्दिषीमहि । स्तुतवन्त इत्यर्थः । एतत् ज्ञात्वा नूनं निश्चयेन । पदपूरणो वा नूनंशब्दः । पूर्णवन्धुरः । रथस्य सारथिस्थानं वन्धुर उच्यते । तत् पूर्णं यस्य स पूर्णवन्धुरः । मातलिना स्वसारथिनाधिष्ठितरथ इत्यर्थः । स्तुतः सन् अस्माभिः प्रयाहि वशान् अनु । वशकान्तौ । कान्तान् देशान् प्रति । यत्रेष्टं तत्रेत्यर्थः । मा विलम्बिष्ठाः । किं तर्हि । योज ॥ ३

स घा तं वृषणं रथमधि तिष्ठाति गोविदम् ।

यः पात्रं हारियोजनं पूर्णमिन्द्र चिकेतति योजा न्विन्द्र ते हरी ॥ ४

घ इति पदपूरणः एवार्थे वा । स एव तम् । तच्छब्दश्रुतेर्योग्यार्थसंबन्धो यच्छब्दोऽध्याहर्तव्यः । यस्तवात्मन आरोहणः तं वृषणं वर्षितारं रथमधितिष्ठाति । त्वत्प्रसादात्त्वदनुचरभूतः सन् आरोहति । गोविदं साक्षादिमतीनां गवामुदकानां वा लब्धारम् । किं करोति । उच्यते । यः पात्रं हारियोजनम् । हरी योजनौ यस्य स हरियोजनः इन्द्रः । तद्देवत्यं हारियोजनम् । सोमस्य पूर्णं हे इन्द्र चिकेतति जानाति । ज्ञानेन चात्र तत्पूर्वकं करणं लक्ष्यते । ज्ञात्वा करोतीत्यर्थः । त्वमपि च तस्यैव यागेषु गन्तुं योज ॥ ४

युक्तस्ते अस्तु दक्षिण उत सव्यः शतक्रतो ।

तेन जायामुप प्रियां मन्दानो याह्यन्धसो योजा न्विन्द्र ते हरी ॥ ५

युक्तस्ते अस्तु रथस्य दक्षिणः दक्षिणपार्श्वस्थो हरिः । उत सव्यः । हे शतक्रतो । तेन सव्येन दक्षिणेन च हरिणा तद्युक्तेन वा रथेनात्मीयां जायां प्रियामुपयाहि

मन्दानः। भूतेऽर्थे वर्तमानकालप्रत्ययो द्रष्टव्यः। तृप्तः। केन। उच्यते। अन्धसः। तृतीयार्थे षष्ठ्येषा। सोमलक्षणेनान्नेन। माचिद्विर्लिंविश्याः। किं तर्हि। योज॥ ५

युनज्मि ते ब्रह्मणा केशिना हरी उप प्र याहि दधिषे गभस्त्योः।
उत्त्वा सुतासो रभसा अमन्दिषुः पूषण्वान्वज्रिन्त्समु पत्न्यामदः॥ ६

युनज्मि तव स्वभूतेन स्तुतिलक्षणेन ब्रह्मणा। तृतीयानिर्देशात् स्तुवन्निति वाक्यशेषः। केशिना केशवन्तौ हरी। ताभ्यां युक्ताभ्यां स्वगृहं प्रति उप प्रयाहि। कस्मात्। उच्यते। यस्मात् दधिषे धारयसि। किम्। सामर्थ्यात्

नि शिप्री हरिवान्दधे हस्तयोर्वज्रमायसम्। ऋ वे. १. ८१. ४.

इत्यादिषु दर्शनात् वज्रं। क। गभस्त्योः। बाहुनामैतत्। इह तु तत्सम्बन्धाद्धस्तयोर्वर्तते। यस्माद्वज्रहस्तोऽसि। वज्रहस्तत्वाच्च न ते कश्चिद्गमनप्रतिबन्धे वर्तितुं शक्नोतीत्यर्थः। यस्माच्च त्वां सुतासः अभिषुताः अस्मदीयाः सोमाः रभसाः। महन्नामैतत्। महान्तः। उदमन्दिषुः उन्मादितवन्तः। स्त्रीसंभोगाभिलाषिणं कृतवन्त इत्यर्थः। गत्वा च पूषण्वान्। पूषन्शब्दोऽत्र पुष्टिवचनः। अस्मदीयैः सोमैरुत्पादितबलः सन्नित्यर्थः। हे वज्रिन् समु पत्न्या अमदः। उकारः पदपूरणः। पत्नीशब्दोऽपि भार्यावचनः। स्वभार्यया सह सम्मदः संमोदस्व। क्रीडेत्यर्थः॥ ६

अश्वावति प्रथमो गोषु गच्छति सुप्रावीरिन्द्र मर्त्यस्तवोतिभिः।
तमित्पृणक्षि वसुना भवीयसा सिन्धुमापो यथाभितो विचेतसः॥ १

अश्वसहिते। क। सामर्थ्यादन्ने। प्रथमोऽग्रयः। गोषु च गच्छति प्राप्नोति। अश्वसहितमन्नं गाश्च सर्वं प्रथमं लभत इत्यर्थः। सुप्रावीः। शोभनप्राविता रक्षिता त्वं यस्य स सुप्रावीः। हे इन्द्र मर्त्यः मनुष्यः तवोतिभिः पालनैः। तृतीयानिर्देशात् पाल्यमान इति वाक्यशेषः। यस्त्वयात्मीयैः पालनैः पाल्यत इत्यर्थः। तमेव त्वं पृणक्षि। पृची संपर्केऽन्यत्र। इहतु सामर्थ्यात् पूरणार्थः। पूरयसि। वसुना धनेन। भवीयसा भूयसा बहुतरेण। सिन्धुमापो यथा। सिन्धुर्नदी। तां यथा आपः अभितः विचेतसः विविधप्रज्ञानाः पूरयन्ति तद्वत्॥ १

आपो न देवीरुप यन्ति होत्रियमवः पश्यन्ति विततं यथा रजः।
प्राचैर्देवासः प्र णयन्ति देवयुं ब्रह्मप्रियं जोषयन्ते वरा इव॥ २

तमित् पृणक्षीति तच्छब्दः पूर्वस्या ऋच इहानुषक्तव्यः। तमेवापो न देवी यथा एकधानालक्षणा आपः देव्यः होत्रियं होतुः स्वभूतं चमसमुपगच्छन्ति तद्वदुपयन्ति। सेवार्थमुपगच्छन्ति। के। सामर्थ्यात् सर्वमनुष्याः। अथवा तमित् पृणक्षीत्यनुषक्तव्यः। तंशब्द इहार्थात् षष्ठ्यन्तो विपरिणमयितव्यः। आपो नेति न शब्द उपरिष्टादुपचार उपमार्थीयत्वात् अस्त्युपमार्थस्य संप्रत्यर्थे प्रयोगः। (नि ७ ३१) इति पदपूरणः। तस्यैव एकधानालक्षणा आपो होतृचमसमुपगच्छन्ति। स एव सोमेन यजत इत्यर्थः। तमेव चावः अधस्तात् स्थिता सर्वमनुष्या उपरि वर्तमानं पश्यन्ति। कथम्। विततं यथा रजः। ज्योती रज उच्यते। यथेदमादित्याख्यं विततं ज्योतिः पश्यन्ति तद्वत्। तमेवादित्यसदृशं सर्वमनुष्याः पश्यन्तीत्यर्थः। तमेव प्राचैः प्रगमनैः देवासः प्रणयन्ति प्रकर्षेण नयन्ति। क्व। स्वर्गे वा इष्टेषु वा धनादिषु। स्वर्गं धनानि वा प्रापयन्तीत्यर्थः। देवयुं देवकामिनम्। ब्रह्मप्रियं स्तुतिप्रियम्। नित्यं स्तोतारमित्यर्थः। जोषयन्ते सेवन्ते च। वरा इव। यथा वराः परया प्रीत्या वधूं सेवन्ते तद्वत्॥ २

अधि द्वयो॑रदधा उ॒क्थ्यं१॒॑ वचो॑ य॒तस्रु॑चा मिथु॒ना या स॑प॒र्यतः॑।
असं॑यत्तो व्र॒ते ते॑ क्षेति॒ पुष्य॑ति भ॒द्रा श॒क्तिर्यज॑मानाय सुन्व॒ते॥ ३

अधिः उपरिभावे। द्वयोरदधाः। शुद्धोऽप्ययं दधातिः निपूर्वार्थे द्रष्टव्यः। व्यत्ययेन च मध्यमः प्रथमपुरुषस्य। न्यदधात्। कः। सामर्थ्यात् अध्वर्युः। कयोः पुनरुपरि किं वा न्यदधात्। हविर्धानाच्छादनार्थयोश्छदिषोरुपरि तृतीयश्छदिः। कुत एतत्। हविर्धानप्रवहणानुवचनस्य उपान्ते अस्या ऋचो विनियोगात्। तत्र च हविर्धानाच्छादनार्थानां त्रयाणां छदिषां क्रमेण निधानात्। तथाहि तैत्तिरीयाणां वचनम्। विष्णो रराटमसीति मध्यमं छदिरभिनिदधाति विष्णोश्नप्त्रस्थ इति येऽभितो भवत इति। तथाचैतरेयब्राह्मणम्। अधिद्वयोरदधा उक्थ्यं वच इति द्वयोर्ह्येतत् तृतीयं छदिरधिनिधीयत ऐ. ब्रा. १. २९ इति। अथवा द्वयोरिति द्वे अत्र हविर्धानस्य ये द्वार्ये स्थूणे ते उच्येते। तयोरुपरि रराटी निधीयते। ब्राह्मणे च सैव तृतीयाच्छादकत्वात्तृतीयं छदिरुच्यते। केन न्यदधात्। उच्यते। उक्थ्यं वचः। उक्थ्यमिति प्रशस्यनाम। तृतीयार्थे चोभयत्र द्वितीया। प्रशस्येन विष्णोश्नप्त्रस्थ इत्यादिना मन्त्रेण। कस्य स्वभूतम्। उच्यते। यतस्रुचा मिथुना या इत्यादि। कथं पुनरस्यार्धर्चस्य ऐन्द्रत्वम्। इन्द्रार्थमध्वर्यु न्यदधात् इत्येवमिन्द्रस्य प्राधान्यश्रवणात्। अथवा अदधा इति इन्द्र एवोच्यते नाध्वर्युः। एवं चार्थयोजना कार्या। अधिशब्दः अधिपरी अनर्थकौ

(पा. १. ४. ३) इत्येवं कर्मप्रवचनीयः पदपूरणः। द्वयोः स्वभूतमद्ध्याः आत्मीये च मनसि दधासि। ये वा शृणोषि शृणु चेत्यर्थः। उक्थ्यं प्रशस्यं स्तुतिलक्षणं वचः। यौ द्वौ किं कुरुतः। उच्यते। यतस्रुचा यागार्थमुद्यतस्रुचौ। मिथुना स्त्रीपुंसौ। दंपती इत्यर्थः। या यौ। सपर्यतः भवन्तं परिचरतः। किंचासंयत्तः। संयत्नवान् संयत्तः। कृतप्रयत्न इत्यर्थः। न संयत्तः असंयत्तः। विनैव क्लेशेनेत्यर्थः। व्रते यागाख्ये कर्मणि। सप्तमीनिर्देशात् वर्तमाना इति शेषः। ते तव स्वभूते। त्वां यजन्नित्यर्थः। क्षेति निवसति स्वस्मिन् स्थाने। पुष्यति च सर्वाभिः पुष्टिभिः। यस्तव यागं करोति सः अक्लिश्यन् स्वस्थाने निवसति सर्वपुष्टिभिश्च पुष्यतीत्यर्थः। किंच भद्रा शोभना शक्तिः। शग्धि पूर्धि इति याच्ञाकर्मसु पाठात् शक्तिर्याच्ञाकर्मा। याच्ञया चात्र तत्पूर्वकं दानं लक्ष्यते। त्वदीयं दानमित्यर्थः। कस्मै। उच्यते। यजमानाय सुन्वते सोमाभिषवं कुर्वते यजमानाय। प्रभूतमुत्कृष्टं च धनं त्वं ददासीत्यर्थः॥ ३

आदङ्गिराः प्रथमं दधिरे वय इद्धाग्नयः शम्या ये सुकृत्यया।
सर्वं पणेः समविन्दन्त भोजनमश्वावन्तं गोमन्तमा पशुं नरः॥ ४

आदिति पदपूरणः। अंगिरा इति बहुवचनस्य स्थाने एकवचनम्। अंगिरस ऋषयः। प्रथमं दधिरे दत्तवन्तः तुभ्यम्। वयो हविर्लक्षणमन्नम्। इद्धाग्नयः प्रज्वलिताहवनीयादिकाः। अंगिरसोऽपि त्वां प्रथममिष्टवन्तः किं पुनरन्य ऋषय इत्यर्थः। ये किं लब्धवन्तोऽङ्गिरसः। उच्यते। शम्या ये सुकृत्यया। शमीति कर्मनाम। शोभना क्रिया अनुष्ठानं यस्यास्सा सुकृत्या। ये त्वद्यागकर्मणा शोभनानुष्ठानेन सर्वं पणेः पणिनाम्नोऽसुरस्य स्वभूतम्। समविन्दन्त सम्यग्लब्धवन्तः। भोजनं धनम्। अश्वावन्तं अश्वैस्सहितम्। गोमन्तं गोभिस्सहितम्। पशुम्। जात्यपेक्षमेतदेकवचनम्। पशुजातं च। आकारस्तु पदपूरणः मर्यादायां वा। मर्यादया लब्धवन्तः नरः मनुष्याः सन्तः॥ ४

यज्ञैरथर्वा प्रथमः पथस्तते ततः सूर्यो व्रतपा वेन आजनि।
आ गा आजदुशना काव्यः सचा यमस्य जातममृतं यजामहे॥ ५

यज्ञैरिन्द्रदेवत्यैरथर्वा नाम ऋषिः प्रथमः सर्वत उत्कृष्टः अग्रयो वा। पथः प्रज्ञागमनमार्गान् इन्द्रस्यात्मनो वा स्वर्गगमनमार्गान्। ततो विस्तीर्णान् चकार। ततः तेभ्य एव यज्ञेभ्यः सूर्य आदित्यः व्रतपाः प्रकाशकरणद्वारेण सर्वकर्मणां पालयिता। वेनः। मेधावी कान्तो वा। आअजनि आजातः उत्पन्नः। धर्मायत्तत्वात् कृत्स्नस्य जगत

उत्पत्तेर्यज्ञानां च धर्मत्वादिदमुच्यते ततः सूर्यो व्रतपा वेन आजनीति । तैरेव यज्ञैरिन्द्रदेवत्यैः आ गाः आजत् । अज गतिक्षेपणयोः । आगतवान् प्राप्तवान् । लब्धवानित्यर्थः । किम् । गाः । उशना नाम ऋषिः काव्यः कविपुत्रः । सचा सह । केन । सामर्थ्यात् पुत्रैः पौत्रैश्च । एतत् ज्ञात्वा वयमपि यमस्य जातममृतं यजामहे । यम इति यज्ञनाम शाकपूणिना पठितम् । षष्ठी चात्र यजेश्च करणे (पा. २. ३. ६३) इत्येवं तृतीयार्थे द्रष्टव्यः । यज्ञेन यजामह इत्यर्थः । कम् । प्रकरणादिन्द्रम् । कीदृशम् । जातममृतं जन्मवन्तं मरणवर्जितमित्यर्थः । अथवा यमोऽत्रादित्य एव । षष्ठीनिर्देशाच्च सकाशादिति वाक्यशेषः । आदित्यसकाशाज्जातममृतं यजामह इति । इन्द्रो हि वर्षासु रसादानेनानुगृह्यमाणः कर्मात्मना आदित्याज्जायते ॥ ५

बर्हिर्वा यत्स्वपत्याय वृज्यतेऽर्को वा श्लोकमाघोषते दिवि ।
ग्रावा यत्र वदति कारुरुक्थ्यस्तस्येदिन्द्रो अभिपित्वेषु रण्यति ॥ ६

यत्स्वपत्यायेति षष्ठ्यर्थे एते प्रथमाचतुर्थ्यौ । बर्हिर्वा यस्य यजमानस्य स्वपत्यस्य वृज्यते । वृजिरत्र सामर्थ्यात् स्तरणार्थः । स्तीर्यते नित्यम् । अर्को वा । स्तोतात्रार्क उच्यते ।

अर्को यद्वो मरुतो हविष्मान् । ऋ. वे. १. १६७. ६.

इति यथा । स्तोता वा श्लोकं स्तुतिशब्दं आघोषते आघोषयति । श्रावयतीत्यर्थः । दिवि द्युलोके । अत्यन्तमुच्चैः स्तौतीत्यर्थः । अभिषवग्रावा यत्र । षष्ठ्यर्थे एषा सप्तमी । यस्य स्वभूतः । वदति अभिषवकाले शब्दं करोति । कीदृशः । कारुः स्तोता । यावदत्राभिषवग्रावा अभिषवं करोति तावत् स्तुतयः प्रवर्तन्त इति तदायत्तत्वात् स्तुतीनामभिषवग्रावैव स्तोतेत्युच्यते स्तोतृसादृश्याद्वा । उक्थ्यः प्रशस्यः । तस्यैवेन्द्रः । अभिपित्वेषु । पतेर्गतिकर्मण इदं रूपम् । अभिगमनकालेषु । रण्यति रमते । तमेवाभिगच्छन्निन्द्रः प्रतीयते नान्यमित्यर्थः ॥ ६

---

असावि सोम इन्द्र ते शविष्ठ धृष्णवा गहि ।
आ त्वा पृणक्त्विन्द्रियं रजः सूर्यो न रश्मिभिः ॥ १

असावि अभिषुतः सोमः अस्माभिः । हे इन्द्र त्वदर्थम् । एतत् ज्ञात्वा हे शविष्ठ बलवत्तम । धृष्णो अभिभवितः शत्रूणाम् । आगह्यागच्छ । आगतं च त्वा पृणक्त्विन्द्रियम् । पृचिरत्र पूरणार्थः ।

पृणक्षि नमित् । ऋ. वे ६ १५ ११

इति यथा । इन्द्रियं इत्यत्रापि स्वार्थे घञ्प्रत्ययः । इन्द्र एवेन्द्रियः । आपूरयतु त्वामिन्द्रमस्मदीयः सोम इत्यर्थः । अथवा इन्द्रियं वीर्यमुच्यते । सामर्थ्याच्चात्रान्तर्णीतमत्वर्थः इन्द्रियशब्दः । आपूरयतु त्वा वीर्यवदस्मदीयं सोमादिहविरित्यर्थः । कथं पुनरापूरयतु । उच्यते । रजः सूर्यो न रश्मिभिः । रजःशब्दो लोकवचनः । यथा सूर्यः पार्थिवलोकं अन्तरिक्षं निरन्तरं रश्मिना पूरयति तद्वत् ॥ १

इन्द्रमिद्धरी वहतोऽप्रतिधृष्टशवसम् ।
ऋषीणां च स्तुतीरुप यज्ञं च मानुषाणाम् ॥ २

इन्द्रं हरी वहतः अप्रत्यभिभूतपूर्वबलमृषीणां च स्तुतीरुप। उपशब्दोऽत्र प्रति शब्दस्यार्थे । ऋषीणां च स्तुतीः प्रति । यज्ञं च मानुषाणां मनुष्याणां स्वभूतम् ॥ २

आ तिष्ठ वृत्रहन् रथं युक्ता ते ब्रह्मणा हरी ।
अर्वाचीनं सु ते मनो ग्रावा कृणोतु वग्नुना ॥ ३

आतिष्ठ आरोह हे वृत्रहन् रथम् । युक्ता युक्तेन ते अस्माभिः ब्रह्मणा । तृतीयानिर्देशात् स्तुवद्भिरिति वाक्यशेषः । कौ । हरी । आस्थितस्य च अर्वाचीनं अस्मद्यज्ञगमनाभिमुखं सुष्ठु ते तव मनः । अयमभिषवग्रावा कृणोतु । वग्नुना स्वेनाभिषवशब्देन ॥ ३

इममिन्द्र सुतं पिब ज्येष्ठममर्त्यं मदम् ।
शुक्रस्य त्वाभ्यक्षरन्धारा ऋतस्य सादने ॥ ४

इमं हे इन्द्र सुतं सोमं पिब । ज्येष्ठं प्रशस्यतमं अमर्त्यं अमरणधर्माणम् । नित्यमित्यर्थः । मदं मदकरम् । शुक्रस्य शुक्राख्यग्रहस्य शुक्लवर्णस्य वा सोमस्य । त्वा अभि अक्षरन् । अभिशब्दः अभिरभागे (पा. १. ४. ९१.) इत्येवं कर्मप्रवचनीयः प्रतिशब्देन समानार्थः । त्वां प्रति अक्षरन् क्षरितवत्यः । धाराः ऋतस्य यज्ञस्य संबन्धिनि सादने स्थाने वेद्याख्ये ॥ ४

इन्द्राय नूनमर्चतोक्थानि च ब्रवीतन ।
सुता अमत्सुरिन्दवो ज्येष्ठं नमस्यता सहः ॥ ५

नूनमिति पदपूरणः क्षिप्रार्थो वा सामर्थ्यात् । इन्द्रार्थं क्षिप्रमर्चत उच्चारयत । याज्यानुवाक्यादिलक्षणाः स्तुतीः । हे मदीयाः पुत्राः पौत्राश्च ऋत्विजो वा । उक्थानि च ब्रवीतन । किं कारणम् । उच्यते । यस्मात् सुताः अभिषुताः । अमत्सुः तर्पितवन्तः । इन्दवः सोमाः । ज्येष्ठं प्रशस्यतममिन्द्रं नमस्यत नमस्कारैश्च पूजयत । सहः । बलनामैतत् अन्तर्णीतमत्वर्थं चेह द्रष्टव्यम् । सहस्विनं बलवन्तं इन्द्रम् ॥ ५

नकिष्ट्वद्रथीतरो हरी यदिन्द्र यच्छसे ।
नकिष्ट्वानु मज्मना नकिः स्वश्व आनशे ॥ ६

नकिरिति निपातो न कश्चिदित्यस्यार्थे । न कश्चित्त्वत्तो रथीतरः प्रकृष्टतरो रथीः । कस्मात् । उच्यते । हरी यत् यस्माद्धे इन्द्र यच्छसे अत्यन्तप्रवृद्धवेगावपि नियच्छसि । निरोद्धुं शक्नोषीत्यर्थः । किंच नकिष्ट्वानुमज्मना । अनुशब्दोऽत्र उपोऽधिके च (पा. १.४.८७.) इत्यनेन कर्मप्रवचनीयेन समानार्थः आधिक्यवचनः।मज्मन्निति बलनाम। नकश्चित्त्वत्तोऽधिको बलेनेत्यर्थः। नापि कश्चित् शोभनाश्वयुक्तोऽपि आनशे। व्याप्तिकर्मायम् । भवन्तं बलेन व्याप्नोति । सदृशोऽपि न कश्चित् बलेनास्तीत्यर्थः ॥ ६

य एक इद्विदयते वसु मर्ताय दाशुषे ।
ईशानो अप्रतिष्कुत इन्द्रो अङ्ग ॥ ७

य एक एव विदयते विविधं ददाति । वसु मर्ताय दाशुषे यजमानाय । ईशानः सर्वस्येश्वरः । अप्रतिष्कुतः । स्कु आप्रवणे। आप्रवणमागमनं प्रवतेर्गत्यर्थत्वात् । अन्येनाप्रतिगतः अप्रतिष्कुतः । युद्धे अभियुञ्जान अन्येनाप्रत्यभियुक्तपूर्व इत्यर्थः । कोऽसौ । उच्यते । इन्द्रः । अङ्गेति तु निपातनात् पदपूरणो वा क्षिप्रार्थो वा सामर्थ्याद्विदयत इत्येतेन संबन्धयितव्यः । क्षिप्रं विदयत इति । यच्छब्दश्रुतेश्चास्या ऋचः तच्छब्दमध्याहृत्य उत्तरयचैकवाक्यता योज्या । य इन्द्रो विदयते वसु सः ॥ ७

कदा मर्तमराधसं पदा क्षुम्पमिव स्फुरत् ।
कदा नः शुश्रवद्गिर इन्द्रो अङ्ग ॥ ८

कदा मर्तं अराधसम् । राध इति धननाम । अधनम् । दारिद्र्यात् यष्टुमसमर्थमित्यर्थः । पदा पदेन । क्षुम्पमिव स्फुरत् । क्षुम्पमहिच्छत्रकमुच्यते । स्फुर स्फुल चलने । सामर्थ्याच्चात्रान्तर्णीतण्यर्थः । यथा वायुरन्यो वा कश्चित् सर्पच्छत्रकं

चालयति तद्वच्चालयति। न कदाचिदपीत्यर्थः। निरादरत्वाद्वैतदनेन प्रकारेणाख्यायते। अधनस्योपरि अत्यन्तनिरादर इन्द्र इत्यर्थः। यत एवमतः सधनत्वात् कृतयागा वयं ब्रूमः। कदा नः शुश्रुवत् श्रोष्यति स्तुतिलक्षणा गिरः। इन्द्रो अङ्ग। पूर्वोक्तयोरर्धर्चयोरेकवाक्यता। न कदाचिदप्यधनं पादेन चालयतीन्द्रः। वयं चाधनाः। अतो भीता ब्रूमः। कदा नः शुश्रुवत् गिर इन्द्रो अङ्ग इति। अथवैवमन्यथास्या ऋचोऽर्थयोजना। कदा मर्तमराधसं हविर्लक्षणेन धनेन रहितं अयष्टारमित्यर्थः। पदा क्षुम्पमिव स्फुरत्। स्फुरति स्फुलतीति वधकर्मसु पाठात् स्फुरतिरिह वधार्थः। यथा कश्चित् क्षुम्पं पादेनाक्रम्य हन्ति तद्वद्धनिष्यति। चूर्णयिष्यतीत्यर्थः। कदा वास्माकं यष्टॄणां श्रोष्यति गिर इन्द्रो अङ्गेति। अयष्टॄन् कदा निग्रहीष्यति यष्टॄंश्चास्मांस्तुतिश्रवणेनानुग्रहीष्यतीत्यर्थः॥ ८

यश्चिद्धि त्वा बहुभ्य आ सुतावाँ आविवासति।
उग्रं तत्पत्यते शव इन्द्रो अङ्ग॥ ९

चित् हि इति पदपूरणौ। यो यजमानस्त्वा बहुभ्य आ। बहुभ्य इत्यपादानश्रुतेरा इति चोपसर्गाद्योग्यक्रियापदाध्याहारः। बहुभ्योऽन्येभ्यो यजमानेभ्य आकृष्य। आत्मीयसकाशमानीयेत्यर्थः। सुतवान् सुतेन सोमेन तद्वान्। आविवासति मर्यादया परिचरति। उग्रं तत्। चतुर्थ्यर्थे प्रथमैषा। तस्मै पत्यते। ऐश्वर्यकर्मायं पठितः। इह तु दानैश्वर्ययोः परस्परेण संबन्धादैश्वर्येण दानं प्रतिपद्यते। दानार्थ एव वा सामर्थ्यात् पत्यतिः। ददातीत्यर्थः। किम्। शवो बलम्। कः। उच्यते। भवानिन्द्रः अङ्ग क्षिप्रम्। पदपूरणो वा अङ्गशब्दः। अथवैवमन्यथा उत्तरस्यार्धर्चस्यार्थयोजना। तदिति षष्ठ्यर्थे प्रथमा। पत्यत इत्यप्यैश्वर्यार्थ एव इदम्। उग्रं तस्य स्वभूतं शवः पत्यते यावतः कस्यचिदीशितव्यं तस्य सर्वस्येष्ट इन्द्रः। व्यत्ययेनेयं संबोधनप्रथमास्थाने अव्यतिरिक्तप्रातिपदिकार्थे प्रथमा। हे इन्द्रेत्यर्थः॥ ९

स्वादोरित्था विषूवतो मध्वः पिबन्ति गौर्यः।
या इन्द्रेण सयावरीर्वृष्णा मदन्ति शोभसे वस्वीरनु स्वराज्यम्॥ १०

स्वादोः मृष्टस्य। इत्था अमुत्र द्युलोके। विषुवतः। विषु व्याप्तावित्यस्य विषुशब्दो व्याप्तिवचनः। व्याप्तिमतः। प्रभूतस्येत्यर्थः। अथवा विषुशब्दः वैषम्यपर्यायः। वैषम्यवतः। दुरवतस्येत्यर्थः। मध्वः मधुसदृशस्वादुकस्य। सामर्थ्यादुदकस्य। षष्ठीनिर्देशाच्चैकदेशमिति शेषः। द्वितीयार्थे वा सर्वत्र षष्ठी। स्वादु विषुवत् मधुसदृश-

स्वादु चोदकं पिबन्ति गौर्यः । या इत्येतत् पिबन्तीत्येतेन संबध्यते । कुत एतत् । उत्तरस्यामृचि अनुशब्देन प्रत्यवमर्शनात् । या गावः पिबन्ति गौर्यो गौरवर्णाः इन्द्रेण सह सयावरी सह गन्त्र्यः । कीदृशेन । उच्यते । वृष्णा वर्षित्रा । यत्र यत्रेन्द्रो गच्छति तत्र तत्र तस्य पश्चात् गन्त्र्यः । न केवलमत्रैव देवलोके मदन्ति । किं तर्हि । अनु स्वराज्यं स्वराज्यं प्रति । यत्र यत्र देशे इन्द्रस्याधिपत्यं तत्र सर्वत्रेत्यर्थः । यच्छब्दश्रुतेः अस्या ऋचः उत्तरयर्चैकवाक्यता । या गौरवर्णा गावः अमुत्र देवलोके यत्र चेन्द्रस्याधिपत्यं तत्र सर्वत्र पिबन्ति मदन्ति च ॥ १०

ता अ॑स्य पृश॒नायु॑वः॒ सोमं॑ श्रीणन्ति॒ पृश्न॑यः

प्रि॒या इन्द्र॑स्य धे॒नवो॒ वज्रं॑ हिन्वन्ति॒ साय॑कं॒ वस्वी॒रनु॑ स्व॒राज्य॑म् ॥ ११

... ...... मृतरूपरसवचनः । युवशब्दोऽपि तद्वदर्थे । अमृतरूपपयोलक्षण रसवत्यः । सोमं श्रीणन्ति पृश्नयः । पृश्निशब्दो वर्णविशेषवचनः । पुरस्तात् च गौर्य इति वर्णोपादानात् इहान्तर्णीतण्यर्थो द्रष्टव्यः । गौरवर्णाः । ......मुह्यन्ते या गावः ता धेनव उच्यन्ते । न च सोममेव केवलम् । किं तर्हि । वज्रं हिन्वन्ति । हिन्वतिः वृध्यर्थः । वज्रं चेन्द्रस्य स्वभूतं वर्धयन्ति । कीदृशम् । सायकम् । षो अन्तकर्मणि । शत्रूणां अन्तकरम् । ते अनुस्वराज्यम् । यत्र यत्रेन्द्रस्याधिपत्यं तत्र सर्वत्र॥ ११

ता अ॑स्य॒ नम॑सा॒ सहः॑ सप॒र्यन्ति॒ प्रचे॑तसः ।

व्र॒तान्य॑स्य सश्चिरे पु॒रूणि॑ पू॒र्वचि॑त्तये॒ वस्वी॒रनु॑ स्व॒राज्य॑म् ॥ १२

ता एवास्येन्द्रस्य स्वभूतं नमसा पयोलक्षणेनान्नेन सहः सेनालक्षणं बलं सपर्यन्ति परिचरन्ति । सेनामप्यस्य पयः पाययन्तीत्यर्थः । प्रचेतसः । इन्द्रस्य गवां वा इदं विशेषणम् । प्रवृद्धप्रज्ञानस्येन्द्रस्य प्रवृद्धप्रज्ञाना वा गावः । किम् । व्रतानि कर्माणि वृत्रवधादीनि । अस्येन्द्रस्य संबन्धीनि । सश्चिरे । सश्चतिर्गतिकर्मा । गच्छन्ति प्राप्नुवन्ति । कुर्वन्तीत्यर्थः । पुरूणि बहूनि । कीदृशस्य । उच्यते । पूर्वचित्तये । पूर्वा प्रथमा अत्यन्तोत्कृष्टा चित्तिर्ज्ञानं यस्य स पूर्वचित्तिः । षष्ठ्यर्थे चात्र चतुर्थी । अत्यन्तोत्कृष्टज्ञानस्येन्द्रस्य इत्यर्थः । कर्माणि वृत्रवधादीनि यानीन्द्रस्य तान्यपि तस्य सहायभूता गावः कुर्वन्तीत्यर्थः । वस्वीरनुस्वराज्यं इत्युक्तार्थः ॥ १२

इन्द्रो॑ द॒धीचो॑ अ॒स्थभि॑र्वृ॒त्राण्यप्र॑तिष्कुतः ॥

ज॒घान॑ नव॒तीर्नव॑ ॥ १३

अत्रेतिहासमाचक्षते । कालकञ्जा नामासुराः । तैर्वध्यमाना देवा भगवन्तं ब्रह्माणं प्रणम्योचुः । वधोपायमेषां विधत्स्वेति । तान् ब्रह्मा प्रत्युवाच । दध्यङ् नाम ऋषिः । तमुपगच्छत । स चोपायं विधास्यते इति । ते तमुपगम्योचुः । ब्रह्मणा वयं प्रहिता इति । स योगैश्वर्यध्यानेनागमनप्रयोजनमवेत्य प्राणानुत्ससर्ज । ततस्तदस्थिभिरिन्द्रस्तानसुराञ्जघान । इति तदेतदुच्यते । इन्द्रः दधीचः अस्थिभिः वृत्राणि शत्रूनसुरान् अप्रतिष्कुतः अप्रतिगतः । केनचिदप्रतियोध्यमान इत्यर्थः । जघान नवतीः नव । नव नवतिसंख्यान् । दशोत्तराष्टशतानीत्यर्थः ॥ १३

इच्छन्नश्वस्य यच्छिरः पर्वतेष्वपश्रितम् ।
तद्विदच्छर्यणावति ॥ १४

अत्रापीतिहासमाचक्षते । इन्द्र आथर्वणाय दधीचे मध्वाख्यं परं ब्रह्मोवाच । प्रोच्य चैनमुवाच । नेदं कस्मैचिद्वक्तव्यमिति । यदि वक्ष्यसि शिरस्ते पतिष्यत इति । तमश्विनौ मध्वर्थिनावागम्योचतुः । प्रब्रूहि नौ परं ब्रह्मेति । स तौ प्रत्युवाच । शिरःपातभयान्न प्रब्रवीमीति । तौ तं प्रत्यूचतुः । अन्यत्त्वा आवां शिरः प्रतिदध्वहे । तेन प्रब्रूहीति । स तथेति प्रतिपेदे । ततोऽस्याश्विनौ शिरश्छित्वा अश्वशिर आदधाते । तेनासौ तावध्यापयाञ्चकार । इति । तदेतत् कक्षीवान् वक्ष्यति ।

आथर्वणायाश्विना । ऋ. वे १. ११७. २२

इति । तथाच ।

दध्यङ् ह यत् । ऋ. वे. १. ११६. १२

इति । ततोऽस्य तदश्वशिरः पपात । अथाश्विनौ स्वमेव शिरः प्रत्याधायाश्वशिर इन्द्रभयात् शर्यणावति पर्वते निदधाते । तदन्वेषमाण इन्द्रोऽलभत । अश्वस्यावयवभूतं यच्छिरः मधुनो ब्रह्मणः प्रवक्तुः पर्वतेष्वपश्रितं आश्रितम् । इन्द्रभयादश्विभ्यां स्थापितमित्यर्थः । तद्विदत् पदरूपं ज्ञातवान् । लब्धवान् । क । शर्यणावति पर्वते ॥ १४

अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम् ।
इत्था चन्द्रमसो गृहे ॥ १५

अहेति विनिग्रहार्थीय एवार्थे । गोः । वाङ्नामात्र गोशब्दः । स्तुतिवचनो वा ।

गोभिर्यदीमन्ये अस्मत् । ऋ. वे. ८. २. ६

इति यथा । स्तुतिलक्षणा वाचः स्तुतेर्वा । अमन्वत । मनु अवबोधने । अवबुध्यन्ते । के । सामर्थ्यादृषयः । किम् । नाम स्थानम् । यावती काचित् स्तुतिः सर्वैवेन्द्रे व्यव-

स्थितेत्येवमृषयो मन्यन्त इत्यर्थः । त्वष्टुः । पञ्चमीनिर्देशादपेत्येति वाक्यशेषः । देवमात्रोपलक्षणार्थं चात्र त्वष्टृग्रहणं द्रष्टव्यम् । सर्वेभ्यो देवेभ्योऽपेत्येत्यर्थः । कीदृशं नाम । उच्यते । अपीच्यम् । अन्तर्हितनामधेयमेतत् । अन्तर्हितम् । तत्सम्बन्धिहरिरथवज्रमरुदादिस्तुतिद्वारेणेत्यर्थः । क्व स्थित इन्द्रे । उच्यते । इत्था अमुत्र । चन्द्रमसो गृहे स्थाने । अन्तरिक्षे द्युलोके वेत्यर्थः । सप्तमीनिर्देशात् स्थित इति वाक्यशेषः । यास्कस्तु मन्यते । अत्राहेत्यत्रशब्देन ऋगन्त्यं चन्द्रमसो गृहं प्रतिनिर्दिश्यते । चन्द्रमसश्च गृहं चन्द्रमण्डलम् । गौरित्यपि सुषुम्नो नाम । सूर्यरश्मिश्चन्द्रमसं गतः अम्मयत्वाच्चन्द्रमण्डलस्य ततः प्रतिहतः सन् परावृत्य ज्योत्स्नारूपेण पृथिव्यां दीप्यते । स उच्यत इत्येवमेकवाक्यता । अत्र चन्द्रमसो गृहे चन्द्रमण्डले गाः सुषुम्नाख्यस्य सूर्यरश्मेरमन्वत ज्ञातवन्त इत्यर्थः । के । सामर्थ्याद्रश्मयः । नमनं नाम व्यवस्थानम् । त्वष्टुरादित्यादपेत्य अपीच्यमन्तर्हितम् परित्यज्यादित्यरश्मिकाः चन्द्ररश्मिरूपेणावस्थितस्येत्यर्थः । एतदयोग्यम् । न तावदत्रशब्देन चन्द्रमसो गृहं प्रतिनिर्देष्टुं शक्यं इत्थाशब्देन तस्य प्रतिनिर्देशादित्थाशब्दस्य चात्रशब्दपर्यायत्वात् । अत्रामुत्रेत्येनयोश्च सन्निकृष्टविप्रकृष्टप्रतिनिर्देशार्थयोरेकत्रार्थे विरुद्धत्वात् । नापि गोशब्देन सुषुम्ना वक्तुं शक्यम् । अनैन्द्रत्वप्रसंगात् । गोशब्देन हि सुषुम्नस्य प्रतिनिर्देशे सुषुम्नदेवतोऽयम्मन्त्रः स्यात् । गुणप्रधानभावविपर्ययाद्वा चन्द्रदेवतः । न कथञ्चिदप्यैन्द्रः । ऐन्द्राणि चैतानि सूक्तानि । तत्र प्रकरणं बाध्येत । तस्मात् पूर्व एवार्थः ॥ १५

को अ॒द्य यु॑ङ्क्ते धु॒रि गा ऋ॒तस्य॒ शिमी॑वतो भा॒मिनो॑ दुर्हृणा॒यून् ।
आ॒सन्नि॑षून् हृ॒त्स्वसो॑ मयो॒भून्य ए॑षां भृ॒त्यामृ॒णध॒त्स जी॑वात् ॥ १६

कः पुण्यवान् अद्य युङ्क्ते धुरि धुरं नियुङ्क्ते गाः । गोशब्दोऽत्र वाजिवचनः ।

एतौ मे गावौ प्रमरस्य युक्तौ । ऋ. वे. १० २७ २०

इति यथा । वाजिनः । ऋतस्य सत्यस्य सर्वगामिनो वेन्द्रस्य स्वभूतानि । कस्य । पुण्यवतो हरीन् रथे नियुज्येन्द्रो यज्ञमागच्छति । उपालंभो वा । कीदृशान् हरीन् । उच्यते । शिमीवतः । शिमीति कर्मनाम । कर्मवतः । भामिनः शत्रूणामुपरि क्रोधवतः । अथवा शिमीवतो भामिन इत्येते षष्ठ्येकवचनान्ते इन्द्रस्य विशेषणे । पराणि तु हरीणाम् । दुर्हृणायून् पापक्रोधान् । निर्मूलशत्रूच्छेदकरक्रोधानित्यर्थः । आसन्निषून् । आस्ये इषवो येषां ते आसन्निषवः । हरयो हि संग्रामकाले शत्रूणामुपरि वेगवत इषून् वमन्ति । ते आसन्निषव उच्यन्ते । तानासन्निषून् हृत्स्वसः हृदयेषु ये अस्यन्ति क्षिपन्तीषून् ते हृत्स्वसः । तान् हृत्स्वसः । हृदयवेधिन इत्यर्थः ।

मयोभून् स्तोतॄणां सुखस्य भावयितॄन् । य एषां भृत्यामृजीषलक्षणां धानालक्षणां च ऋणधत् ऋद्धिं करोति स जीवात् सुजीवितं जीवति । स एव पुण्यकर्मेत्यर्थः ॥ १६

क ईषते तुज्यते को बिभाय को मंसते सन्तमिन्द्रं को अन्ति ।
कस्तोकाय क इभायोत रायेऽधि ब्रवत्तन्वे३ को जनाय ॥ १७

कः ईषते । ईषतिः गतिकर्मा । प्रायेण च सर्वत्र भयपूर्वके गमने वर्तते । कोऽत्रेन्द्रात् भीतस्तच्छत्रुः पलायते । तुज्यते हिंस्यते इन्द्रेण । को बिभाय बिभेतीन्द्रात् । न किंचिदागतस्येन्द्रस्य लिङ्गं दृश्यते येनात्रेन्द्र आगत इत्यनुमीयेतेत्यर्थः । को वा मंसते मन्यते । पश्यत्येवेत्यर्थः । सन्तम् । अतिरा सन इति प्राप्तस्य नामनी । तेनात्र सच्छब्दः प्राप्तवचनः । प्राप्तमिन्द्रं को वा अन्ति अन्तिके । सन्निकृष्टमित्यर्थः । प्रत्यक्षेणाप्यागत इन्द्रो नैवात्रोपलभ्यते इत्यर्थः । को वा तोकाय अपत्यार्थम् । को वा इभाय हस्त्यर्थम् । उत राये धनार्थम् । अधिब्रवत् । अधिशब्दः अधिपरी अनर्थकौ (पा. १ ४. ९३) इत्येवं कर्मप्रवचनीयः पदपूरणः । ब्रवीति । ज्ञापयतीन्द्रमित्यर्थः । तन्वे कः आरोग्यादियुक्तशरीरार्थम् । को वा विज्ञापयति परिचारकजनार्थं वा । आगत इन्द्रे योऽनुरूपो व्यवहारः अपत्यप्रार्थनादिः तं कुर्वन्नन्योऽपि न दृश्यते येनागत इन्द्र इत्येतदर्थात् परिकल्प्येतेत्यर्थः । एवमियमप्यागमनविलम्बनात् परिदेवना वोपालम्भो वा ॥ १७

को अग्निमीट्टे हविषा घृतेन स्रुचा यजाता ऋतुभिर्ध्रुवेभिः ।
कस्मै देवा आ वहानाशु होम को मंसते वीतिहोत्रः सुदेवः ॥ १८

कः अग्निमीट्टे । ईडिरत्र सामर्थ्यात् पूजार्थः । पूजयति । हविषा घृतेन घृताख्येन स्रुचा यजाते चरुपुरोडाशादिहविःपूर्णया स्रुचा यजाते । ऋतुभिर्ध्रुवेभिः । सप्तम्यर्थे तृतीया । ऋतुषु ध्रुवेषु । नियतेषु यागकालेष्वित्यर्थ. । कस्मै देवा इन्द्रादयः आवहात् आवहन्ति प्रापयन्ति । आत्मानं आगच्छन्तीत्यर्थः । आशु क्षिप्रं होम हूयते । यस्मिंस्तद्धोमं यागस्थानमित्यर्थः । अथवा होमेति तादर्थ्यचतुर्थ्या लुक् । होमाय । होमार्थमित्यर्थः । को वा मंसते । कर्मण्ययं व्यत्ययेन कर्तृशब्दो द्रष्टव्यः । ज्ञायते लोकेन । कीदृशः । वीतिहोत्रः वेति इति कान्तिकर्मसु पाठात् वेतिरिह कान्त्यर्थः । शोभना देवा यस्य स सुदेवः । अविळम्बितयज्ञत्वादेव प्रिययज्ञं देवानां चानुग्राह्यं लोकोऽवगच्छतीत्यर्थः । एवमियमप्यागमनविलंबनात् परिदेवनैषा उपालंभो वा ॥ १८

त्वमङ्ग प्र शंसिषो देवः शविष्ठ मर्त्यम् ।
न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः ॥ १९

अंगेति क्षिप्रनाम । ...... ..... ...... ...............हे शविष्ठ मर्त्यं स्तोतारं मनुष्यम् । न च त्वत् त्वत्तोऽन्यो मघवन् अस्ति मर्डिता सुखयिता स्तोतॄणाम् । यत एवमतः हे इन्द्र ब्रवीमि ते वचः । स्तौमि त्वामित्यर्थः ॥ १९

मा ते राधांसि मा त ऊतयो वसोऽस्मान्कदा चना दभन् ।
विश्वा च न उपमिमीहि मानुष वसूनि चर्षणिभ्य आ ॥ २०

---

प्र ये शुम्भन्ते जनयो न सप्तयो यामन्रुद्रस्य सूनवः सुदंससः ।
रोदसी हि मरुतश्चक्रिरे वृधे मदन्ति वीरा विदथेषु घृष्वयः ॥ १

त उक्षितासो महिमानमाशत दिवि रुद्रासो अधि चक्रिरे सदः ।
अर्चन्तो अर्कं जनयन्त इन्द्रियमधि श्रियो दधिरे पृश्निमातरः ॥ २

गोमातरो यच्छुभयन्ते अञ्जिभिस्तनूषु शुभ्रा दधिरे विरुक्मतः ।
बाधन्ते विश्वमभिमातिनमप वर्त्मान्येषामनु रीयते घृतम् ॥ ३

वि ये भ्राजन्ते सुमखास ऋष्टिभिः प्रच्यावयन्तो अच्युता चिदोजसा ।
मनोजुवो यन्मरुतो रथेष्वा वृषव्रातासः पृषतीरयुग्ध्वम् ॥ ४

प्र यद्रथेषु पृषतीरयुग्ध्वं वाजे अद्रिं मरुतो रंहयन्तः ।
उतारुषस्य वि ष्यन्ति धाराश्चर्मेवोदभिर्व्युन्दन्ति भूम ॥ ५

आ वो॑ वहन्तु॒ सप्त॑यो रघु॒ष्यदो॑ रघु॒पत्वा॑नः॒ प्र जि॑गात बा॒हुभिः॑ ।
सीद॒ता ब॒र्हिरु॒रु वः॒ सद॑स्कृ॒तं मा॒दय॑ध्वं मरुतो॒ मध्वो॒ अन्ध॑सः ॥ ६

........................................................................

सीदत बर्हिः । कस्मात् । उच्यते । यस्मादुरु विस्तीर्णं वः युष्माकं सदः स्थानं अस्माभिः कृतम् । आसाद्य च मादयध्वं तर्पयतास्मान् हे मरुतः । मध्वो अन्धसः । तृतीयार्थे चात्र षष्ठी । षष्ठीनिर्देशाच्चैकदेशेनेति शेषः । मधुस्वादेन सोमलक्षणेनान्नेन मधुस्वादस्य वा सोमलक्षणस्यान्नस्यैकदेशेनेत्यर्थः ॥ ६

तेऽव॑र्धन्त॒ स्वत॑वसो महित्व॒ना नाकं॑ त॒स्थुरु॒रु च॑क्रिरे॒ सदः॑ ।
विष्णु॒र्यद्धाव॒द्वृष॑णं मद॒च्युतं॒ वयो॒ न सी॑द॒न्नधि॑ ब॒र्हिषि॑ प्रि॒ये ॥ ७

ते मरुतः अवर्धन्त सर्वप्रकारां वृद्धिं प्राप्ताः । स्वतवसः आत्मबलाः । महित्वना स्वेन माहात्म्येन । आ नाकं तस्थुः दिवं चास्थिताः । तत्र उरु चक्रिरे सदः स्थानमात्मनः । किंच विष्णुः । यज्ञनामैतत् । सप्तम्यर्थे चात्र प्रथमा । अन्तर्णीतमत्वर्थो वा विष्णुशब्दः । यज्ञे यज्ञवान् वा यजमानः । यत् यदा । हशब्दस्तु पदपूरणः । आवत् तर्पयति । वृषणं मदच्युतम् । बहुवचनस्य स्थान उभयत्र एकवचनं गणापेक्षं वा । मदच्युतं इति च्यवतिर्गतिकर्मा । वर्षितॄन् सोमलक्षणं च मदं प्रति गन्तॄन् मरुतः मरुद्गणं वेत्यर्थः । यदेति वचनात्तदेत्यध्याहार्यम् । तदा पक्षिण इव सीदन् सीदन्ति मरुतः । अधिबर्हिषि प्रिये प्रियस्य वेद्यां विस्तीर्णस्य बर्हिष उपरि । यज्ञे यदा यजमानो मरुतः तर्पयिष्यति तदा पक्षिण इव शीघ्रमागत्य मरुतो वेद्यां बर्हिषि निषीदन्तीत्यर्थः ॥ ७

शूरा॑ इ॒वेद्युयु॑धयो॒ न जग्म॑यः श्रव॒स्यवो॒ न पृत॑नासु येतिरे ।
भय॑न्ते॒ विश्वा॒ भुव॑ना म॒रुद्भ्यो॒ राजा॑न इव त्वे॒षसं॑दृशो॒ नरः॑ ॥ ८

शूरा इव इति इवशब्दः अस्त्युपमार्थस्य सम्प्रत्यर्थे प्रयोगः (नि ७. ३१.) इति पदपूरणः । शूराः मरुतः । अथवा शूराः इत्युपमानश्रुतेरुपमानोपमेयसाधारणधर्माध्याहारः । शूरा इव जेतारः । यथा शूरा मनुष्या नियमेन शत्रूणां जेतारः एवं मरुतः इत्यर्थः । युयुधयो न जग्मयः यथा च युद्धशीला मनुष्याः शत्रून् प्रति गमनशीलाः एवं मरुतः । श्रवस्यवो न । श्रवोऽन्नं धनं कीर्तिर्वा । तत्कामाः श्रवस्यवः ।

यथा च श्रवस्यवो मनुष्याः एवं मरुतः । पृतनासु संग्रामेषु येतिरे प्रयत्नं कुर्वन्ति । किंच भयन्ते बिभ्यति विश्वा भुवना सर्वाणि भूतानि मरुद्भ्यः । किंच राजान इव । यथा नित्यालंकृतशरीरत्वाद्राजानः एवं मरुतः त्वेषसन्दृशः दीप्तदर्शनाः । उज्ज्वलरूपा इत्यर्थः । नरः मनुष्याकाराः ॥ ८

त्वष्टा यद्वज्रं सुकृतं हिरण्ययं सहस्रभृष्टिं स्वपा अवर्तयत् ।
धत्त इन्द्रो नर्यपांसि कर्तवेऽहन्वृत्रं निरपामौब्जदर्णवम् ॥ ९

त्वष्टा देवशिल्पी । यत् । व्यत्ययेनात्र नपुंसकता । यं वज्रं सुकृतं सुकरणम् । हिरण्ययं हिरण्मयम् । सहस्रभृष्टिम् । भृष्टयोऽत्राश्रय उच्यन्ते । सहस्राश्रिम् । स्वपा सुकर्मा अवर्तयत् । शुद्धोऽप्ययं सोपसर्गार्थो द्रष्टव्यः । निरवर्तयत् । कृतवानित्यर्थः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः । तद्धत्ते इन्द्रो नरि । गणापेक्षं चैकवचनम् । नराकारे मरुद्गणे । मनुष्याकाराणां मरुतां गणस्य वज्रमिन्द्रोऽर्पयतीत्यर्थः । किमर्थम् । उच्यते । अपांसि कर्तवे वृत्रवधादीनि कर्माणि कर्तुम् । अर्पितेन च तेनाहन् वृत्रं हन्ति मेघं मरुद्गणः । हत्वा च निरपामौब्जत् । निरित्येष......... ...... अथवाऽपामिति द्वितीयार्थे षष्ठी । उब्ज आर्जवे । वृत्रोदरान्तर्गता अपो भुवं प्रति गमनाय नियमेन ऋजूकरोतीत्यर्थः । अर्णवम् । वृत्रस्येदं विशेषणम् । उदकवन्तं मेघम् ॥ ९

ऊर्ध्वं नुनुद्रेऽवतं त ओजसा दादृहाणं चिद्बिभिदुर्वि पर्वतम् ॥
धमन्तो वाणं मरुतः सुदानवो मदे सोमस्य रण्यानि चक्रिरे ॥ १०

ऊर्ध्वं सन्तं मेघं नुनुद्रे नुदन्ति प्रेरयन्ति । अवतं अवपतितं अधोगतम् । अधोमुखमित्यर्थः । अथवा अवत इति कूपनाम । तत्सादृश्याच्चात्र तद्व्यपदेशः । बहूदकत्वादिना सादृश्येन कूपसदृशं मेघं ऊर्ध्वं प्रेरयन्ति क्षिपन्तीत्यर्थः । ते मरुतः । ओजसा स्वेन बलेन । दादृहाणं चिदत्यन्तदृढीभवन्तमपि । अत्यन्तं दृढमपीत्यर्थः । बिभिदुः विभिन्दन्ति । पर्वतं मेघं शिलोच्चयं वा । धमन्तः । ध्मा शब्दाग्निसंयोगयोः । शब्दवन्तः । उच्चारयन्त इत्यर्थः । वाणं शब्दम् । महान्तं शब्दं कुर्वन्त इत्यर्थः । मरुतः सुदानवः शोभनदातारः । ईदृशान्यन्यान्यपि मदे सोमस्य । मदे इति यस्य च भावेन भावलक्षणम् ( पा. २. ३. ३७ ) इत्येवं सप्तमी । तच्छ्रुतेश्च लक्षणभूतयोग्यक्रियाध्याहारः । मदे सोमस्य प्राप्ते सोमेन मत्ताः सन्तः इत्यर्थः । रण्यानि रमणीयानि कर्माणि चक्रिरे कुर्वन्ति ॥ १०

जिह्मं नुनुद्रेऽवतं तया दिशासिञ्चन्नुत्सं गोतमाय तृष्णजे ।
आ गच्छन्तीमवसा चित्रभानवः कामं विप्रस्य तर्पयन्त धामभिः ॥ ११

अत्रेतिहासमाचक्षते । मरुषु गच्छंस्तृषितो गोतमो मरुतः आजुहाव । ते तस्मै वृष्टिं ददुरिति । तदेतदुच्यते । जिह्मं कुटिलं मेघम् । अन्यस्यां दिशि व्यवस्थितं सन्तमित्यर्थः । नुनुद्रे अवतं तया । तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । यया गोतमो व्यवस्थितस्तया दिशा । नुत्वा असिञ्चन् क्षारितवन्तः उत्सम् । कूपनामैतत् । कूपसदृशं मेघम् । किमर्थम् । उच्यते । गोतमाय तृष्णजे । स्वपितृषोर्नजिङ् (पा. ३. २. १७२) इत्येवं साधुकारिणि नजिङ् । सुष्ठु तृषितस्य मम गोतमनाम्नः ऋषेरर्थायेत्यर्थः । किंच आगच्छन्ति यज्ञान् प्रति ई एते अवसा तर्पणेन पालनेन वा निमित्तेन । आत्मानं तर्पयितुं यष्टॄन् पालयितुं वेत्यर्थः । चित्रभानवः विचित्रदीप्तयो मरुतः । आगत्य च काममिच्छां विप्रस्य मेधाविनः यष्टुः स्तोतुश्च । तर्पयन्त तर्पयन्तीत्यर्थः । धामभिः । धीयन्ते तानीति धामानि धनान्यत्राभिप्रेतानि । तैः । अथवा धामानि स्थानानि । इह च परत्र च लोके अभिप्रेतैः स्थानैरित्यर्थः ॥ ११

या वः शर्म शशमानाय सन्ति त्रिधातूनि दाशुषे यच्छताधि ।
अस्मभ्यं तानि मरुतो वि यन्त रयिं नो धत्त वृषणः सुवीरम् ॥ १२

यानि वः युष्माकं शर्म शर्माणि सुखानि गृहाणि वा । शशमानाय । शशतिरर्चतिकर्मायम् । ताच्छील्ये चात्र शानच् द्रष्टव्यः । स्तुतिकरणशीलस्य अर्थाय । सन्ति । त्रिधातूनि । धीयन्ते प्राणिनां देहेष्विति धातवः अन्नरसाः । तैः देवमनुष्योपभोग्यैः त्रिभिरप्युपेतानि त्रिधातूनि । यच्छब्दात्तच्छब्दाध्याहारः । तानि दाशुषे अन्यस्मै अपि यजमानाय यच्छत दत्त । अधि । अधिशब्दस्तु अधिपरी अनर्थकौ (पा. १. ४. ९३.) इत्येवं कर्मप्रवचनीयः पदपूरणः । न केवलाय दाशुषे । किं तर्हि । अस्मभ्यमपि तानि हे मरुतः वियन्त विविधं दत्त । रयिं धनं च नः अस्मभ्यम् । धत्त वृषणः वर्षितारः । सुवीरं शोभनैर्वीरैः पुत्रैः पौत्रैश्चोपेतम् ॥ १२

---

मरुतो यस्य हि क्षये पाथा दिवो विमहसः ।
स सुगोपातमो जनः ॥ १

हे मरुतः यस्य क्षये गृहे । हिशब्दः पदपूरणः । पाथ पिबथ सोमम् । दिवः । पञ्चमीनिर्देशादागत्येति शेषः । हे विमहसः विविधं महान्तः । सः सुगोपातमः अतिशयन शोभना गोप्तारः यस्य सः सुगोपातमः । मरुद्भिर्देवैर्वा शोभनगोप्तृभिरतिशयेन रक्ष्यन्त इत्यर्थः ॥ १

यज्ञैर्वा यज्ञवाहसो विप्रस्य वा मतीनाम् ।
मरुतः शृणुता हवम् ॥ २

वाशब्दोऽत्र चार्थे । यज्ञैश्च निमित्तभूतैः । हे यज्ञवाहसः । यज्ञ उह्यते यान् प्रति ते यज्ञवाहसः । यष्टव्या इत्यर्थः । विप्रस्य वा मतीनाम् । मतयः स्तुतयः इहोच्यन्ते मन्यतेरर्चतिकर्मत्वात् । तृतीयास्थाने षष्ठी । मेधाविनश्च मम स्वभूताभिः स्तुतिभिर्निमित्तभूताभिः । यागाननुभवितुं स्तुतीश्च श्रोतुमित्यर्थः । हे मरुतः शृणुत हवं आह्वानम् । २

उत वा यस्य वाजिनोऽनु विप्रमतक्षत ।
स गन्ता गोमति व्रजे ॥ ३

उतशब्दोऽप्यर्थे । वाशब्दश्चार्थे । अपिच यस्य यजमानस्य वाजिनः हविर्लक्षणेनान्नेनान्नवन्तः । स्वभूते अनु विप्रम् । अनुशब्दो लक्षणे कर्मप्रवचनीयः प्रतिशब्देन समानार्थः । मेधाविनमृत्विजं प्रति । अतक्षत । तक्षतिः करोतिकर्मान्यत्र । इह तु गमनार्थः । लडर्थे च लङ् । गच्छथ । स गन्ता गोमति व्रजे । प्राप्नोति गोभिः पूर्णं गोष्ठमित्यर्थः ॥ ३

अस्य वीरस्य बर्हिषि सुतः सोमो दिविष्टिषु ॥
उक्थं मदश्च शस्यते ॥ ४

अस्य मम गोतमस्य यजमानस्य वा । वीरस्य स्तुतिकरणशूरस्य स्वभूते बर्हिषि । सुतः सोमः । दिविष्टिषु । द्यौरिष्यते गम्यते प्राप्यते याभिः ता दिविष्टयः । स्वर्गफला इज्याः । तासु । उक्थं मदश्च शस्यते । उक्थं शस्त्रमुच्यते । चशब्द उक्थात् परो द्रष्टव्यः । मदशब्दो हर्षकरवचनः । शस्त्रं च हर्षकरं शस्यत इत्यर्थः ॥ ४

अस्य श्रोषन्त्वा भुवो विश्वा यश्चर्षणीरभि ।
सूरं चित्सस्रुषीरिषः ५

अस्येति प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता पा १. ४. ४०) इति संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी। अस्मै मह्यं गोतमाय यजमानाय वा आश्रोषन्तु आशृण्वन्तु। दास्याम इत्येवं मरुतः भुवः भूमेः। इह चामुत्र च स्थानानीत्यर्थः। योऽयं किं करोतीत्युच्यते। विश्वा यश्चर्षणीः अभि। विश्वाश्च चर्षणीरिति कर्मश्रुतेरभीति चोपसर्गाद्योग्यक्रियाध्याहारः। सर्वा यो मनुष्यजातीरभिभवति। केन। सामर्थ्यात् स्तुतिभिः। अन्येभ्यो मनुष्येभ्योऽतिशयेन यो मरुतः स्तौतीत्यर्थः। न च केवलाया भुवः। किं तर्हि। सूरं चित्। चिच्छब्दोऽत्र चार्थे। सूर्यं च प्रति सस्रुषीः इषः। अन्नकारणत्वात् आपोऽत्र इष उच्यन्ते। याश्चेमा रश्मिभिराह्रियमाणा सूर्यं प्रति गताः आगामिवृष्टिलक्षणाः अन्नकारणभूता आपः ताश्चेत्यर्थः॥ ५

पूर्वीभिर्हि द॑दाशि॒म श॒रद्भि॑र्मरुतो व॒यम् ॥
अवो॑भिश्चर्षणी॒नाम् ॥ ६

पूर्वीभिः शरद्भिरित्युभयत्र सप्तम्यर्थे तृतीया। शरच्छब्दश्च संवत्सरवचनः। हिशब्दोऽप्यर्थे। पूर्वेष्वपि संवत्सरेषु। ददाशिम दत्तवन्तो हविर्युष्मभ्यं हे मरुतो वयं अवोभिः पालनैर्निमित्तभूतैः। पालनार्थमित्यर्थः। कस्य। चर्षणीनां पुत्रपौत्रादिमनुष्याणाम्॥ ६

सु॒भगः॒ स प्र॑यज्यवो॒ मरु॑तो अस्तु॒ मर्त्यः॑ ।
यस्य॒ प्रयां॑सि॒ पर्ष॑थ ॥ ७

भग इति धननाम। सुधनः सः हे प्रयज्यवः प्रकर्षेण यष्टव्याः मरुतः। अस्तु मर्त्यः यस्य स्वभूतानि प्रयांसि हविर्लक्षणान्यन्नानि पर्षथ पारयथ प्राप्नुथ। भक्षयथेत्यर्थः॥ ७

श॒श॒मा॒नस्य॑ वा नरः॒ स्वेद॑स्य सत्यशवसः ।
वि॒दा काम॑स्य॒ वेन॑तः ॥ ८

शशमानः स्तुतिकरणशीलः। तस्य वा हे नरः मनुष्याकारा मरुतः। स्वेदस्य प्रस्विन्नस्य वा युष्मत्परिचर्याश्रमेण। महता यत्नेन युष्मान् परिचरत इत्यर्थः। हे सत्यशवसः। विद कामस्य वेनतः। विदेति विदिर्ज्ञानार्थः। ज्ञानेनात्र तत्पूर्वकं पूरणं लक्ष्यते। कामस्येति द्वितीयार्थे षष्ठी। वेनत इति वेनतिः कान्तिकर्मा। पूरयत कामयमानस्येत्यर्थः॥ ८

यूयं तत्सत्यशवस आविष्कर्त महित्वना ।
विध्यता विद्युता रक्षः ॥ ९

अत्रेतिहासमाचक्षते । अन्धकारे गोतमं रक्षांस्यभिदुद्रुवुः । स भीतस्तदपघातार्थं आभ्यामृग्भ्यां स्तुत उवाच । यूयं तत् हे सत्यशवसः सर्वलोकप्रकाशं कुरुत । महित्वना स्वेन माहात्म्येन । किं तत् । उच्यते । विध्यत तापयत विद्युता रक्षः । विद्युत्प्रजननेन रक्षांसि हतेत्यर्थः ॥ ९

गूहता गुह्यं तमो वि यात विश्वमत्रिणम् ।
ज्योतिष्कर्ता यदुश्मसि ॥ १०

किंच गूहत । गुहू संवरणे । संवृणुत । अपनयतेत्यर्थः । गुह्यं संवरणयोग्यं अतिमहदेतत्तमः । वियात । यातिरत्र वधार्थः ।

अहेर्यातारं कमपश्य । ऋ. वे. १. ३२ १४.

इति ।

यया वज्रिवः परियासि । ऋ. वे. ८. ३७. ४.

इति च यथा । विविधं हत विश्वमत्रिणं सर्वं भक्षयितारं रक्षःपिशाचादिकम् । ज्योतिश्च विद्युदाख्यं कर्त कुरुत यदुश्मसि कामयामहे वयम् ॥ १०

---

प्रत्वक्षसः प्रतवसो विरप्शिनोऽनानता अविथुरा ऋजीषिणः ।
जुष्टतमासो नृतमासो अञ्जिभिर्व्यानज्रे के चिदुस्रा इव स्तृभिः ॥ १

त्वक्षू तनूकरणे । प्रकर्षेण तनूकर्तारः शत्रूणाम । प्रतवसः प्रकृष्टबलाः । विरप्शिनः । विरप्शीति महन्नाम । महान्तः । अनानताः अप्रणतपूर्वाः कस्यचित् । अविथुराः । व्यथ भयचलनयोः । अभीरव । ऋजीषिणः । अन्तर्णीतमत्वर्थोऽत्र ऋजीषी । ऋजीषिणः । जुष्टतमासः प्रियतमाः अवितृतमा वा । नृतमासः । नृशब्देनात्र तदाकरः तद्विषयं वा प्राशस्त्यं लक्ष्यते । अतिशयेन मनुष्याकाराः प्रशस्ता वेत्यर्थः । अञ्जिभिः । इत्थंभूतलक्षणे पा. २. ३. २१ इत्येवमेषा तृतीया । अपि भवान् कमण्डलुना छात्रमद्राक्षीदिति यथा । रत्नप्रायैराभरणैः संबद्धा व्यानज्रे । अञ्जेर्व्यक्त्यर्थस्येदं रूपम् । व्यज्यते । कथम् । केचिदुस्रा इव स्तृभिः । उस्रा इति रश्मिनाम । स्तृभिरित्यपि नक्षत्रनाम । यथा केचिदुस्राश्चन्द्ररश्मयः नक्षत्रैः सम्बद्धाः सौम्यरूपा व्यज्यन्ते तद्वदित्यर्थः ॥ १

उपह्वरेषु यदचिध्वं ययिं वय इव मरुतः केन चित्पथा ।
श्चोतन्ति कोशा उप वो रथेष्वा घृतमुक्षता मधुवर्णमर्चते ॥ २

उपह्वरेषु गह्वरेषु पर्वतप्रदेशेषु अन्तरिक्षप्रदेशेषु वा व्यवस्थितं मेघसमूहं यद्यदा चेतयध्वे ययिं गन्तारम् । नष्टारमित्यर्थः । यदेति वचनात्तदेत्यध्याहार्यम् । तदा वय इव पक्षिण इव हे मरुतः केनचित् पथा केनापि मार्गेण । येनान्यः कश्चिदपि गन्तुं न शक्नोति तेन केनापीत्यर्थः । साकांक्षत्वाच्छीघ्रमिति वाक्यशेषः । गतानां च सतां श्चोतन्ति कोशा इत्यादि । अथवा यदचिध्वमित्येतदेव चततेर्गतिकर्मण उपधाया इत्वम् । चितिरेव वा सामर्थ्यात् गत्यर्थो द्रष्टव्यः । यदा गच्छथ ययिं मेघसमूहं प्रति वय इव हे मरुतः केनापि पथा तदा श्चोतन्ति क्षरन्ति कोशाः । कोश इति मेघनाम । अथवा चर्ममयेन रज्ज्वा बद्धेन कूपादुदकमुत्तार्यते स कोशमित्युच्यते । इह तु तत्सदृशत्वान्मेघाः कोशा अभिप्रेताः । उदकपूर्णा मेघा इत्यर्थः । उप वो रथेषु । उपशब्दः सामीप्ये । समीपे वः युष्माकं स्वभूतानाम् । यत्र प्रदेशे युष्मदीया रथा व्यवतिष्ठन्ते तत्र रथचक्रधाराभिः छिद्यमाना मेघाः प्रक्षरन्तीति अर्थः । आकारस्तु पदपूरणः मर्यादारथों वा । मर्यादया श्चोतन्तीति । य ईदृशा रथाः तान् प्रति ब्रूमः । घृतमुक्षत । वृष्टिलक्षणमुदकमुक्षत सिञ्चत । पातयतेत्यर्थः । मधुवर्णं मधुसदृशवर्णम् । अर्चते स्तोतुरर्थाय ॥ २

प्रैषामज्मेषु विथुरेव रेजते भूमिर्यामेषु यद्ध युञ्जते शुभे ।
ते क्रीळयो धुनयो भ्राजदृष्टयः स्वयं महित्वं पनयन्त धूतयः ॥ ३

एषां मरुतां अज्मेषु । अज गतिक्षेपणयोः । गमनकालेषु । विथुरेव । व्यथ भयचलनयोः । भीतेव । प्ररेजते प्रकर्षेण कंपते भूमिः । न च केवलेष्वज्मेषु । किं तर्हि । यामेषु यद्ध युञ्जते । हशब्दोऽत्र चार्थे । यदा च यामेषु स्वरथेषु पृषतीः अश्वान् युञ्जते । किमर्थम् । शुभे । शुभमित्युदकनाम । उदकार्थं यदा गच्छन्ति मरुतः सन्नह्यन्ति च मेघान् हन्तुं तदा भयेन कम्पत इत्यर्थः । किञ्च ते मरुतः क्रीळयः क्रीडनशीलाः । धुनयः कंपयितारः शत्रूणाम् । भ्राजदृष्टयः दीप्तशक्तयः दीप्ततोरणा वा । स्वयमेवात्मीयं महित्वं माहात्म्यं पनयन्त । पनतिः स्तुत्यर्थः स्तावयन्ति । तथा तथा स्वयमेवोपकुर्वन्ति यथा यथा परितुष्टाः स्तोतारो मरुतां माहात्म्यं स्तुवन्तीत्यर्थः । धूतयः । धवतेर्गतिकर्मण इदं रूपम् । गन्तारः मेघान् यज्ञान् शत्रून् वा प्रति ॥ ३

स हि स्वसृत्पृषदश्वो युवा गणोऽया ईशानस्तविषीभिरावृतः ।
असि सत्य ऋणयावानेद्योऽस्या धियः प्राविताथा वृषा गणः ॥ ४

हिशब्दः पदपूरणः । य उक्तगुणोऽसि स त्वं स्वसृत् स्वयं गामी । पृषदश्वः पृषद्वर्णो वडवः । युवा सदैव तरुणः गणो मरुताम् । ईशान ईश्वरः । अया तविषीभिः । अयेति बहुवचनस्य स्थाने व्यत्ययेनैकवचनम् । आभिस्तविषीभिः । एतैरात्मीयैः सेनालक्षणैर्बलैरावृतः नित्यपरिवृतः असि । सत्यः सत्यश्चासि । ऋणयावा । यातिरत्र सामर्थ्यादन्तर्णीतण्यर्थः । यानि स्तोतॄणामृणानि तेषां यापयिता । अपगमयितेत्यर्थः । अनेद्यः प्रशस्यः । अस्याश्च धियः कर्मणः प्रज्ञाया वा प्राविता प्रकर्षेण रक्षिता । अथ वृषा गणः अपिच वर्षिता मरुद्गणः ॥ ४

पितुः प्रत्नस्य जन्मना वदामसि सोमस्य जिह्वा प्र जिगाति चक्षसा ।
यदीमिन्द्रं शम्यृक्वाण आशतादिन्नामानि यज्ञियानि दधिरे ॥ ५

पितुः । पिता मरुतां रुद्रः । प्रत्न इति पुराणनाम । षष्ठीनिर्देशाच्च सकाशादिति वाक्यशेषः । जन्मनेति हेतौ तृतीया । रुद्राख्यस्य पितुः पुराणस्य सकाशाद्यत् मरुतां जन्म तेन हेतुना । वदामसि उच्चारयामः । किम् । सामर्थ्यात् स्तुतीः । यस्माद्रुद्रात् पुराणाज्जातत्वादभिजनोपेता मरुतः तस्मादेतत् स्तुम इत्यर्थः । तस्मादेव च सोमस्य । द्वितीयार्थे षष्ठी । सोमं प्रति मरुतां जिह्वा प्रजिगाति प्रकर्षेण गच्छति । सोममपि यज्ञेषु तस्मादेव पिबन्तीत्यर्थः । न च केवलेनैव जन्मना हेतुना । किं तर्हि । चक्षसा दर्शनेन च । यस्माच्च सर्वज्ञेयानां ज्ञातार इत्यर्थः । यस्माच्च ईं एते मरुतः इन्द्रं शमि वृत्रवधादौ कर्मणि । ऋक्वाणः । ऋच स्तुतौ । अर्चनमृक् स्तुतिः । तद्वन्त ऋक्वाणः । सर्वस्तोतॄणां स्तुत्या इत्यर्थः । आशत व्याप्नुवन्ति । यस्माच्च वृत्रवधादौ कर्मणीन्द्रेण सदृशाः । नेन्द्रात् न्यूना इत्यर्थः । आदस्मात् । इत् । इच्छब्दस्तु पदपूरणः । नामानि यज्ञियानि दधिरे तैस्तैर्नामभिर्यज्ञेषु यष्टृभिरिज्यन्त इत्यर्थः ॥ ५

श्रियसे कं भानुभिः सं मिमिक्षिरे ते रश्मिभिस्त ऋक्वभिः सुखादयः ।
ते वाशीमन्त इष्मिणो अभीरवो विद्रे प्रियस्य मारुतस्य धाम्नः ॥ ६

श्रियसे सस्यसंपत्तिलक्षणायै श्रियै । कमुदकं भानुभिः दीप्तिभिः विद्युल्लक्षणाभिः । संमिमिक्षिरे । मिह सेचने इत्यस्यैतद्रूपम् । सम्यक् सेक्तुमिच्छन्ति । विद्यु-

द्भिर्वर्षन्तीत्यर्थः। न च केवलाभिः। किं तर्हि। ते रश्मिभिः अश्वप्रग्रहैः। ते ऋक्मिभिः स्तुतिमद्भिः। कैः। सामर्थ्यादश्वैः रथैर्वा। सर्वैश्चोपकरणैः वहन्तीत्यर्थः। सुखादयः। खादिरत्र कट्टारिकाकारो मरुतामायुधविशेषः कवच्या वा। उभयत्र हि खादिशब्दस्य दृष्टः प्रयोगः।

त्वेषं गणं तवसं खादिहस्तम्। ऋ. वे. ५. ५८. २

अंसेषु व ऋष्टयः पत्सु खादयः। ऋ. वे. ५. ५४. ११.

शोभनाः खादयो येषां ते सुखादयः। अथवान्यथास्यार्धर्चस्यार्थयोजना। श्रियसे कमिति कंशब्दः पदपूरणः सुखनाम वा। सस्यसंपत्तिलक्षणायै श्रियै सुखाय च सर्वप्राणिनां भानुभिः संमिमिक्षिरे ते रश्मिभिः। भानुशब्दोऽत्रान्तर्णीतमत्वर्थः। संमिमिक्षिरे इति म्यक्षतेर्गतिकर्मणो रूपम्। रसानुप्रदानकाले दीप्तिमद्भिरादित्यरश्मिभिः सह संगच्छन्ते ते मरुतः। ते एव ऋक्वभिः स्तुतिमद्भिः स्तोतृभिः सह यागकाले संगच्छन्ते सुखादयः। किंच ते वाशीमन्तः। वाशीशब्दोऽत्रायुधविशेषः।

वाशीमेको बिभर्ति। ऋ. वे ८. २९. ३.

इति यथा। वाङ्नाम वा वाशीशब्दः। तद्वन्तः। इष्मिणः। इषिर्गत्यर्थः इच्छार्थो वा। गन्तारः शत्रून् प्रति इषितारो वा स्तुतीनाम्। अथवा इडित्यन्ननाम। तद्वन्त इषिणः। अभीरवः भयरहिताः। किंच विद्रे वेद्म्यहं प्रियस्य मारुतस्य धाम्नः। द्वितीयार्थेऽत्र षष्ठी। सर्वस्य प्रियं मारुतं धाम स्थानं वा नाम वा जन्म वा तेजो वा सामर्थ्यलक्षणम्॥ ६

---

आ विद्युन्मद्भिर्मरुतः स्वर्कै रथेभिर्यात ऋष्टिमद्भिरश्वपर्णैः।
आ वर्षिष्ठया न इषा वयो न पप्तता सुमायाः॥ १

आ इत्युपसर्गो यातेत्याख्यातेन संबध्यते। विद्युन्मद्भिः विद्युता संयुक्तैः। हे मरुतः स्वर्कैः। अर्चनमर्कः स्तुतिः। शोभनोऽर्को येषां ते स्वर्काः। तैः स्वर्कैः। सुष्ठु स्तुत्यैरित्यर्थः। रथेभिरायात अस्मान् प्रति। ऋष्टिमद्भिः शक्तिमद्भिः तोरणवद्भिर्वा। अश्वपर्णैः अश्वपतनैः। किमर्थम्। उच्यते। आवर्षिष्ठया नः। आ इत्युपसर्गः पप्ततेत्याख्यातेन संबन्धयितव्यः। वर्षिष्ठया इषेति हेतौ तृतीया। प्रयोजनस्य च हेतुत्वेन विवक्षा। न इत्यपि तादर्थ्ये चतुर्थी। वृद्धतमेनास्मदर्थेनान्नेन। वृद्धतममन्नमस्मभ्यं दातुमित्यर्थः। कथं च पुनरायात। वयो न पक्षिण इव अत्यन्तशीघ्रं आपतत हे सुमायाः सुप्रज्ञानाः॥ १

ते ऽरुणेभिर्वरमा पिशङ्गैः शुभे कं यान्ति रथतूर्भिरश्वैः ।

रुक्मो न चित्रः स्वधितीवान्पव्या रथस्य जङ्घनन्त भूम ॥ २

ते मरुतः अरुणैः रक्तवर्णैः वरमुत्कृष्टं मेघं प्रति पिशंगैः कपिलैश्च शुभे उदकार्थम् । कमिति सुखनाम । आयान्ति आगच्छन्ति । रथतुर्भिः । रथे व्यवस्थिता ये त्वरन्ति तुर्वन्ति वा मेघान् । हिंसन्तीत्यर्थः । ते रथतुरः । तै रथतुर्भिरश्वैः । कथं पुनरायान्ति । रुक्मो न चित्रः स्वधितिवान् । स्वधितिरिति वज्रनाम । यथायं रोचनः पूजनीयः आयुधवांश्च भगवानादित्यः भ्राजमान आगच्छति तद्वत् । आगत्य च पव्या चक्रधारया रथस्य जंघनन्त घ्नन्ति । भूम । बहुपर्यायोऽयं भूमशब्दः । बह्वपि मेघजातम् । २

श्रिये कं वो अधि तनूषु वाशीर्मेधा वना न कृणवन्त ऊर्ध्वा ।

युष्मभ्यं कं मरुतः सुजातास्तुविद्युम्नासो धनयन्ते अद्रिम् ॥ ३

कमिति पदपूरणः सुखनाम वा । श्रियै सुखाय च सर्वप्राणिनां वः युष्माकं स्वभूताः अपि तनूषु मेघशरीराणामुपरि । साकांक्षत्वाद्वर्तमाना इति वाक्यशेषः । मेघं छिन्दन्त इत्यर्थः । वाशीः आयुधविशेषः । अथवा व इत्येतत्तनूष्वित्येनेन संबध्यते न वाशीरित्यनेन । युष्माकं शरीराणामुपरि वर्तमाना वाश्या युष्माभिर्गृहीता इत्यर्थः । किं कुर्वन्तः । उच्यते । मेधा वना न कृणवन्त ऊर्ध्वा । मेध इति यज्ञनाम । द्वितीयाबहुवचनस्य चात्र आकारादेशो द्रष्टव्यः । वनशब्दो वृक्षसमूहवचनः । यज्ञानूर्ध्वान् कुर्वन्ति धनानीव । यथा वृष्टिद्वारेण वनानि जनयन्ति एवं यज्ञानपीत्यर्थः । किंच युष्मभ्यं युष्माकमर्थाय कं सुखं ह मरुतः सुजाताः तुविद्युम्नासः । द्युम्नं द्योततेरन्नमिहाभिप्रेतम् । बहुहविर्लक्षणान्नाः यजमानाः । धनयन्ते धनीकुर्वन्ति । अभिषवार्थं परिगृह्णन्तीत्यर्थः । अद्रिं अभिषवग्रावाणम् । अथवा धन धान्ये इत्येतस्य सामर्थ्यात् वृद्ध्यर्थस्य संस्कारार्थस्य वा रूपम् । अद्रिमित्यभिषवग्राव्णः सम्बन्धादादरणाद्वा सोमोऽभिप्रेतः । वसतीवर्यैकधानानि वर्धयन्ति संस्कुर्वन्ति वा इत्यर्थः ॥ ३

अहानि गृध्राः पर्या व आगुरिमां धियं वार्कार्यां च देवीम् ।

ब्रह्म कृण्वन्तो गोतमासो अर्कैरूर्ध्वं नुनुद्र उत्सधिं पिबध्यै ॥ ४

यागानामहःकालत्वादहानीत्येतेन यागो लक्ष्यते । सप्तम्यर्थे चैषा प्रथमा । अहस्सु । यागकाले इत्यर्थः । गृध्राः अभिकांक्षितारः फलानाम् । वः युष्माकं स्वभूतानाम् । पर्यागुः पर्यागताः । प्राप्ताः कुर्वन्तीत्यर्थः । इमां धियं यागाख्यं कर्म । वार्कार्यां च । वृतेर्ऋत्विग्भिः वाचा वा क्रियमाणत्वात् वार्कार्या स्तुतिरिहाभिप्रेता । तां च । कीदृशीम् । देवीं देवयोग्यां दीप्तां वा । स्वगुणैरत्यन्तोत्कृष्टामित्यर्थः । किंच ब्रह्म स्तुतिलक्षणं कृण्वन्तो गोतमासः गोतमप्रभृतयः । अर्कैर्मन्त्रैः ऊर्ध्वमूर्ध्वं नुनुद्रे प्रेरयन्ति । उत्क्षिपन्तीत्यर्थः । आत्मन एवायं परोक्षरूपेण प्रथमपुरुषेण प्रतिनिर्देशः । वयं गोतमप्रभृतय उत्क्षिपाम इत्यर्थः । उत्सधिम् । उत्स इति कूपनाम । धेट् पाने । कूप इव यः पीयत स उत्सधिः अत्यन्तप्रभूतः सोमः । तमुत्सधिम् । किमर्थम् । उच्यते । पिबध्यै पातुम् । यूयं पास्यथेत्येवमित्यर्थः ॥ ४

एतत्यन्न योजनमचेति सस्वर्ह यन्मरुतो गोतमो वः ।
पश्यन्हिरण्यचक्रानयोदंष्ट्रान्विधावतो वराहून् ॥ ५

युज्यन्ते प्राणवियोगादिना अनेन शत्रव इति योजनं सेनालक्षणं बलमिहाभिप्रेतम् । एतद्युष्मदीयं बलं न अचेति चेत्यते । न ज्ञायते केनचित् । सस्वः अन्तर्हितम् । हशब्दस्तु पदपूरणः । देवतामाहात्म्यादर्शितं युष्मदीयं सेनालक्षणं बलं केनचिदपि न दृश्यत इत्यर्थः । यत् कीदृशम् । उच्यते । यद्ध मरुतः गोतमः । कर्मकर्तृश्रुतेः साकांक्षत्वात् स्तुतवानिति वाक्यशेषः । वः युष्मान् । पश्यन् हिरण्यचक्रान् । हिरण्यशब्दोऽत्र अथापि ताद्धितेन कृत्स्नवन्निगमा भवन्ति (नि. २. ५) इत्येवं हिरण्मये वर्तते । हिरण्मयानि रथचक्राणि येषां ते हिरण्यचक्राः । तान् हिरण्यचक्रान् । हिरण्मयरथस्थानित्यर्थः । अयोदंष्ट्रान् । दंष्ट्रास्थानीयत्वाद्रथान्धीरत्र दंष्ट्र उच्यते । अयोमयान् रथोन्धीन् । लोहमयोन्धीकरथस्थानित्यर्थः । विधावतः इतश्चेतश्च विविधं धावतः । वराहून् वरमुत्कृष्टं श्रेष्ठमिति पर्यायाः । हुशब्दोऽपि हन्तेर्वा ह्वयतेर्वा हरतेर्वा जुहोतेर्वा दानार्थस्य । उत्कृष्टस्य शत्रोः हन्तॄन् आह्वातॄन् वा उदकस्य वाहर्तॄन् हविषो वा भक्षयितॄन् ॥ ५

एषा स्या वो मरुतोऽनुभर्त्री प्रति ष्टोभति वाघतो न वाणी ।
अस्तोभयद्वृथासामनु स्वधां गभस्त्योः ॥ ६

तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । या पुरापि स्तुतवती एषा स्या सा वः युष्मान् हे मरुतः अनुभर्त्रीः । अनुशब्दोऽत्र धात्वर्थानुवादी लक्ष्यते

प्रलम्बन इति यथा । भिर्बानिर्धारणार्थः । युष्मद्गुणानां धारयित्री । सकलयुष्मद्गुण-संकीर्तनयुक्तेत्यर्थः । प्रतिष्टोभति । प्रतीत्येषोऽभीत्येतस्य स्थाने । स्तोभतिरर्चतिकर्मा । अभिष्टोभति । वाघतो न । ऋत्विङ्नामैतत् । ऋत्विज इव । वाणी वागस्मदीया । न च स्वयमेव केवलं स्तौति । किं तर्हि । अस्तोभयत् अन्यैरपि स्वपुत्रैः पौत्रैश्च ऋत्विग्भिर्वा स्तावयति । वृथा अयत्नेन । अक्लेशेन इत्यर्थः । आसामनु स्वधां गभस्त्योः । अन्विति पश्चाद्भावे । स्वधेत्यन्ननाम । षष्ठ्यर्थे चात्र द्वितीया । गभस्तीति बाहुनाम इह तु बाहुसंबन्धात् हस्तयोर्वर्तते । सप्तमीनिर्देशाच्च स्थितामिति वाक्यशेषः । एषां पश्चाद्धविर्लक्षणानां हस्तयोः स्थितानाम् । हस्तस्थस्य हविषः प्रदानोत्तरकालमित्यर्थः ॥६

---

आ नो॑ भ॒द्राः क्रत॑वो यन्तु वि॒श्वतोऽद॑ब्धासो॒ अप॑रीतास उ॒द्भिदः॑ ।
दे॒वा नो॒ यथा॒ सद॒मिद्वृ॒धे अस॒न्नप्रा॑युवो रक्षि॒तारो॑ दि॒वेदि॑वे ॥ १

वैश्वदेवे द्वे सूक्ते ।

एते च द्वे सूक्ते विश्वदेवदेवत्ये । नः अस्मान् । भद्राः कल्याणाः । क्रतवः यज्ञाः । आयन्तु आगच्छन्तु । विश्वतः सर्वतः । स्वतस्संबन्धिनश्चात्मनः संबन्धिनां च पुत्रादीना-मस्माकं यज्ञा उपनयन्त्वित्यर्थः । कीदृशाः । उच्यते । अदब्धासः अहिंसिताः । यज्ञ-विध्वंसिभी रक्षआदिभिः अविगुणा इत्यर्थः । अपरीतासः अपरिगताः । अन्यैरप्राप्त-पूर्वा इत्यर्थः । उद्भिदः । उद्भिन्नामैकाहः । तत्प्रभृतयः । अथवा उद्भिन्दन्ति फलानी-त्युद्भिदः । जनयितारः फलानामित्यर्थः । कथं पुनरायान्तु । उच्यते । देवाः नः यथा सदं इत् । सदमिति सदाशब्दपर्यायः । इच्छब्द एवार्थे । सदैव । वृधे वर्धनाय । असन् भवेयुः । अप्रायुवः अप्रमोषितारः आयुषः । जीवितस्य चानपहर्तार इत्यर्थः । अथवा प्रायुव इति अयतेर्गतिकर्मण इदं रूपम् । अप्रगन्तारः । नित्यसन्निहिता इत्यर्थः । अथवा प्रायुव इति यौने रूपम् । अन्यरर्थैरप्रश्रिता बुद्धिर्येषां ते अप्रायुवः । अनाक्षिप्तचेतस्का इत्यर्थः । अत्यन्तं यत्नवन्त इत्यर्थः । रक्षितारश्च दिवेदिवे अहन्य-हनि ॥ १

दे॒वानां॑ भ॒द्रा सु॑म॒तिॠ॑जूय॒तां दे॒वानां॑ रा॒तिर॒भि नो॒ नि व॑र्तताम् ।
दे॒वानां॑ स॒ख्यमुप॑ सेदिमा व॒यं दे॒वा न॒ आयुः॒ प्र ति॑रन्तु जी॒वसे॑ ॥ २

देवानां भद्रा कल्याणी सुमतिः शोभना परानुग्रहात्मिका बुद्धिः । ऋजूयताम् । ऋजवः सदाचारा मनुष्याः । तत्कामिनाम् । किंच देवानां रातिः दानम् । अभि नो

निवर्ततां अस्मान् प्रति निवर्तताम्। देवा अस्मभ्यं ददत्वित्यर्थः। किंच देवानां सख्यमुपसेदिम उपगच्छेम वयमित्याशास्महे। किंच देवाः नः आयुः प्रतिरन्तु वर्धयन्तु जीवसे चिरं जीवनाय ॥ २

तान् पूर्वया निविदा हूमहे वयं भगं मित्रमदितिं दक्षमस्रिधम्।
अर्यमणं वरुणं सोममश्विना सरस्वती नः सुभगा मयस्करत् ॥ ३

तान् पूर्वसंकल्पितया पूर्वप्रयुक्तया वा निविदा। निविदिति वाङ्नाम। वाचा स्तुतिलक्षणया हूमहे आह्वयामः। कतमांस्तान्। भगं मित्रं अदितिं दक्षं च। कीदृशम्। अस्रिधम्। न स्रेधन्ति न व्यथत इति प्रयोगदर्शनात् स्रिधिः क्षयार्थः शोषणार्थो वा। अक्षयमशोषयितारं वा। न च भगादीनेव केवलान्। किं तर्हि। अर्यमणं वरुणं सोममश्विना अश्विनौ च। किंच सरस्वती नः अस्माकं सुभगा सुधना मयः करत् सुखं करोतु ॥ ३

तन्नो वातो मयोभु वातु भेषजं तन्माता पृथिवी तत्पिता द्यौः।
तद्ग्रावाणः सोमसुतो मयोभुवस्तदश्विना शृणुतं धिष्ण्या युवम् ॥ ४

तच्छब्दश्रुतेर्योग्यार्थसंबन्धो यच्छब्दोऽध्याहार्यः। यद्वयमिच्छामस्तन्नः अस्मान् प्रति वातः मयोभु वातु भेषजं औषधं वातु गमयतु। ददात्वित्यर्थः। तदेव माता पृथिवी। तदेव पिता द्यौः। विवाहकाले द्यौरहं पृथिवी त्वमिति वरे वध्वां च द्युत्वपृथिवीत्वाध्यारोपात् सर्वमनुष्याणां च वधूवरमातापितृकत्वात् तद्धर्मेण मातृत्वेन पितृत्वेन च व्यपदेशः पृथिव्या दिवश्चायं तन्माता पृथिवी तत्पिता द्यौरिति। तदेव ग्रावाणः सोमसुतः सोमाभिषवकारिणः। मयोभुवः यागद्वारेण सुखस्य भावयितारः। तदेव हे अश्विनौ शृणुतम्। श्रवणेनात्र तत्पूर्वकं करणं लक्ष्यते। कुरुतम्। हे धिष्ण्यौ। धिषणा वाक्। तस्याः पुत्रौ। अथवा धीरिति प्रज्ञानाम। ष्णौ वेष्टने। धीर्वेष्टयित्री सर्वार्थग्रहणसमर्था ययोः तौ धिष्णौ। धिष्णावेव धिष्ण्यौ। अत्यन्तप्रज्ञावित्यर्थः। युवं युवामपि ॥ ४

तमीशानं जगतस्तस्थुषस्पतिं धियंजिन्वमवसे हूमहे वयम्।
पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये ॥ ५

तच्छब्दश्रुतेर्योग्यार्थसंबन्धो यच्छब्दोऽध्याहार्यः । यमन्येऽपि सर्वे आह्वयन्ति तं पूषणमीशानं जगतः ईश्वरः जंगमस्य । तस्थुषस्पतिं स्थावरस्य च स्वामिनम् । धियंजिन्वम् । जिन्वतिः प्रीतिकर्मा । सर्वप्रज्ञानां प्रीणयितारम् । अवसे पालनायात्मनः । हूमहे आह्वयामो वयम् । कथं च पुनराह्वयामः । उच्यते । आहुतः पूषा नः अस्माकं यथा वेदसां धनानां ज्ञानानां वा । असत् भवेत् । वृधे वर्धनाय । यथा नो धनवृद्धिकरो ज्ञानवृद्धिकरो वा स्यात् इत्यर्थः । रक्षिता पायुः पाता च सोमानाम् । अदब्धः अहिंसितः केनचित् । स्वस्तये । स्वस्तीत्यविनाशनाम । अविनाशकरश्च स्यादित्यर्थः ॥ ५

स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ ६

दधात्वित्यन्त्यमाख्यातपदं सर्वत्रैवानुषक्तव्यम् । स्वस्ति न इन्द्रो दधातु विधत्ताम् । करोत्वित्यर्थः । कीदृशः । वृद्धश्रवाः प्रवृद्धकीर्तिः प्रवृद्धधनः प्रवृद्धान्नो वा । स्वस्ति नः पूषा विश्ववेदाः सर्वज्ञः सर्वधनो वा । स्वस्ति नः तार्क्ष्यः अरिष्टनेमिः । नेमिरिति वज्रनाम । अहिंसितायुधः । स्वस्ति नः बृहस्पतिः दधातु ॥ ६

पृषदश्वा मरुतः पृश्निमातरः शुभंयावानो विदथेषु जग्मयः ।
अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवा अवसा गमन्निह ॥ ७

पृषत्यः अश्वा येषां ते पृषदश्वाः । मरुतः । पृश्निमातरः । पृश्निः द्यौः । सा माता येषां ते पृश्निमातरः । शुभंयावानः । शुभमित्युदकम् । तदर्थं मेघान् प्रति गन्तारः । विदथेषु यज्ञेषु जग्मयः गमनशीलाः । न च केवला मरुतः । किं तर्हि । अग्निजिह्वाः । वक्ष्यमाणानां विश्वेषां देवानामेतद्विशेषणं न मरुताम् । कुत एतत् ।

ये अग्निजिह्वा उत वा यजत्राः । ऋ. वे. ६. ५२. १३.

इति प्रयोगदर्शनात् । अग्निर्जिह्वास्थानीयो येषां ते अग्निजिह्वाः । अग्नौ प्रक्षिप्तं हविर्देवा अश्नन्ति । तेनैषामग्निर्जिह्वास्थानीयः । मनवः मन्तारः ज्ञातारः । सूरचक्षसः । सूर्यस्येव चक्षुर्दर्शनं येषां ते सूरचक्षसः । एवंरूपा विश्वेदेवाः नः अवसा अस्माकं पालनेन हेतुना । वयं पालयितव्या इत्येवमर्थमित्यर्थः । आगमन् आगच्छन्तु । इह यज्ञे । पृषदश्वादिगुणा मरुतः अग्निजिह्वादिगुणाश्च विश्वे देवाः अस्मत्पालनार्थमिह यज्ञे आगच्छन्त्विति समस्तार्थः ॥ ७

भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ॥ ८

युष्मत्प्रसादादेव भद्रं कर्णेभिः शृणुयाम हे देवाः । भद्रमेव पश्येम अक्षभिः यजत्रा यष्टव्याः । स्थिरैरङ्गैः दृढैश्चात्मावयवैस्तनूभिः शरीरैश्च । जरया अनुपहत-शरीरतदवयवाः सन्त इत्यर्थः । तुष्टुवांसः । शत्रर्थोऽयं वसुर्द्रष्टव्यः । स्तुवन्तो युष्मान् व्यशेम मनुष्याणां च देवहितं देवैर्दत्तं दैवैर्वा निहितं स्थापितं उपकल्पितं यदायुः तद्वर्षशतपरिमाणकं आयुः दैवैर्मनुष्याणामुपकल्पितं कृत्स्नं प्राप्नुयाम । मान्तरा मृषीमहीत्यर्थः ॥ ८

शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् ॥
पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः ॥ ९

इत् नु इति पदपूरणे । एकवाक्यताप्रसिध्यर्थं च प्रथमे पादे यच्छब्दः अन्त्ये च षष्ठ्यन्तस्तच्छब्दोऽध्याहर्तव्यः।यदेतच्छतं शरदः वर्षशतमन्ति अन्तिकं सन्निकृष्टम् । अल्पमित्यर्थः । हे देवाः । यत्र नः अस्माकं चक्र कृतवन्तः स्थ । जरसं जरां तनूनां शरीराणम् । यत् स्वरूपेणैवाल्पकं जरया चोपहतमित्यर्थः । यत्र च पुत्रासः पुत्राः पितरो भवन्ति स्वेषामपत्यानाम्। यत्रैकमेवशरीरमत्यन्तविरुद्धे पितापुत्रावस्थे शीघ्र-मेव प्रतिपद्यते इत्यर्थः । अथवा पितृशब्दोऽत्र क्रियाशब्दः पालयितृवचनः । ये पुत्राः पाल्या आसंस्त एव वार्धक्ये जरयाभिभूतस्य पालयितारो भवन्तीत्यर्थः । मा नः अस्माकं तस्य मध्या मध्ये रिरिषत हिंसिष्ठा । आयुः जीवितं गन्तोर्गमनशीलस्य ॥ ९

अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ।
विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वम् ॥ १०

अदितिर्देवमाता । तत्प्रभवाः सर्वे द्युवादयः । अत इदं कारणशब्देन कार्यस्य गौण्या वृत्त्याभिधानम् । अदितेः कार्यभूतेत्यदितिरेवान्तरिक्षम् । अदितिरेव माता स पिता स पुत्रः । स इति व्यत्ययेन पुल्लिंगता । सैवादितिः पिता सैव पुत्रः । विश्वे देवा अदितिः पञ्च जनाश्च । गन्धर्वाः पितरो देवा असुरा रक्षांसीति एते पञ्च जना अभिप्रेताः निषादपञ्चमा वा ब्राह्मणादयो वर्णाः । अदितिरेव जातमदितिरेव जनित्वं जनिष्यमाणम् । एवमशेषजगत्कारणत्वेनादितेर्विभूतिमाचष्टे । अथवा अदितिशब्दो-

ऽत्र क्रियाशब्दः अदीनपर्यायः । ध्रुवादीनिवस्तूनि अदीनान्यनुपक्षीणानि । नित्यानीत्यर्थः ॥ १०



ऋजुनीती नो वरुणो मित्रो नयतु विद्वान् ।

अर्यमा देवैः सजोषाः ॥ १

ऋजु नयतीत्यृजुनीती नः अस्मान् मित्रो वरुणश्च । यत्र स्वर्गे ब्रह्मलोके वा अस्माभिः स्वकृतेन कर्मणा गन्तव्यं तत्र तत्र नयतु । विद्वान् विजानन् । किम् । सामर्थ्यात् कर्मविपाककालं भक्तानां वा अस्माकम् । न च केवलं मित्रावरुणौ । किं तर्हि । अर्यमा देवैः सजोषा देवैस्सह संप्रीयमाणः ॥ १

ते हि वस्वो वसवानास्ते अप्रमूरा महोभिः ।

व्रता रक्षन्ते विश्वाहा ॥ २

ते इति प्रकृतानां वरुणादीनां प्रतिनिर्देशः । हिशब्दः पदपूरणः । ते वरुणादयो वस्वः । तृतीयार्थे षष्ठ्येषा । वसुना धनेन वसवानाः धनवन्तः । अथवा वसवाना इति वस आच्छादने इत्यस्य क्रियाशब्दः । धनेनाच्छादयितारः । प्रभूतस्य धनस्याच्छादयितारः इत्यर्थः । ते एव अप्रमूराः अप्रमूढचेतसः । महोभिः महद्भिः प्रकाशकरणवृष्टिप्रदानादिभिः उपकारैः । व्रता सर्वकर्माणि प्राणिनां रक्षन्ते । विश्वाहा सर्वदा ॥ २

ते अस्मभ्यं शर्म यंसन्नमृता मर्त्येभ्यः ।

बाधमाना अप द्विषः ॥ ३

ते वरुणादयोऽस्मभ्यं शर्म सुखं गृहं वा यंसन् प्रयच्छन्तु । अमृता मरणवर्जिताः । मर्त्येभ्यः बाधमानाः अप अपबाधमाना अस्मदीयद्विषः ॥ ३

वि नः पथः सुविताय चियन्त्विन्द्रो मरुतः ।

पूषा भगो वन्द्यासः ॥ ४

नः अस्माकं पथः स्वर्गगमनमार्गान् सुवितायं सुगमनाय विचियन्तु विचिन्वन्तु । स्वर्गगमनमार्गप्रतिबन्धकारिणो रक्षोऽसुरप्रभृतीन् मार्गादपनयन्त्वित्यर्थः । के । उच्यते । इन्द्रश्च मरुतः पूषा भगश्च वन्द्यासः स्तुत्याः ॥ ४

उत नो धियो गोअग्राः पूषन्विष्णवेवयावः ।

कर्ता नः स्वस्तिमतः ॥ ५

अपिचास्माकं धियः गोअग्राः । धीरिति कर्मनाम । गावोऽग्रे यासां ता गोअग्राः । गोलाभफला इत्यर्थः । यागाख्यानि कर्माणि गोलाभफलानि । हे पूषन् विष्णो एवयावः । देवतान्तरस्य वरुणस्य मित्रस्यार्यम्णः इन्द्रस्य वा प्रतिनिर्देशोऽयं पूष्णो विष्णोर्वा विशेषणम् । कुत एतत् । उत्तरत्र कर्तेति बहुवचनश्रुतेः । एवयावः । याविरप्यन्तर्णीतण्यर्थः । कामानां यावयिता संपादयिता । एवयावो वरुणादीनामन्यतमः । तस्य संबोधनमेवयावः । कर्त कुरुत । नोऽस्मान् । न केवला गोअग्रा धियः । किं तर्हि । स्वस्तिमतः अस्मांश्चाविनाशयुक्तान् कुरुत ॥ ५

मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः ।

माध्वीर्नः सन्त्वोषधीः ॥ ६

मधुशब्दो रसविशेषवचनः अन्तर्णीतमत्वर्थश्च । सामर्थ्याच्चेहोदके वर्तते । उदकनाम वा मधुशब्दः । साकांक्षत्वाच्च क्षरन्तीत्याख्यातं पूर्वत्राप्यनुषक्तव्यम् । मधुमत् मधुरसं वृष्टिलक्षणमुदकं क्षरन्ति । लोडर्थे लट् । क्षरन्तु । वर्षन्त्वित्यर्थः । के । वाताः । कस्मै । ऋतायते यज्ञं कामयमानस्य ममार्थाय । मधु क्षरन्ति सिन्धवः नद्यः । माध्वीः । मध्वेव माध्वम् । स्वार्थिकस्तद्धितः छान्दसत्वात् । तद्वत्यो माध्यः । इकारप्रत्ययो मत्वर्थे ईवनिपौ छन्दसि इति । मधुरसा इत्यर्थः । नः अस्माकं सन्तु ओषधीः ॥ ६

मधु नक्तमुतोषसो मधुमत्पार्थिवं रजः ।

मधु द्यौरस्तु नः पिता ॥ ७

नक्तमिति नेदमव्ययं अधिकरणभूताया रात्रेर्वाचकम् । रात्रेरिहाधिकरणसंभवान्नक्तेतिरात्रिनाम्नः प्रथमान्तस्येदं छान्दसं ह्रस्वत्वं नपुंसकत्वं च । सामर्थ्याच्चास्तु न इत्येतत्पदं सर्वत्रानुषक्तव्यम् । मधु नक्तमस्तु नः । मधुत्वेन चात्र सर्वत्र

तद्गतप्रीतिकरत्वं लक्ष्यते । प्रीतिकरी रात्रिरस्माकं भवतु इत्यर्थः । उतोषसः उषसोऽपि प्रीतिकर्यः सन्तु । मधुमत् पार्थिवं रजः पृथिवीलोकोऽप्यस्तु मधुमान् । मधु द्यौरप्यस्तु नः पिता । विवाहकाले द्यौरहं पृथिवी त्वमिति वरे द्युत्वाध्यारोपात् सर्वमनुष्याणां वरपितृकत्वात् तद्धर्मेणैव दिवो व्यपदेशः द्यौः पितेति ॥ ७

मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः ।
माध्वीर्गावो भवन्तु नः ॥ ८

मधुमान् नः वनस्पतिः । वनानां पालयितृत्वात् स्वामित्वाद्वा वनस्पतिः सूर्यसाहचर्याच्च चन्द्रमा इहाभिप्रेतः । मधुमान्नो वनस्पतिः चन्द्रमा अस्तु । मधुमानस्तु सूर्यः । माध्वीः मधुमत्यः गावो भवन्तु ॥ ८

शं नो मित्रः शं वरुणः शं नो भवत्वर्यमा ।
शं न इन्द्रो बृहस्पतिः शं नो विष्णुरुरुक्रमः ॥ ९

साकांक्षत्वात् भवत्वित्याख्यातं सर्वत्रानुषक्तव्यम् । शं सुखमस्माकं मित्रो भवतु । शं वरुणः शं नो भवत्वर्यमा । शं न इन्द्रः बृहस्पतिः । शं नो विष्णुरुरुक्रमः विस्तीर्णगतिः विस्तीर्णप्रक्रमो वा । बलिबन्धनकाले त्रिभिः पदैः त्रैलोक्यप्रक्रमणम् । तदभिप्रायमिदमुरुक्रमवचनम् ॥ ९

---

त्वं सोम प्रचिकितो मनीषा त्वं रजिष्ठमनु नेषि पन्थाम् ।
तव प्रणीती पितरो न इन्दो देवेषु रत्नमभजन्त धीराः ॥ १

सौम्यम् ।

सोमदेवत्यमेतत् सूक्तम् । त्वं हे सोम प्रचिकितः प्रकर्षेण जानासि यावत् ज्ञातव्यम् । मनीषा मनीषया त्वदीयया प्रज्ञया । त्वं रजिष्ठम् । तृतीयार्थे द्वितीया । ऋजुतमेन । अनुनेषि । अनुशब्दोऽत्र धात्वर्थानुवादी लम्बते प्रलम्बत इति यथा । सर्वयजमानान् स्वर्गं नयसि । पन्थाम् । इदमपि तृतीयार्थे द्वितीया । पथा । तव प्रणीती प्रणीत्या नयनेन । उपदेशेनेत्यर्थः । पितरोऽपि नः अस्माकं हे इन्दो सोम । देवेषु । षष्ठ्यर्थे सप्तमी । देवानां स्वभूतं रत्नं धनं अभजन्त संसक्तवन्तः । देवानां सकाशात् लब्धवन्त इत्यर्थः । धीराः प्रज्ञावन्तः ॥ १

त्वं सो॑म॒ क्रतु॑भिः सु॒क्रतु॑र्भू॒स्त्वं दक्षैः॑ सु॒दक्षो॑ वि॒श्ववे॑दाः ।
त्वं वृषा॑ वृष॒त्वेभि॑र्महि॒त्वा द्यु॒म्नेभि॑र्द्यु॒म्न्य॑भवो नृ॒चक्षाः॑ ॥ २

त्वं हे सोम क्रतुभिः कर्मभिः प्रज्ञाभिर्वा । सुक्रतुर्भूः सुकर्मा सुप्रज्ञो वा भवसि । त्वं दक्षैः सुदक्षाः । दक्ष इति सकारान्तं बलनाम पठितम् । अकारान्तं तस्यैव पर्यायं द्रष्टव्यम् । त्वं बलैः सुबलः इत्यर्थः । अथवा दक्षशब्दो दक्ष वृद्धावित्यस्य क्रियाशब्दो वृद्धिपर्यायः । वृद्धिभिः सुवृद्ध इत्यर्थः । विश्ववेदाः सर्वज्ञश्च । अथवा विश्वमिति बहुनाम । वेद इत्यपि धननाम । बहुधन इत्यर्थः । त्वं वृषा वृषत्वेभिः महित्वा । महित्वेति बहुवचनस्य स्थान एकवचनम् । वृषत्वेभिः महित्वेभिरिति चोभयत्र स्वार्थ एव भावप्रत्ययः । त्वं वर्षिता महद्भिर्वर्षणैरित्यर्थः । द्युम्नी । द्युम्नं द्योततेर्यशो वा धनं वान्नं वा । यशोभिरन्नैर्धनैर्वा यशस्वी अन्नवान् धनवान् वा भवसीत्यर्थः । नृचक्षा मनुष्याणां द्रष्टा ॥ २

राज्ञो॒ नु ते॒ वरु॑णस्य व्र॒तानि॑ बृ॒हद्ग॑भी॒रं तव॑ सोम॒ धाम॑ ।
शुचि॒ष्ट्वम॑सि प्रि॒यो न मि॒त्रो द॒क्षाय्यो॑ अर्य॒मेवा॑सि सोम ॥ ३

नुशब्दोऽत्र उपमार्थम् । राज्ञ इव वरुणस्य ते तव व्रतानि अत्यन्तोत्कृष्टानि कर्माणि बृहच्च गभीरं दुरवगाहम् । तव हे सोम धाम तेजः स्थानं वा शुचिश्च । त्वमसि प्रियश्च सर्वस्य । क इव । उच्यते । न मित्रः । पुरस्तादुपचारोऽप्ययं नशब्दः सामर्थ्यादुपमार्थीयः । मित्र इव देवताविशेषः । दक्षाय्यः । दक्ष वृद्धौ । वर्धयिता च यजमानानाम् । अर्यमेव देवताविशेषः असि भवसि हे सोम ॥ ३

या ते॒ धामा॑नि दि॒वि या पृ॑थि॒व्यां या पर्व॑ते॒ष्वोष॑धीष्व॒प्सु ।
तेभि॑र्नो॒ विश्वैः॑ सु॒मना॒ अहे॑ळ॒न्राज॒न्त्सोम॒ प्रति॑ ह॒व्या गृ॑भाय ॥

यानि तव धामानि स्थानानि जन्मानि वा दिवि यानि च पृथिव्यां यानि च पर्वतेष्वोषधीषु अप्सु च । तेभिः विश्वैः तैः सर्वैः । तृतीयानिर्देशाद्युक्त इति वाक्यशेषः । सर्वेषु स्थानेषु जन्मसु वा वर्तमान इत्यर्थः । नः अस्माकं स्वभूतानि सुमनाः प्रीतचित्तः । अहेळन् अक्रुध्यन् हे राजन् सोम प्रति हव्या गृभाय हवींषि प्रतिगृहाण ॥ ४

त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहा ।
त्वं भद्रो असि क्रतुः ॥

त्वं हे सोम असि भवसि सत्पतिः सतां पालयिता । त्वं राजा उत वृत्रहा त्वम् । भद्रः कल्याणोऽसि क्रतुः कर्ता सर्वार्थानाम् । अथवा क्रतुशब्दः कर्मनाम प्रज्ञानाम वा अन्तर्णीतमत्वर्थश्च । कर्मवान् प्रज्ञावान् वेत्यर्थः ॥ ५

त्वं च सोम नो वशो जीवातुं न मरामहे ।
प्रियस्तोत्रो वनस्पतिः ॥ ६

चशब्दोऽत्र पदपूरणः । त्वं हे सोम नः अस्मभ्यं वशः । वश कान्तौ । काम्यः प्रार्थयितव्यः । सर्वस्तोतॄणां याच्य इत्यर्थः । जीवातुं जीविकाम् । कर्मसंप्रदानश्रुत्योः साकाङ्क्षत्वात् देहीति वाक्यशेषः । अथवा त्वं चेति चशब्दश्रुतिसामर्थ्यात्त्वदनुचराश्चेति वाक्यशेषः । त्वं च सर्वस्तोतॄणां याच्यः त्वदनुचराश्चास्मभ्यं जीविकां दत्तेति वाक्यशेषः । अनुचराणां चात्र गुणता सोमस्यैव प्राधान्यं इति सौम्यत्वस्याविरोधः । किं कारणं याच्यः । उच्यते । यस्माद्वयं न मरामहे । म्रियतिरत्र सामर्थ्यादन्तर्णीतसन्नर्थः । न शीघ्रं मुमूर्षाम इत्यर्थः । कीदृशोऽहम् । उच्यते । प्रियस्तोत्रः स्तुतिप्रियः । वनस्पतिः वनानां पालयिता स्वामी वा ॥ ६

त्वं सोम महे भगं त्वं यून ऋतायते ।
दक्षं दधासि जीवसे ॥ ७

हे सोम महे महते वृद्धाय । स्थविरायेत्यर्थः । भगं धनम् । त्वमेव यूने तरुणाय । ऋतायते यज्ञं कामयमानाय । दक्षं बलं वृद्धिं वा दधासि ददासि जीवसे जीवितुम् ॥ ७

त्वं नः सोम विश्वतो रक्षा राजन्नघायतः ।
न रिष्येत्त्वावतः सखा ॥ ८

त्वं नः अस्मान् हे सोम विश्वतः सर्वस्मात् रक्ष । हे राजन् अघायतः पापमिच्छतः । किं कारणम् । उच्यते । यस्मान्न रिष्येत् न रिष्यते न हिंस्यते । त्वावतः त्वत्सदृशस्य सखा । वयं च तव सखायः ॥ ८

सोम यास्ते मयोभुव ऊतयः सन्ति दाशुषे ।
ताभिर्नोऽविता भव ॥ ९

हे सोम यास्ते मयोभुवः सुखस्य भावयित्र्यः । ऊतयः पालनानि सन्ति दाशुषे यजमानस्यार्थाय । ताभिः नः अविता भव ॥ ९

इमं यज्ञमिदं वचो जुजुषाण उपागहि ।
सोम त्वं नो वृधे भव ॥ १०

इमं यज्ञं इदं वचः स्तुतिलक्षणं जुजुषाण । हेतावियं शानच् । व्यत्ययश्च विकरणस्य द्रष्टव्यः । प्रयोजनस्य च हेतुत्वेन विवक्षा । सेवितुमित्यर्थः । उपागहि उपागच्छ । उपागम्य च हे सोम त्वं नो वृधे वर्धनाय भव ॥ १०

सोम गीर्भिष्ट्वा वयं वर्धयामो वचोविदः । ११
सुमृळीको न आ विश ॥

दर्शेः आज्यभागस्य पुरोऽनुवाक्यैषा । हे सोम गीर्भिः स्तुतिलक्षणाभिर्वाग्भिः त्वां वयं वर्धयामः वचोविदः स्तुतिलक्षणस्य वचसो वेदितारः । सम्यक् स्तोतुं ज्ञातार इत्यर्थः । स एतत् ज्ञात्वा सुमृळीकः सुसुखः सन् नः अस्माकं आविश प्रविश उपविश याज्यालक्षणं हविः प्रतिग्रहीतुम् ॥ ११

गयस्फानो अमीवहा वसुवित्पुष्टिवर्धनः ।
सुमित्रः सोम नो भव ॥ १२

गय इत्यपत्यनाम गृहनाम वा धननाम वा । स्फायिर्वृध्यर्थः । अपत्यस्य धनस्य गृहस्य वा वर्धयिता गयस्फानः । अमीवहा हिंसितॄणां हन्ता । वसुवित् । विन्दतिर्लाभार्थः सामर्थ्याच्चान्तर्णीतण्यर्थः । धनानां लम्भयिता । दातेत्यर्थः । पुष्टिवर्धनः सर्वप्रकारायाः पुष्टेर्वर्धयिता । सुमित्रः शोभनानि मित्राणि सुमित्राणि । तानि करोतीति सुमित्रयति । तत्करोतीति णिच् । सुमित्रयतेरच् । शोभनानां मित्राणां कर्ता । हे सोम नः अस्माकं भव ॥ १२

सोम रारन्धि नो हृदि गावो न यवसेष्वा ।
मर्य इव स्व ओक्ये ॥ १३

हे सोम रारन्धि अत्यर्थं रमस्व । नो हृदि अस्माकं हृदये । गावो न यवसेषु । यवसशब्दो घासवचनः सामर्थ्याच्चेहान्तर्णीतमत्वर्थः । गाव इव यवसवत्सु देशेषु । आकारस्तु पदपूरणः । मर्य इव स्व ओक्ये । स्वार्थेऽयं यत्प्रत्ययः । ओक्ये निवासस्थाने ॥ १३

यः सोम सख्ये तव रारणद्देव मर्त्यः ।
तं दक्षः सचते कविः ॥ १४

हे सोम सख्ये तव । देवानां मनुष्याणां च किं सख्यम् । यष्टव्या देवाः यष्टारो मनुष्या इति । तस्मिन् सख्ये तव त्वदीये । यागे इत्यर्थः । रारणत् अत्यन्तं रमयते । हे देव मर्त्यो मनुष्यः । तं दक्षः बलं वृद्धिं वा सचते सेवते । बलं वृद्धिं वा प्राप्नोतीत्यर्थः । कविः मेधावी ॥ १४

उरुष्या णो अभिशस्तेः सोम नि पाह्यंहसः ।
सखा सुशेव एधि नः ॥ १५

उरुष्या नः पालय अस्मान् अभिशस्तेः अभिहिंसितुः हे सोम । न हि केवलात् अभिशस्तेः । निपाहि नियमेन रक्ष अंहसः पापादपि । सखा च सुशेवः सुसुखः एधि भव नः अस्माकम् ॥ १५

आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् ।
भवा वाजस्य संगथे ॥ १६

आप्यायस्व । प्यायतिर्वृद्ध्यर्थः । वर्धस्व । समेतु ते । संगच्छतां ते विश्वतः सर्वतः हे सोम । वृष्ण्यम् । अपठितमपि बलनामैतत् । रसवचनो वा सामर्थ्यादत्र वृष्ण्यशब्दः । बलं रसो वा भव चास्माकं वाजस्यान्नस्य संगथे । चतुर्थ्यर्थे सप्तम्येषा । संगमाय लाभायेत्यर्थः ॥ १६

आ प्यायस्व मदिन्तम सोम विश्वेभिरंशुभिः ।
भवा नः सुश्रवस्तमः सखा वृधे ॥ १७

आप्यायस्व हे मदिन्तम अतिशयेन मदवन् । सुष्ठु मदकरेत्यर्थः । सोम विश्वेभिः सर्वैरंशुभिः । सोमस्यावयवा अंशव उच्यन्ते । भव नः अस्माकं सुश्रवस्तमः सुधनतमः सुकीर्तितमो वा । सखा वृधे वर्धनाय ॥ १७

सं ते पयांसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः ।
आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्व ॥ १८

यन्तु इत्याख्यातं प्रतिसंशब्दमनुषक्तव्यम् । संयन्तु संगच्छन्तामस्माभिस्सह ते तव स्वभूतानि । त्वदीयानीत्यर्थः । पयांसि वृष्टिलक्षणान्युदकानि । समु यन्तु वाजाः । उकारः पदपूरणः । संगच्छन्तामन्नानि । सं वृष्ण्यानि संगच्छन्तां बलानि रसा वा । कीदृशस्य तव । उच्यते । अभिमातिषाहः हिंसितॄणामभिभवितुः । अथवा ते अभिमातिषाहः । उभयत्र तृतीयार्थे षष्ठी । संगच्छतां त्वया हिंसितॄणामभिभवित्रा पयांसि वसतीवर्यैकधानालक्षणान्युदकानि । समु यन्तु वाजा सवनीयपुरोडाशहविर्लक्षणान्यन्नानि बलानि रसा वा । किंच आप्यायमानः अमृताय अमृतभावाय । अथवा अमृतशब्दो देवतावचनः । अमृतेभ्यः देवतार्थमित्यर्थः । हे सोम दिवि श्रवांसि कीर्तिमन्नानि धनानि वा अस्माकं उत्तमानि धिष्व धारय । कुर्वित्यर्थः ॥ १८

या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम् ।
गयस्फानः प्रतरणः सुवीरोऽवीरहा प्र चरा सोम दुर्यान् ॥ १९

यानि तव धामानि स्थानानि नामानि जन्मानि वा तेजांसि वा । हविषा यजन्ति यष्टारः । तानि ते सर्वाणि परिभूरस्तु । परिपूर्वो भवतिः सर्वत्र परिग्रहार्थे । उभयत्र बहुवचनस्य स्थाने एकवचनम् । परिगृहीतॄणि सन्तु । इमं मदीयं यज्ञम् । यानि तव यष्टव्यानि धामानि तैः सर्वैः इमं यज्ञं परिगृहाणेत्यर्थः । किंच गयस्फानः अपत्यस्य धनस्य गृहस्य वा वर्धयिता । प्रतरणः । तरतिरत्र वृध्यर्थः । वर्धयिता च सर्वार्थानाम् । शोभना वीरा देया यस्य स सुवीरः । शोभनानां च पुत्राणां दातेत्यर्थः । अवीरहा अहन्ता च वीराणाम् । प्रगच्छ हे सोम दुर्यान् । गृहनामैतत् । अस्मदीयानि गृहाणि॥१९

सोमो धेनुं सोमो अर्वन्तमाशुं सोमो वीरं कर्मण्यं ददाति ।
सादन्यं विदथ्यं सभेयं पितृश्रवणं यो ददाशदस्मै ॥ २०

सोमः धेनुं सोम एव अर्वन्तमाशुं शीघ्रं सोम एव वीरं पुत्रं कर्मण्यं कर्मसु साधुं सर्वकर्मसु योग्यं ददाति । न च सर्वकर्मयोग्यमेव केवलम् । किं तर्हि । सादन्यम् । सदनं गृहम् । तत्र च साधुम् । विदथ्यं सभेयम् । विद्वत्समाजः सभा । तत्र च साधुम् । पितृश्रवणं पितॄणां च श्रोतारम् । विनीतमित्यर्थः । कस्मै ददाति । यो ददाशत् यो ददाति अस्मै सोमाय । किम् । सामर्थ्यात् हवींषि ॥ २०

अषाळ्हं युत्सु पृतनासु पप्रिं स्वर्षामप्सां वृजनस्य गोपाम् ।
भरेषुजां सुक्षितिं सुश्रवसं जयन्तं त्वामनु मदेम सोम ॥ २१

अषाळ्हमन्यैः अनभिभूतपूर्वम् । युत्सु युद्धेषु । पृतनासु पप्रिम् । पॄ पालनपूरणयोरित्यस्य एतद्रूपं न प्रा पूरणे इत्यस्य । संग्रामेषु पालयितारं यष्टॄणां च स्तोतॄणां च । स्वर्षाम् । स्वर्द्यौः । तां सनोतीति स्वर्षा । तं स्वर्षाम् । दिवः संभक्तारमित्यर्थः । अप्सां अपां च सेवितारम् । वृजनस्य गोपाम् । वृजनमिति बलनाम । बलस्य गोप्तारम् । भरेषुजाम् । जनिरत्र सामर्थ्याज्जयतेरर्थे । संग्रामेषु जेतारम् । सुक्षितिं सुनिवासम् । सुश्रवसं सुकीर्तिं स्वन्नं सुधनं वा । जयन्तं त्वामनु । अनुशब्दोऽत्र अनुर्लक्षणे (पा. १. ४. ८४) इत्येवं कर्मप्रवचनीयः आक्षिप्तनिशमयत्यर्थः । शाकल्यस्य संहितामनुप्रावर्षदिति यथा । जयन्तं त्वामनुनिशम्य । श्रुत्वेत्यर्थः । मदेम मोदेम । प्रहृष्टाः स्यामेत्यर्थः । हे सोम ॥ २१

त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः
त्वमा ततन्थोर्वन्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ ॥ २२

त्वमिमाः ओषधीः हे सोम विश्वाः सर्वाः । त्वमेवापः वृष्टिलक्षणान्युदकानि । अजनयः जनयसि । त्वमेव गाः । त्वमेवाततन्थ आतनोषि विस्तारयसि । उरु विस्तीर्णं अन्तरिक्षम् । त्वमेवादित्याख्येन ज्योतिषा विववर्थ विविधं वारयसि शार्वरं तमः । ओषधीजननादि हि सर्वं धर्मायत्तम् । धर्मश्च यागादिः सोमायत्तः । अतः सोमसाध्ययागादिद्वारकर्मत्वादोषध्यादीनामिदमुच्यते त्वमिमा ओषधीः इत्यादि ॥ २२

देवेन नो मनसा देव सोम रायो भागं सहसावन्नभि युध्य ।
मा त्वा तनदीशिषे वीर्यस्योभयेभ्यः प्र चिकित्सा गविष्टौ ॥ २३

देवेनेत्यत्र सामर्थ्याद्दीव्यतिः दानार्थः । देवेन दानाभिमुखेन मनसा नः अस्मान् प्रति हे देव सोम रायो धनस्य भागमेकदेशम् । हे सहसावन् बलवन् अभियुध्य । अभियुध्यतिर्गतिकर्मा सामर्थ्याच्चात्रान्तर्णीतण्यर्थः । अभिगमय । देह्यस्मभ्यमित्यर्थः । मा च त्वां ददतं आतनत् । आतनिरत्र सामर्थ्यात्प्रतिबन्धार्थः । प्रतिभात्सीत् । भवतो ददतः प्रतिबन्धं मा कश्चित् कार्षीदित्यर्थः । कस्मात् । उच्यते । यस्मात् त्वमीशिषे वीर्यस्य स्वाम्यसि । यस्मादत्यन्तशूरोऽसि । अत्यन्तशूरत्वाच्च प्रतिबन्धकारिणो

हन्तुं समर्थ इत्यर्थः । यतश्चैतदेवं ततो ब्रूमः । उभयशब्दः शत्रुविषयः । अपादानपञ्चमीश्रुतेश्च योग्यक्रियाध्याहारः । आत्मीयेभ्योऽस्मदीयेभ्यश्च उभयेभ्योऽपि शत्रुभ्यो धनान्यपहृत्य । अथवा उभयशब्दः प्रयोजनवचनः । सामर्थ्याच्चतुर्थी चैषा द्वितीयार्थे । यानि चास्माकमिह लोके प्रयोजनानि यानि च परत्र तेभ्यः उभयेभ्यः । ऐहलौकिकपारलौकिककार्यमित्यर्थः । प्रचिकित्सा । कित ज्ञाने । ज्ञानेन चात्र तत्पूर्वकं दानं लक्ष्यते । प्रकर्षेण देहीत्यर्थः । गविष्टौ । गाव इष्यन्ते यत्र प्राप्तुं सा गविष्टिरिष्टिः । तत्र । यज्ञे इत्यर्थः ॥ २३

---

एता उ त्या उषसः केतुमक्रत पूर्वे अर्धे रजसो भानुमञ्जते ।
निष्कृण्वाना आयुधानीव धृष्णवः प्रति गावोऽरुषीर्यन्ति मातरः ॥ १

उषस्यम् ।

उषस्यमेतत् सूक्तम् । उकारः पदपूरणः । तच्छब्दश्रुतेश्च योग्यार्थसंबन्धो यच्छब्दोऽध्याहार्यः । याः पूर्वेष्वप्यहःस्वकार्षुः एतास्ता उषसः । एकस्या एवोषसः पूजनार्थमेतत् बहुवचनम् । भवन्तो मे गुरव इति यथा । अवयवभेदापेक्षं वा । भिन्नेष्वहस्सूषोभेदात् बह्व्य एवोषसः । केतुमक्रत प्रज्ञानं प्राणिनां कुर्वन्ति । केन प्रकारेण । उच्यते । पूर्वे अर्धे रजसः द्युलोकस्यान्तरिक्षस्य वा । सप्तमीनिर्देशात् स्थिता इति वाक्यशेषः । भानुमञ्जते । भानुमिति तृतीयार्थे द्वितीया । अञ्जिर्व्यक्त्यर्थः । भानुना व्यञ्जति । स्वया भासा सर्वं व्यक्तीकुर्वन्तीत्यर्थः । कथम् । उच्यते । निष्कृण्वाना आयुधानीव । कृणोतिरत्र सामर्थ्यात् कृषेरर्थे द्रष्टव्यः । निष्कर्षन्तः । आयुधानीव धृष्णवः । धर्षयितारो यथा कोशेभ्यः खड्गान्निष्कर्षन्तो व्यक्तीकुर्वन्ति तद्वदित्यर्थः । अथवा पूर्वे अर्धे रजसः भानुं अञ्जते इत्याञ्जिर्गत्यर्थः । सामर्थ्याच्चेहान्तर्णीतण्यर्थः । पूर्वे अर्धे अन्तरिक्षस्य द्युलोकस्य वा दीप्तिं गमयन्ति । प्राणिनां च प्रकाशद्वारेण प्रज्ञानं कुर्वन्ति । पूर्वार्धे च द्युलोकस्यान्तरिक्षस्य वा दीप्तं कुर्वन्तीत्यर्थः । कथम् । निष्कृण्वाना आयुधानीव । निरित्येष समित्येतस्य स्थाने । संस्कुर्वन्तः आयुधानीव धृष्णवः । यथा परिमार्जनादिभिः संस्कारैः संस्कुर्वन्तः आयुधानि योद्धारो दीप्तानि कुर्वन्ति तद्वदित्यर्थः । कृत्वा चैतत् प्रतिगावोऽरुषीर्यन्ति प्रतियन्ति । यत आगताः तत्रैव प्रतिगच्छन्ति । यत आदित्यादुत्पन्नास्तत्रैव प्रतिलीयन्त इत्यर्थः । गावः । उषसोऽत्र गाव उच्यन्ते ।

कृष्णा यद् गोष्वरुणीषु सीदत् । ऋ॰ वै. १०. ६२. ४.

इति यथा । उषसः कीदृश्यः । अरुषीः । अरुषतिर्गतिकर्मा । गमनस्वभाविकाः । मातरः मातृस्थानीयाः सर्वस्य निर्मात्र्यो वा ॥ १

उदपप्तन्नरुणा भानवो वृथा स्वायुजो अरुषीर्गा अयुक्षत ।
अक्रन्नुषासो वयुनानि पूर्वथा रुशन्तं भानुमरुषीरशिश्रयुः ॥ २

उदपप्तन् उत्पतन्ति उद्गच्छन्ति । अरुणाः रक्तवर्णाः उषसः । भानवः दीप्ताः । उद्गस्य च वृथायत्नेन । स्वायुजः सुखमायुज्यन्ते या रथेषु ताः स्वायुजः । अरुषीः गमनस्वभाविकाः । गाः । उषसामुपयोजनानि गाव इहोच्यन्ते । आत्मीया वडवा । अयुक्षत युञ्जन्ति । युक्त्वा च त्रीनपि लोकान् गत्वा अक्रन् कुर्वन्ति उषसः वयुनानि प्रकाशद्वारेण प्रज्ञानानि कुर्वन्ति प्राणिनाम् । पूर्वथा पूर्वेष्विव कालेषु । कृत्वा च रुशन्तं दीप्यमानभानुं अरुषीः गमनस्वभाविकाः अशिश्रयुः । संश्रयन्ति । आदित्ये एव प्रलीयन्त इत्यर्थः ॥ २

अर्चन्ति नारीरपसो न विष्टिभिः समानेन योजनेना परावतः ।
इषं वहन्तीः सुकृते सुदानवे विश्वेदह यजमानाय सुन्वते ॥ ३

अर्चन्ति । अर्च पूजायाम् । पूजयन्त्युषसः । प्रकाशत्वापादनेनाभिपूजितं कुर्वन्तीत्यर्थः । किम् । सामर्थ्यात् त्रैलोक्यं दिवं वा । नारीरपसो न विष्टिभिः नार्यः कर्मवत्य इव कर्मभिः । उपलेपनादिकर्मभिः गृहादि अभिपूजितं कुर्वन्ति तद्वदित्यर्थः । न च केवलाः । किं तर्हि । समानेन योजनेन सर्वैः प्रकाशैः । प्रकाशकत्वेन युज्यमानत्वाद्योजन इहादित्य उच्यते । सहयोगलक्षणे चैषा तृतीया । आत्मनः समानेन सर्वप्रकाश्यानां वा साधारणेन प्रकाशयित्रा आदित्येन सहेत्यर्थः । अथवा प्रकाश्यैर्युज्यमानत्वाद्योजन इह प्रकाश एवोच्यते । करणे एवैषा तृतीया । सर्वप्रकाश्यसाधारणेन प्रकाशेनार्चन्तीत्यर्थः । आ परावतः दूरात् अन्तात् । समस्तं त्रैलोक्यं दिवं चेत्यर्थः । इषं वहन्तीः प्रापयन्त्यः । अन्नं ददत्य इत्यर्थः । सुकृते शोभनकारिणे सुदानवे शोभनहविर्दायिने । विश्वेदह । विश्वा इति चतुर्थ्येकवचनस्याकारः । इदहेति निपातौ पदपूरणौ । सर्वस्मै यजमानाय सुन्वते सोमाभिषवं कुर्वते ॥ ३

अधि पेशांसि वपते नृतूरिवापोर्णुते वक्ष उस्रेव बर्जहम् ।
ज्योतिर्विश्वस्मै भुवनाय कृण्वती गावो न व्रजं व्युषा आवर्तमः ॥ ४

अधि उपरि पेशांसि प्रकाश्यानि रूपाणि वपते । वपिः केशश्मश्रुवपन इत्यादि मुण्डने प्रसिद्धः । मुण्डयत्युषा केशस्थानीयं तमः । प्रकाश्यानामर्थानामपनयतीत्यर्थः । कथम् । नृतूरिव नापित इव । प्रकाशयति चाम्भीयं वक्षः । कथम् । उस्रेव बर्जहम् । उस्रेति गोनाम । बुभ्रू भरणे । प्राणिनां भरणसमर्थत्वात् वस् इति क्षीरमुच्यते । तज्ञ्- हतीति बर्जहं ऊधः । गौरिव क्षीरपूर्णमूधरित्यर्थः । किं कुर्वन्त्युषाः । इयमिदं करोति । उच्यते । ज्योतिर्विश्वस्मै भुवनाय सर्वस्य भूतजातस्यार्थाय कृण्वती कुर्वन्ती । किंच गावो न व्रजम् । यथा गावो गोष्ठम् एवमुषाः द्यामावः आवृणोति । स्वेनज्यो- तिषा व्याप्नोतीत्यर्थः । किम् । उच्यते । तमः शार्वरम् ॥ ४

प्रत्यर्ची रुशंदस्या अदर्शि वि तिष्ठते बाधते कृष्णमभ्वम् ।
स्वरुं न पेशो विदथेष्वञ्जञ्चित्रं दिवो दुहिता भानुमश्रेत् ॥ ५

अर्चिः ज्योतिः रुशद्दीप्यमानं अस्या उषसः प्रत्यदर्शि प्रतिदृश्यते । वितिष्ठते विविधं गच्छति त्रीनपि लोकान् प्रति । गत्वा च बाधते अपनयति कृष्णं कृष्णवर्णं शार्वरं तमः । अभ्वं महत् । किंच स्वरुं न । यूपस्य यः प्रथमशकलः पश्वञ्जनार्थमुपा- दीयते स स्वरुरित्युच्यते । प्रथमार्थे चैषा द्वितीया । यथा स्वरुः पेशः आज्यसंबन्धा- दुज्वलरूपं विदथेषु अञ्जन्.श्रयति एवं चित्रं विचित्रं पूज्यं वा दिवो दुहिता । द्युप्रभ- वत्वादुषो दिवो दुहितेत्याख्यायते । सा भानुं दीप्तिमश्रेत् श्रयति । प्रतिक्षणं दीप्ता रूपान्तरीभवतीत्यर्थः ॥ ५

अतारिष्म तमसस्पारमस्योषा उच्छन्ती वयुना कृणोति ।
श्रिये छन्दो न स्मयते विभाती सुप्रतीका सौमनसायाजीगः ॥ ६

अतारिष्म निस्संशयं प्राप्ता वयं तमसः पारमस्य । किं कारणम् । उच्यते । यस्मादुषाः इयं सांप्रतमुच्छन्ती । तमांसि विवासयन्ती वयुना प्रज्ञानानि प्राणिनां कृणोति करोति । यस्माच्च श्रिये प्रकाशलक्षणायै । छन्दः । छन्दसदिति कान्तिकर्मसु पाठात् छन्दश्शब्दोऽत्र कामिवचनः । कामीव स्मयते । स्मिङ् ईषद्धसने । ईषद्धसन्तीव विभाती विविधं दीप्यमाना । यथा कामिनी ईषद्धसन्ती स्वदन्तकिरणान् प्रकाशयति एवमुषाः स्वकिरणानाविष्करोतीत्यर्थः । अथवा छन्द इति स्तोतृनाम । स्तोतेव स्मयते । यथा स्तोता स्तुत्यमतिशयवद्भिर्गुणैः स्तुवन् प्रकर्षाद्विकसितवदनो भवति तद्वदित्यर्थः । स्मित्वा च सुप्रतीका । प्रतीकशब्दो मुखवचनः दर्शनपर्यायो वा । सुमु-

खा सुदर्शना वा। सौमनसाय सौमनस्याय प्राणिनामजीगः। जिगर्तिर्गिरतिकर्मा वा गृह्णातिकर्मा वान्यत्र। इह तु सामर्थ्यात् गत्यर्थः। जिगातेर्वा गिरनिकर्मणः इदं रूपम्। त्रीनपि लोकान् प्रतिगच्छतीत्यर्थः॥ ६

भास्वती नेत्री सूनृतानां दिव स्तवे दुहिता गोतमेभिः।
प्रजावतो नृवतो अश्वबुध्यानुषो गोअग्राँ उप मासि वाजान्॥ ७

भास्वतीत्युषोनाम। नेत्री सूनृतानां वाचाम्। उषउदयोत्तरकाले हि प्राणिनां वाचः प्रवर्तन्ते। अतः सैव तासां प्रवर्तयितेत्युच्यते नेत्री सूनृतानामिति। दिवो दुहिता। द्युप्रभवत्वादुषा दिवो दुहितेत्युच्यते। स्तवे स्तूयते। गोतमेभिः। अस्मदो द्वयोश्च (पा. १. २. ५९) इत्येवमेतदेकस्मिन्नेव बहुवचनम्। मया गोतमेनेत्यर्थः। तत्प्रभृत्यपेक्षं वा बहुवचनम्। अस्माभिः गोतमेभिः। गोतमप्रभृतिभिरित्यर्थः। परोऽर्धर्चः प्रत्यक्षकृतत्वात् भिन्नं वाक्यम्। प्रजावतः प्रजासहितान्। नृवतः परिचारकमनुष्यैः सहितान्। अश्वबुध्यान् अश्वैर्यैं बोध्यन्ते तेऽश्वबुध्याः। तानश्वबुध्यान्। उत्कृष्टैरश्वैरुद्भासितानित्यर्थः। हे उषः गोअग्रान्। गावोऽग्रभूता येषां ते गोअग्राः। तान् गोअग्रान्। उत्कृष्टाभिः गोभिः सहितानित्यर्थः। उपमासि। माङ् माने। लोडर्थे चात्र लट्। निर्मिमीमहि। कुरु। देहीत्यर्थः। कान्। उच्यते। वाजान्। अन्ननामैतत्। प्रजादिसहितान्यन्नानि देहीत्यर्थः॥ ७

उषस्तमश्यां यशसं सुवीरं दासप्रवर्गं रयिमश्वबुध्यम्।
सुदंससा श्रवसा या विभासि वाजप्रसूता सुभगे बृहन्तम्॥ ८

हे उषः तमश्याम्। तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः। यं त्वमेव दातुं समर्थः नान्यः कश्चित् तं त्वया दीयमानं अश्यां प्राप्नुयामहे। यशसं यशस्वन्तम्। अन्नेन सहितमित्यर्थः। सुवीरं शोभनैर्वीरैः पुत्रैः सहितम्। दासप्रवर्गम्। प्रकृष्टा वर्गा येषां ते प्रवर्गाः। दासाः प्रवर्गा यस्मिन् स दासप्रवर्गः। तं दासप्रवर्गम्। प्रकृष्टैर्दासगणैः सहितमित्यर्थः। रयिं धनम्। अश्वबुध्यं अश्वैरुद्भासितम्। याहं कीदृशी। उच्यते। सुदंससा श्रवसा। दंस इति कर्मनाम। श्रवःशब्दः कीर्तिपर्यायः। उभयत्र च हेतौ तृतीया। प्रयोजनस्य च हेतुत्वेन विवक्षा। शोभनप्रकाशकरणादिकर्मसंबन्धया कीर्त्या हेतुभूतया। अतिशयवत्कर्मनिमित्तकीर्त्यर्थमित्यर्थः। या विभासि विविधं दीप्यसे। अथवा दसि दंशदर्शनयोरित्यस्य दंसशब्दो दर्शनवचनः। श्रवःशब्दोऽपि सामर्थ्यात् ज्योतिर्वचनः। सुदर्शनेन ज्योतिषा या विभासीत्यर्थः। वाज-

प्रसूता। षू प्रेरणे। कर्तव्येनाग्निहोत्रादि[illegible] प्रेरिता। हे सुभगे सुधने। बृहन्तम्। [illegible]षणमिदम्। व्यत्ययेन तु पुँल्लिङ्गता। महद्विभास्ति। अथवा पुँल्लिङ्गत्वसामर्थ्याद्व्यवहितस्यापि रयिमित्येतस्यैव विशेषणम्। महान्तं रयिमस्मासीति ॥ ८

विश्वा॑नि दे॒वी भुव॑नाभि॒चक्ष्या॑ प्रती॒ची चक्षु॑रुर्वि॒या वि भा॑ति ।
विश्वं॑ जी॒वं च॒रसे॑ बो॒धय॑न्ती॒ विश्व॑स्य॒ वाच॑मविदन्मना॒योः ॥ ९

विश्वानि देवी उषा भुवना भूतजातानि अभिचक्ष्य दर्शयित्वा। प्रकाश्येत्यर्थः। प्रतीची। अञ्चतिर्गत्यर्थः। तं तमर्थं प्रतिगन्त्री। सर्वव्यापीत्यर्थः। चक्षुः चक्षुःस्थानीया प्राणिनाम्। उर्विया। प्रथमैकवचनस्यायामियादेशः। उरु विस्तीर्णा। विभाति विविधं दीप्यते। किंच विश्वं जीवं। सर्वप्राणिनां चरसे तत्र तत्र गमनाय। बोधयन्ती सुप्तानुत्थापयन्ती। विश्वस्य सर्वस्य ऋषेर्यजमानस्य वा वाचं स्वभूतां स्तुतिम्। अविदत् जानाति ज्ञातवती वा। मनायोः। मन्यतेरर्चतिकर्मणो मना स्तुतिरुच्यते। तत्कामस्य मनायोः। सर्वेण ऋषीणा यजमानेन वा स्तुतिकामेन स्तूयते स्तुता वेत्यर्थः ॥ ९

पुनः॑पुन॒र्जाय॑माना पुरा॒णी स॑मा॒नं वर्ण॑म॒भि शुम्भ॑माना ।
श्व॒घ्नीव॑ कृ॒त्नुर्विज॑ आमिना॒ना मर्त॑स्य दे॒वी ज॒रय॒न्त्यायुः॑ ॥ १०

पुनः पुनर्जायमाना। जन्मनात्रोदयोऽभिप्रेतः। उद्यती। पुराणी। जगत्सृष्टिकाल[illegible]त्पन्नत्वादुषा पुराणीत्युच्यते। समानं वर्णमभि। अत्र कर्मण उपसर्गस्य च श्रुतेः योग्यक्रियापदाध्याहारः। समानं वर्णमभिशुम्भमाना शोभमाना। उषोन्तरैः समानेन शुक्लेन वर्णेन शोभमानेत्यर्थः। श्विघ्नीव। श्वभिर्हन्तीति श्वघ्निर्लुब्धक इहोच्यते। स यथा कृत्नुः पापस्य कर्मणः कर्ता। विजः। विः पक्षी। ततो जातः इति विजः। ये अनुपजातपक्षा बालाः पक्षिणः तानवष्टभ्य बलाद्धिंसयात्। एवमामिनाना। मीञ् हिंसायाम्। बलाद्धिंसन्ती। किम्। सामर्थ्याच्चर्मांसि। सर्वप्राणिनो वा पूर्वं निर्दिष्टत्वात् पक्षिणः। मर्तस्य मनुष्याणां च देवी उषाः जरयन्ती जरान्नयन्ती। क्षपयन्तीत्यर्थः। आयुः जीवितम्। लक्षणार्थशतृशानच्छ्रुतेः साकांक्षत्वादस्या ऋचः उत्तरयैकवाक्यता ॥ १०

व्यू॒र्ण्व॒ती दि॒वो अन्ताँ॑ अबो॒ध्यप॒ स्वसा॑रं सनु॒तर्यु॑योति ।
प्र॒मि॒न॒ती म॑नु॒ष्या॑ यु॒गानि॒ योषा॑ जा॒रस्य॒ चक्ष॑सा॒ वि भा॑ति ॥ ११

व्यूर्ण्वती । ऊर्णु च्छादने । विविधं छादयन्ती स्वेन ज्योतिषा तमांसि । दिवो अन्तान् अबोधि बोधयति । प्रकाशयतीत्यर्थः । स्वसारम् । उषसमुदयेनादित्यो जनयति अस्तमयेन रात्रिम् । अतो रात्रिरुषसः स्वसोच्यते । तां च । सनुतः । अन्तर्हितनामैतत् । अत्यन्तमन्तर्हिताम् । अपयुयोति अपमिश्रयति । अपनयतीत्यर्थः । किंच प्रमिनती हिंसन्ती । क्षपयन्तीत्यर्थः । मनुष्या युगानि । युगशब्दः कालवचनः । मनुष्याणां जीवितादिकालान् । योषा उषआख्या स्त्री । जारस्य । रात्रेः रसानां वा जरयितृत्वात् जार आदित्य उच्यते । तस्य स्वभूतेन चक्षसा दर्शनेन प्रकाशाख्येन । विभाति ॥ ११

पशून्न चित्रा सुभगा प्रथाना सिन्धुर्न क्षोद उर्विया व्यश्वैत् ।
अमिनती दैव्यानि व्रतानि सूर्यस्य चेति रश्मिभिर्दृशाना ॥ १२

पशून् न यथा कश्चिच्छीघ्रगमनाय विस्तीर्णे पथि गाः अन्यान् वा पशून् पृथूकरोति एवं चित्रा विचित्रा पूजनीया वा उषाः सुभगा सुधना प्रथाना प्रथयन्ती । किम् । सामर्थ्याज्ज्योतिः । सिन्धुर्न क्षोदः । क्षोद इत्युदकनाम । प्रथनस्य चेयं द्वितीयोपमा । यथा सिन्धुर्नदी आत्मीयमुदकं प्रथयति एवं प्रथाना । उर्विया उरु विस्तीर्णा । व्यश्वैत् । श्वयतिर्गत्यर्थः । विविधं गच्छति त्रीनपि लोकान् प्रति । किंच अमिनती अहिंसती दैव्यानि देवानां स्वभूतानि । व्रतानि यागकर्माणि । यागकर्मणां हि अकरणं हिंसा । उषआयत्ता च तेषां क्रिया तदुत्तरकालभावित्वात् । अत इदमुच्यते अमिनती दैव्यानि व्रतानीति । यागार्थमुद्यतीत्यर्थः । सूर्यस्य रश्मिभिः । तृतीयानिर्देशात् सदृशीति वाक्यशेषः । चेति ज्ञायते लक्ष्यते । दृशाना दृश्यमानोषाः । सदा सूर्यरश्मिसदृशी लक्ष्यत इत्यर्थः ॥ १२

उषस्तच्चित्रमा भरास्मभ्यं वाजिनीवति ।
येन तोकं च तनयं च धामहे ॥ १३

हे उषः तच्चित्रं विचित्रं पूजनीयं वा । आभर आहर । देहीत्यर्थः । अस्मभ्यं हे वाजिनीवति । वाजमन्नम् । तद्वती वाजिनी अन्नसंहतिः । तद्वती वाजिनीवती । अन्नसमूहवतीत्यर्थः । स्वार्थको वा मत्वर्थीयः । अन्नवतीत्यर्थः । येन तोकं च तनयं च । द्वयमप्येते अपत्यनामनी । पुत्रविषयमेकं पौत्रविषयमपरम् । पुत्रांश्च पौत्रांश्च । धामहे धारयामः । सम्यक् पुष्णीम इत्यर्थः ॥ १३

उषो॒ अ॒द्येह गो॑मत्यश्वा॑वति विभावरि ।
रे॒वद॒स्मे व्यु॑च्छ सूनृतावति ॥ १४

हे उषः अद्य इह । सप्तमीनिर्देशात् स्थितेभ्य इति वाक्यशेषः । हे गोमति अश्वावति विभावरि दीप्ते रेवत् धनसंयुक्तं । अस्मे । तादर्थ्यचतुर्थ्यन्तमेतत् । अस्मदर्थम् । इहैव स्थितेभ्योऽस्मभ्यं धनं देहीत्यर्थः । वि उच्छ विविधं तमांसि विवासय । हे सूनृतावति । सूनृताः प्रिया वाचः स्तुतिलक्षणाः । तद्वति ॥ १४

यु॒क्ष्वा हि वा॑जिनीव॒त्यश्वाँ॑ अ॒द्यारु॒णाँ उ॑षः ।
अथा॑ नो॒ विश्वा॒ सौभ॑गा॒न्या व॑ह ॥ १५

हिशब्दः पदपूरणः । स्वरथे नियुंक्ष्व । वाजिनीवति अश्वान् अद्य अरुणान् आरक्तवर्णान् हे उषः । अथ अनन्तरं नः अस्मान् प्रति विश्वा सौभगानि । भग इति धननाम । शोभनानि धनानि सुभगानि । सुभगान्येव सौभगानि । स्वार्थिकस्तद्धितः । आवह प्रापय । आनीयास्मभ्यं देहीत्यर्थः ॥ १५

अश्वि॑ना व॒र्तिर॒स्मदा गोम॑द्दस्रा॒ हिर॑ण्यवत् ।
अ॒र्वाग्रथं॒ सम॑नसा॒ नि य॑च्छतम् ॥ १६

आश्विनस्तृचः ।

हे अश्विनौ । वर्तिः । तृतीयार्थे प्रथमैषा । वर्तन्या । प्रसिद्धेन पथा । अस्मत् आ । आकारोऽत्र मर्यादायाम् । हे दस्रा शत्रूपक्षयकरौ दस्रनामानौ वा । यद्यपि चाश्विनोरेको दस्रनामा नासत्यनामापरः तथापीदं साहचर्यादुभयोरभिधानम् । गोमत् हिरण्यवत् । रथस्यैते विशेषणे । व्यत्ययेन तु नपुंसकता । अस्मभ्यं देयाभिर्गोभिर्हिरण्येन च संयुक्तम् । अर्वागस्मदभिमुखं स्वरथं समनसा संप्रीतचेतस्कौ । नियच्छतम् । गोमता हिरण्यवता च रथेन संप्रीयमाणावभिमुखं आगच्छतमित्यर्थः ॥ १६

यावि॒त्था श्लोक॒मा दि॒वो ज्योति॒र्जना॑य च॒क्रथुः॑ ।
आ न॒ ऊर्जं॑ वहतमश्विना यु॒वम् ॥ १७

यौ इत्था अमुत्रान्तरिक्षे सत्यं वा । श्लोकं श्लोकलक्षणं वचः । आ दिवः द्युलोकात् । विद्युदाख्यं ज्योतिः । जनाय लोकोपकारार्थम् । चक्रथुः । यच्छब्दश्रुते-

स्तच्छन्दोऽध्याहार्यः । तौ नः अस्मान् प्रति ऊर्जमन्नं आवहतं प्रापयतम् । दत्तमस्म-भ्यमित्यर्थः । हे अश्विनौ युवं युवाम् ॥ १७

एह देवा मयोभुवा दस्रा हिरण्यवर्तनी ।

उषर्बुधो वहन्तु सोमपीतये ॥ १८

आ इत्युपसर्गो वहन्त्वित्याख्यातेन संबन्धयितव्यः । इहास्मदीये यज्ञे देवाव-श्विनौ । मयोभुवा यष्टॄणां च स्तोतॄणां च सुखस्य भावयितारौ जनयितारौ । दस्रा हिरण्यवर्तिनी । वर्तनी रथचक्रधारा । सा हिरण्मयी ययोः तौ हिरण्यवर्तिनी । उष-र्बुधः । सुप्ताः सन्तः यज्ञं प्रति गन्तुमुषःकाले ये प्रतिबुध्यन्ते ते उषर्बुधोऽश्वाः । ते आवहन्तु सोमपीतये सोमपानार्थम् ॥ १८

---

अग्नीषोमाविमं सु मे शृणुतं वृषणा हवम् ।

प्रति सूक्तानि हर्यतं भवतं दाशुषे मयः ॥ १

अग्नीषोमीयमुत्तमम् ।

अनुवाकस्योत्तममिदं सूक्तं अग्नीषोमदेवत्यम् । हे अग्नीषोमौ इमं मे मम स्वभूतं सु शृणुतं शोभनं सुष्ठु वा शृणुतम् । हे वृषणा वर्षितारौ । हवं आह्वानम् । सूक्तानि च स्तुतिरूपाणि प्रतिहर्यतं कामयेथाम् । भवतं दाशुषे यजमानाय मयः सुखम् ॥ १

अग्नीषोमा यो अद्य वामिदं वचः सपर्यति ।

तस्मै धत्तं सुवीर्यं गवां पोषं स्वश्व्यम् ॥ २

पूर्णमासे उपांशुयाजस्यानुवाक्यैषा । हे अग्नीषोमौ यो अद्य वां वचः युवयोः अनुवाक्यालक्षणमिदं वचनं सपर्यति । परिचरणकर्मायमन्यत्र । इह तु सामर्थ्या-दुच्चारणार्थः । अथवा परिचरणकर्मैव इदम् । वचः इति तृतीयार्थे द्वितीया । युवा-मनुवाक्यालक्षणेन वचसा सपर्यति परिचरति । स्तौतीत्यर्थः । तस्मै धत्तं दत्तं सुवीर्यं शोभनेन वीर्येण सहितम् । गवां पोषम् । शोभनैश्चाश्वैः सहितम् ॥ २

अग्नीषोमाय आहुतिं यो वां दाशाद्धविष्कृतिम् ।

स प्रजया सुवीर्यं विश्वमायुर्व्यश्नवत् ॥ ३

अग्नीषोमौ यो यजमानः आहुतिं आज्यलक्षणम् । यो वां युवाभ्यां दाशात् ददाति । हविष्कृतिं पुरोडाशादिहविः यथोक्तसंस्कारादिसंस्कृतम् । सः प्रजया सुवीर्यं विश्वमायुः जीवितमन्नं वा व्यश्नवत् विविधं प्राप्नुयात् । लभेत युष्मत्प्रसादेनेत्यर्थः ॥ ३

अग्नीषोमा चेति तद्वीर्यं वां यदमुष्णीतमवसं पणिं गाः ।

अवातिरतं बृसयस्य शेषोऽविन्दतं ज्योतिरेकं बहुभ्यः ॥ ४

अत्रेतिहासमाचक्षते । पणिर्नामासुरो देवेभ्यो बिभ्यत् स्वा गा आदाय ननाश । तमग्नीषोमावनुगम्य ता अस्य गा अनुजह्रतुरिति । तदेतदुच्यते अग्नीषोमा इति । चेति चेत्यते ज्ञायते । सर्वलोकप्रकाशमित्यर्थः । तद्वीर्यं वां युवां युवयोः । यत् । तृतीयार्थे प्रथमैषा । येन अमुष्णीतं मुषितवन्तौ स्थः । अवसम् । अवतेर्गत्यर्थस्य । अवितारं गन्तारम् । नष्टारमित्यर्थः । पणिं गाः पणिनामानमसुरं गाः स्वास्वादिमतीः । सर्वलोकप्रकाशं तद्युवयोः वीर्यं येन पणेर्गा अपहृतवन्तौ स्थः । किंच अवातिरतमित्यादि । अत्रापीतिहासमाचक्षते । वृत्र आदित्यं नक्षत्राणि रश्मींश्चापहृत्य महत्तमस्ततान लोके । अग्नीषोमौ त्वादित्यादीन् प्रत्यानिन्यतुरिति । तदेतदुच्यते अवातिरतामित्यादि । अवातिरतिर्वधकर्मा । हतवन्तौ स्थः । बृसयस्य शेषः । शेष इत्यपत्यनाम । बृसयनाम्नोऽसुरस्य वृत्राख्यमपत्यम् । हत्वा चाविन्दतं लब्धवन्तौ स्थः । ज्योतिरेकं सर्वसाधारणमादित्याख्यं बहुभ्यः बहूनां प्राणिनामर्थाय ॥ ४

युवमेतानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तम् ।

युवं सिन्धूँरभिशस्तेरवद्यादग्नीषोमावमुञ्चतं गृभीतान् ॥ ५

पूर्णमासेऽग्निषोमीयस्य पुरोडाशस्य याज्यैषा । युवमेतानि दिवि रोचनानि नक्षत्राणि । अग्निश्च । चशब्दात्त्वं च । हे सोम सक्रतू समानकर्माणौ । अधत्तं वृत्रहननद्वारेण स्वसाध्ययज्ञहेतुकवृष्ट्यादिद्वारेण चास्थापितवन्तौ । युवमेव सिन्धून् स्यन्दनात् सिन्धवो रश्मय इहोच्यन्ते ।

न सिन्धवो रजसो अन्तमानशुः । ऋ. वे. १. ५२. १४.

इति यथा । रश्मीन् । अभिशस्तेः हिंसितुर्वृत्राख्यात् । कीदृशात् । अवद्यात् । अत्यन्तपापात् । हे अग्नीषोमौ अमुञ्चतं विमोचितवन्तौ स्थः । वृत्रेण गृहीतान् सतः ॥ ५

आन्यं दिवो मातरिश्वा जभारामथ्नादन्यं परि श्येनो अद्रेः ।
अग्नीषोमा ब्रह्मणा वावृधानोरुं यज्ञाय चक्रथुरु लोकम् ॥ ६

पूर्णमासे उपांशुयाजस्य याज्यैषा । अन्यशब्दश्चात्रैकवचनपर्यायः । युवयोरेकं दिवः द्युलोकात् मातरिश्वा आजहार आहृतवान् । कतरम् । अग्निम् । कुत एतत् ।

आ दूतो अग्निमभरद्विवस्वतो वैश्वानरं मातरिश्वा परावतः । ऋ. वे. ६. ८. ४.

इति मन्त्रान्तरदर्शनात् । अमथ्नादन्यमित्यादि । अत्रैतरेयब्राह्मणपठितमितिहासैकदेशमाचक्षते । सोमो वै राजामुष्मिन् लोक आसीत् । तं देवाश्च ऋषयश्चाभ्यध्यायन् कथमयमस्मान् सोमो राजा गच्छेदिति । तेऽब्रुवन् छन्दांसि यूयं न इमं राजानं सोममाहरतेति । तानि तथेति प्रतिपद्य सुपर्णरूपाणि भूत्वोदपतन् । तेषां जगती त्रिष्टुप् सोममाहर्तुं न शक्नोत् । गायत्री गत्वा सोमपालान् भीषयित्वा पद्भ्यां च मुखेन च सोमं राजानं परिगृह्याहरत् (ऐ. ब्रा. ३. २५.) इति । तदेतदुच्यते अमथ्नादन्यमिति । मथ्नातिरत्र मथनकर्मक आहरणे वर्तते । अन्यं तु सोमाख्यं गायत्री सुपर्णरूपिणी सोमपालान् भीषयित्वा प्रमथ्याहरदित्यर्थः । कुत एतत् । पूर्वोक्तादितिहासात् ।

सोमः श्येनाभृतः सुतः । ऋ. वे. १. ८०. २.
आदाय श्येनो अभरत् सोमम् । ऋ. वे. ४. २६. ७.

इति चैवमादिमन्त्रान्तरे दर्शनात् । क आहरत् । उच्यते । श्येनः श्येनरूपा गायत्री त्वाहरत् । पर्यद्रेः पर्वतस्योपरि । पर्वतेषु हि भूयान् सोमो जायते । तदेतदुच्यते पर्यद्रेराहरदिति । हे अग्नीषोमौ । अस्मदीयेन याज्यलक्षणेन ब्रह्मणा वावृधाना वर्धमानौ । स्तूयमाना हि देवता वीर्येण वर्धन्ते । अत एवमुच्यते वीर्येण वावृधाना इति । अथवा ब्रह्मेत्यन्ननाम । उपांशुयाज्यलक्षणेनान्नेन वर्धमानौ । उरुं विस्तीर्णं यज्ञाय यज्ञार्थमस्माकं चक्रथुः कुरुतः । उकारस्तु पदपूरणः । लोकं स्थानं यत्र विस्तीर्णे स्थाने स्थिता वयं यज्ञान् कुर्मः । ततो दत्तमित्यर्थः ॥ ६

अग्नीषोमा हविषः प्रस्थितस्य वीतं हर्यतं वृषणा जुषेथाम् ।
सुशर्माणा स्ववसा हि भूतमथा धत्तं यजमानाय शं योः ॥ ७

हे अग्नीषोमौ हविषः प्रस्थितस्य युवां प्रति गतस्य प्रस्थितयज्ञस्य वा । षष्ठीनिर्देशस्य साकांक्षत्वादेकदेशं स्वांशलक्षणमिति शेषः । द्वितीयार्थे वा षष्ठी । हविः प्रस्थितम् । वीतं भक्षयतम् । हर्यतं कामयेथां च । अभिप्रेतं संभक्षयतमित्यर्थः । हे वृषणा वर्षितारौ कामितभक्षितेन च तेन जुषेथाम् । जुषी प्रीतिसेवनयोः ।

प्रीयेथाम् । प्रीतौ च सुशर्माणा सुसुखौ । स्ववसा हि । हिशब्दः पदपूरणः चार्थे वा । सुपालनौ च । भूतं भवतम् । अथानन्तरं धत्तं यजमानाय शं । शमनम् । कस्य । सामर्थ्यादुद्भूतानां रोगादीनामनभीष्टानाम् । योः यावनं पृथक्करणम् । असम्बन्धं चेत्यर्थः । सामर्थ्याद्दुश्चित्सुभिरनिष्टैः ॥ ७

यो अग्नीषोमा हविषा सपर्याद्देवद्रीचा मनसा यो घृतेन ।
तस्य व्रतं रक्षतं पातमंहसो विशे जनाय महि शर्म यच्छतम् ॥ ८

रक्षतं पातमिति मध्यमपुरुषसंयोगात् प्रत्यक्षकृतोऽयं मन्त्रः । अग्नीषोमाविति च नेदमामन्त्रणं अननुदात्तत्वात् । अतोऽत्र युष्मच्छब्देन समानार्थो भवच्छब्दः उपपदभूतोऽध्याहर्तव्यः । हे भवन्तावग्नीषोमौ । चरुपुरोडाशादिना हविषा सपर्यात् परिचरेत् । देवद्रीचा मनसा । देवो प्रत्यञ्चतीति देवद्र्यङ् । विष्वग्देवयोश्च टेरद्र्यञ्चतौ (पा. ६. ३. ९२) इति अद्र्यादेशः । तेन देवद्रीचा युवामेव देवौ प्रति गतेन । अत्यन्तयुष्मद्भक्तेन चेतसेत्यर्थः । यो वा घृतेनाज्याहुतिलक्षणेन । तस्योभयस्यापि व्रतं यागाख्यं कर्म रक्षतं पातं पालयतमंहसः पापात् । विशे । मनुष्यनामैतत् । जातापेक्षयैकवचनम् । पुत्रादिमनुष्यजातस्वभूताय यजमानाय परिचारकजनाय च । महि शर्म महत् सुखं यच्छतम् दत्तम् ॥ ८

अग्नीषोमा सवेदसा सहूती वनतं गिरः ।
सं देवत्रा बभूवथुः ॥ ९

पूर्णमासेऽग्निषोमीयस्य पुरोऽनुवाक्यैषा । हे अग्नीषोमौ सवेदसा समानपुरोडाशहविर्लक्षणधनौ । सहूती समानाह्वानौ । वनतं संभजेथाम् । अस्मदीययाज्यानुवाक्यस्तुतिलक्षणा गिरः । किंतु सं देवत्रा बभूवथुः । समित्येकीभावे सम्यक्तायां वा । देवत्रेति देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् (पा. ५. ४. ५६.) इति बाहुलकात् प्रथमायां च द्रष्टव्यः । बभूवथुरिति लोडर्थे लिट् । संभूतौ सम्यग्वास्य पुरोडाशस्य हविषो देवौ भवतमित्यर्थः ॥ ९

अग्नीषोमावनेन वां यो वां घृतेन दाशति ।
तस्मै दीदयतं बृहत् ॥ १०

हे अग्नीषोमौ अनेन वां युवयोः स्वभूतेन योग्येन वा यो यजमानः वां युवाभ्यां घृतेन । तृतीयानिर्देशात् संयुक्तं हविरिति शेषः । अथवा अनेन घृतेनेति द्वितीयार्थे तृतीया इदं घृतं दाशति ददाति । तस्मै दीदयतं दत्तं बृहत् महद्धनम् । अथवा तस्मै इति तादर्थ्ये चतुर्थी । तदर्थं दीदयतं दीप्येथाम् । बृहत् महत सुष्ठ्वित्यर्थः ॥ १०

अग्नीषोमाविमानि नो युवं हव्या जुजोषतम् ।
आ यातमुप नः सचा ॥ ११

अग्नीषोमौ इमानि युवं हव्या जुजोषतं सेवेथाम् । आयातं च उप नः समीपेऽस्माकं सचा सह ॥ ११

अग्नीषोमा पिपृतमर्वतो न आ प्यायन्तामुस्रिया हव्यसूदः ।
अस्मे बलानि मघवत्सु धत्तं कृणुतं नो अध्वरं श्रुष्टिमन्तम् ॥ १२

हे अग्नीषोमौ पिपृतम् । पृणातेः पालनार्थस्य दानार्थस्य वा सामर्थ्यादिदं रूपम् । पालयतं दत्तं वा । अर्वतः अश्वान् नः अस्मभ्यं अस्माकं वा । आप्यायन्तां अस्माकं उस्रिया गावः । हव्यसूदः । षूद क्षरणे । पयआख्यस्य हविषः क्षरित्र्यः । दोग्ध्र्य इत्यर्थः । किंच अस्मे अस्मासु बलानि मघवत्सु धत्तं स्थापयतम् । धनवतोऽस्मान् कृत्वा ततो बलानि दत्तं इत्यर्थः । कृणुतं कुर्वतं च नः अध्वरं यज्ञं श्रुष्टिमन्तम् । अपठितमपि सुखनामैतत् द्रष्टव्यम् । फलभूतेन सुखेन सुखवन्तम् । सुखफलमित्यर्थः । अथवा श्रुष्टीति क्षिप्रनाम । क्षिप्रवन्तम् । शीघ्रफलमित्यर्थः ॥ १२

---

इमं स्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया ।
भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं तव ॥ १

इमं स्तोममिति त्वस्मात् कुत्स आङ्गिरसः परम् ।

अस्मात् सूक्तात् गौतमात् परं इमं स्तोममर्हत इत्यादि कुत्सो नामाङ्गिरसः पुत्र ऋषिर्ददर्श । असंख्यातश्चायम् । सर्वत्र च

असंख्यातमृषिं विद्यादतीत्यापि मितानृषीन् ।
तावद्यावदृषेर्नादिरमितस्य परो भवेत् ॥

सोऽपरिमित ऋषिस्तमेव परिमितानुत्तरानृषीनतीत्यापि यावदन्यस्यापरिमितस्य ऋषेरादिर्न भवति तावद्विजानीयात् । तेन वार्षागिरान् त्रितं चातीत्याप्याकक्षीवतोऽयमृषिर्वेदितव्यः ।

अग्नेः पूर्वं स यो वृषात् ।

स यो वृषा इत्येतस्मात् पूर्वः सूक्तसमुदायः अग्निदेवत्यः । विशेषान् स्वे स्वे प्रदेशे वक्ष्यामः । बृहद्देवताकारस्तु आद्यायामृचि जातवेदस इति श्रुतेः इदं सूक्तं जातवेदस्यं मन्यते न शुद्धाग्नेयम् । एवं ह्याह—

इमं तु जातवेदस्यं कुत्स आंगिरसो जगौ ।

जागतं षोडशर्चं

इति । इमं स्तोममर्हते जातवेदसे । तादर्थ्ये एषा चतुर्थी । स्तोमार्हस्य जातप्रज्ञानस्य वाग्नेरर्थाय । रथमिव सम्महेम । संशब्दोऽत्र सम्यक्त्वायाम् । महिरपि सामर्थ्याद् गत्यर्थोऽन्तर्णीतण्यर्थश्च । यथा कश्चिद्रथं सम्यगगमयत् तद्वत् सम्यग्गमय । मे मनीषया प्रज्ञया अस्माकं प्रज्ञयैव स्तोममुच्चारयेमेत्येतदाशास्महे इत्यर्थः । कस्मात् । उच्यते। भद्रा हि । हिशब्दो यस्मादर्थे। यस्मात् भद्रा नः। षष्ठीनिर्देशादुपरीति वाक्यशेषः । सप्तम्यर्थे वा षष्ठी । अस्माकमुपरि अस्मासु वा प्रमितिः प्रकृष्टानुग्रहात्मिका मतिः । अस्याग्नेः संसदि सभायाम् । यस्मादयं यज्ञादिसभास्वस्माकमनुग्राहक इत्यर्थः। परः पादः प्रत्यक्षकृतत्वात् भिन्नं वाक्यम् । हे अग्ने सख्ये । देवानां मनुष्याणां च स्तुत्यस्तोतृसम्बन्धः सख्यम् । तस्मिन् । सप्तमीनिर्देशात् वर्तमाना इति वाक्यशेषः । मा रिषाम मा हिंसिष्महि केनचित् वयम् । कस्य सख्ये । उच्यते । तव ॥ १

यस्मै॒ त्वमा॒यज॑से॒ स सा॑धत्यन॒र्वा क्षे॑ति॒ दध॑ते सु॒वीर्य॑म् ।
स तू॑ताव॒ नैन॑मश्नोत्यंह॒तिरग्ने॑ स॒ख्ये मा रि॑षामा व॒यं तव॑ ॥ २

यस्मै यस्य यजमानस्यार्थाय त्वमयजसे मर्यादया देवान् यजसि । साधति साधयत्यात्मनोऽभिप्रेतानर्थान् । अनर्वा क्षेति । क्षितिर्गत्यर्थः । अन्यं प्रत्याश्रितया न गच्छतीत्यनर्वा अन्यं वानाश्रिततया न गच्छतीत्यनर्वा । अन्यं चानाश्रित्य स्वस्थाने निवसतीत्यर्थः । दधते धारयति चात्मनि सुवीर्यम् । सुवीर्यं च प्राप्नोतीत्यर्थः । स एव तूताव । तवतिर्वृद्धिकर्मा । सर्वाभिर्वृद्धिभिर्वर्धते । नचैनमश्नोति आप्नोति अंहतिः पापं वधो वा । किंच अग्ने सख्ये मा रिषामा वयं तव ॥ २

शकेम त्वा समिधं साधया धियस्त्वे देवा हविरदन्त्याहुतम् ।
त्वमादित्याँ आ वह तान् ह्यु१श्मस्यग्ने सख्ये मा रिषामा वयं तव ॥३

शके शक्नुयाम त्वां समिधम् । तुमर्थेऽयं णमु । समिन्धितुम् । साधया-स्माकं धियः कर्माणि प्रज्ञा वा । किंच त्वे त्वयि देवाः हविः अदन्ति भक्षयन्ति । आहुतं मर्यादया हुतम् । त्वमादित्यान् अदितेः पुत्रान् सर्वान् देवान् यष्टुमावह । तान् हि उश्मसि कामयामहे वयम् । किंच अग्ने ॥ ३

भरामेध्मं कृणवामा हवींषि ते चितयन्तः पर्वणापर्वणा वयम् ।
जीवातवे प्रतरं साधया धियोऽग्ने सख्ये मा रिषामा वयं तव ॥ ४

भराम । शुद्धोऽप्ययं भरतिराङ्पूर्वार्थे द्रष्टव्यः । आहराम । त्वदर्थमिद्धं कृण-वाम । हवींषि ते चितयन्तः ज्ञातवन्तः । किम् । सामर्थ्याद्यज्ञकर्म त्वन्माहात्म्यं वा । पर्वणा पर्वणा । सप्तम्यर्थे तृतीयैषा । पर्वणि पर्वणि । पौर्णमास्याममावास्यायां चेत्यर्थः । वयम् । किंच जीवातवे । जीवातुर्जीविका । तदर्थं प्रतरम् । क्रियाविशेषणमिदम् । प्रकृष्टतरं प्रवृद्धतरं वा । साधयास्माकं धियः । किं च अग्ने ॥ ४

विशां गोपा अस्य चरन्ति जन्तवो द्विपच्च यदुत चतुष्पदक्तुभिः ।
चित्रः प्रकेत उषसो महाँ अस्यग्ने सख्ये मा रिषामा वयं तव ॥ ५

विशाम् । विडिति मनुष्यनाम । पुत्रपौत्रादिमनुष्याणां गोपाः गोप्तारः । अस्या-ग्नेः । षष्ठीनिर्देशात् स्वभूताः प्रसादेन वेति वाक्यशेषः । चरन्ति तत्र तत्र विचरन्ति । जन्तवः मनुष्याः । अविनश्यद्भिः पुत्रपौत्रादिमनुष्यैरुपेताः ते तत्र तत्र विचरन्ति अग्नेः स्वभूताः प्रसादेन वेत्यर्थः । न च केवला जन्तवः । किं तर्हि । द्विपाच्च यत् अन्यदपि यद्द्विपात् तत्सर्वम् । उत चतुष्पात् गवादिः । अक्तुभिः । रात्रिनामैतत् इह तु साहचर्यान्नक्तञ्चरेषु रक्षःपिशाचादिषु वर्तते । सहयोगलक्षणा चैषा तृतीया । रात्रिचरैः सहेत्यर्थः । चित्रश्चास्य प्रकेतः प्रज्ञानम् । प्रकाश इत्यर्थः । उषसः । लुप्तो-पममेतत् । द्रष्टव्यम् । उषस इव । परः ऋक्छेषः प्रत्यक्षकृतत्वात् भिन्नं वाक्यम् । महांस्त्वमसि प्रभावतः । किंच अग्ने ॥ ५

त्वमध्वर्युरुत होतासि पूर्व्यः प्रशास्ता पोता जनुषा पुरोहितः ।
विश्वा विद्वाँ आर्त्विज्या धीर पुष्यस्यग्ने सख्ये मा रिषामा वयं तव॥ ६

अध्वर्य्वादिकर्मकारित्वादग्नेरथमध्वर्य्वादिव्यपदेशः । अग्न्यायत्तत्वादध्वर्यादिकर्मणामग्निरेव कर्तेत्युच्यते । त्वमध्वर्युः । अध्वर्युकर्मकारीत्यर्थः । उत होतासि पूर्व्यः । चिरन्तन इत्यर्थः । प्रशास्ता च पोता च त्वमेवासि । जनुषा जन्मना । जन्मन एव प्रभृतीत्यर्थः । पुरोहितः पूर्वस्यां दिश्याहवनीयात्मना स्थापितः सन् । किंच विश्वा सर्वाणि विद्वान् आर्त्विज्या ऋत्विक्कर्माणि । हे धीर पुष्यसि त्वम् । स्वयं पुष्णासि वा यज्ञसंपादनद्वारेण यजमानत्वात् । किंच अग्ने सख्ये ॥ ६

यो विश्वतः सुप्रतीकः सदृङ्ङसि दूरे चित्सन्तळिदिवाति रोचसे ।
रात्र्याश्चिदन्धो अति देव पश्यस्यग्ने सख्ये मा रिषामा वयं तव ॥ ७

यस्त्वं विश्वतः सर्वतः सुप्रतीकः सुमुखः सुदर्शनो वा । सदृङ् सदृशश्चासि । दूरे चित् दूरेऽपि सन् तळिदिव । विद्युत्तळिदित्युच्यते । विद्युदिव । अति रोचसे सुष्ठु दीप्यसे । अथवा तळिदित्यन्तिकनाम । दूरेऽपि सन् अन्तिक इव दीप्यसे । रात्र्याश्चित् रात्रेरपि स्वकं अन्धः अति । तमोऽत्रान्ध उच्यते । कर्मोपसर्गश्रुतेश्च योग्यक्रियाध्याहारः । तमोऽतीत्य । हे देव पश्यसि । यस्य ते तमसा दर्शनशक्तिर्न प्रतिबध्यते इत्यर्थः । यच्छब्दश्रुतेश्च तच्छब्दोऽध्याहर्तव्यः । तस्य अग्ने ॥ ७

पूर्वो देवा भवतु सुन्वतो रथोऽस्माकं शंसो अभ्यस्तु दूढ्यः ।
तदा जानीतोत पुष्यता वचोऽग्ने सख्ये मा रिषामा वयं तव ॥ ८

पूर्वो देवा इत्यस्या ऋचः आद्यास्त्रयः पादा देवदेवत्याः । समानजातानां मध्ये पूर्वः अग्रिमः हे देवाः भवतु सुन्वतः मत्प्रभृतेर्यजमानस्य । रथः अस्माकं स्वभूतः । शंसः आशंसनं अभिलाषः । अभ्यस्तु संपत्त्या अभिभवतु भृशं । दूढ्यः पापबुद्धीन् तदीयसंपत्तिकामान् । तदेतदाजानीत । आ इत्येष प्रतीत्यस्य स्थाने । मह्यं प्रतिजानीत । उत पुष्यत पुष्णीत संवर्धयत । अस्मदीयं वचः । परः पादो भिन्नदेवत्वात् भिन्नं वाक्यम् । अग्ने ॥ ८

वधैर्दुःशंसाँ अप दूढ्यो जहि दूरे वा ये अन्ति वा के चिदत्रिणः ।
अथा यज्ञाय गृणते सुगं कृध्यग्ने सख्ये मा रिषामा वयं तव ॥ ९

वधैर्दुःशंसान् पापाभिलाषान् । अस्मद्विनाशनकामानित्यर्थः । दूढ्यः पापबुद्धीन् । अपजहि । दूरे वा ये अन्तिके वा केचिदत्रिणः अत्तारः भक्षयितारः । विनाश-

यितारोऽस्माकमित्यर्थः। अपहत्य च अथानन्तरं यज्ञाय यज्ञार्थं गृणते स्तुवते मह्यं सुगम्। अपठितमपि सुखनामैतत् इह द्रष्टव्यम्।

अस्मभ्यमिन्द्र वरिवः सुगं कृधि। ऋ. वे. १. १०२. ४.

इति यथा। सुखं कृधि कुरु। अथवा यज्ञायेति हेतुतृतीयार्थे चतुर्थी। सुगशब्दोऽपि सुगमदेशवचनः। यज्ञेन हेतुना स्तुतो ममार्थाय सुगमं स्वर्गादिदेशं कुर्वित्यर्थः। किंच अग्ने॥ ९

यदयुक्था अरुषा रोहिता रथे वातजूता वृषभस्येव ते रवः।
आदिन्वसि वनिनो धूमकेतुनाग्ने सख्ये मा रिषामा वयं तव॥ १०

दावाग्नेरियं स्तुतिः। यत् यदा अयुक्थाः। दावात्मत्वात् शीघ्रं गन्तुं युनक्षि। अरुषा गन्तारौ रोहिता लोहितवर्णावश्वौ। आत्मीये रथे। कीदृशौ। वातजूता। वातवत् यौ जवनः गच्छतः तौ वातजूतौ। अत्यन्तशीघ्रावित्यर्थः। यदेति वचनात्तदेत्यध्याहार्यम्। तदा रथेन गच्छतः वृषभस्येव ते रवः। साकांक्षत्वात् भवतीति वाक्यशेषः। आत् तदैव च इन्वसि व्याप्नोषि वनिनः।

विष्वग्वियन्ति वनिनो न शाखाः। ऋ. वे. ७. ४३. १.
तमित् समानं वनिनश्च वीरुधः। ऋ. वे. १०. ९१. ६.

इति प्रयोगदर्शनात् वनिनो वनस्पतय इहोच्यन्ते। वनस्पतीन्। धूमकेतुना। केतुः पताकोच्यते। धूमः केतुस्थानीयो यस्य तेन धूमकेतुना। सामर्थ्याज्ज्वालासहितेन ज्योतिषा वा। ईदृशस्य अग्नेः॥ १०

अध स्वनादुत बिभ्युः पतत्रिणो द्रप्सा यत्ते यवसादो व्यस्थिरन्।
सुगं तत्ते तावकेभ्यो रथेभ्योऽग्ने सख्ये मा रिषामा वयं तव॥ ११

अधशब्दोऽत्र तदेत्यस्यार्थे। तदा स्वनात् शब्दात् उत बिभ्युः पतत्रिणः। पतत्रिणः पक्षिण उच्यन्ते। पक्षिणोऽपि बिभ्यति। किमुतान्ये प्राणिनः। कदा। उच्यते। द्रप्साः। दधिद्रप्सान् प्राश्य इत्यादिषु द्रप्सशब्दः कठिनवचनः। कठिनाः। बहुळरूपा इत्यर्थः। यत् यदा ते तव दावात्मकस्य स्वभूताः यवसादः। यवसं तृणम्। तस्यात्तारो ज्वालासमूहाः। व्यस्थिरन्। तिष्ठतेरिदं रूपम्। वितिष्ठन्ते। सर्वं व्याप्नुवन्तीत्यर्थः। किंच सुगं तत्। तच्छब्दश्रुतेर्योग्यार्थसंबन्धो यच्छब्दोऽध्याहार्यः। यत् पर्वतपृष्ठादि अन्यः कश्चित् गन्तुं न शक्नोति सुगं तत् ते तव। न च केवलस्य। किं तर्हि।

तावकेभ्यो रथेभ्यः । षष्ठ्यर्थे चतुर्थी पञ्चमी वा । एषां रथानां च त्वदीयानाम् । किंच अग्ने सख्ये ॥ ११

अयं मित्रस्य वरुणस्य धायसेऽवयातां मरुतां हेळो अद्भुतः ।
मृळा सु नो भूत्वेषां मनः पुनरग्ने सख्ये मा रिषामा वयं तव ॥ १२

अत्रेतिहासमाचक्षते । मित्रो वरुणो मरुतश्च कुत्सस्य यज्ञमाजग्मुः । सोऽग्निस्तुत्या क्षिप्तमनाः तान्न तुष्टाव । तस्मै क्रुद्धा यज्ञाद्देवा जग्मुः । तत्प्रसक्तये कुत्सोऽग्निमुवाच । अयं धायसे सोमपानाय मित्रस्य वरुणस्य मरुतां च अवयाताम् । अवशब्दोऽपेत्यस्य स्थाने । अस्मद्यज्ञादपगच्छताम् । हेळः क्रोधः । अद्भुतः महान् । साकांक्षत्वात्प्रमादेन व्यावर्ततामिति वाक्यशेषः । एतत् कुर्वन् मृळ सु सुष्ठु सुखं नः अस्मान् । भूत्वैषां पुनरप्यस्मासु मनः । पुनरप्यस्मासु सानुग्रहचेतसो भवन्त्वित्यर्थः । किंच अग्ने ॥ १२

देवो देवानामसि मित्रो अद्भुतो वसुर्वसूनामसि चारुरध्वरे ।
शर्मन्त्स्याम तव सप्रथस्तमेऽग्ने सख्ये मा रिषामा वयं तव ॥ १३

देवस्त्वं सर्वेषां देवानामसि । मित्रः अद्भुतः हविर्वहनाद्युपकारकरणात् महत् मित्रमसि । वसुः वसूनामसि धनानां च त्वं धनमसि धनकार्यकरत्वात् । चारुः अध्वरे यज्ञे च शोभनोऽसि । तस्य शर्मन् शरणस्थाने वयं स्याम भवेम । प्राप्नुयामेत्यर्थः । तव स्वभूते अग्निलोकाख्ये सप्रथस्तमे सर्वतः पृथुतमे । अथवा शर्मेति गृहनाम । गृहे स्याम तव संबन्धिनि सर्वपृथुतमे । त्वया दीयमानमत्यन्तविस्तीर्णं गृहं वयं प्राप्नुयामेत्यर्थः । किंच अग्ने ॥ १३

तत्ते भद्रं यत्समिद्धः स्वे दमे सोमाहुतो जरसे मृळयत्तमः ।
दधासि रत्नं द्रविणं च दाशुषेऽग्ने सख्ये मा रिषामा वयं तव ॥ १४

तच्चेष्टितं कर्म वा ते तव भद्रं कल्याणम् । यत् समिद्धः सन् स्वे दमे यज्ञगृहे । सोमाहुतः सोमयागेनाहुतः सन् । जरसे होतृत्वात् स्तौषि देवताः स्तूयसे वा ऋत्विग्भिः । मृळयत्तमः यष्टॄणां च स्तोतॄणां च सुखयितृतमः । यच्च दधासि ददासि रत्नं माणिक्यादि द्रविणं धनं च सुवर्णादि । दाशुषे यजमानाय । किंच अग्ने ॥ १४

यस्मै त्वं सुद्रविणो ददाशोऽनागास्त्वमदिते सर्वताता ।
यं भद्रेण शवसा चोदयासि प्रजावता राधसा ते स्याम ॥ १५

यस्मै त्वं हे सुद्रविणः सुधनः सुबलो वा । ददाशः ददासि । किम् । उच्यते । अनागास्त्वम् । आगः पापमुच्यते । अपापत्वं अपुण्यवर्जितत्वम् । हे अदिते । अदितिर्देवमाता । तच्छब्देनेदं सोऽयमित्यभिमन्यते । तात् पुत्रस्याग्नेरभिधानम् । अदितेः पुत्रेत्यर्थः । अथवादितिशब्दः अदीनपर्यायः । अदीन । क्षयवर्जितेत्यर्थः । सर्वताता । सर्वशब्दादयं सर्वदेवात्तातिल् (पा. ४. ४. १४२) इत्येवं स्वार्थिकस्तातिल्प्रत्ययः । सप्तम्याश्च डादेशः । सर्वत्रेत्यर्थः । अथवा अनागास्त्वमित्यागश्शब्दः अपराधवचनः । सर्वतातेत्यपि सर्वा एवैष्टिकपाशुकसौमिकरूपा कर्मसन्ततिर्यज्ञ उच्यते । यस्मै वैगुण्यलक्षणापराधवर्जितत्वं यज्ञेषु ददासि तस्य निर्गुणमपि यज्ञं सगुणं करोषीत्यर्थः । यं च भद्रेण शवसा । इत्थंभूतलक्षणे (पा. २. ३. २१) इत्येषनेषा तृतीया । भद्रेण बलेन सम्बद्धम् । चोदयासि तत्र तत्र प्रवर्तयसि । यं भद्रेण बलेन संयोज्य तत्र तत्र विनियोजयसि इत्यर्थः । न च केवलेन बलेन । प्रजावता राधसा प्रजासहितेन च धनेन । ते वयं एव स्याम । अस्माकमेव सर्वमिदं कुर्वित्यर्थः ॥ १५

स त्वमग्ने सौभगत्वस्य विद्वानस्माकमायुः प्र तिरेह देव ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ १६

उत्तमायास्त्वृचोऽर्धम् ।
तस्यैव वा यस्य तत्पूर्वमुक्तं
मित्रादिभ्यो वात्र षड्भ्यः कृताभ्यः ॥

अध्यायस्य सूक्तस्य वा उत्तमाया अस्या ऋचः उत्तरमर्धं तस्यैव वा यस्य तत् पूर्वमुक्तं अग्नेः मित्रादिभ्यो वा षड्भ्यो देवताभ्यः अत्रैव ऋचि कृताभ्यो व्यवस्थिताभ्यः निगदिताभ्य इत्यर्थः । एतेनोदर्कः । बहुदेवत्येषु समानधर्मा पुनरुक्त उदर्क इत्युच्यते । बहुदेवतेषु सूक्तेषु चन्द्रमा अप्सु (ऋ. वे. १. १०५) तक्षन्रथम् (ऋ. वे. १. १११) इत्यादिषु द्विदेवतेषु च इन्द्राग्नी चित्रतमः (ऋ. वे. १. १०८) ईळे द्यावापृथिवी (ऋ. वे. १. ११२) इत्यादिषु यः सूक्ताध्याययोरर्धर्च उदर्कः सः एतेनार्धर्चेन समानधर्मा वेदितव्यः । यथैव प्रकृतदेवताकः नियमितमित्रादिदेवताको वा एवं सोऽपि इत्यर्थः । तत्र प्रकृताग्निदेवताकता तावदस्यार्धर्चस्य एव । एवमस्या ऋचोऽर्थयोजना । य उक्तगुणोऽसि स त्वं हे अग्ने सौभगत्वस्य । भग इति धननाम । शोभनं धनं हविर्लक्षणं यस्य स

सुभगः। सुभग एव सौभगः। स्वार्थिकस्तद्धितः। तस्य भावः सौभगत्वम्। तस्य सौभगत्वस्य विद्वान्। सहविष्कतामस्माकं जानन्नित्यर्थः। अस्माकमायुः प्रतिर प्रवर्धय। इह जन्मनि लोके वा हे देव। तच्च नः त्वया प्रवर्ध्यात्मानं त्वत्प्रसादादेव मामहन्तां अत्यर्थं पूजयतु। अनुमन्यतामित्यर्थः। के। मित्रः वरुणः अदितिः सिन्धुः पृथिवी उत द्यौः। एवमग्नेः प्राधान्यं मित्रादीनां चाप्राधान्यम्। अतोऽस्य सूक्तस्याग्नेयत्वे न व्याघातः। मित्रादिदेवताकत्वे तु पूर्वानपेक्ष एषोऽर्धर्चो योजयितव्यः। त्वमग्ने अस्माकमायुः प्रवर्धय। तं ते मित्रादयोऽपि मामहन्ताम्। न केवलोऽग्निरेवेति॥ १६

इति स्कन्दस्वामिनः कृतावृग्वेदभाष्ये

षष्ठोऽध्यायः॥

## अथ सप्तमोऽध्यायः ॥

द्वे विरू॑पे चरतः॒ स्वर्थे॑ अ॒न्यान्या॑ व॒त्समुप॑ धापयेते ।
हरि॑र॒न्यस्यां॒ भव॑ति स्व॒धावा॑ञ्छु॒क्रो अ॒न्यस्यां॑ ददृशे सु॒वर्चाः॑ ॥ १

औषसाय वा ।

द्वे विरूपे चरत इत्यौषसाय वा अग्नये शुद्धाय वा । शुद्धस्य त्वत्राग्नेः स्तुतिर्दृश्यते नौषसस्य । द्वे रात्र्युषसौ । विरूपे विभिन्नरूपे चरतः । रात्रिर्गता उषा आगता । उषा गता रात्रिरागता । एवं गच्छतः । स्वर्थे । अर्थशब्दः अर्तेर्गत्यर्थस्य गमनवचनः प्रयोजनवचनो वा । शोभनप्रयोजने । अन्यान्या वत्सम् । अन्योन्यस्य च वत्सस्थानीयमग्निम् । अग्निर्हि रात्र्युषसोरुभयोरपि वत्सस्थानीयः । तत्र जायमानत्वात् । उपधापयेते । धेट् पाने । उपगम्य धापयतः पाययतः । किम् । सामर्थ्यादाहुतीः । रात्रिर्हि उपगम्य सायमाहुतीरग्निं पाययति । प्रातराहुतीरुषाः । पूर्वोत्तरयोरर्धर्चयोरेकवाक्यताप्रसिध्यर्थं यत्तच्छब्दावध्याहर्तव्यौ । ये द्वे रात्र्युषसौ चरतः अन्योन्यस्य च वत्सस्थानीयमग्निं उपधापयेते तयोर्हरिरन्यस्यां भवति हरितवर्ण एकस्यां रात्रौ । स्वधावानन्नवानग्निः शुक्रो अन्यस्यां ददृशे शुक्रवर्णोऽन्यस्यां दृश्यते उषसि । उषसा चात्र तत्समन्तरभाव्यहर्लक्ष्यते । अहन्यादित्यात्मना व्यवस्थितः सन् शुक्ररूपोऽग्निर्दृश्यत इत्यर्थः । सुवर्चाः सुदीप्तः ॥ १

दशे॒मं त्वष्टु॑र्जनयन्त॒ गर्भ॒मत॑न्द्रासो युव॒तयो॒ विभृ॑त्रम् ।
ति॒ग्मानी॑कं॒ स्वय॑शसं॒ जने॑षु वि॒रोच॑मानं॒ परि॑ षीं नयन्ति ॥ २

अत्रेतिहासमाचक्षते । सर्वमिदमन्धेन तमसा क्षणेनैवावृतमभवत् । अथ त्वष्टा दिक्ष्वग्निमजनयत् । तस्मिन्नतृप्यति प्रवर्धमाने आकाशे प्राज्वलन् । तं दिशः द्यावापृथिव्यौ चामृतेन तर्पयित्वा तत्र तत्र विहृतवत्यः इति । तदेतदिहोच्यते दशेमं त्वष्टुरिति । चतस्रः दिशः चतस्रश्चावान्तरदिशः ऊर्ध्वं अध इति एता दश दिशः इममग्निं त्वष्टुः सकाशात् जनयन्त जनितवत्यः । गर्भमपत्यभूतं अतन्द्रासः अनलसाः युवतयः तरुण्यः विभृत्रम् । तत्र तत्र विह्रियतेऽसाविति विभृत्रः । तं विभृत्रम् ।

तिग्मानीकम् । तिग्मशब्दस्तीक्ष्णवचनः । अनीकमित्यपि लोके खड्गस्य मुखमुच्यते । इह तु तीक्ष्णाग्रत्वादेस्तत्साद्दश्यात् ज्वाला उच्यन्ते । तीक्ष्णज्वालमित्यर्थः । अथवा ब्राह्मणानीकं क्षत्रियानीकमिति प्रयोगदर्शनादनीकशब्दः समूहवचनः । सामर्थ्याच्चेह ज्वालासमूहमाह नान्यम् । तीक्ष्णज्वालासमूहमित्यर्थः । स्वयशसं आत्मनिमित्त-कीर्तिम् । जनयित्वामृतेन तर्पयित्वा जनेषु मनुष्येषु विरोचमानं विविधं दीप्यमानं परि षीं नयन्ति । परीतिसर्वतोभावे । सीमिति पदपूरणः । नयन्तीति भूते लट् छान्दसत्वात् । सर्वतो नीतवत्य इत्यर्थः ॥ २

त्रीणि जना परि भूषन्त्यस्य समुद्र एकं दिव्येकमप्सु ।
पूर्वामनु प्र दिशं पार्थिवानामृतून्प्रशासद्वि दधावनुष्ठु ॥ ३

त्रीणि जना जन्मानि परिभूषन्ति । परिपूर्वो भवतिः सर्वत्र परिग्रहे । परि-गृह्णन्ति । अस्याग्नेः । सत्स्वप्यन्येषु जन्मसु सारभूतत्वात्त्रीण्येव जन्मान्यस्याग्नेः परि-गृह्णन्तीत्यर्थः । कानमानि । उच्यते । समुद्र एकं बाडवात्मना । दिव्येकमादित्यात्मना । अप्शब्दोऽत्रोदकवचनः अन्तरिक्षनाम वा । वृष्टिलक्षणास्वप्सु अन्तरिक्षे वा अपरं वैद्युतात्मना। किंच पूर्वामनु प्रदिशम् । अनुशब्दो लक्षणेत्थंभूताख्यान (पा. १. ४. १०) इत्येवं कर्मप्रवचनीयः प्रतिशब्देन समानार्थः प्रशासदित्याख्यातेन संबन्धयितव्यः । प्रशब्दस्तूपसर्गः । पूर्वां दिशं प्रति । पूर्वस्यां दिश्याहवनीयात्मना व्यवस्थापितः सन्नित्यर्थः । पार्थिवानां पृथिव्यां संभवानां यजमानानां ऋतून् यागकालान् प्रशासत् प्रकर्षेण कथयन्निव विदधौ विदधाति । करोतीत्यर्थः किम् । उच्यते । अनुष्ठु याग-कर्म । यागं करोतीत्यर्थः ॥ ३

क इमं वो निण्यमा चिकेत वत्सो मातॄर्जनयत स्वधाभिः ।
बह्वीनां गर्भो अपसामुपस्थान्महान्कविर्निश्चरति स्वधावान् ॥ ४

क इमं अग्निं वः युष्माकमृषीणां ब्राह्मणानां मध्ये निण्यमन्तार्हितं आचिकेत जानाति । कतमम् । उच्यते । योऽयं वत्सस्थानीयः । अपत्यभूतः सन्नित्यर्थः । मातॄः ओषधिवनस्पतयोऽत्र मातर उच्यन्ते अग्नेर्जनकत्वात् । जनयत वैद्युतात्मना व्यव-स्थितः सन् जनयति । स्वधाभिः । स्वधेत्युदकनाम । वृष्टिलक्षणैः उदकैः । यश्च बह्वी-नामोषधीनां दिशां वा गर्भः अपत्यभूतः अपसामुपस्थात् । अपांसि कर्माणि । तान्यु-पगम्य यत्र तिष्ठन्ति सोऽपसामुपस्थो यज्ञः आहवनीयो वा । तस्मात् महान् कविः

मेधावी निश्चरति देवान् प्रति गन्तुं निर्गच्छति । स्वधावान् हविर्लक्षणेनान्नेनान्नवान् । हवींष्याद्दायेत्यर्थः ॥ ४

आविष्ट्यो॑ वर्धते॒ चारु॑रासु जि॒ह्माना॑मू॒र्ध्वः स्वय॑शा उ॒पस्थे॑ ।
उ॒भे त्वष्टु॑र्बिभ्यतु॒र्जाय॑मानात्प्रती॒ची सिं॒हं प्रति॑ जोषयेते ॥ ५

आविःशब्दः प्रकाशवचनः । आविरेवाविष्ट्यः । स्वार्थे त्यप्रत्ययः । अव्ययात्त्यप्याविष्ट्यस्योपसंख्यानं छन्दसि (वा.४. २. १०४-१) इति । सर्वलोकप्रकाशोऽग्निर्वर्धते। चारुः शोभनः आसु । बह्वीनां गर्भ इति पूर्वस्यामृचि आदिष्टानामोषधीनामयमन्वादेशः । आस्वोषधीषु । अथवा बह्वीनां गर्भ इति बह्वीशब्देन दिश उच्यन्ते । तत आस्विति तासामन्वादेशः । तदा च वर्धते । वर्धत इति भूतकाले व्यत्ययेन लट् द्रष्टव्यः । त्वष्टुः सकाशाज्जनयित्वा आसु दिक्षु सर्वलोकप्रकाशोऽग्निर्वर्धत इत्यर्थः । कीदृशीषु आसु । जिह्मानाम् । जिह्मशब्दोऽनृजुवचनः । सप्तम्यर्थे षष्ठी । जिह्मासु । तिर्यग्व्यवस्थितास्वित्यर्थः । कथं वर्धते । उच्यते । ऊर्ध्वः । ऊर्ध्वज्वलनस्वभावक एव ह्यग्निः । कीदृशः स्वयशाः आत्मनिमित्तकीर्तिः । न च केवलास्वासु । किं तर्हि । उपस्थे । उपस्थो यज्ञः आहवनीयो वान्तरिक्षं वा । तत्र च । अथवा उपस्थ इत्येतदास्वित्येतेन विशेष्यते न समुच्चीयते । उपस्थशब्दश्च स्थानवचनः । आस्वोषधीषु दिक्षु वा यदग्नेः स्थानं तत्रेत्यर्थः । किंच उभे द्यावापृथिव्यौ बिभ्यतुः भीते आस्ताम् । त्वष्टुः सकाशाद्दशस्वपि दिक्षु जायमानात् अतिवृद्धादग्नेः भीते च सत्यौ । प्रतीची । अञ्चतिर्गत्यर्थः । अग्निमेव प्रतिगते । अग्निपरिचर्यापरे सत्यावित्यर्थः । सिंहम् । लुप्तोपमैतत् । सिंहसदृशं दुरभिभवमग्निं प्रतिजोषयेते । जुषिरत्र प्रीत्यर्थः । प्रतिशब्दश्च धात्वर्थानुवादी । भूते लट् । प्रीणयतम् । दशभिरपि दिग्भिः सहामृतेन तर्पयतमित्यर्थः ॥ ५

उ॒भे भ॒द्रे जो॑षयेते॒ न मेने॒ गावो॒ न वा॒श्रा उप॑ तस्थु॒रेवैः॑ ।
स द॒क्षाणां॒ दक्ष॑पतिर्बभूवा॒ञ्जन्ति॒ यं द॑क्षिण॒तो ह॒विर्भिः॑ ॥ ६

उभे द्यावापृथिव्यौ भद्रे कल्याण्यौ जोषयेते । जुषिरत्र सेवार्थः । स्वार्थे णिच् । सेवितवत्यौ । त्वाष्ट्रमग्निं अतिप्रवर्धमानं परिचारितवत्यावित्यर्थः । कथम् । न मेने । मेना ग्ना इति स्त्रीणां नामनी । नशब्दश्चात्र पुरस्तादुपचारोऽपि सामर्थ्यादुपमार्थीयः। स्त्रियाविव कंचित् भर्तारम् । किंच गावो न वाश्राः उपतस्थुः । यथा वा वाशनस्वभाविकाः अचिरप्रसूता गावः स्वान् वत्सान् पयस्तर्पणेनोपतिष्ठन्ति एवं त्वाष्ट्रमग्निं

अतिप्रवर्धमानमुपस्थितवत्यः । ता दश दिशो द्यावापृथिव्यौ च । कुत एतत् । इतिहासात् । केनोपतस्थुः । उच्यते । एवैः अमृततर्पणैः । किंच सोऽग्निः दक्षाणां सर्वबलानाम् । दक्षपतिः बभूव । यथैव प्रवीणशब्दः प्रकृष्टो वीणायां प्रवीण इत्येव मपि व्युत्पाद्यमानः प्रवीणो व्याकरणे प्रवीणो मीमांसायामित्यादिप्रयोगदर्शनात् प्रकर्षमात्रवचनो विज्ञायते न वीणाविषयप्रकर्षवचनं एवमयमपि दक्षपतिशब्दः दक्षस्य पतिर्दक्षपतिरित्येवमपि व्युत्पाद्यमानोऽधिपतिमात्रवचनो द्रष्टव्यः । अधिपतिर्भवतीत्यर्थः । अञ्जति । अञ्जतिर्गत्यर्थः शुद्धोऽपि चात्र सोपसर्गार्थे द्रष्टव्यः । होमार्थमुपगच्छति । यमाहवनीयात्मनास्थितम् । दक्षिणतः दक्षिणस्यां दिशि । हविर्भिः इत्थंभूतलक्षणे (पा. २. ३. २१) इत्येवमेषा तृतीया । अपि भवान् कमण्डलुना छात्रमद्राक्षीत् इति यथा । गृहीतहविष्का इत्यर्थः ॥　　६

उद्यंयमीति सवितेव बाहू उभे सिचौ यतते भीम ऋञ्जन् ।

उच्छुक्रमत्कमजते सिमस्मान्नवा मातृभ्यो वसना जहाति ॥　　७

देवपरिवेषणवेलायां यदुद्यमनं तदिहाभिप्रेतम् । देवान् परिवेष्टुं हवींष्यादाय पुनः पुनरुद्यच्छति । सवितेव । यजमाननामैतच्छाकपूणिना पठितम् । यजमान इव । बाहू । बाहुसंबन्धाद्धस्तावेवात्र बाहुशब्देन लक्ष्यते । आत्मीयौ हस्तौ । देवान् परिवेष्टुं हस्ताभ्यां हवींष्यादाय यजमानवत् पुनःपुनरग्निरुत्क्षिपतीत्यर्थः । सवितात्रादित्य एव वाभिप्रेतः । तथाहि मन्त्रान्तरेऽप्यस्य ऊर्ध्वहस्तत्वं दृश्यते ।

उदु अयाँ उपवक्तेव । ऋ. वे. ६. ७१. ५.

इति यथा । ऐतिहासिकाश्च प्रतिमासु चित्रकर्मसु ऊर्ध्वहस्तमेव सवितारं स्मरन्ति । हवींष्युत्क्षेप्तुमादित्य इव हस्तौ उद्यच्छतीत्यर्थः । उभे सिचौ यतते । सिचशब्दोऽत्र वस्त्राञ्चलवचनः ।

पितुर्न पुत्रः सिचमा रभे ते । ऋ. वे. ३. ५३. २.

इति यथा । यततिरपि सामर्थ्यात् सन्नहनार्थः । उभे अपि वस्त्राञ्चले गाढं सन्नह्यति । परिकरबन्धं च करोतीत्यर्थः । अथवा उद्यंयमीति होमवेलायां यदुद्यमनं तदिहाभिप्रेतम् । होमवेलायां अग्निरात्मीयौ हस्तौ आहुतीः प्रतिग्रहीतुं प्रसारयतीत्यर्थः । उभे सिचौ यतते इत्यपि आज्यसेचनात् जुहूपभृतौ उच्येते । यततिरपि सामर्थ्याच्चुम्बनार्थः । उभे अपि जुहूपभृतौ चुम्बतीत्यर्थः । भीमः अतिप्रज्वलितत्वात् भयानकः । ऋञ्जन् प्रसाधयन्नात्मानं यज्ञं वा । किंच उत् शुक्रमत्कं अञ्जते । अत्कशब्दोऽत्र रूपवचनः ।

सचा यदासु जहतीष्वत्कम्। ऋ. वे. १०. ९५. ८.

इति यथा। अञ्जतिरपि क्षेपणार्थः। शुक्रमात्मीयज्वालाख्यं रूपमुत्क्षिपति। ऊर्ध्वं ज्वलतीत्यर्थः। स्मिस्मात् सर्वस्माद्दाहवनीयागारात् अन्यतो वा स्थानात्। किंच नवा मातृभ्यः। वसना जहाति नवानि वसनानि। वसनानि तमांस्यत्राभिप्रेतानि अचिरोत्पन्नत्वादाच्छादकत्वाच्च दिशाम्। मातरोऽपि दिशः त्वाष्ट्रात्मनोऽग्नेर्जनकत्वात्। जहातीत्यपि लट् भूते काले। अचिरोत्पन्नानि तमांसि दिग्भ्यः त्वाष्ट्रोऽग्निरजहात्। अपनीतवानित्यर्थः। अथवा ओषधिवनस्पतयोऽत्र मातर उच्यन्ते। तासां नवानि वसनानि अजीर्णास्त्वचः। मातृभ्य इति षष्ठ्यर्थे पञ्चमी। ओषधिवनस्पतीनामजीर्णास्त्वचः अग्निर्दग्ध्वा जहातीत्यर्थः॥ ७

त्वेषं रूपं कृणुत उत्तरं यत्संपृञ्चानः सदने गोभिरद्भिः।
कविर्बुध्नं परि मर्मृज्यते धीः सा देवताता समितिर्बभूव॥ ८

दीप्तमात्मरूपमग्निः कृणुते कुरुते। उत्तरं सर्वत उत्कृष्टतरं यत्। सप्तम्या अत्र लुग्द्रष्टव्यः। यत्र संपृञ्चानः संपृच्यमानः सदने यज्ञगृहे गोभिरद्भिः। गोशब्दोऽत्र स्तुतिवचनः।

गोभिर्यदीमन्ये अस्मत्। ऋ. वे. ८. २. ६

इति यथा। स्तुतिभिः सोमरसलक्षणाभिश्चाद्भिः स्तूयमानः सोमेन च हूयमान इत्यर्थः। कविः मेधावी। बुध्नं परिमर्मृज्यते। बुध्नमन्तरिक्षम्। तच्च तमोऽपनयनेन सर्वतः शोधयति। धीः सा देवताता। धीरिति कर्मनाम। संगच्छन्ते यस्मिन् देवाः सा समितिः। बभूव भवति। यत्र यज्ञकर्मणि दीप्तमात्मनो रूपमग्निः करोति अन्तरिक्षाच्च तमोऽपनयति तत्रैव देवाः संगच्छन्ते नान्यत्रेत्यर्थः॥ ८

उरु ते ज्रयः पर्येति बुध्नं विरोचमानं महिषस्य धाम।
विश्वेभिरग्ने स्वयशोभिरिद्धोऽदब्धेभिः पायुभिः पाह्यस्मान्॥ ९

उरु विस्तीर्णं ते तव स्वभूतं ज्रयः। ज्रयतिर्गतिकर्मा। गमनस्वभावकम्। पर्येति परिगच्छति। सर्वतो व्याप्नोतीत्यर्थः। बुध्नमन्तरिक्षम्। विरोचमानं विविधं दीप्यमानम्। महिषस्य। महन्नामैतत्। महतो भवतः। धाम तेजः। य ईदृशोऽसि विश्वेभिस्सर्वैः हे अग्ने स्वयशोभिः। आत्मनिमित्तं यशो येषु पालनेषु तानि स्वयशांसि। तैः इद्धो दीप्तः सन्। अदब्धेभिः अहिंसितैः पायुभिः पालनैः। पाहि रक्षास्मान्॥ ९

धन्वन्त्स्रोतः॑ कृणुते गा॒तुमू॒र्मिं शु॒क्रैरू॒र्मिभि॑र॒भि न॑क्षति॒ क्षाम् ।
विश्वा॑ स॒नानि॑ ज॒ठरे॑षु धत्ते॒ऽन्तर्नवा॑सु चरति प्र॒सूषु॑ ॥ १०

धन्वेत्यन्तरिक्षनाम । स्रोत इत्यप्युदकनाम । हविर्नयनद्वारेणान्तरिक्षे वृष्टिलक्षणमुदकं करोत्यग्निः । गातुं गमनस्वभावकं ऊर्मिं अत्यन्तप्रभूतम् । शुक्रैश्च ज्वालाभिः अभिनक्षति अभिव्याप्नोति । क्षां पृथिवीम् । विश्वा सर्वाणि च सनानि पुराणान्यन्नानि जठरेषूदरेषु । धत्ते धारयति । धारणेन चात्र पाकरहितस्यान्नस्य उदरेषु धारयितुमशक्यत्वात् हेतुभूतौदनत्वाद्यापत्तिरूपः कार्यभूतो वा रसलोहितमांसत्वाद्युत्पत्तिरूपः पाको लक्ष्यते । अन्नानि चौदनादिरूपेण रसादिरूपेण वा जाठरात्मनाग्निः पचतीत्यर्थः । अन्तर्मध्ये च नवासु नवानां चात्यग्निः प्रसूतानामोषधीनां अन्तर्गतः । अग्न्यायत्तो हि प्रसूतानामोषधीनां फलपाकः । अत एतदुच्यते अन्तर्नवासु चरति प्रसूष्विति ॥ १०

ए॒वा नो॑ अग्ने स॒मिधा॑ वृधा॒नो रे॒वत्पा॑वक॒ श्रव॑से॒ वि भा॑हि ।
तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑तिः॒ सिन्धुः॑ पृथि॒वी उ॒त द्यौः ॥ ११

एवा एवमुक्तेन प्रकारेण नः अस्माकं स्वभूतया हे अग्ने समिधा । समिन्धति इति समित् स्तुतिरत्राभिप्रेता न काष्ठमयी । तया वावृधानः अत्यर्थं वर्धमानः । रेवत् धनसंयुक्तम् । धनायास्माकमित्यर्थः । हे पावक श्रवसे अन्नाय च । विभाहि विविधं दीप्यसे । तन्नो मित्र इत्युक्तार्थम् ॥ ११

---

स प्र॒त्नथा॒ सह॑सा॒ जाय॑मानः स॒द्यः काव्या॑नि॒ बळ॑धत्त॒ विश्वा॑ ।
आप॑श्च मि॒त्रं धि॒षणा॑ च साधन्दे॒वा अ॒ग्निं धा॑रयन्द्रविणो॒दाम् ॥ १

स प्रत्नथेति द्रविणोदसेऽग्नये ।

स प्रत्नथेत्येतत्सूक्तं द्रविणोदसेऽग्नये न शुद्धाय । तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । यः पूर्वेषामप्यङ्गिरःप्रभृतीनामृषीणां न्यधत्त स इदानींतनानामपि यजमानानां प्रत्नथा पुराणानामिव सहसा बलेन मथ्यमानादरणिद्वयाज्जायमानः सद्यः तस्यामेव वेलायां काव्यानि । कविर्मेधाव्यग्निः । तस्य यानि कर्माणि हविर्वहनादीनि तानि काव्यानि । बट् अधत्त बट् धारयति । करोतीत्यर्थः । विश्वा सर्वाणि ।

किंच आपश्च मित्रं धिषणा च साधन् । अप्शब्दोऽत्र आप्नोतेर्व्याप्तिवचनो नोदकवचनः । धिषणेति वाङ्नाम । व्याप्त्यश्चाहुतयः स्तुतिलक्षणा च वाक् अग्निं मित्रं साधन्साधयन्ति । कुर्वन्तीत्यर्थः । कस्य । सामर्थ्याद्यजमानानाम् । किंच देवा अग्निं धारयन् धारितवन्तः । निहितवन्त इत्यर्थः । द्रविणोदां हविराख्यस्य धनस्य दातारम् । हविषां वोढारं ऊर्ध्वं चार्पयितारमित्यर्थः । तदेतत् सौचीकोऽग्निर्वक्ष्यति

अथ देवा दधिरे हव्यवाहम् । ऋ. वे. १०. ५२ ३.

इति

मां देवा दधिरे हव्यवाहम् । ऋ. वे. १० ५२ ४.

इति च ॥ १

स पूर्व॑या नि॒विदा॑ क॒व्यता॒योरि॒माः प्र॒जा अ॑जनय॒न्मनू॑नाम् ।
वि॒वस्व॑ता॒ चक्ष॑सा॒ द्याम॒पश्च॑ दे॒वा अ॒ग्निं धा॑रयन्द्रविणो॒दाम् ॥ २

प्रकृतिभूम्ना प्रजापतिरूपेणाग्निरत्र स्तूयते । पूर्वया निविदा । अग्निर्देवेद्धः (ऐ. ब्रा. २. ३४.) इत्येषा निवित् । वाङ्नाम वा निविच्छब्दः । तृतीयानिर्देशाच्च स्तूयमान इति शेषः । प्रकृतोऽग्निः पूर्वया निविदा पूर्वर्षिप्रयुक्तया वाचा स्तूयमानः । कव्यता कवित्वेन । आयोः उर्वशीपुत्रस्य राज्ञः । षष्ठीनिर्देशात् भोग्या इति वाक्यशेषः । इमाः प्रजाः अजनयत् । न च केवलस्यायोः । किं तर्हि । मनूनां मनोश्च राज्ञः पुत्राणां । न च कवित्वेन केवलेन । किं तर्हि । विवस्वता चक्षसा । विवासनमपनयनम् । तद्वता च दर्शनेन । अशेषाज्ञाननिवृत्तिसमर्थेन च ज्ञानेनेत्यर्थः। न च केवलाः प्रजाः । किं तर्हि । द्यामपश्च । अप इत्यन्तरिक्षनाम । दिवं चान्तरिक्षं च । किंच देवाः ॥ २

तमी॑ळित प्रथ॒मं य॑ज्ञ॒साधं॒ विश॒ आरी॒राहु॑तमृ॒ञ्जसा॒नम् ।
ऊ॒र्जः पु॒त्रं भ॑र॒तं सृ॒प्रदा॑नुं दे॒वा अ॒ग्निं धा॑रयन्द्रविणो॒दाम् ॥ ३

तं प्रकृतमग्निमीळत स्तुत । प्रथमं यज्ञस्य साधयितारम् । हे विशः मनुष्यजातयः । आरीः । अर्तेर्वा गत्यर्थस्य रातेर्वा दानार्थस्य इदं रूपम् । गन्त्र्यः दात्र्यो वा हविषाम् । आहुतं मर्यादयाभिहुतम् । ऋञ्जसानं प्रसाधयन्तम् । किम् । सामर्थ्याद्यज्ञं सर्वान् अभिप्रेतान् वा । ऊर्जः पुत्रम् । ऊर्जःशब्देनात्रान्नकारणत्वाद्वृष्टिलक्षणमुदकमुच्यते बीजावस्थं वान्नम् । तस्य हि पुत्रोऽग्निः पारंपर्येण तत उत्पाद्यमानत्वात् । ततो ह्योषधिवनस्पतयो जायन्ते ओषधिवनस्पतिभ्य एष जायत इति । भरतमृत्विजम् ।

ऋत्विङ्नाम भरतशब्दः। कर्तृवचनो वा। भर्तारं वा सर्वयजमानानाम्। सुप्रदानुम्। तत्र तत्र गन्तृ सुप्रम्। सुप्रं दानं यस्य स सुप्रदानुः। तं सुप्रदानुम्। तस्मै तस्मै स्तोत्रे यजमानाय च दातारमित्यर्थः। किंच देवाः॥ ३

स मा॒त॒रिश्वा॑ पु॒रु॒वार॑पुष्टिर्वि॒दद्गा॒तुं तन॑याय स्व॒र्वित्।
वि॒शां गो॒पा ज॑नि॒ता रोद॑स्योर्दे॒वा अ॒ग्निं धा॑रयन्द्रविणो॒दाम्॥ ४

मातरिश्वसंबन्धादग्निरेव मातरिश्वेत्युच्यते। कः पुनरग्नेर्मातरिश्वना सम्बन्धः। उच्यते। तेन दृष्टोऽग्निराहृतश्च। हिरण्यस्तूपेन भरद्वाजेन चोक्तम्।

त्वमग्ने प्रथमो मातरिश्वन आविर्भव। ऋ. वे १. ३१. ३.

आ दूतो अग्निमभरद्विवस्वतः। ऋ. वे. ६ ८. ४.

इति च। सौचीकोऽग्निर्दर्शनाहरणाभ्यां मातरिश्वसम्बन्धी। पुरुवारपुष्टिः बहुवरणीयपोषणः। विदत् जानाति। किम्। उच्यते। गातुं देवलोकगमनमार्गम्। तनयाय अपत्यभूतस्य यजमानस्यार्थाय। कीदृशः। उच्यते। स्वर्वित् सर्वस्य वेदिता। विशां गोपाः मनुष्याणां रक्षिता। जनिता रोदस्योः प्रकृतिभूम्ना प्रजापतिरूपेणैषा स्तुतिः। जनयिता द्यावापृथिव्योः। किंच देवाः॥ ४

नक्तो॒षासा॒ वर्ण॑मा॒मेम्या॑ने धा॒पये॑ते॒ शिशु॒मेकं॑ स॒मीची॑।
द्यावा॒क्षामा॑ रु॒क्मो अ॒न्तर्वि भा॑ति दे॒वा अ॒ग्निं धा॑रयन्द्रविणो॒दाम्॥ ५

नक्तेति रात्रिनाम। रात्र्युषसौ। वर्णमामेम्याने। कृष्णं शुक्लञ्च रात्र्युषसोर्वर्णम्। तमामेम्याने। मीङ् हिंसायाम्। आकार ईषदर्थे। परस्परमीषद्धिंसन्त्यौ। रात्रिर्हि उषसो रूपं स्वेन तेजसा ईषद्धिनस्ति उषा अपि स्वेन ज्योतिषा। ते धापयेते सायमाहुतिः प्रातराहुतिश्चाग्निं पाययतः। कथम्। शिशुमेकम्। शिशुर्बालः। लुप्तोपमं चैतत्। बाल इवैकं कंचित् केचित् स्त्रियौ। समीची परस्परेण संगते। किंच द्यावाक्षामा रुक्मो अन्तः द्यावापृथिव्योर्मध्ये रुक्मः रोचनोऽग्निर्विभाति विविधं दीप्यते। किंच देवाः॥ ५

रा॒यो बु॒ध्नः सं॒गम॑नो॒ वसू॑नां य॒ज्ञस्य॑ के॒तुर्म॑न्म॒साध॑नो॒ वेः।
अ॒मृ॒त॒त्वं रक्ष॑माणास एनं दे॒वा अ॒ग्निं धा॑रयन्द्रविणो॒दाम्॥ ६

रायो धनस्य बुध्नः बुध्नभूतः । आश्रयभूत इत्यर्थः । संगमनो वसूनां संगमयिता च धनानां यजमानैस्सह । दाता च धनानां यजमानेभ्य इत्यर्थः । यज्ञस्य केतुः । कित ज्ञाने । यज्ञस्य ज्ञाता । अथवा केतुशब्दः पताकावचनः कर्तृवचनो वा । यज्ञस्य पताकाभूतः कर्ता वेत्यर्थः । मन्मसाधनः । मन्यत इत्यर्चतिकर्मा । मन्म मननं स्तुतिः । तस्याः साधयिता । वेः । वेरिति गतिकर्मा । गन्ता हविर्गृहीत्वा देवान् प्रति । किंच अमृतत्वं रक्षमाणासः । अमृतत्वं हविर्भक्षणलक्षणं देवत्वम् । तदात्मनो रक्षन्तः । आत्मनो हविर्भक्षणपरिपालनार्थमित्यर्थः । एवं देवाः ॥ ६

नू च॑ पु॒रा च॒ सद॑नं रयी॒णां जा॒तस्य॑ च॒ जाय॑मानस्य च॒ क्षाम् ।
स॒तश्च॑ गो॒पां भव॑तश्च॒ भूरे॑र्दे॒वा अ॒ग्निं धा॑रयन्द्रविणो॒दाम् ॥ ७

नुशब्दोऽत्रेदानीमित्यर्थे । इदानीं च पुरा च पूर्वस्मिंश्च काले । सदनं स्थानं रयीणां धनानाम् । जातस्य च भूतग्रामस्य च जायमानस्य च क्षाम् । पृथिवीनामैतत् । पृथिवीस्थानीयम् । आश्रयभूतमित्यर्थः । अथवा क्षि निवासगत्योरित्यस्य क्षशब्दो निवासवचनः । निवासभूतमित्यर्थः । सतश्च गोपां भवतश्च । यच्च पूर्वोत्पन्नमस्त्येव यच्चेदानीं भवति तस्योभयस्यापि गोप्तारम् । भूरेः बहुनः । देवाः ॥ ७

द्र॒वि॒णो॒दा द्रवि॑णसस्तु॒रस्य॑ द्रविणो॒दाः सन॑रस्य॒ प्र यं॑सत् ।
द्र॒वि॒णो॒दा वी॒रव॑ती॒मिषं॑ नो द्रविणो॒दा रा॑सते दी॒र्घमायुः॑ ॥ ८

द्रविणोदाः धनदानस्वभावकोऽग्निः । द्रविणसः तुरस्य । तुरशब्दस्त्वरतेः । उभयत्र च द्वितीयार्थे षष्ठी । अश्वादि धनं त्वरणस्वभावकम् । द्रविणोदा एव सनरस्य । इयमपि द्वितीयार्थे षष्ठी । सनरं परिचारकमनुष्यसहितं हिरण्यादि प्रयंसत् प्रयच्छतु । ददात्वित्यर्थः । द्रविणोदा एव वीरवतीं पुत्रसंयुक्तामिषं अन्नं नः अस्मभ्यं ददातु । द्रविणोदा एव रासते ददातु दीर्घमायुः ॥ ८

ए॒वा नो॑ अग्ने स॒मिधा॑ वृधा॒नो रे॒वत्पा॑वक॒ श्रव॑से॒ वि भा॑हि ।
तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑तिः॒ सिन्धुः॑ पृथि॒वी उ॒त द्यौः ॥ ९

एवा नो अग्ने इत्याद्युक्तार्थम् ॥ ९

अप नः शोशुचदघमग्ने शुशुग्ध्या रयिम् ।

अप नः शोशुचदघम् ॥ १

अत्र छन्दोगब्राह्मणाधीतमितिहासमाचक्षते । कुत्सश्च लुशश्च इन्द्रं व्यह्वयेताम् । स इन्द्रः कुत्समुपावर्तते शतं शतेन वाध्रिभिरण्डयोरबध्नादिति । अत्र च वाध्रा वाध्रिय उच्यन्ते । तदेतल्लुश इन्द्ररूपतामापन्नो वक्ष्यति ।

प्र मुञ्चस्व परि कुत्सादिहा गहि । ऋ. वे १०. ३८ ५

इति । स इन्द्रातिक्रमजेन पापेनाभिभूतमात्मानं मन्यमानः तदपनोदनार्थ-मग्निमुवाच । अप नः शोशुचदिति । अपपूर्वः शुचिरत्र सामर्थ्यादपनयने । व्यत्ययेन प्रथमपुरुषः । अपनय नः अस्माकं अघं इन्द्रातिक्रमजं पापम् । हे अग्ने शुशुग्धि आ । शग्धि इति याञ्चाकर्मा पठितः । तस्येदम् । उपधाया उत्वं छान्दसत्वात् । याञ्चया चात्र तत्पूर्वकं दानं लक्ष्यते । आकारश्चात्र मर्यादायाम् । मर्यादाया देहीत्यर्थः । रयिं धनम् । अथवा शुशुग्धीति शुचेरेव दीप्त्यर्थस्येदं रूपम् । आ रयिमिति कर्मोपसर्गश्रुतेर्योग्यक्रियाध्याहारः । दीप्यस्व आहर च धनमित्यर्थः । परस्तु पादो भिन्नमेव वाक्यम् । तेनापुनरुक्तः अर्थः । भूयस्त्वार्थो वा अभ्यासः । अभ्यासे हि भूयांसमर्थं मन्यन्ते यथाहो दर्शनीया अहोदर्शनीया इति (नि. १०. ४२.) ॥ १

सुक्षेत्रिया सुगातुया वसूया च यजामहे ।

अप नः शोशुचदघम् ॥ २

सुक्षेत्रियादीनि क्यजन्तानीच्छावचनानि । सर्वत्र तृतीयाया डादेशः । इह तावल्लोके शोभनक्षेत्रेच्छया परलोके सुगातुया सुगतीच्छया च वसूया च धनेच्छया च वयं त्वां यजामहे । एतानि सर्वाण्यस्मभ्यं देहीत्यर्थः । किंच अप नः ॥ २

प्र यद्भन्दिष्ठ एषां प्रास्माकासश्च सूरयः ।

अप नः शोशुचदघम् ॥ ३

यदिति व्यत्ययेन नपुंसकता । योऽयं प्रकर्षेण भन्दिष्ठः । भन्दिरर्चतिकर्मा । स्तोतृतमः । एषाम् । अनुदात्तत्वादादेशोऽयं प्रकृतस्याग्नेः । व्यत्ययेन चैकवचनस्थाने बहुवचनम् । अस्याग्नेः । न च केवलोऽहमेव । किं तर्हि । अस्माकासः च अस्मदीयाश्च पुत्राः पौत्राश्च पितृपितामहप्रपितामहा वा । येऽस्याग्नेः भन्दिष्ठाः ॥ कीदृशाः ॥

सूरयः। स्तोतृनामैतत्। स्तुतिकरणस्वभावकाः। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। तेषां सर्वेषामप नः शोशुचदघम्। केचित्त्वेषामिति बहुवचनश्रुतेरङ्गिरःप्रभृतीनामयं प्रतिनिर्देश इति मन्यन्ते। तत्रैवमेकवाक्यता योज्या। योऽग्निः प्रकर्षेण स्तुत्यतमः एषामङ्गिरःप्रभृतीनां अस्मदीयाश्च पितृपितामहप्रपितामहाः अङ्गिरःप्रभृतयो यस्याग्नेः प्रकर्षेण स्तोतारः सः अप नः शोशुचदघमिति ॥ ३

प्र यत्ते॑ अग्ने सू॒रयो॒ जाये॑महि॒ प्र ते॑ व॒यम् ।
अप॑ न॒ः शोशु॑चद॒घम् ॥ ४

यदिति व्यत्ययेन नपुंसकता एकवचनं च। प्रकर्षेण ये ते तव हे अग्ने सूरयः स्तोतारः। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। ते जायेमहि। प्रजां प्राप्नुयामेत्यर्थः। ते। षष्ठीनिर्देशादत्र प्रसादेन स्वभूता वेति वाक्यशेषः। तव प्रसादेन स्वभूता वा वयम्। किंच अप ॥ ४

प्र यद॒ग्नेः सह॑स्वतो वि॒श्वतो॒ यन्ति॑ भा॒नव॑ः ।
अप॑ न॒ः शोशु॑चद॒घम् ॥ ५

यदिति षष्ठ्या लुग्द्रष्टव्यः। यस्याग्नेः। सहस्वतः बलवतः। विश्वतः सर्वतः। प्रयन्ति प्रकर्षेण गच्छन्ति। भानवः दीप्तयः। सः अप ॥ ५

त्वं हि वि॑श्वतोमुख वि॒श्वत॑ः परि॒भूरसि॑ ।
अप॑ न॒ः शोशु॑चद॒घम् ॥ ६

हिशब्दो यस्मादर्थे। यस्मात्त्वं हे विश्वतोमुख सर्वतोमुख। विश्वतः सर्वतः स्तोतॄणां परिभूः परिग्रहीतासि। यस्मादिति वचनात्तस्मादित्यध्याहार्यम्। तस्मात् अप ॥ ६

द्वि॒षो॑ नो विश्वतोमु॒खाति॑ ना॒वेव॑ पारय ।
अप॑ न॒ः शोशु॑चद॒घम् ॥ ७

द्विषः द्वेष्टॄन्। नः अस्माकं हे विश्वतोमुख। अति। द्विष इति कर्मश्रुतेरतीति चोपसर्गाद्योग्यक्रियापदाध्याहारः। अतीत्य नावेव पारय। यथा कश्चित् कंचिन्नावा पारयेदेवमस्मान् त्वं पारय। सर्वाभिप्रेतानां पारं नयेत्यर्थः। किंच अप ॥ ७

स नः सिन्धुमिव नावयाति पर्षा स्वस्तये ।

अप नः शोशुचदघम् ॥ ८

यं त्वां अस्तोष्म स नः अस्मान् सिन्धुमिव नावया । यथा कश्चित् कंचित् सिन्धुं नावा पारयेत् एवमतिपर्ष सुष्ठु पारय नः स्वस्तये अविनाशाय । किंच अप ॥ ८

---

वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः ।

इतो जातो विश्वमिदं वि चष्टे वैश्वानरो यतते सूर्येण ॥ १

वैश्वानरस्येति वैश्वानरीयम् ।

वैश्वानरस्य सुमताविल्येतत्सूक्तं वैश्वानरदेवताकम् । वैश्वानरगुणोऽस्याग्निर्देवता न शुद्ध इत्यर्थः । विश्वानरौ मध्यमोत्तमावुच्येते । ताभ्यां प्रभवतीति वैश्वानरोऽय मग्निः । अशनिनाभिहन्यमानात् वृक्षात् योऽग्निर्गृह्यते स वैद्युतात् प्रभवति । यस्तु आदित्याभिमुखे आदर्शे मणौ वा स आदित्यात् प्रभवति । तेन विश्वानरप्रभवत्वादग्ने-रिदं गुणाभिधानं वैश्वानरस्येति । वैश्वानरगुणस्याग्नेः सुमतौ शोभनायामनुग्राह्यबुद्धौ वयं स्यामेत्याशास्महे । कस्मात् । उच्यते । राजा हि कम् । हिशब्दो यस्मादर्थे । कमिति निपातः पदपूरणः । यस्माद्राजा ईश्वरो वैश्वानरः । कस्य । भुवनानां लोकानां भूत-जातानां वा । आभिश्रीः आश्रयणीयः । इतः ओषधिवनस्पतिभ्योऽरणिभ्यां वा जातः सन् विश्वमिदं विचष्टे । पश्यतिकर्मायं । पश्यति प्राणिनां कृताकृतप्रत्यवेक्षत्वात् । अन्तर्णयर्थो वा सामर्थ्याच्चक्षिः । दर्शयति । प्रकाशयतीत्यर्थः । किंच वैश्वानरो यतते । यती प्रयत्ने । प्रयत्नेन चात्र तत्पूर्वकत्वात् गमनं लक्ष्यते । गत्यर्थ एव वा सामर्थ्याद्यततिः । शुद्धोऽपि च सोपसर्गार्थे द्रष्टव्यः । संगच्छते सूर्येण सह । कथम् । अमुतो रश्मय आदित्यादप उद्यच्छन्ति । इतोऽस्यार्चिष उद्यच्छन्ति । तयोर्भासोः संसर्गं दृष्ट्वा मन्त्रदृगेवमाह वैश्वानरो यतते सूर्येणेति ॥ १

पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीरा विवेश ।

वैश्वानरः सहसा पृष्टो अग्निः स नो दिवा स रिषः पातु नक्तम् ॥ २

पृष्ट इति पृच्छतेरर्चतिकर्मणो रूपम् । पृष्टः स्तुतोऽग्निः दिवि । केन । सामर्थ्या-द्देवैः । पृष्टोऽग्निः पृथिव्याम् । केन । सामर्थ्यात् मनुष्यैः । सर्वैस्तोतृभिश्च पृष्टः सन्

विश्वा ओषधीराविवेश । सर्वास्वोषधीषु अन्तर्लीन इत्यर्थः । केन पुनः पृष्टः । उच्यते । वैश्वानरः सहसा पृष्टो अग्निः । सह इति बलनाम । स्तोतृगतेन स्तुतिकरणसामर्थ्येन । स्वगतया बलवत्तया स्तुत इत्यर्थः । य एवंरूपः सः नः अस्मान् दिवा स एव रिषः हिंसातः हिंसितुर्वासकाशात् । पातु रक्षतु । नक्तं रात्रौ ॥ २

वैश्वा॑नर॒ तव॒ तत्स॒त्यम॑स्त्व॒स्मान्रायो॑ म॒घवा॑नः सचन्ताम् ।
तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑तिः॒ सिन्धुः॑ पृथि॒वी उ॒त द्यौः ॥ ३

तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । हे वैश्वानर यद्वयं ब्रूमः तत्सत्यमस्तु तव । त्वं तत् सत्यतया प्रतिपद्यस्व । प्रतिपद्य च संपादयेत्यर्थः । किं तत् । उच्यते । अस्मान् रायो धनानि मघवानः धनवन्तश्च सचन्तां सेवन्ताम् । धनान्यस्माकं भवन्तु राजानश्च परिचारकभूता भवन्त्वित्यर्थः । तन्न इत्याद्युक्तार्थम् ॥ ३

---

जा॒तवे॑दसे सुनवाम॒ सोम॑मराती॒यतो॒ नि द॑हाति॒ वेदः॑ ।
स नः॑ पर्ष॒दति॑ दु॒र्गाणि॒ विश्वा॑ ना॒वेव॒ सिन्धुं॑ दुरि॒तात्य॒ग्निः ॥ १

अतः परं काश्यपार्षं उत्सृष्टाध्ययनं एकाधिकं सूक्तसहस्रम् । तस्यैतदेकर्चं आद्यं सूक्तम् । एवं हि भगवान् शौनक आह—

पूर्वापूर्वा सहस्रस्य सूक्तानामेकभूयसाम् ।
जातवेदस इत्याद्यं कश्यपार्षस्य शुश्रुमः ॥

इति । यस्यैकाधिकानां सूक्तानां सहस्रस्य सूक्तस्य कश्यपार्षस्य सर्वसूक्तेषु पूर्वापूर्वैषा ऋक् जातवेदस इत्याद्यमेकर्चमिति । एतद्वयमपि श्रुतवन्त एव नाधीतवन्त इत्यर्थः ।

जातवेदस्यम् ।

जातवेदोदेवताकमेतत् सूक्तम् । जातवेदा इत्येवंगुणोऽस्याग्निर्देवता न शुद्ध इत्यर्थः । जातवेदसे । वेद इति धननाम प्रज्ञापर्यायो वा । उत्पन्नधनाय उपपन्नप्रज्ञाय वा । अग्नये सुनवाम वयं सोमं । किं कारणम् । उच्यते । यस्मादरातीयतः । अरातिरदानं हविषः । तां कामयमानस्य । सोममददत इत्यर्थः । निदहाति नियमेन दहत्यग्निः । विनाशयतीत्यर्थः । किम् । वेदं धनं ज्ञानं वा । अथवा अरातिशब्दः शत्रुवचनः । दहातीत्यपि आशिषि लिङर्थे लेट् । अस्मच्छत्रुतां कामयमानस्य स्वभूतं धनं नियमेन दहत्वग्निरित्याशास्मह इत्यर्थः । किंच स नः दुरिता अत्यग्निः । अतिशब्द उपसर्गः

पर्षदित्याख्यानात् पुरस्तादपकृष्टव्यः । अस्मानति पारयतु । अतिक्रमयत्वित्यर्थः । कीदृशानि । अतिदुर्गाणि । दुरतिक्रमाणीत्यर्थः । विश्वा सर्वाणि । कथम् । नावेव सिन्धुम् । यथा कश्चित् कांचिन्नावा नदीमतिक्रामयेत् । कानि । पापानि ॥ १

---

स यो वृषा वृष्ण्येभिः समोका महो दिवः पृथिव्याश्च सम्राट् ।
सतीनसत्वा हव्यो भरेषु मरुत्वान्नो भवत्विन्द्र ऊती ॥ १

सूक्तं स यो वृषेत्येतत् पञ्च वार्षागिरा विदुः ।
निरुक्ता नामधेयैः स्वैरपि चैतत्यदित्यृचि ॥

स यो वृषेत्येतत् सूक्तं पञ्च ऋषयः वृषागिरः पुत्राः विदुः जानन्ति । दृष्टवन्त इत्यर्थः । ते तु निरुक्ताः स्वैर्नामधेयैरेतत्यत्त इन्द्रवृष्ण इत्यस्यामृचि । ऋज्राश्वः अम्बरीषः सहदेवः भयमानः सुराधा इत्यते ।

तत ऐन्द्रमुत्तरम् ।

यज्जातवेदस्यं पूर्वमुक्तं तस्मादनन्तरमैन्द्रमिदं सूक्तम् । स इति तच्छब्दश्चतुर्थे पादे संबन्धयितव्यः । य इन्द्रः वृषा वर्षिता कामानाम् । स्तोतृभ्यो दातेत्यर्थः । वृष्ण्येभिः समोकाः वृष्ण्यमित्यपठितमपि बलनाम । बलैः समवेतः । अत्यन्तबलवानित्यर्थः । महः महत्याः । दिवः पृथिव्याश्च सम्राट् ईश्वरः । सतीनसत्वा । सतीनमित्युदकनाम । षणु दाने । वृष्टिलक्षणस्योदकस्य दाता । हव्यो भरेषु जयार्थमाह्वातव्यः संग्रामेषु । सः मरुत्वान् मरुद्भिः सहितः नः अस्माकं भवत्विन्द्र ऊती अविता रक्षिता ॥ १

यस्यानाप्तः सूर्यस्येव यामो भरेभरे वृत्रहा शुष्मो अस्ति ।
वृषन्तमः सखिभिः स्वेभिरेवैर्मरुत्वान्नो भवत्विन्द्र ऊती ॥ २

यस्येन्द्रस्य अनाप्तः अप्राप्तपूर्वः केनचिच्छत्रुणा । सूर्यस्येव यामः रथः । यस्य भरेभरे तत्र तत्र संग्रामे । वृत्रहा शुष्मः शत्रुहननसमर्थश्च बलमस्ति । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । स वृषन्तमः अतिशयेन वर्षिता । सखिभिः स्वेभिः आत्मीयैः मरुद्भिः सह । कीदृशैः । एवैः । एवशब्दोऽत्र काम्यवचनः पालयितृवचनो वा । कामयितव्यैः पालयितृभिर्वा । मरुत्वान् [illegible]

दिवो न यस्य रेतसो दुघानाः पन्थासो यन्ति शवसापरीताः ।
तरद्द्वेषाः सासहिः पौंस्येभिर्मरुत्वान्नो भवत्विन्द्र ऊती ॥ ३

दिव इति पञ्चमी । नशब्द उपरिष्टात् उपचारः । उपमार्थीयत्वात् अस्त्युपमार्थस्य संप्रत्यर्थे प्रयोगः (नि. ७. ३१) इति पदपूरणः । यस्येत्येतत् शवसेत्येतेन संबध्यते । द्युलोकात् यस्येन्द्रस्य बलेन रेतसः रेतांसि वृष्टिलक्षणान्युदकानि दुघानाः क्षरन्तः । पन्थासः वृष्टिपतनमार्गाः यन्ति पृथिवीं प्रति गच्छन्ति । शवसा अपरीताः अपगताः वृष्टिप्रतिबन्धकैरसुरादिभिरप्राप्ताः । द्युलोकाद्यस्य प्रसादेन स्वैः पथिभिरप्रतिबन्धा वृष्टिः पततीत्यर्थः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । सः तरद्वेषाः । तरति द्वेषांसीति तरद्वेषाः । तरतिश्चात्र प्लवनार्थः । प्लवनं च गमनं प्लवतेर्गत्यर्थत्वात् । शुद्धोऽपि चाभिपूर्वार्थो द्रष्टव्यः । वधार्थो वा सामर्थ्यात्तरतिः । द्वेष्टॄणां शत्रूणां वधार्थमभिगन्ता हन्ता वेत्यर्थः । सासहिः अत्यर्थमभिभविता शत्रूणाम् । पौंस्येभिः स्वैः बलैः । मरुत्वान् ॥ ३

सो अङ्गिरोभिरङ्गिरस्तमो भूद्वृषा वृषभिः सखिभिः सखा सन् ।
ऋग्मिभिर्ऋग्मी गातुभिर्ज्येष्ठो मरुत्वान्नो भवत्विन्द्र ऊती ॥ ४

स इन्द्रः अंगिरोभिर्ऋषिभिः अंगिरस्तमः । सोऽयमित्यभिसम्बन्धादङ्गिरःसम्बन्धिन्ययमङ्गिरःशब्दोऽत्र द्रष्टव्यः । अतिशयेनाङ्गिरसां स्तुत्यतया सम्बन्धी भूत् भवति । वृषा वर्षिता । कीदृशैरङ्गिरोभिः । वृषभिः वर्षणस्वभावकैः । सखिभिः आत्मनः सखा । कस्य । सामर्थ्यादंगिरसामेव सर्वस्तोतॄणां वा । सन् शोभनः । ऋग्मिभिः ऋग्मी । ऋच स्तुतौ । 'अर्चनमृक् स्तुतिः । तद्वाद्भिः स्तुतिमान् । गातुभिः गन्तृभिः मेघानसुरान् वा प्रति । ज्येष्ठः ऋद्धतमः प्रशस्यो वातिशयेन । किंच मरुत्वान् ॥ ४

स सूनुभिर्न रुद्रेभिर्ऋभ्वा नृषाह्ये सासह्वाँ अमित्रान् ।
सनीळेभिः श्रवस्यानि तूर्वन्मरुत्वान्नो भवत्विन्द्र ऊती ॥ ५

स इन्द्रः सूनुभिः न पुत्रैरिव कश्चित् । रुद्रेभिः । पितृशब्देनेदं सोऽयमित्यभिसम्बन्धात् पुत्राणामभिधानम् । रुद्रपुत्रैर्मरुद्भिः सह । ऋभ्वा । ऋभुरिति मेधाविनाम । व्यत्ययेन चात्रैकवचनम् । ऋभुभिः मेधाविभिः । नृषाह्ये । नरो यत्राभिभूयन्ते स नृषाह्यः संग्रामः । तत्र । सासह्वान् अत्यर्थमभिभवन् । अमित्रान् वैरिणः असुरादीन् ।

न चैतदेव केवलं कुर्वन् । किं तर्हि । सनीळेभिः । नीळमिति गृहनाम । श्रवोऽन्नम् । तत्र साधूनि श्रवस्यानि मेघवृन्दानि । तानि वृष्टिप्रदानद्वारेणान्नस्य जनकत्वात्तत्र साधूनि । तुर्वतिर्हिंसार्थः । समानस्थानैर्मरुद्भिः सह मेघवृन्दानि च घ्नन्नित्यर्थः । मरुत्वान् ॥

स मन्युमीः समदनस्य कर्तास्माकेभिर्नृभिः सूर्यं सनत् ।
अस्मिन्नहन्त्सत्पतिः पुरुहूतो मरुत्वान्नो भवत्विन्द्र ऊती ॥ ६

अत्रेतिहासमाचक्षते । प्रजापतेः पुत्रो मन्युर्नाम । तं प्रजापतिः सेनापत्ये नियुक्तवान् । तेन सहेन्द्रो निजघान इति । तदेतदुच्यते स मन्युमीरिति । मीङ् हिंसायाम् । मन्युना सह मिनातीति मन्युमीः । क्रोधनाम वा मन्युशब्दः । क्रोधेन शत्रूणां हिंसिता । समदनस्य कर्ता । समदिति संग्रामस्य नामसु पठितम् । समच्छब्दस्य समदनशब्दः पर्यायो द्रष्टव्यः । संग्रामस्य कर्ता । अस्माकेभिर्नृभिरस्मदीयैर्मनुष्यैः ऋत्विगाख्यैः सह । सूर्यं आदित्यं सनत् संभजताम् । सूर्यस्य हि यागादिकर्मनिर्वृत्तिः फलम् । तदर्थं ह्यसावुदेति । सर्वः सूर्यं उदिते यागं निर्वर्तयति । तेनासौ संभक्तो भवति नान्येन । अतोऽत्र सूर्यं सनदिति संभजनेन तदुदयफलभूतयागनिर्वृत्तिः प्रतिपाद्यते । अस्मदीयैः ऋत्विग्भिस्सह देवतात्वमापन्न इन्द्रः सूर्योदयफलभूतमस्मदीयं यागं निर्वर्तयत्वित्यर्थः । कस्मिन् काले । उच्यते । अस्मिन्नहन् यागदिवसे । कीदृश इन्द्र । उच्यते । सत्पतिः सतां पालयिता । पुरुहूतः बहुभिराहूतः । किंच मरुत्वान् ॥ ६

तमूतयो रणयञ्छूरसातौ तं क्षेमस्य क्षितयः कृण्वत त्राम् ।
स विश्वस्य करुणस्येश एको मरुत्वान्नो भवत्विन्द्र ऊती ॥ ७

तमिन्द्रमूतयः । मरुदादिसेना ऊतय इहोच्यन्ते । ताः रणयन् रमयन्ति शब्दयन्ति वा । शूरसातौ संग्रामे । तमेव क्षेमस्याविनाशस्य क्षितयो मनुष्याः कृण्वत यागैः स्तुतिभिश्च कुर्वन्ति । त्रां त्रातारं सर्वदा अपरित्यक्तारम् । यागैः स्तुतिभिश्च सर्वदा मनुष्या क्षेमस्य कर्तारं कुर्वन्तीत्यर्थः । स एव विश्वस्य करुणस्य । करुणशब्दः करणशब्दस्य कर्मनाम्नः पर्यायो द्रष्टव्यः । सर्वस्य कर्मण ईशे एकः एक एवेष्टे । सर्वकर्मणां वृष्टिनिबन्धनत्वात् वृष्टेश्च केवलेन्द्रायत्तत्वात् । किंच मरुत्वान् ॥ ७

तमप्सन्त शवस उत्सवेषु नरो नरमवसे तं धनाय ।
सो अन्धे चित्तमसि ज्योतिर्विदन्मरुत्वान्नो भवत्विन्द्र ऊती ॥ ८

तमिन्द्रं अप्सन्त । भस भक्षणदीप्त्योः । स्तुतिभिर्दीपयन्ति । उत्तेजयन्तीत्यर्थः । क । उच्यते । शवस उत्सवेषु । शव इति बलनाम सामर्थ्याच्चात्रान्तर्णीतमत्वर्थः षष्ठीबहुवचनान्तश्च । बलवतामुत्सवभूतेषु संग्रामेषु । बलवतां हि संग्राम उत्सव एव । अथवा उत्सवेष्वित्युच्छब्दः अभीत्येतस्य स्थाने । बलस्य संबन्धिष्वभिषवेषु । बलेन येषु यज्ञेष्वभिषूयते सोमस्तत्रेत्यर्थः । के । नरो मनुष्याः । कीदृशम् । नरं मनुष्याकारम् । किमर्थम् । अवसे पालनाय । अथवैवमन्यथास्या ऋचोऽर्थयोजना । अप्सन्तेति भसेः प्सातेर्वा भक्षणार्थस्येदं रूपम् । शवस इत्यप्यन्तर्णीतमत्वर्थे प्रथमाबहुवचनान्तं द्रष्टव्यम् । बलवन्तो भक्षयन्त्युत्सवेषु । बलवन्तो मनुष्या उत्सवेष्वपि तमेवेन्द्रमुपजीवन्तीत्यर्थः । किमर्थम् । अवसे तर्पणायात्मनः । तमेव धनाय । किंच सः अन्धेऽपि तमसि ज्योतिः सूर्याख्यं विदत् ज्ञातवान् लब्धवान् वा । तदुक्तं सव्येन

वृत्रं यदिन्द्र । ऋ वे. १. ५२. ४

इति । किंच मरुत्वान् ॥ ८

स सव्येन यमति व्राधतश्चित्स दक्षिणे संगृभीता कृतानि ।

स कीरिणा चित्सनिता धनानि मरुत्वान्नो भवत्विन्द्र ऊती ॥ ९

स इन्द्रः सव्येन हस्तेन यमति नियच्छति । गृह्णातीत्यर्थः । व्राधतश्चित् । व्राधश्चिति महन्नाम । महतोऽपि शत्रून् । स एव दक्षिणेन हस्तेन संगृभीता कृतानि । करोतिरत्र सामर्थ्यात् स्वीकरणे द्रष्टव्यः । संग्रहणशीलः स्वकृतानां महतोऽपि शत्रूनयत्नेन निगृह्णातीत्यर्थः । स एव कीरिणा चित् । स्तोतृनामैतत् । चतुर्थ्यर्थे चात्र तृतीया । स्तोत्रे । चशब्दाद्यष्ट्रे च । सनिता धनानि । षणु दाने । दानशीलो धनानाम् । नित्यं धनानि ददातीत्यर्थः । किंच मरुत्वान् ॥ ९

स ग्रामेभिः सनिता स रथेभिर्विदे विश्वाभिः कृष्टिभिर्न्वद्य ।

स पौंस्येभिरभिभूरशस्तीर्मरुत्वान्नो भवत्विन्द्र ऊती ॥ १०

ग्रामेभिः रथेभिरिति द्वितीयार्थे तृतीया । स ग्रामान् सनिता दाता । स एव रथान् । इत्येवमहं विदे जानामि । विश्वाभिः कृष्टिभिः सर्वाभिः मनुष्यजातिभिः सह । नु क्षिप्रम् । अद्य सांप्रतमित्यर्थः । स एव पौंस्येभिः स्वैर्बलैरभिभूः अभिभविता अशस्तीः अशंसितॄणाम् । किंच मरुत्वान् ॥ १०

स जामिभिर्यत्समजाति मीळ्हेऽजामिभिर्वा पुरुहूत एवैः ।
अपां तोकस्य तनयस्य जेषे मरुत्वान्नो भवत्विन्द्र ऊती ॥ ११

स जामिभिः समानजातीयैः सह यत् यस्मात् समजाति । अज गतिक्षेपणयोः । संगच्छते । मीळ्हे संग्रामे । अजामिभिर्वा असमानजातीयैर्वा सह । अतिबलत्वात् समानजातीयैरसमानजातीयैश्च सह युध्यत इत्यर्थः । कीदृशः । पुरुहूतः एवैः । एवाः कामाः । तैर्निमित्तभूतैः बहुभिराहूतः । अभिलषितकामप्राप्त्यर्थं बहुभिर्यजमानैराहूत इत्यर्थः । यस्मादिति वचनात्तस्मादित्यध्याहार्यम् । तस्मादतिबलवत्वात् अपां तोकस्य तनयस्य जेषे । तुमर्थेऽयं सेप्रत्ययः । जयश्चात्र प्राप्तिरभिप्रेतः । अपः पुत्रान् पौत्रांश्च जेतुम् । प्राप्तुमित्यर्थः । मरुत्वान् ॥ ११

स वज्रभृद्दस्युहा भीम उग्रः सहस्रचेताः शतनीथ ऋभ्वा ।
चम्रीषो न शवसा पाञ्चजन्यो मरुत्वान्नो भवत्विन्द्र ऊती ॥ १२

स इन्द्रः वज्रभृत् वज्रस्य धारयिता । दस्युहा भीमः उग्रः सहस्रचेताः । सहस्रमिति बहुनाम । बहुप्रज्ञः । शतनीथः । शतमिति बहुनाम । नीथशब्दोऽपि स्तुतिवचनः । बहुस्तुतिः । ऋभ्वा । अपठितमपि महन्नामैतत् द्रष्टव्यम् । महांश्च । चम्रीषो न शवसा पाञ्चजन्यः । चमेः रातेश्च चम्रीषो राजा अग्निर्वा इहोच्यते । स हि सर्वमत्ति ददाति च । पञ्चजना निषादपञ्चमाश्चत्वारो वर्णाः । तेभ्यो हितः पाञ्चजन्यः । बाह्यादिभ्यः पाञ्चजन्योऽथ गांभीर्यं च ञ्य इष्यते (वा. ४. ३. ६०-२) इत्येवं हितार्थे व्यत्ययो द्रष्टव्यः छान्दसत्वात् । यथा राजाग्निर्वा स्वेन बलेन पञ्चभ्योऽपि जनेभ्यो हितः तद्वदिन्द्र इत्यर्थः । किंच मरुत्वान् ॥ १२

तस्य वज्रः क्रन्दति स्मत्स्वर्षा दिवो न त्वेषो रवथः शिमीवान् ।
तं सचन्ते सनयस्तं धनानि मरुत्वान्नो भवत्विन्द्र ऊती ॥ १३

तस्येन्द्रस्य स्वभूतो वज्रः । क्रन्दति असुरान् घ्नन् शब्दं करोति । स्मत् प्रशस्तः । स्वर्षाः । स्वःशब्दः सर्वपर्यायः । वन षण संभक्तौ । सर्वस्य शत्रोः संभक्ता । दिवो न द्युलोकस्येव च तस्येन्द्रस्य त्वेषः दीप्तिः । रवथः । रवशब्दश्च गर्जितलक्षणः । शिमीवान् । शिमीति कर्मनाम । वृष्टिलक्षणेन कर्मणा तद्वान् । तमिन्द्रं सचन्ते सेवन्ते ।

सनयः लाभाः दानानि वा । तमेव धनानि । धनानि स एव लभते ददाति वा। धनानि च तस्यैव सन्तीत्यर्थः। किंच मरुत्वान् ॥ १३

यस्याजस्रं शवसा मानमुक्थं परिभुजद्रोदसी विश्वतः सीम् ।
स पारिषत्क्रतुभिर्मन्दसानो मरुत्वान्नो भवत्विन्द्र ऊती ॥ १४

यस्येन्द्रस्य अजस्रं सततं शवसा स्वेन बलेन मानं निर्माणं जन्म वा। उक्थं प्रशस्यम्। परिभुजत्। भुज पालनाभ्यवहारयोः । परिपालयति। रोदसी द्यावापृथिव्यौ। विश्वतः सर्वतः। सीं सर्वे । यः स्वेन बलेन प्रशस्यः जन्मन एव प्रभृति सर्वतः कृत्स्नेन द्यावापृथिवी परिपालयतीत्यर्थः । स पारिषत्। पृ पालनपूरणयोः। पूरयत्वस्मान्। क्रतुभिः प्रज्ञाभिः। अत्यन्तप्रज्ञान् अस्मान् करोत्वित्यर्थः। मन्दसानः। मन्दतिरर्चतिकर्मा। स्तूयमानोऽस्माभिः। किंच मरुत्वान् ॥ १४

न यस्य देवा देवता न मर्ता आपश्चन शवसो अन्तमापुः ।
स प्ररिक्वा त्वक्षसा क्ष्मो दिवश्च मरुत्वान्नो भवत्विन्द्र ऊती ॥ १५

न यस्येन्द्रस्य कृत्स्नदेवाः नान्यापि काचिद्देवता । नापि मर्ताः मनुष्याः। आपश्चन । चनेति निपातो वा शब्दार्थे द्रष्टव्यः । आपो वा शवसः बलस्य अन्तमापुः प्राप्नुवन्ति। यस्येन्द्रस्य न कश्चिदपि बलस्यान्तं जानाति बलस्य वा सदृशो नास्तीत्यर्थः। सः प्ररिक्वा अतिरिक्तः। केन। त्वक्षसा। तक्षू त्वक्षू तनूकरणे। शत्रुतनूकरेण बलेन। क्ष्मो दिवश्च पृथिव्या दिवश्च सकाशात्। मरुत्वान् ॥ १५

रोहिच्छ्यावा सुमदंशुर्ललामीर्द्युक्षा राय ऋज्राश्वस्य ।
वृषण्वन्तं बिभ्रती धूर्षु रथं मन्द्रा चिकेत नाहुषीषु विक्षु ॥ १६

रोहित् रोहितवर्णका सामर्थ्यादिन्द्रस्य स्वभूता बडबा। श्यावा श्याववर्णा च। सुमदंशुः। सुमच्छब्दोऽत्र स्वच्छन्देन समानार्थः प्रशस्तवचनः। अंशुशब्दो रश्मिवचनः। प्रशस्तरश्मिः। ललामीः। ललामशब्दः श्रेष्ठवचनः पुण्ड्रवचनो वा । अत्यन्तश्रेष्ठा सपुण्ड्रा वा। द्युक्षा द्युलोकनिवासिनी दीप्तिनिवासभूता वा। राये ऋज्राश्वस्य । ऋज्राश्वग्रहणेन तत्प्रभृतयः पञ्चापि वार्षागिरा लक्ष्यन्ते। अस्माकमृज्राश्वप्रभृतीनां वार्षागिराणां धनार्थमित्यर्थः । किं कुर्वती । बिभ्रती धूर्षु रथं रथधुरासु

रथं धारयन्ती । अस्माकमृज्राश्वप्रभृतीनां धनार्थमिन्द्रेण स्वरथधुरासु नियुक्ता सतीत्यर्थः । कीदृशी । मन्द्रा हर्षवती । किं करोति । वृषण्वन्तं चिकेत । वृषशब्दो वृष्टिवचनः । तद्वन्तमिन्द्रं जानाति । वृष्टिकारिणमिन्द्रं तत्रारूढं जानातीत्यर्थः । क्व । उच्यते । नाहुषीषु विक्षु । नहुष इति मनुष्यनाम । तेषु भवासु नाहुषीषु नहुषनाम्नो वा राज्ञः स्वभूतासु विक्षु मनुष्यजातिषु ब्राह्मणादिकासु । सप्तमीनिर्देशात् वर्तमानमिति शेषः । मनुष्यलोकमायातं ब्राह्मणानां मध्ये वर्तमानमित्यर्थः । अथवा रोहिच्छ्यावेत्याहुतिरभिधीयते न बडबा । सोमाज्यपुरोडाशहविर्लक्षणा लोहितवर्णा श्याववर्णा चात्यन्तश्रेष्ठाहुतिरुज्ज्वलरूपत्वात् प्रशस्तरश्मिः धनार्थमस्माकमृज्राश्वप्रभृतीनां वृषण्वन्तमिन्द्रं चिकेत । अन्तर्णीतण्यर्थोऽत्र केततिर्द्रष्टव्यः । लोडर्थे लिट् । केतयतु ज्ञापयतु । धनमृज्राश्वप्रभृतिभ्यो देहीत्येवमिन्द्रं ब्रवीत्वित्यर्थः । बिभ्रती धूर्षु रथं गच्छत इन्द्रस्य धुरि गृहीत्वा रथम् । निरुन्धानेत्यर्थः । शिष्टपदयोजना तु सदृशी । अथवा रोहिच्छ्यावेत्यादि मन्द्रा इत्यस्य विशेषणानि । मन्द्रशब्दः स्तुतिवचनः मन्दतेरर्चतिकर्मत्वात् । इन्द्रं प्रत्यारोहतीति रोहित् । श्यैङ् वृद्धौ । श्यायत इति श्यावा । इन्द्रारोहिणी परिवृद्धा मन्द्रा स्तुतिः धनार्थमस्माकं ऋज्राश्वप्रभृतीनामिन्द्रं ज्ञापयतु । शिष्टपदयोजना पूर्ववत् ॥ १६

एतत्त्यत्त इन्द्र वृष्ण उक्थं वार्षागिरा अभि गृणन्ति राधः ।
ऋज्राश्वः प्रष्टिभिरम्बरीषः सहदेवो भयमानः सुराधाः ॥ १७

त्यत् ते इति समानार्थौ । तच्छब्दश्रुतेश्च योग्यार्थसंबन्धो यच्छब्दोऽध्याहर्तव्यः । यं जन्मन एव प्रभृति करिष्याम इति संकल्पितवन्तः एतत्त्यत् ते इन्द्र वृष्णे । वृष्णे इति तादर्थ्ये चतुर्थी । तव वर्षयितुरर्थाय । त्वां वर्षयितारं स्तोतुमित्यर्थः । हे इन्द्र उक्थं वार्षागिरा । वृषागीर्नामर्षिः । तस्य पुत्राः । अभिगृणन्ति । गृणातिरर्चतिकर्मान्यत्र इहतु सामर्थ्यादुच्चारणार्थः । आभिमुख्येनोच्चारयन्ति । आत्मन एवायं परोक्षरूपेण प्रथमपुरुषेण निर्देशः । कीदृशः । उच्यते । राधः । धननामैतत् । अन्तर्णीतमत्वर्थं चैतद्द्रष्टव्यम् । हविर्लक्षणेन धनेन धनवत् । हविस्संयुक्तमित्यर्थः । कतमे । उच्यते । एकस्तावदृज्राश्वः । कीदृशः । प्रष्टिभिः । प्रष्टिशब्दोऽन्यत्र एकस्यामेव धुरि यो द्वितीयो बलीवर्दः अश्वो वा नियुज्यते तस्य वाचकः । इह तु पृच्छ्यतेऽसाविति प्रष्टिः प्रख्यात उच्यते । प्रथमार्थे चैषा तृतीया । अत्यन्तप्रख्यात इत्यर्थः । न केवलमृज्राश्व एव । अंबरीषः सहदेवः भयमानः सुराधाः इत्येते च । अथवा प्रष्टिरिति नेदमृज्राश्वस्य विशेषणम् । किं तर्हि । तृतीयाश्रुतेः प्रसिद्धिबलाद्राय इति

च कर्मश्रुतेर्योग्यार्थमत्र क्रियापदमध्याहार्यम्। वार्षागिरास्त्वदर्थं स्तोत्रमुच्चारयन्ति। तच्चोच्चारयन्तो धनं प्रष्टिभिर्वहेयुः। तावद्धनं देहि यावच्छकटेन एकैकस्यां धुरि द्वौ बलीवर्दौ नियुज्य वोढुं शक्यते नैकैकमित्यर्थः॥ १७

दस्यूञ्छिम्यूँश्च पुरुहूत एवैर्हत्वा पृथिव्यां शर्वा नि बर्हीत्।

सनत्क्षेत्रं सखिभिः श्वित्न्येभिः सनत्सूर्यं सनदपः सुवज्रः॥ १८

दस्युशब्दोऽत्र उपक्षपणार्हवचनः दस्यतेः क्षयार्थत्वात्। ये च योध्दुमुपस्थिताः त उपक्षपणमर्हन्ति नेतरे। योध्दुमुपस्थितानुपक्षयितव्यान् वृत्रादीनसुरान्। शिम्यूंश्च। शिमीति कर्मनाम। युशब्दोऽप्यत्र तद्वदर्थे। कर्मवतश्च। स्वव्यापारनिरतांश्च। युद्धपराङ्मुखानित्यर्थः। पुरुहूतः बह्वाहूत इन्द्रः। एवैः तैस्तैः कामैः गमनैर्वा। हत्वा पृथिव्याम्। हन्तिरत्र गत्यर्थः। पृथिवीशब्दोऽपि अथापि ताद्धितेन कृत्स्नवन्निगमा भवन्ति (नि. २. ५) इति पृथिव्येकदेशभूतेषु असुरपुरेषु द्रष्टव्यः। गत्वा असुरपुरेष्वित्यर्थः। शर्वा। शरुशब्दः शरपर्यायः। शरेण। निबर्हीत् हतवान्। हत्वा च सनत्। संभक्तवानित्यर्थः। किम्। उच्यते। क्षेत्रमसुराणां स्वभूतम्। असुराणां स्वभूतविषयानित्यर्थः। न च केवलः। किं तर्हि। सखीभिर्मरुदाख्यैः सह। कीदृशैः श्वित्न्येभिः। श्वेतैरित्यर्थः। अथवा शु इति आशु इति च क्षिप्रनामनी। एतिरपि गत्यर्थः। शु यः एति सः श्वित्न्यः। तैः। क्षिप्रगामिभिरित्यर्थः। सनत् सूर्यं सूर्यं च संभक्तवान्। तदेतत् सव्येनाप्युक्तम्।

वृत्रं यदिन्द्र शवसावधीरहिम्। ऋ. वे १. ५१. ४.

इति। सनदपः वृष्टिलक्षणाश्चापः संभक्तवान्। सुवज्रः शोभनेन च वज्रेण युक्त इन्द्रः॥ १८

विश्वाहेन्द्रो अधिवक्ता नो अस्त्वपरिह्वृताः सनुयाम वाजम्।

तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः॥ १९

विश्वाहा सर्वदा। अधिवक्ता आज्ञापयिता नो अस्तु। त्वत्प्रसादाच्चापरिह्वृताः। ह्वरतिरन्यत्रास्तिकर्मा कौटिल्यार्थो वा। इह तु सामर्थ्याद्धिंसार्थः। अहिंसिताः केनचित्। सनुयाम। षणु दाने। दानेन चात्र तत्पूर्वको लाभो लक्ष्यते। लभेमहीत्यर्थः। किम्। उच्यते। वाजम्। तं नो मित्र इत्या कार्थम्॥ १९

प्र मन्दिने पितुमदर्चता वचो यः कृष्णगर्भा निरहन्नृजिश्वना।
श्रवस्यवो वृषणं वज्रदक्षिणं मरुत्वन्तं सख्याय हवामहे ॥ १

अतः परममितर्षेः कुत्सस्यैवार्षम्।

चत्वार्यैन्द्राणि सूक्तानि।

प्रशब्दोऽर्चतेत्याख्यातेन संबन्धयितव्यः। मन्दिने। मन्दतिरर्चतिकर्मा। मन्दः स्तुतिः। तद्वान् मन्दी। तादर्थ्ये चैषा चतुर्थी। स्तुतिमत इन्द्रस्यार्थाय। स्तुत्यमिन्द्रं स्तोतुमित्यर्थः। पितुमत्। पितुरित्यन्ननाम। हविर्लक्षणान्नसंयुक्तं प्रार्चत। अर्चतिरन्यत्र स्तुत्यर्थः। इहतु सामर्थ्यादुच्चारणार्थः। ऋत्विजां चायं प्रैषः पुत्रपौत्रप्रभृतीनां वा। प्रोच्चारयत हे ऋत्विजः मत्पुत्रपौत्रप्रभृतयो वा। वचः स्तुतिलक्षणम्। किं कृतवानिन्द्रः। उच्यते। यः कृष्णगर्भाः। कृष्णो नामासुरः। स गर्भभूतोऽन्तर्गतो यासां सेनानां ताः कृष्णगर्भाः। कृष्णसहिता इत्यर्थः। ताः निरहन् निष्कृष्य हतवान्। ऋजिश्वना। ऋजिश्वा नाम विदथिनः पुत्रः। तेन सह। अथवा ऋजु शवति गच्छतीति ऋजिश्वा वज्रः। तेन। अथवा वृष्टिलक्षणा आपः कृष्णगर्भाः कृष्णवर्णस्य मेघस्य गर्भभूतत्वात्। ताः निरहन्। हन्तिर्गत्यर्थः सामर्थ्याच्चात्रान्तर्णीतण्यर्थः। मेघान्निर्गमितवान् ऋजिश्वना ऋजुगामिना वज्रेण। वयमपि श्रवस्यवः पालनकामाः। वृषणं वर्षितारम्। वज्रदक्षिणम्। वज्रो दक्षिणो यस्य स वज्रदक्षिणः। तं वज्रदक्षिणम्। दक्षिणेन हस्तेन गृहीतवज्र इत्यर्थः। मरुत्वन्तं मरुद्भिः सहितमिन्द्रं सख्याय। मनुष्याणां देवैः सह स्तुत्यस्तोतृलक्षणः संबन्धः सख्यम्। तदर्थं हवामहे। स्तोतुमाह्वयाम इत्यर्थः॥ १

यो व्यंसं जाहृषाणेन मन्युना यः शम्बरं यो अहन्पिप्रुमव्रतम्।
इन्द्रो यः शुष्णमशुषं न्यावृणङ्मरुत्वन्तं सख्याय हवामहे॥ २

यो व्यंसं व्यंसनामानमसुरं जाहृषाणेनात्यर्थं हृष्यता मन्युना मन्युनाम्ना प्रजापतिपुत्रेण सह। अथवा मन्युरिति क्रोधनाम। अत्यर्थं हृष्यता क्रोधेन। प्रविकसता क्रोधेन इत्यर्थः। यश्च शंबरं शंबरनामानमसुरम्। यश्चाहन् पिप्रुं पिप्रुनामानमसुरम्। अव्रतमकर्माणम्। भयान्निश्चेष्टमित्यर्थः। इन्द्रो यः यश्चेन्द्रः शुष्णं शुष्णनामानमसुरं अशुषं अशोष्यम्। अन्येन केनचित् हन्तुमशक्यमित्यर्थः। न्यवृणक्। वृणक्तीति वधकर्मा। निहतवान्। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। तं मरुत्वन्तम्॥ २

यस्य द्यावापृथिवी पौंस्यं महद्यस्य व्रते वरुणो यस्य सूर्यः ।
यस्येन्द्रस्य सिन्धवः सश्चति व्रतं मरुत्वन्तं सख्याय हवामहे ॥ ३

यस्येन्द्रस्य द्यावापृथिवी दिवं पृथिवीं च प्रति । पौंस्यं सेनालक्षणं बलम् । किम् । साकांक्षत्वात् सश्चतीत्येतत् तृतीयपादस्थमाख्यातं सर्वत्रानुषक्तव्यम् । सश्चतीत्ययं गच्छतिकर्मा । अप्रतिहतं गच्छतीत्यर्थः । यस्य च व्रते वृष्टिलक्षणे कर्मणि सति वरुणः सश्चति । किं प्रति । प्रकृतत्वात् द्यावापृथिव्यावेव प्रति यज्ञान् वा प्रति । वृष्टौ हि सत्यां यज्ञाः प्रवर्तन्ते । तांश्च प्रति देवता गच्छन्ति । यस्य च व्रते सूर्यः सश्चति यज्ञान् प्रति उदयास्तमयदेशौ वा प्रति । यस्य चेन्द्रस्य । सिन्धवः सश्चति । व्यत्ययेन चेदमेकवचनम् । उदकेन पूर्णाः समुद्रं प्रति गच्छन्ति । व्रतम् । सप्तम्यर्थे प्रथमैषा । व्रते वृष्टिलक्षणे कर्मणि सतीत्यर्थः । मरुत्वन्तम् ॥ ३

यो अश्वानां यो गवां गोपतिर्वशी य आरितः कर्मणिकर्मणि स्थिरः ।
वीळोश्चिदिन्द्रो यो असुन्वतो वधो मरुत्वन्तं सख्याय हवामहे ॥ ४

यश्चाश्वानां गवां च वशी ईशिता । कीदृशः । गोपतिः । गोशब्दोऽत्राब्वचनः सोमवचनो वा स्तुतिवचनो वा स्तोतृवचनो वा । पतिशब्दोऽप्यधिपतिवचनः पालयितृवचनो वा । अपां वा सोमस्य वा स्तुतीनां वा स्तोतॄणां वा अधिपतिः पालयिता वेत्यर्थः । यश्चारितः । रि गतावित्यस्माद् पूर्वस्येदं रूपम् । आगतः इत्यर्थः । पदकारस्त्ववग्रहाकरणात् अर्तेर्यङ्लुगन्तस्येदं रूपं मन्यते । तस्याहि यङ्लुकि उरत् (पा. ७. ४. ६६) इत्यभ्यासः । ऋकारस्यात्वम् । रुग्रिकौ च लुकि (पा. ७. ४. ९१) इति निष्ठायामिट् । छान्दसत्वाद्दकारस्य यणादेशः । रोरि (पा. ८. ३. १४) इत्यभ्यासस्य रेफस्य लोपः । ढ्लोपे पूर्वस्य (पा. ६. ३. १११) इति दीर्घः । आरितः । ण्यन्तस्य वा पुगभावः छान्दसत्वात् । अत्यर्थं पुनःपुनर्वा आगतः गमितो वा यजमानैरित्यर्थः । क्व । उच्यते । कर्मणि कर्मणि यज्ञाख्ये । सर्वयज्ञेष्वित्यर्थः । आरितश्च सन् स्थिरः आयज्ञपरिसमाप्तेरविचाली । वीळोश्चित् संस्तब्धस्यापि अत्यन्तदृढस्यापि असुरादेः । इन्द्रो यो असुन्वतः सोमाभिषवमकुर्वतो वधः हन्ता । तं मरुत्वन्तम् ॥ ४

यो विश्वस्य जगतः प्राणतस्पतिर्यो ब्रह्मणे प्रथमो गा अविन्दत् ।
इन्द्रो यो दस्यूँरधराँ अवातिरन्मरुत्वन्तं सख्याय हवामहे ॥ ५

यो विश्वस्य सर्वस्य जगतः जंगमस्य प्राणतः प्राणिवर्गस्य पतिः स्वामी पालयिता वा । यश्च ब्रह्मणे । ब्रह्मशब्दोऽत्र ब्राह्मणशब्दपर्यायः तत्प्रभृतिवर्णोपलक्षणार्थश्चेह द्रष्टव्यः । तादर्थ्ये चैषा चतुर्थी । ब्राह्मणादीनां चतुर्णामपि वर्णानामर्थाय । [illegible]ः प्रथमः पणिभिरसुरैरपहृतास्सतीर्गा अविन्दत् लब्धवान् । यश्चेन्द्रः दस्यूननार्यान् अधरान् अधोवर्तिनोऽपि । न्यूनानित्यर्थः । अवातिरत् । अवतिरतिर्वधकर्मा । हतवान् । तं मरुत्वन्तम् ॥ ५

यः शूरेभिर्हव्यो यश्च भीरुभिर्यो धावद्भिर्हूयते यश्च जिग्युभिः ।
इन्द्रं यं विश्वा भुवनाभि संदधुर्मरुत्वन्तं सख्याय हवामहे ॥ ६

यः शूरैः हव्यः जयार्थमाह्वातव्यः । यश्च भीरुभिः आत्मरक्षार्थमाह्वातव्यः । यश्च नष्टुर्धावद्भिः हूयते । यश्च जिग्युभिः शत्रून् जितवद्भिः जयार्थमाहूयते । यं चेन्द्रं विश्वा भुवना सर्वाणि भूतजातानि अभिसन्दधुः तस्य तस्याभिलषितस्य दानार्थं [illegible] । मरुत्वन्तम् ॥ ६

रुद्राणामेति प्रदिशा विचक्षणो रुद्रेभिर्योषा तनुते पृथु ज्रयः ।
इन्द्रं मनीषा अभ्यर्चति श्रुतं मरुत्वन्तं सख्याय हवामहे ॥ ७

यामन् रुद्रस्य सूनवः सुदंससः । ऋ. वे. १. ८५. १.

इति प्रयोगदर्शनाद्रुद्रस्य पुत्रा मरुतः । तेऽत्र सोऽयमित्यभिसम्बन्धात् पितृशब्देन रुद्रशब्देन प्रत्याय्यन्ते । रुद्रपुत्राणां मरुतां प्रदिशा । प्र इत्येष आ इत्येतस्य स्थाने । आदेशेन । वचनेनेत्यर्थः । एति गच्छतीन्द्रः । अथवा रुद्र इति स्तोतृनाम । स्तोतॄणामादेशेन गच्छति । यत्र मरुतः स्तोतारो वा ब्रुवन्ति तत्र तत्रेन्द्रो गच्छति नान्यत्रेत्यर्थः । कीदृशः । विचक्षणः पण्डितः विद्रष्टा वा सर्वस्य । किंच रुद्रेभिः रुद्रपुत्रैर्मरुद्भिः सहेन्द्रस्य योषा सोमाहुतिलक्षणा । तनुते विस्तारयति । पृथु विस्तीर्णमपि सन् । ज्रयः । ज्रयतिर्गतिकर्मा । गमनं वेगः । मरुद्भिः सह इन्द्रस्य यज्ञं प्रति गच्छतः पिपासिता सोमाहुतिः विस्तीर्णमपि वेगं विस्तारयतीत्यर्थः । यदा रुद्र इति स्तोतृनाम तदा तृतीयानिर्देशात् प्रदास्यमानेति वाक्यशेषः । स्तोतृभिः ऋत्विग्भिः [illegible] सोमाहुतिः यज्ञं प्रति गच्छतः इन्द्रस्य विस्तीर्णमपि वेगं विस्तारयतीत्यर्थः । किंच इन्द्रं मनीषा स्तुतिः अभ्यर्चति अभिष्टौति । श्रुतं विख्यातम् । किंच मरुत्वन्त[illegible] ॥ ७

यद्वा॑ मरुत्वः पर॒मे स॒धस्थे॒ यद्वा॑व॒मे वृ॒जने॑ मा॒दया॑से ।
अत॒ आ या॑ह्यध्व॒रं नो॒ अच्छा॑ त्वा॒या ह॒विश्च॑कृमा सत्यराधः ॥ ८

यच्छब्दोऽत्र यदिशब्दस्यार्थे । यदि वा हे मरुतः परमे सधस्थे । सह तिष्ठन्ति यस्मिन् देवताः स सधस्थो यज्ञ इहाभिप्रेतः । विप्रकृष्टे यज्ञे इत्यर्थः । यद्वा अवमे । अन्तिकनामैतत् । सन्निकृष्टे यज्ञे । कीदृशे । वृजने । वृजि वर्जने । वर्जिते दोषैः । अविगुणे इत्यर्थः । अथवा वृजनमिति बलनाम सामर्थ्याच्चान्तर्णीतमत्वर्थम् । बलवती। सारवतीत्यर्थः । मादयासे । मदतिरत्र सामर्थ्यात्तृप्त्यर्थः । तर्पयात्मानम् । स्वार्थिको वात्र णिच् । तृप्यसीत्यर्थः । अत आयाह्यध्वरं यज्ञं नः अस्माकं स्वभूतम् । अच्छा आप्तुम् । अनुभवितुमित्यर्थः । यस्मात् त्वाया त्वत्काम्यया । महत्या त्वद्विषयया श्रद्धयेत्यर्थः । हविः सवनीयपुरोडाशादिलक्षणं चकृम कृतवन्तो वयं हे सत्यराधः सत्यधन ॥ ८

त्वा॒येन्द्र॒ सोमं॑ सुषुमा सुदक्ष त्वा॒या ह॒विश्च॑कृमा ब्रह्मवाहः ।
अधा॑ नियुत्वः॒ सग॑णो म॒रुद्भि॑र॒स्मिन्य॒ज्ञे ब॒र्हिषि॑ मादयस्व ॥ ९

पूर्वोत्तरयोरर्धर्चयोरेकवाक्यताप्रसिध्यर्थं यस्माच्छब्दोऽध्याहार्यः । यस्मात् त्वाया त्वत्काम्यया इत्यर्थः । हे इन्द्र सोमं सुषुम सुदक्ष सुबल । त्वायैव च सवनीयपुरोडाशादि हविश्चकृम हे ब्रह्मवाहः । स्तुतिलक्षणं ब्रह्म उह्यते प्राप्यते यस्मिन् स ब्रह्मवाहा । तस्य संबोधनं हे ब्रह्मवाहः । अध एतस्मात् कारणात् हे नियुत्वः नियुतोऽश्वाः । तद्वान् । सगणः मरुद्भिः । मरुद्गणेन सहेत्यर्थः । अस्मिन् अस्मदीये यज्ञे बर्हिषि वेद्यां स्तीर्णे । मादयस्व तर्पयात्मानं तृप्य वा ॥ ९

मा॒दय॑स्व॒ हरि॑भि॒र्ये त॑ इन्द्र॒ वि ष्य॑स्व॒ शिप्रे॒ वि सृ॑जस्व॒ धेने॑ ।
आ त्वा॑ सुशिप्र॒ हर॑यो वहन्तू॒शन्ह॒व्यानि॒ प्रति॑ नो जुषस्व ॥ १०

मादयस्व तर्पयात्मानं तृप्य वा हरिभिः अश्वैः सह । ये ते तव स्वभूताः हे इन्द्र । केन प्रकारेण । विष्यस्व शिप्रे । स्यतिरुपसृष्टो विमोचने । शिप्रे हनू इहोच्येते । हविर्लक्षणाय हनू विमुञ्च । प्रेरयेत्यर्थः । विसृजस्व धेने । धेट् पाने इत्यस्य दधातेर्वा धेने जिह्वोपजिह्विके इहाभिप्रेते । निधीयते च तयोः रसः । जिह्वोपजिह्विके अपि रसास्वादनाय विसृज । प्रेरयेत्यर्थः । तदर्थं च त्वां हे सुशिप्र । शिप्रे हनू नासिके वा इहोच्येते ।

शिप्राः शीर्षसु वितता हिरण्ययीः। ऋ वे. ५ ५४. ११.

इति प्रयोगदर्शनात् शिरस्त्राणवचनो वा इह शिप्राशब्दः। सुहनो सुनस सुशिरस्त्राण वेत्यर्थः। हरयः अश्वाः। आवहन्तु। आनीतश्च सन् त्वं उशन् कामयमानः अस्मदीयानि हव्यानि प्रति नो जुषस्व प्रतिसेवस्वास्मान् अभिलषितफलप्रदानेन ॥ १०

मरुत्स्तोत्रस्य वृजनस्य गोपा वयमिन्द्रेण सनुयाम वाजम्।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ११

मरुद्भिः सह स्तोत्रं यस्य तत् मरुत्स्तोत्रम्। तस्य मरुत्स्तोत्रस्य वृजनस्य। बलनामैतत्। सेनालक्षणस्येन्द्रस्य बलस्य। गोपाः गोपयितव्याः रक्ष्याः वयमिन्द्रेण हेतुना। इन्द्रेणानुगृह्यमाणा इत्यर्थः। सनुयाम। षणु दाने। दानेन चात्र तत्पूर्वको लाभो लक्ष्यते। लभेमहीत्यर्थः। किम्। वाजं अन्नम्। तन्नो मित्र इत्युक्तार्थम् ॥ ११

---

इमां ते धियं प्र भरे महो महीमस्य स्तोत्रे धिषणा यत्त आनजे।
तमुत्सवे च प्रसवे च सासहिमिन्द्रं देवासः शवसामदन्ननु ॥ १

इमां ते तव धियं कर्म स्तुतिलक्षणम्। स्तुतिमित्यर्थः। प्रभरे हरामि प्रापयामि। उच्चारयामीत्यर्थः। महः महतः महीं महतीम्। कस्मात्। उच्यते। अस्य। आत्मन एवायं परोक्षरूपेण निर्देशः। अस्य कुत्साख्यस्यर्षेः अस्य वा यजमानस्य सम्भूते स्तोत्रे धिषणा स्तुतिलक्षणा वाक्। यद्यस्मात् ते। द्वितीयार्थे षष्ठी। त्वां आनजे। अजेर्गत्यर्थस्येदं रूपम्। गता प्राप्ता। यस्मात् पूर्वमपि अहमयं यजमानः त्वां स्तुतवानित्यर्थः। किंच तं प्रकृतं उत्सवे च प्रसवे च सासहिं सर्वजनसाधारणः इन्द्रमहादिरुत्सवः। प्रत्यात्मिकोऽभ्युदयः प्रसवः। तयोरुभयोरपि तत्प्रतिबन्धकराणां शत्रूणामभिभवितारं भवन्तमिन्द्रम्। केन सासहिम्। उच्यते। शवसा स्वेन बलेन। देवा मरुदादयो देवाः अमदन् तृप्यन्तु। अनु। तृतीयार्थे (पा. १. ४. ८५) इत्येवमनुशब्दः कर्मप्रवचनीयः। सहार्थेश्च तृतीयार्थः। तं सासहिं इन्द्रं इत्येतैश्च द्वितीयान्तैः सहास्य सम्बन्धः। तेन सासहिना भवतेन्द्रेण सहेत्यर्थः ॥ १

अस्य श्रवो नद्यः सप्त बिभ्रति द्यावाक्षामा पृथिवी दर्शतं वपुः।
अस्मे सूर्याचन्द्रमसाभिचक्षे श्रद्धे कमिन्द्र चरतो वितर्तुरम् ॥ २

अस्येन्द्रस्य श्रवः कीर्तिः। नद्यः गंगाद्याः सप्त बिभ्रति। धारयन्तीत्यर्थः। द्यावाक्षामा द्यावापृथिव्यौ। पृथिवी। अन्तरिक्षनामैतत्। अन्तरिक्षं च। न च केवलं श्रवः। किं तर्हि। दर्शतं वपुः। वपुरिति रूपनाम। शरीरवचनो वा वपुःशब्दः। दर्शनीयं च रूपं शरीरं वा। अतिमहत्वादस्येन्द्रस्य कीर्ति वपुश्च गंगाद्याः सप्त नद्यः त्रयश्च लोकाः धारयन्ति। अथवा वपुरित्युदकनाम। श्रव इत्यप्यन्ननाम। अन्नकारणत्वाच्चोदकमत्र श्रव इत्युच्यते। अस्य स्वभूतं अन्नकारणं वृष्टिलक्षणमुदकं दर्शनीयं सप्त नद्यः त्रयोऽपि लोका धारयन्तीत्यर्थः। परोऽर्धर्चः प्रत्यक्षकृतत्वात् भिन्नं वाक्यम्। अस्मे अस्माकं सूर्याचन्द्रमसौ अभिचक्षे प्रकाशाय दर्शनाय श्रद्धे। श्रद्धतेरुत्साहकर्मण इदं रूपम्। अहोरात्रप्रविभागायत्तसम्यगाहारपरिणामनिमित्ताय चोत्साहाय च। कं सुखाय च हे इन्द्र त्वत्प्रसादादेव चरतः नियतेनोदयास्तमयादिलक्षितेन मार्गेण गच्छतः। वितर्तुरम्। त्वरतेस्तरतेर्वा यङ्लुगन्तस्येदं रूपम्। विविधं त्वरितं तीर्णं वा। अत्यन्तशीघ्रमत्यन्तद्रुतं चेत्यर्थः। सूर्याचन्द्रमसावस्मान् दर्शनोत्साहसुखार्थं अहोरात्रप्रविभागं कर्तुं त्वत्प्रसादेनोदयास्तमयादिरूपेण गच्छत इत्यर्थः॥ २

तं स्मा रथं मघवन्प्राव सातये जैत्रं यं ते अनुमदाम सङ्गमे।
आजा न इन्द्र मनसा पुरुष्टुत त्वायद्भ्यो मघवञ्छर्म यच्छ नः॥ ३

स्मेति पदपूरणः। तं रथं हे मघवन् प्राव। अवतिरत्र गत्यर्थः। सामर्थ्याच्चान्तर्णीतण्यर्थः। अस्मान् प्रति गमय। सातये संभजनायास्माकम्। कतमम्। उच्यते। जैत्रं जयशीलम्। यं ते तव स्वभूतं अनुमदाम। अनुरभीत्येतस्य स्थाने। मदतिरर्चतिकर्मा। अभिष्टवामेत्याशास्महे। संगमे प्राप्तौ सत्याम्। प्राप्तं सन्तमित्यर्थः। आजा संग्रामे संग्रामस्थानीये वा यज्ञे। नः अस्माकं स्वभूते। हे इन्द्र मनसा प्रसन्नेन चित्तेन। हे पुरुष्टुत बहुभिः स्तोतृभिः स्तुत। त्वायद्भ्यः त्वत्कामेभ्यः। हे मघवन् धनवन् शर्म सुखं गृहं वा। यच्छ देहि नः अस्मभ्यम्॥ ३

वयं जयेम त्वया युजा वृतमस्माकमंशमुदवा भरेभरे।
अस्मभ्यमिन्द्र वरिवः सुगं कृधि प्र शत्रूणां मघवन्वृष्ण्या रुज॥ ४

वयं जयेमेत्याशास्महे। त्वया युजा। युज्यतेऽसाविति युक् सहाय उच्यते। त्वया सहायेन। वृतम्। वर्ततेऽसाविति वृतं सेनोच्यते गमनस्वभावकत्वात्। वृतं शत्रुसेनामित्यर्थः। किंच अस्माकं स्वभूतं अंशम्। संग्रामकारिसमुदायैकदेशं अस-

दीयमित्यर्थः । उद्व । उदित्येतत् समित्येतस्य स्थाने । अवती रक्षणार्थः । संरक्ष । भरेभरे संग्रामे संग्रामे । किंच अस्मभ्यम् । षष्ठ्यर्थे एषा चतुर्थी । अस्माकं हे इन्द्र वरिवः सुगम् । सुगमित्यपठितमपि सुखनाम इह द्रष्टव्यम्ः ।

अथा यज्ञाय गृणते सुगं कृधि । ऋ वे. १. ९४. ९.

इति यथा । धनं च सुखं च कृधि कुरु । देहीत्यर्थः । अथवा सुखमभिगम्यते प्राप्यत इति सुगं सुलभमुच्यते । धनस्य चेदं विशेषणम् । धनं सुगं स्वधिगमं सुलभं कुरु । यथा वयं सुखं लभेमहि तथा कुर्वित्यर्थः । किंचास्मच्छत्रूणां हे मघवन् वृष्ण्या । अपठितमपि बलनामैतत् । बलानि रुज । रुजो भंगे । प्रकर्षेण भङ्ग्धः ॥ ४

नाना हि त्वा हवमाना जना इमे धनानां धर्तरवसा विपन्यवः ।
अस्माकं स्मा रथमा तिष्ठ सातये जैत्रं हीन्द्र निभृतं मनस्तव ॥ ५

नना पृथक् । हिशब्दः पदपूरणः । त्वा हवमानाः । अत्र शानच्छ्रुतेः साकांक्षत्वात् प्रतीक्षन्ते तिष्ठन्ति वा । के । उच्यते । जनाः इमे । जना इति [illegible] । इमे मनुष्याः अस्मदीयाः पुत्राः पौत्राश्च ऋत्विजो वा । हे धनानां धर्तः स्तोतृषु धारयितः । स्तोतृभ्यो धनानां दातरित्यर्थः । केन निमित्तेन । अवसा पालनेन तर्पणेन वा निमित्तेन । पालनार्थं तर्पणार्थं वेत्यर्थः । कीदृशाः । उच्यते । विपन्यवः । विपन्युरिति मेधाविनाम । मेधाविनः । एतत् ज्ञात्वास्माकं स्मा सातये । स्मेति पदपूरणः एवार्थे वा । अस्माकमेव संभजनाय । रथमातिष्ठ आरोह । किंच जैत्रं हि । हिशब्दः पूरणः चार्थे वा । जयनशीलं च हे इन्द्र निभृतमविचलं मनः तव । शत्रुजयनशीलं च आश्रितोपकारे च स्थिरं मनस्तवेत्यर्थः ॥ ५

गोजिता बाहू अमितक्रतुः सिमः कर्मन्कर्मञ्छतमूतिः खजंकरः ।
अकल्प इन्द्रः प्रतिमानमोजसाथा जना वि ह्वयन्ते सिषासवः ॥ ६

अथा जना विह्वयन्ते इति एतस्माच्छब्दसमानार्थाथशब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । यस्मात् गोजिता असुरादीनां स्वभूतानां गवां जेतारौ बाहू अस्येन्द्रस्य । यस्माच्च अमितक्रतुः अपरिमितकर्मो वा अपरिमितप्रज्ञो वा । सिमः । षिञ् बन्धन इत्यस्यैतद्रूपम् । बन्धकश्चासुराणाम् । यस्माच्च कर्मन्कर्मन् कर्मणि कर्मणि यज्ञाख्ये । शतमूतिः । शतमिति बहुनाम । बहुपालनः । बहुप्रकारपालनकारीत्यर्थः । खजंकरः संग्रामकारी च । यस्माच्चाकल्प इन्द्रः । कल्पनं कल्पः । तद्रहितोऽकल्पः । अतिशय-

वद्देवतामाहात्म्यान्नानारूपप्रतिपत्तेः नियतेनैकरूपेण एवं रूपो नामेन्द्रः इति परिकल्पयितुमशक्य इत्यर्थः। अथवा पितृकल्पो मातृकल्प इत्यादिषु सादृश्यार्थत्वदर्शनात् कल्पशब्द इह सदृशपर्यायो द्रष्टव्यः। सदृशरहितोऽकल्पः। नेन्द्रस्य कश्चित् सदृशोऽस्तीत्यर्थः। प्रतिमानं उपमाभूतश्च सर्वस्य। ओजसा स्वेन बलेन। अथ एतस्मात् कारणात्। जनाः सर्वे मनुष्याः। विह्वयन्ते विविधं ह्वयन्ति। सिषासवः संभक्तुमिच्छन्तः। कम्। प्रकृतत्वादिन्द्रम्। तेन प्रदीयमानान् सर्वानभिप्रेतानर्थान्॥ ६

उत्ते॑ श॒तान्म॑घव॒न्नुच्च॒ भूय॑स॒ उत्स॒हस्रा॑द्रिरिचे कृ॒ष्टिषु॒ श्रवः॑।

अ॒मा॒त्रं त्वा॑ धि॒षणा॑ तित्विषे म॒ह्यधा॑ वृ॒त्राणि॑ जिघ्नसे पुरंदर॥ ७

रिरिच इत्याख्यातं प्रति उच्छब्दमनुषक्तव्यम्। उद्रिच्यते अतिरिच्यत इत्यर्थः। ते तव शतान् हे मघवन्। उच्चातिरिच्यते भूयसः बहुतरात्। शतद्वयात् शतत्रयाद्वेत्यर्थः। उत्सहस्राद्रिरिचे सहस्राच्चातिरिच्यते। कृष्टिषु। कृष्टिरिति मनुष्यनाम। निर्धारणे चैषा सप्तमी। मनुष्याणां मध्ये। श्रवः कीर्तिरन्नं धनं वा। अथवा श्रवश्शब्दोऽत्र सामर्थ्यात् बलवचनः शवश्शब्दस्य वा बलनाम्नो रेफ उपजनः। बलमित्यर्थः। किंच अमात्रं। मात्रशब्दः परिमाणवचनः। अपरिमाणमत्यन्तमहान्तम्। त्वा धिषणा स्तुतिलक्षणा वाक्। तित्विषे दीपयति। वृत्रहननायोत्तेजयतीत्यर्थः। मही महती। उत्तेजनानन्तरं च वृत्राणि शत्रून् जिघ्नसे हंसि त्वं हे पुरन्दर असुरपुराणां दारयितः॥ ७

त्रि॒वि॒ष्टि॒धातु॑ प्रति॒मान॒मोज॑सस्ति॒स्रो भूमी॑र्नृपते॒ त्रीणि॑ रोच॒ना।

अतीदं विश्वं॒ भुव॑नं ववक्षिथाश॒त्रुरि॑न्द्र ज॒नुषा॑ स॒नाद॑सि॥ ८

धीयन्ते प्राणिनां देहेष्विति धातवः शरीरस्थितिहेतवः अन्नरसाः। तदेव पितृमनुष्योपभोग्यास्त्रयोऽपि विष्टाः व्याप्ता येन तत्त्रिविष्टिधातु। यदायत्तास्त्रयोऽपि शरीरस्थितिहेतवोऽन्नरसा इत्यर्थः। अथवा त्रयो धातवः शीतोष्णवर्षाणि त्रयो वा लोकाः। तेषु सन्धीयते व्याप्ता येन तत्त्रिविष्टिधातुः। किं पुनस्तत्। सामर्थ्यलक्षणं बलम्। कीदृशः। प्रतिमानं उपमानभूतं सर्वस्य। ओजसः बलस्य। तिस्रो भूमीः। भूमिशब्देनात्र साहचर्यात् त्रयो लोका उच्यन्ते। त्रीन् लोकानित्यर्थः। हे नृपते मनुष्याणां पालयितः। त्रीणि रोचना त्रीणि च दीप्तिस्वभाविकानि ज्योतींषि। कानि। आग्नेयं वैद्युतं सौर्यं च। इदं विश्वं भुवनं इदं सर्वं भूतजातं अति विवक्षिथ। वहते-

रिदं साभ्यासस्य रूपम्। सुष्ठु वहसि धारयसीत्यर्थः। किंच अशत्रुः। शत्रुशब्दोऽत्र शातयितृवचनः क्रियाशब्दः। शातयितृरहितस्त्वं हे इन्द्र जनुषा जन्मनैव। सनाचिरन्तनोऽसि। जन्मन एव प्रभृति न तव कश्चिद्विनाशने समर्थ इत्यर्थः॥ ८

त्वां देवेषु प्रथमं हवामहे त्वं बभूथ पृतनासु सासहिः।

सेमं नः कारुमुपमन्युमुद्भिदमिन्द्रः कृणोतु प्रसवे रथं पुरः॥ ९

देवेष्विति निर्धारण एषा सप्तमी। त्वां देवानां मध्ये प्रथमं वयं हवामहे। किंच त्वं बभूथ भवसि। पृतनासु संग्रामेषु। सासहिः अभिभविता शत्रूणां। परोऽर्धर्चः प्रत्यक्षकृतत्वा- भिन्नं वाक्यम्। सः प्रकृत इन्द्रः इमं नः कारुं उपमन्युं उद्भिदम्। न इत्येकवचनस्य स्थाने बहुवचनम्। इमं मामिति सर्वत्र चात्र पुर इत्येतेनाव्ययेना-प्रत्ययेन योगात् षष्ठ्यर्थे द्वितीया। अस्य मम कुत्सनाम्नः ऋत्विजो वा कारुम्। स्तोतृनामैतत्। स्तोतुः। उपमन्युशब्दोऽत्र मन्यतेः कान्तिकर्मणो द्रष्टव्यः न क्रोध-नाम। उपगतकामस्य। प्रार्थनावत इत्यर्थः। उद्भेत्तुः। अपूर्वाणां स्तुतीनां जनयितु-रित्यर्थः। पुरः अग्रतः इन्द्रः आत्मीयं रथं कृणोतु करोतु। प्रसवे। प्रकृष्टः सवो यज्ञः प्रसवः। तत्र। प्रकृष्टेऽस्मिन् यज्ञ इत्यर्थः॥ ९

त्वं जिगेथ न धना रुरोधिथार्भेष्वाजा मघवन्महत्सु च।

त्वामुग्रमवसे सं शिशीमस्यथा न इन्द्र हवनेषु चोदय॥ १०

त्वं जयसि। जित्वा च न धना रुरोधिथ स्तोतृभ्यो न धनानि निरुणत्सि। सर्वाणि ददासीत्यर्थः। क्व पुनर्जयति। अर्भेषु आजा। अर्भशब्दोऽल्पवचनः। दभ्र-मर्भकमिति स्वार्थिककप्रत्ययान्तमल्पनामसु पठितम्। आजाशब्दोऽपि संग्रामवचनः। अल्पेषु संग्रामेषु। हे मघवन् महत्सु च। तज्जानन्तो वयं त्वामुग्रमप्रसह्यं अवसे तर्पणाय संशिशीमसि। स्तुतिभिः संस्कुर्म इत्यर्थः। अथ एतस्मात्कारणात् नः अस्मान् हे इन्द्र हवनेषु होमेषु चोदय। जुहुतामस्माकं देवतात्वं प्रतिपद्यस्वेत्यर्थः॥ १०

विश्वाहेन्द्रो अधिवक्ता नो अस्त्वपरिह्वृताः सनुयाम वाजम्।

तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः॥ ११

विश्वाहेत्याद्युक्तार्थम्॥ ११

---

तत्तं इन्द्रियं परमं पराचैरधारयन्त कवयः पुरेदम् ।

क्षमेदमन्यद्दिव्य१न्यदस्य समी पृच्यते समनेव केतुः ॥ १

तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । यदस्माकं स्तोत्रमभिप्रेतं तत् ते तव स्वभूतमिन्द्रियम् । इन्द्रजुष्टत्वादिन्द्रियं सेनालक्षणं बलम् । अथवा इन्द्रियशब्दोऽत्र वीर्यवचनः सामर्थ्यात्वसाधीनमित्यर्थः । वीर्यवत् सेनालक्षणं बलम् । कीदृशम् । उच्यते । परममुत्कृष्टम् । पराचैः । अञ्चतिर्गत्यर्थः । परागमनैः प्राप्तिभिः । यत्र यत्र व्यवस्थितः तत्र तत्रेत्यर्थः । अधारयन्त स्तुत्यर्थं हविःप्रदानार्थं च धारितवन्तः । अथवा इन्द्रियं वसिति धननामसु पाठात् इन्द्रियशब्दोऽत्र धनवचनः । यत् स्तोतारः प्रार्थयन्ते तत्ते धनं परमं पराचैः । त्वत्समीपं प्राप्येत्यर्थः । अधारयन्त आत्मना धारितवन्तः । लब्धवन्त इत्यर्थः । के । कवयः मेधाविनः । पुरा पूर्वेष्वपि कालेषु । कतमत् । इदं सूक्तेऽस्मिन् मनसि वा यत् संनिहितम् । परोऽर्धर्चो भिन्नं वाक्यम् । क्षमेदमन्यत् । क्षमेति पृथिवीनाम । सप्तम्याश्चायमाकार आदेशः । अन्यशब्दोऽत्र एकशब्दपर्यायः । पृथिव्यामिदमेकं सेनालक्षणं बलं धनं वा । दिव्यन्यत् अन्यत्तु द्युलोके अस्येन्द्रस्य । तच्चोभयमपि समीं पृच्यते । ईमिति पदपूरणः । संपृच्यते । केन सह । यदि बलं ततः सामर्थ्यात् परस्परेण । अथ धनं ततः स्तोतृभिः । कथम् । समनेव केतुः । सम्यङ् मन्यते जानात्यर्थमिति समन अन्तःकरणाख्या बुद्धिरिहोच्यते । केतुरिति प्रज्ञानाम । बुध्येव ज्ञानम् । यथा मनसा तत्रैवान्तर्लयेन सर्वात्मना वा ज्ञानं संपृच्यते एवं पृथिव्यां दिवि चेन्द्रसेना परस्परेण स्तोतृभ्यो दीयमानं धनं स्तोतृभिः सह संपृच्यते इत्यर्थः ॥ १

स धारयत्पृथिवीं पप्रथच्च वज्रेण हत्वा निरपः ससर्ज ।

अहन्नहिमभिनद्रौहिणं व्यहन्व्यंसं मघवा शचीभिः ॥ २

स इन्द्रः धारयत् जनितोपकारेण धारयति । पृथिवीं पप्रथच्च प्रथयति च । वज्रेण मेघं हत्वा निरपः ससर्ज निष्कृष्य विसृजति क्षिपति वृष्टिलक्षणाः अपः । अहन्नहिं हतवान् चाहिनामानमसुरम् । अभिनद्रौहिणं रौहिणनामानं चापरमसुरं शतशर्करं भिन्नवान् । हतवानित्यर्थः । व्यहन् व्यंसं व्यंसनामानं चापरमसुरं विविधमहन् । मघवा धनवानिन्द्रः शचीभिः स्वाभिः प्रज्ञाभिर्वधाद्यैर्वा कर्मभिः ॥ २

स जातूभर्मा श्रद्दधान ओजः पुरो विभिन्दन्नचरद्वि दासीः ।
विद्वान्वज्रिन्दस्यवे हेतिमस्यार्यं सहो वर्धया द्युम्नमिन्द्र ॥ ३

स इन्द्रः जातूभर्मा वृष्टिद्वारेण सर्वजन्तूनां श्रद्दधानः । ओजः । अवितथमिति संभावना श्रद्धा । आत्मनो बलमवितथं संभावयन् । न कश्चिदप्यसुरं प्रति मम बलं न प्रतिहन्यत इत्येवं संभावयन्नित्यर्थः । असुराणां स्वभूताः पुरो विभिन्दन् अचरद्वि- विचरति । कीदृशाः । दासीः । दस्यतिः क्षयार्थः । क्षपणार्हाः । अत्यन्तं वृद्धा इत्यर्थः । परोऽर्धर्चः प्रत्यक्षकृतत्वाद्भिन्नं वाक्यम् । विद्वान् जानन् । किम् । सामर्थ्यात् दस्योः दस्युतामार्याणां वा भक्तताम् । हे वज्रिन् दस्यवे । दस्युशब्दोऽत्रानार्यवचनः । तादर्थ्ये एषा चतुर्थी । अनार्यस्यार्थाय । अनार्यं हन्तुमित्यर्थः । हेतिम् । वज्रनामैतत् । आत्मीयं वज्रम् । अस्य क्षिप । आर्यम् । षष्ठ्यर्थे द्वितीयैषा । आर्यस्य च सहः बलं वर्धय । न च केवलं सहः । द्युम्नम् । यशो वान्नं वा धननाम वा द्युम्नशब्दः । यशो- ऽन्नधनानां चान्यतमं हे इन्द्र ॥ ३

तदूचुषे मानुषेमा युगानि कीर्तेन्यं मघवा नाम बिभ्रत् ।
उपप्रयन्दस्युहत्याय वज्री यद्ध सूनुः श्रवसे नाम दधे ॥ ४

तदितिकर्मणः ऊचुषे इति संप्रदानस्य च साकांक्षत्वाद्योग्यक्रियापदाध्याहारः । तदाचष्टे इव । ऊचुषे स्तुतीरुक्तवते । स्तोत्रे इत्यर्थः । कस्मिन् काले ऊचुषे । उच्यते । मानुषेमा युगानि । युगशब्दः कालवचनः । सर्वत्र चात्र सप्तम्यर्थे प्रथमा । मनुष्याणां सम्बन्धिषु स्तोत्रेषु पौर्णमास्यमावास्यादिषु यागकालेषु । किमाचष्टे इन्द्र । उच्यते । कीर्तेन्यं कीर्तनीयं आत्मीयं नाम । मघवा धनवानिन्द्रः । बिभ्रत् धारयन् । किम् । नामैव वा प्रकृतत्वात् कृत्स्नं वा जगत् । किं कुर्वन् आचष्टे इव । उच्यते । उपप्रयन् उपगच्छन् । दस्युहत्याय अनार्यहननाय । वज्री गृहीतवज्रः । अनन्यकर्तृकं हि दस्युहन- नम् । तत्कुर्वन् अयमहमिन्द्र इत्येवमात्मीयं नाम [illegible] । कतमं नाम । उच्यते । यद्ध । हशब्दः पदपूरणः । सूनुः पुत्रः स्वस्या मातुरदित्याः । श्रवसे कीर्त्यर्थे नाम दधे धारयति । कतमत् पुनस्तत् । इन्द्र इति । तद्धि अस्य सर्वस्तोतृभिः कीर्त्यर्थ- मुपात्तम् । अथवा यद्ध सूनुरिति यच्छब्दो य[illegible]शब्दस्यार्थे । श्रव इत्यन्ननाम । नामशब्दोऽप्युदकनाम । दधे इत्यपि धारयतिर्दानार्थः । अनन्यकर्तृकं दस्युहननं कुर्वन् आत्मीयं नामाचष्टे इव । यदा च सस्यल[illegible]णायान्नाय वृष्टिलक्षणमुदकं ददाति

तदा आचष्ट इवेत्यर्थः । अथवा यद्ध सूनुरिति यच्छब्द इन्द्रस्य प्रतिनिर्देशकः। व्यत्ययेन तु नपुंसकता। य इन्द्रः श्रवसे नाम दधे स आचष्ट इति ॥ ४

तदस्येदं पश्यता भूरि पुष्टं श्रदिन्द्रस्य धत्तन वीर्याय ।
स गा अविन्दत्सो अविन्ददश्वान्त्स ओषधीः सो अपः स वनानि ॥ ५

तच्छब्दश्रुतेर्यच्छब्दः अध्याहर्तव्यः । यत् सेनालक्षणं बलं सर्वासुरान् हन्ति तदस्येन्द्रस्य स्वभूतं बलमिदं पश्यत हे ऋषयो ब्राह्मणा वा। भूरि बहु पुष्टं सुसंपन्नम्। अथवा इदं भूरीत्येतत्सम्बद्ध एव यच्छब्दोऽध्याहर्तव्यः । अस्येति तु षष्ठीनिर्देशात् प्रसादेनेति वाक्यशेषः । यदिदं भूरि भूतजातं तदस्येन्द्रस्य पुष्टं पश्यतेति । किंच इन्द्रस्य श्रद्धत्तन वीर्याय। द्वितीयार्थे एषा चतुर्थी। श्रद्धत्त एवेन्द्रस्य वीर्यम् । वीर्यवानिन्द्र इत्येतदवितथं प्रतिपद्यध्वमित्यर्थः। स इन्द्रः असुरादीनां स्वभूता गा अविन्दत् लब्धवान्। सो अविन्ददश्वान्। स ओषधीः महाप्रभावाः संजीवन्यादयः। सो अपः अमृतरसाद्युदकानि। स वनानि सदा पुष्पफलानि। अथवा विन्दतीति लाभेन तद्धेतुभूतं दानमात्रं लक्ष्यते। स इन्द्रः स्तोतृभ्यो गवादीनि ददातीत्यर्थः ॥ ५

भूरिकर्मणे वृषभाय वृष्णे सत्यशुष्माय सुनवाम सोमम् ।
य आदृत्या परिपन्थीव शूरोऽयज्वनो विभजन्नेति वेदः ॥ ६

बहूनि वृत्रवधादीनि कर्माणि यस्य स भूरिकर्मा । तस्मै भूरिकर्मणे वृषभाय वृषभसदृशाय। केन सादृश्येन। भीमत्वेन। कुतः। सामर्थ्यात्

आशुःशिशानो वृषभो न भीमः । ऋ. वे. १०. १०३. १.

इति च मन्त्रान्तरदर्शनात्। वृष्णे वर्षित्रे । सत्यशुष्माय सर्वासुरान् प्रत्यविसंवादिबलाय। सर्वत्र च तादर्थ्ये चतुर्थी । भीमत्वादिगुणस्येन्द्रस्यार्थाय । सुनवाम वयं सोमम् । यः किं करोतीन्द्र इति उच्यते । य आदृत्य महान्तमादरं कृत्वा। परिपन्थीव शूरः। परिपन्थी चोर उच्यते । यथा शूरः कश्चित् चोरः कुतश्चिद्धनमपहृत्य स्वेभ्यः सैनिकेभ्यो विभजेत् एवम् । अयज्वनः अयष्टुः स्वभूतं यष्टृभ्यो विभजन् एति यज्ञान् प्रति गच्छतीन्द्रः। किं विभजन्। वेदः धनम् ॥ ६

तदिन्द्र प्रेव वीर्यं चकर्थ यत्ससन्तं वज्रेणाबोधयोऽहिम् ।
अनु त्वा पत्नीर्हृषितं वयश्च विश्वे देवासो अमदन्ननु त्वा ॥ ७

तत् त्वं हे इन्द्र प्रेव वीर्यं चकर्थ प्रकर्षेण वीरकर्म कृतवानसि । यत् कतमत् । उच्यते । यत् ससन्तम् । सस स्वप्ने । शौर्यमदे ऽवमत्य देवान् निश्चिन्तं स्वन्तम् । वज्रेणाबोधयः वधार्थमुत्थापितवानसि । अहिं अहिनामानमसुरम् । किंच अनु त्वा अमदन्निति परस्ताच्छ्रुतमाख्यातपदमिहानुषक्तव्यम् । मदतिश्चात्र सामर्थ्यान्मोदनार्थः गत्यर्थो वा । अनुमोदितवन्तः अनुगतवन्तो वा त्वाम् । अथवा [illegible] । अनु इत्येष समित्येतस्य स्थाने । संस्तुतवन्तः त्वाम् । हृषितं शत्रुहननेन प्राप्तहर्षम् । अथवा अनुशब्दोऽत्र तृतीयार्थे (पा. १. ४. ८५) इत्येवं कर्मप्रवचनीयः । सहार्थश्चात्र तृतीयार्थः । मदतिरपि तृप्त्यर्थः । त्वया सोमपानात् प्राप्तहर्षेण सहातृप्यन्नित्यर्थः । के अमदन् । उच्यते । पत्नीः स्वभार्याः देवपत्न्यो वा । वयश्च । गन्तृत्वात् पक्षिसादृश्याद्वा मरुतोऽत्र वय उच्यन्ते । ते च । न च केवलाः पत्नीः मरुतश्च । विश्वे देवासः अमदन्ननु त्वा ॥ ७

कदा पुनरन्वमदन् । उच्यते ।

शुष्णं पिप्रुं कुयवं वृत्रमिन्द्र यदावधीर्वि पुरः शम्बरस्य ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ८

शुष्णमित्यादीन्यसुराणां नामधेयानि । शुष्णं पिप्रुं कुयवं वृत्रं च हे इन्द्र यदा अवधीः विविधं हतवानसि । पुरश्च शंबरस्य स्वभूताः । तदा अन्वमदन्नित्येवमस्यार्धर्चस्य यदाशब्दश्रुतेः साकांक्षत्वात् पूर्वस्या ऋच उत्तरेणार्धर्चेन एकवाक्यता । तन्नो मित्र इत्यत्र तु तच्छब्दश्रुतेर्यच्छब्दोऽध्याहर्तव्यः । यद्वयमिच्छामः तन्नो मित्र इत्याद्युक्तार्थम् ॥ ८



योनिष्ट इन्द्र निषदे अकारि तमा निषीद स्वानो नार्वा ।
विमुच्या वयोऽवसायाश्वान्दोषा वस्तोर्वहीयसः प्रपित्वे ॥ १

योनिशब्दोऽत्र स्थानवचनः । उपवेशनस्थानं वेद्याख्यम् । ते तव हे इन्द्र निषदे निषदनाय । उपवेशनार्थमित्यर्थः । अकारि कृतमस्माभिः । तमा । तमिति कर्मश्रुतेरा इति चोपसर्गाद्योग्यक्रियापदाध्याहारः । तं योनिमागत्य निषीद उपविश । स्वानो नार्वा । आगमनस्येयमुपमा । स्वनतिः शब्दार्थः । स्वनति स्वान्यते वा असाविति स्वानः । अर्वेत्यश्वनाम । यथा हेषन् अश्ववारेण वा शब्दायमानः अश्वः शीघ्रमागच्छेत् तद्वच्छीघ्रम् गत्येत्यर्थः । विमुच्य वयः । मुञ्चतिर्गत्यर्थः । अश्वान् सारथिं च प्रति

वातीति वयः अश्वप्रग्रहा इहाभिप्रेताः । द्वितीयार्थे प्रथमा । अश्वप्रग्रहांश्च विमुच्य । कुतः । सामर्थ्यादश्वेभ्यः । अवसायाश्वान् । अवपूर्वोऽयं स्यतिर्विमोचने । अश्वांश्च विमुच्य । कुतः । सामर्थ्याद्योक्तृभ्यः रथाद्वा । कीदृशान् । दोषा वस्तोर्वहीयसः रात्रावहनि चातिशयेन वोढॄन् । क्व विमुच्य । प्रपित्वे । आसन्ननामैतत् । वेद्या आसन्ने देशे । अथवा प्रपित्वे इति कालस्य प्रतिनिर्देशः । निषीदेत्येतेन चास्य सम्बन्धः । आसन्ने यागकाले निषिदेति ॥ १

ओ त्ये नर॒ इन्द्र॑मू॒तये॑ गु॒र्नू चि॒त्तान्त्स॒द्यो अध्व॑नो जगम्यात् ।
दे॒वासो॑ म॒न्युं दास॑स्य श्चम्न॒न्ते न॒ आ व॑क्षन्त्सुवि॒ताय॒ वर्ण॑म् ॥ २

ओ इति आङः उकारेण सहैकादेशः आ उ ओ इति । उकारश्च पदपूरणः । आकारस्तु गुः इत्याख्यातेन संबन्धयितव्यः । त्ये इति तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोध्याहर्तव्यः । ये स्तोतृयोग्याः सर्वे नरः अस्मत्पुत्रपौत्रलक्षणाः ऋत्विग्लक्षणा वा मनुष्याः । इन्द्रमूतये तर्पणाय पालनाय वा । आगुः । आ इत्येष समित्येतस्य स्थाने मर्यादायां वा । गायतिरप्यर्चतिकर्मा । संस्तुवन्ति मर्यादया वा स्तुवन्तीत्यर्थः । एतत् ज्ञात्वा नू चित् निपातौ । नु इति पुराणवचनः । चिदिति पदपूरणः । पुराणानेवात्मनः स्तोतॄन् तान् प्रति । सद्यः यस्यां वेलायामाह्वियते तस्यामेव । अध्वनः । तृतीयार्थे षष्ठी । स्वेनागमनमार्गेण जगम्यात् । किंच हे देवासः । देवशब्दोऽत्र दीव्यतेः स्तुत्यर्थस्य स्तोतृवचनः । पुरस्ताच्च तच्छब्दश्रुतेर्यच्छब्दोऽध्याहर्तव्यः । ये स्तोतारः क्रोधं दासस्य उपक्षयितव्यस्य शत्रोः । श्चम्नन् । चमेरदनार्थस्येदं रूपम् । इन्द्रप्रसादेन भक्षयन्ति । इन्द्रप्रसादेन क्रुद्धमपि स्वशत्रुं अयत्नेनैव त्रासयन्तीत्यर्थः । ते नः अस्माकं स्वभूताः पुत्रपौत्रादय ऋत्विजो वा आवक्षन् नित्यमावहन्त्वित्याशास्महे । सुविताय सुगमनाय वर्णं वरणीयमिन्द्रम् । अथवा वर्णशब्दः पीतवचनः अन्तर्णीतमत्वर्थश्च । पीतेन वर्णेन तद्वन्तमिन्द्रमित्यर्थः । तथा ह्यैतिहासिकाः पीतवर्णमिन्द्रं चित्रकर्मसु लेखयन्ति । अथवा देवा अत्र मरुतोऽभिप्रेताः न स्तोतारः । ये देवा मरुतः मन्युं दासस्य श्चम्नन् तेऽपीन्द्रप्रसादेनैव इन्द्रेण सह नः अस्मान् प्रति आवक्षन् आवहन्तु प्रापयन्तु सुविताय वर्णं वरणीयं श्वेतन वा वर्णेन वर्णवन्तं आत्मानम् । मरुतः इन्द्रेण सहागच्छन्तीत्यर्थः ॥ २

अव॒ त्मना॑ भरते॒ केत॑वेदा॒ अव॒ त्मना॑ भरते॒ फेन॑मु॒दन् ।
क्षी॒रेण॑ स्नातः॒ कुय॑वस्य॒ योषे॑ ह॒ते ते स्या॑तां प्रव॒णे शिफा॑याः ॥ ३

अवेत्युपसर्गः अधोभावे । भरत इति बिभर्तेर्वा धारणार्थस्य हरतेर्वा प्रापणार्थस्य रूपम् । अधो धारयति प्रापयति वा । पृथिव्यां पातयतीत्यर्थः । किम् । सामर्थ्यात् मेघस्थमुदकम् । त्मना आत्मनैव । इन्द्रः कीदृशः । केतवेदाः । केत इति प्रज्ञानाम । स्तोतृप्रज्ञानां वेदिता । भक्तिज्ञ इत्यर्थः । अथवा वेद इति धननाम । प्रज्ञाधनः । न च केवलमुदकम् । किं तर्हि । अव त्मना भरते फेनमुदन् । उदन्नित्युदकशब्दस्यादेशः । सप्तम्याश्चात्र लुक् । यस्तत्रोदके फेनः तमपि । सफेनं कृत्स्न[मु]दकमित्यर्थः । किंच क्षीरेण स्नातः । क्षीरमित्युदकनाम । परस्ताच्च तच्छब्दश्रुतेर्यच्छब्दोऽध्याहर्तव्यः । य उदकेन स्नातः । कुयवस्य कुयवनाम्नोऽसुरस्य । योषे स्त्रियौ । भार्ये इत्यर्थः । हते ते स्याताम् । लङर्थे लिङ् । ते अपि हते आस्ताम् । दारा अपि कुयवस्य हता इत्यर्थः । क्व । उच्यते । प्रवणे निम्ने प्रदेशे । ह्रदे इत्यर्थः । कस्याः । शिफायाः । शिफा नामासुरस्य पुर्यां नदी । तस्याः ॥ ३

युयोप नाभिरुपरस्यायोः प्र पूर्वाभिस्तिरते राष्टि शूरः ।
अञ्जसी कुलिशी वीरपत्नी पयो हिन्वाना उदभिर्भरन्ते ॥ ४

युयोपेति [यु]पिर्मोहनार्थः । पाणिभिः कीलाभिश्च हन्यमानस्य मूढा नाभिः । उपरस्य । उपरशब्दोऽत्र उपरिवर्तिवचनः न मेघनाम । शूराणामुपरिवर्तिनः । अत्यन्तशूरस्येत्यर्थः । कस्य । सामर्थ्याद्वृत्रस्य वा अन्यस्य कस्यचिद[सुरस्य] । आयोः । छन्दसीणः (उ. १. २) इत्येवमादिक इण्प्रत्ययः भूतकाले द्रष्टव्यः । युद्धार्थमागतस्य । कदा । उच्यते । प्र पूर्वाभिस्तिरते । अत्रैकवाक्यताप्रसिद्ध्यर्थं यत्तशब्दावध्याहर्तव्यौ । यदा पूर्वाभिः पूर्ववृत्ताभिः । काभिः । स्त्रीलिङ्गनिर्देशात् हतिभिः । चिरन्तनैरेव पाणिकीलाप्रहारैरित्यर्थः । प्रतिरते अवतिरतीति वधकर्मसु पाठात् तिरतिरत्र वधार्थः । भूते लट् । प्रकर्षेणातिरत् । हतवानित्यर्थः । कः । प्रकरणादिन्द्रः । कीदृशः । राष्टि शूरः । अत्राप्येकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहर्तव्यौ । यः राष्टि राजते ईष्टे सर्वस्य शूरश्च सः । यदा चिरन्तनैरेव पाणिकीलाप्रहारैः वृत्रमन्यं वा कंचिद[सु]रं प्रकर्षेण हतवान् तदास्य हन्यमानस्य मूढा नाभिरित्येवं सर्वेषामेकवाक्यता । तदैव च अञ्जसी कुलिशी वीरपत्नी त्येवंनामानः तिस्रोऽसुरस्य भार्याः । पयो हिन्वानाः । पय इ[त्यु]दकनाम । ब[हु]वचनस्थाने एकवचनम् । हिनोतिरपि गत्यर्थः सामर्थ्याच्चान्तर्णीतण्यर्थः । उदकानि गमयन्तीः । वहन्त्य इत्यर्थः । उदभिः तैरुदकैः भरन्ते । अत्रापि भूत एव काले द्रष्टव्यः । मूर्छितं सन्तं [त]स्यो‌ऽभ्यावृत्त्यमसिञ्चन्नित्यर्थः ॥ ४

प्रति यत्स्या नीथादर्शि दस्योरोको नाच्छा सदनं जानती गात् ।
अध स्मा नो मघवञ्चर्कृतादिन्मा नो मघेव निष्षपी परा दाः ॥ ५

यत् यस्मात् स्या । तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । या त्वया कांक्षिता सा नीथा । स्तुतिरत्र नीथोच्यते ।

नीथाविदो जरितारः । ऋ. वे. ३. १२. ५.

इति यथा । स्तुतिः प्रत्यदर्शि । प्रतिशब्दोऽत्र धात्वर्थानुवादी । अस्माभिर्दृष्टा । आलोचिता कृतेत्यर्थः । कृता च सती दस्योः ओको नाच्छ । ओक इति निवासस्थानमुच्यते । अच्छेत्याप्तुमित्यस्यार्थे । यथा कश्चिद्राजा स्वस्य शत्रोः निवासस्थानमाप्तुं महता यत्नेन शीघ्रं गच्छेत् एवं सदनं सर्वस्तुतीनां स्थानमाश्रयं भवन्तं जानती गात् गता प्राप्ता । अध एतस्मात्कारणात् । स्मेति पदपूरणः । हे मघवन् नः । तृतीयार्थे षष्ठी । अस्माभिः । चर्कृतात् अत्यर्थं कृतात् । कस्मात् । सामर्थ्यादपराधात् । इच्छब्दस्तु पदपूरणः । मा नः अस्मान् परादाः । ददतिरत्र सामर्थ्याद्विनाशनार्थः परित्यागार्थो वा । विनीनशः परित्याक्षीर्वा । कथम् । मघेव निष्षपी । सपतेः स्पृशतिकर्मणोऽर्चतिकर्मणो वा सपं प्रजननमिहोच्यते । तेन हि स्त्री स्पृश्यते । स्तुत्यं च तत् सुखकरत्वात् प्रजासन्तानकरत्वाच्च । अथवा पसः प्रजननमुच्यते । तथाहि अध्वर्यूणां सौत्रामणीमन्त्रेषु प्रयोगो दृश्यते । आनन्दनन्दावण्डौ मे भगः सौभाग्यं पस इति । पस एवाद्यान्त्याक्षरविपर्ययेण सपमित्युच्यते । निर्गतः सपः कोशान्निष्षपम् । तद्वान्निष्षपी वेश्यासंभोगसक्तहृदयः । स यथा वेश्याभ्यो ददन्धनानि विनाशयति परित्यजति वा मा नस्त्वं तथा परादा इति ॥ ५

स त्वं न इन्द्र सूर्ये सो अप्स्वनागास्त्व आ भज जीवशंसे ।
मान्तरां भुजमा रीरिषो नः श्रद्धितं ते महत इन्द्रियाय ॥ ६

य उक्तगुणोऽसि स त्वं नः अस्मान् हे इन्द्र सूर्ये । सूर्येणात्र तद्विषयं दर्शनं प्रतिपाद्यते । सर्वत्र तादर्थ्यचतुर्थ्यर्थे सप्तमी । सूर्यदर्शनाय । सूर्यदर्शनद्वारेणाविकलेन्द्रियत्वमुच्यते । अविकलेन्द्रियत्वार्थमित्यर्थः । स एवाप्सु वृष्टिलक्षणाभ्योऽद्भ्यः । वृष्ट्यर्थमित्यर्थः । अनागास्त्वे अनागास्त्वाय । अपापत्वार्थे चेत्यर्थः । आभज । आ इत्येष समित्येतस्य स्थाने । संभज । जीवशंसे । जीवो जीवितम् । आशांस्यते प्रार्थ्यतेऽसाविति शंसः । जीविताय आशंसिताय चेत्यर्थः । अथवा सूर्ये अप्सु जीवशंसे इत्यत्र स्वार्थ एव सप्तमी । सूर्येण तु तत्सम्बद्धो द्युलोक उच्यते । अप्स्वित्यप्छब्दोऽन्त-

रिक्षनाम। जीवशंस इत्यपि पार्थिवो लोक उच्यते । तत्र ह्यतिशयेन जीवितं आशंस्यते । सूर्यसम्बद्धे द्युलोकेऽन्तरिक्षे च जीविताशंसाबहुले च पार्थिवे लोके अनाभास्त्वाय त्वमस्मान् संमर्जेत्यर्थः । किंच अन्तरां भुजम् । अन्तराशब्दः सन्निकृष्टवचनः । सन्निकृष्टं चैहलौकिकं भोगं मा आरिरिषः । आकारोऽत्र ईषदर्थे। मा ईषदपि हिंसीः । नः अस्माकम् । किं कारणम् । उच्यते । यस्माच्छ्रद्धितम् । श्रद्धतेरुत्साहार्थस्येदं रूपम् । श्रद्धितमस्माभिः । त्वत्स्तुतिकरणे यस्मादस्माभिरुत्साहः कृत इत्यर्थः । किमर्थम् । ते तव महते इन्द्रियाय वीर्याय । स्तूयमाना हि देवता वीर्येण वर्धते। अत एवमुच्यते तव महते इन्द्रियायेति । अथवा श्रद्धितं ते इति पूर्वानपेक्षोऽयं पादो भिन्नमेव वाक्यम् । उत्साहस्तव महते वीर्याय इति ॥ ६

अधा मन्ये श्रत्ते अस्मा अधायि वृषा चोदस्व महते धनाय ।
मा नो अकृते पुरुहूत योनाविन्द्र क्षुध्यद्भ्यो वय आसुतिं दाः ॥ ७

अधशब्दोऽत्र पदपूरणः अपिचेत्यस्य वा स्थाने । अपिच मन्ये श्रत् । मन्यत इति कान्तिकर्मा । श्रदित्यपि सत्यनाम । सत्यमिदं कामयेऽहम् । किम् । उच्यते । अस्मै अधायि । अस्मै इति सन्निहितस्येन्द्रस्य प्रतिनिर्देशः । अधायीति लिङर्थे लुङ् । तुभ्यमस्मै इन्द्राय मदीया अर्दीयेतेति । किम् । सामर्थ्यात् [illegible] । एतत् ज्ञात्वा वृषा चोदस्व । प्रत्यक्षकृतोऽयं मन्त्रः । वृषेति च नामन्त्रितम् । अतो यत्तच्छब्द[illegible]कवाक्यता नेया । यस्त्वं वर्षिता स चोदयास्मान् । तासु तासु क्रियासु प्रेरयेत्यर्थः । किमर्थम् । महते धनाय महतो धनस्यार्थाय । महद्धनं लब्धुमित्यर्थः । किंच मा नः अस्मान् अकृते योनौ असंस्कृते अयोग्ये स्थाने । हे पुरुहूत । साकांक्षत्वात् प्रापिम इति वाक्यशेषः । योग्यं नः स्थानं देहि मा अ[illegible]ग्यमित्यर्थः । हे इन्द्र क्षुध्यद्भ्यः । क्षुध बुभुक्षायाम् । बुभुक्षमाणेभ्योऽस्मभ्यम् । वय आसुतिं दाः । वय इत्यन्ननाम । आ[illegible]तिशब्दः रसवचनः । अन्नं च रसं च [illegible]दकं देहि ॥ ७

मा नो वधीरिन्द्र मा परा दा मा नः प्रिया [illegible]जनानि प्र मोषीः ।
आण्डा मा नो [illegible] निर्भेन्मा नः पात्रा भेत्सहजा[illegible]षाणि ॥ ८

मा नो वधीः हे इन्द्र । मा परादाः परित्याक्षीः । मा च नः प्रियाणि धनानि प्रमोषीः अपहार्षीः । किंच अण्डसादृश्या[illegible] ज[illegible]तमात्राणि गर्भावस्थितानि वा अपत्यान्युच्यन्ते । तानि मा नः हे मघवन् शक्र निर्भेद् निर्बिभिदः विनीनशः । मा

नः पात्रा भेत्। पतन्तीति पात्राणि गमनसमर्थान्यपत्यानि। तान्यपि । न चैतान्येव केवलानि। किं तर्हि। सहजानुषाणि। जानुभ्यां सनन्ति संभजन्ते भूमिमिति जानुषाणि रीङ्खन्ति यान्यपत्यानि तान्युच्यन्ते। तैस्सह ॥ ८

अर्वाङेहि सोमकामं त्वाहुरयं सुतस्तस्य पिबा मदाय ।
उरुव्यचा जठर आ वृषस्व पितेव नः शृणुहि हूयमानः ॥ ९

अस्मदभिमुखमेहि। किं कारणम् । यस्मात् सोमकामं त्वा आहुः सर्वजनाः। अयं अस्माभिः सुतः सोमः। तस्य पिब तस्य चैकदेशं स्वांशलक्षणम् । मदाय मदार्थम्। केन प्रकारेण । उच्यते। उरुव्यचाः। व्यचशब्दो व्याप्तिवचनः शाकपूणिना पठितः। प्रत्यक्षकृतश्चायं मन्त्रः। उरुव्यचा इति च नेदमामन्त्रितम् । अतो यत्तच्छब्दावध्याहृत्यैकवाक्यता नेया। यस्त्वमुरुव्यचा बहुव्याप्तिः विस्तीर्णव्याप्तिर्वा। सर्वव्यापीत्यर्थः। जठरे स्वे उदरे । आवृषस्व आसिञ्च सोमम् । बहुसोममुदरे प्रक्षिपेत्यर्थः। पितेव नः पितेव च पुत्राणामस्माकं त्वं सर्वदा शृणुहि हूयमानः आहूयमानोऽस्माभिः ॥ ९

---

चन्द्रमा अप्स्वन्तरा सुपर्णो धावते दिवि ।
न वो हिरण्यनेमयः पदं विन्दन्ति विद्युतो वित्तं मे अस्य रोदसी ॥ १

चन्द्रमास्सूक्तमाप्त्यं वा त्रितं प्रति बभावृषिम् ।

चन्द्रमा इत्येतत्सूक्तं आप्त्यपुत्रं वा त्रितनामानमृषिं प्रतिभाति कुत्समेव वा । त्रितेन कुत्सेन वैतत् दृष्टमित्यर्थः ।

त्रीण्यतो वैश्वदेवम् ।

अतः पराणि त्रीणि सूक्तानि वैश्वदेवानि । अत्र सूक्ते इतिहासमाचक्षते। आप्त्यस्य ऋषेः त्रयः पुत्रा बभूवुः एकतो द्वितस्त्रित इति। ते यज्ञकामाः स्वान् याज्यान् गा ययाचिरे । ता आदाय सरस्वत्यास्तीरेण पथा गच्छतः तान् परस्मिन् कूले निषण्णो रात्रौ वृको ददर्श। दृष्ट्वा चोत्थाय अभिमुखः सारस्वतीरप उत्तरन् तांस्त्रासयामास। तेषां नश्यतां त्रितो निर्जले पांसुभिः वीरुद्भिः तृणैश्चावृते महत्यन्धकूपे पपात। एकतद्वितौ तु सह गोभिः गृहं जग्मतुः। अथ कूपस्थस्य इयं चिन्ता बभूव । अकृतसोमयागस्य मृत्युर्न श्रेयसे । तत् कः उपायः स्यात् येनाहमिहस्थः सोमं पिबेयमिति।

चिन्तयन्नेव यदृच्छया तत्र लम्बमानां वीरुधं ददर्श । तां सोम इति संकल्प्य योगै-श्वर्यात् मनसा शिष्टानि अग्न्यादीनि साधनानि परिसंकल्प्य शर्करा ग्रावाणः कृत्वा तामिस्तां वीरुधमभिषुत्य यागार्थं देवान् आजुहाव । ता आह्वानकारणमनव[illegible]ध्यमाना आविग्ना बभूवुः । अथ तदाह्वानं बृहस्पतिः शुश्राव । स देवानुवाच । त्रितस्य वर्तते यज्ञस्तत्र गच्छामः इति । अथ तत्र सर्वे देवा जग्मुः । तानागतान् कूपादुत्तारणार्थी त्रितः क्रमेण तुष्टाव चन्द्रमा इत्यादिनेति । चन्द्रमा अप्स्वन्तः अपां मध्ये । साकांक्ष-त्वात् स्थित इति वाक्यशेषः । अम्मये स्वमण्डले स्थित इत्यर्थः । कीदृशः । सुपर्णः । पृण प्रीणने इत्यस्यैतद्रूपम् । सुष्ठु प्रीणयिता । ह्लादयिता मनसामित्यर्थः । अथवा सुपर्णशब्दो रश्मिनाम सामर्थ्याच्चान्तर्णीतमत्वर्थः । रश्मिमान् । किं करोति । उच्यते । आधावते । मर्यादया सर्वकालं गच्छति । क्व । उच्यते । दिवि द्युलोके । न वः न तु युष्माकम् । हिरण्यनेमयः । नेमी रथचक्रधारोच्यते । हिरण्मय्यो नेमयो यासां ता हिरण्यनेमयः । तासां संबोधनं [illegible]रण्यनेमयःपदम् । पादनिधानात्तदाकारं यत् कर्द-मादावुपजायते तत्पदमित्युच्यते । तद्विन्दन्ति लभन्ते । पश्यन्तीत्यर्थः । हे विद्युतः । चन्द्रमा उदकमये स्वमण्डले व्यवस्थितः सर्वदा दिवि गच्छन् उपलभ्यते । युष्माकं तु हे विद्युतः वर्षाभ्योऽन्यत्र पदमपि नोपलभ्यत इत्यर्थः । वित्तं मे अस्य । विद ज्ञाने । श्रवणेन च यत् ज्ञानं तदिहाभिप्रेतम् । अस्येत्यपि सन्निहितत्वात् स्तोत्रस्य प्रति-निर्देशः । द्वितीयार्थे च षष्ठी । शृणुतं ममेदं स्तोत्रमित्यर्थः । अथवास्येति दुःखस्य प्रतिनिर्देशः । विजानीतं ममेदं कूपनिपतनमिति विज्ञापनं चेद[illegible]त्तारणार्थं क्रियते । विजानीतमिदं दुःखम् । विज्ञाय चातोऽनुग्रहस्वभावकतया मामितः कूपादुत्तारयत-मित्यर्थः । हे रोदसी द्यावापृथिव्यौ ॥ १

अर्थमिद्वा उ॑ अ॒र्थिन॒ आ जा॒या यु॑वते॒ पति॑म् ।

तु॒ञ्जाते॒ वृष्ण्यं॒ पयः॑ परि॒दाय॒ रसं॑ दुहे वि॒त्तं मे॑ अ॒स्य रो॑दसी ॥ २

इत् वै उ इति [illegible]ऽपि पदपूरणाः । द्यावापृथिव्योश्च परस्तात् पुर-स्ताच्च संकीर्त्यमानत्वात् अयमप्यर्धर्चो द्यावापृथिव्य एव वैश्वदेवत्वाद्वा सूक्तस्य वैश्व-देवः । द्यावापृथिव्योः विश्वेषां देवानां वा प्रसादेन अर्थं यथाभिप्रेतमर्थिनः सर्वे । जाया च स्वं पतिमायुवते । यु मिश्रणे । आमिश्रयन्ति । आत्मना सह प्राप्नुवन्तीत्यर्थः । किंच तुञ्जाते । तुञ्जतिर्दानकर्मा । दत्तं सर्वप्राणिभ्यः । के । द्विवचननिर्देशाच्च द्यावापृथिव्यौ । किम् । वृष्ण्यं पयः । वृष्ण्यमित्यपठितमपि बलनाम । सामर्थ्याच्चात्र तत्कारणे तच्छब्दप्रयोगः । पय इत्[illegible]दकनाम । पुष्टिलक्षणस्य बलस्य कारणभूतं वृष्टि-

लक्षणमुदकम् । कथं पुनर्वृष्टिलक्षणमुदकं द्यौः पृथिवी वा ददाति । उच्यते । दिवो हि वृष्टिः पतति । यच्च वृष्टेर्हेतुभूतं यज्ञादिकर्म तत् पृथिव्यां क्रियते । अतस्तयोर्वृष्टिहेतुत्वात्ते एव वृष्टिलक्षणमुदकं दत्तमिति व्यपदिश्यते । किंच परिदाय रसं दुहे । परीति सर्वतोभावे । ददातिरपि शुद्धस्सन् आङ्पूर्वो द्रष्टव्यः । रस इत्युदकनाम । रश्मिभिः सर्वत आदायोदकं दुहे वृष्ट्यर्थं क्षरति । कोऽसौ । सामर्थ्यादादित्यः । स हि रश्मिभिः सर्वत उदकमादाय वृष्ट्यर्थं मध्यमाय ददाति । वित्तं म इत्याद्युक्तार्थम् ॥ २

मो षु दे॑वा अ॒दः स्व१॑र॒व पा॑दि दि॒वस्परि॑ ।

मा सो॒म्यस्य॑ शं॒भुवः॒ शूने॑ भूम॒ कदा॑ च॒न वि॒त्तं मे॑ अ॒स्य रो॑दसी ॥३

मो इति माशब्दस्य उञा सहैकादेशः । उञ् चात्र पदपूरणः । सु इत्यपि पदपूरण एव । मा हे देवाः अदः स्वः । स्वश्शब्दः सर्वपर्यायः । इदं सर्वमस्मत्प्रभवं पुत्रपौत्रादिकुलं अवपादि अधः पतत् । दिवः द्युलोकात् । स्वर्गात् प्रच्युत्य नरकं मा गादित्यर्थः । परिशब्दस्तु अधिपरी अनर्थकौ (पा. १. ४. ९३) इत्येवं कर्मप्रवचनीयः पदपूरणः । मा सोम्यस्य सोमसंपादिनः । शंभुवः । शमिति सुखनाम । भवतिरत्र सामर्थ्यादन्तर्णीतण्यर्थः प्राप्त्यर्थो वा । सुखं यदात्मनो भावयति जनयति प्रापयति वा तत् शंभु । तस्य शंभुवः सोमयाजिनः । सुखिनश्च पितृपितामहादिकुलस्य तत्प्रभवत्वेन सम्बन्धिनः सन्तो वयमित्यर्थः । शूने भूम । शूनं वृद्धं श्वयतेर्वृद्ध्यर्थत्वात् । तच्च वृद्धं नेष्यते । तदिह परिगृह्यते । किं पुनस्तत् । दुःखं पापं वा । दुःखपापशब्दयोर्वान्यतरपर्यायः शूनशब्दः । द्वितीयार्थे चैषा सप्तमी । भूमेत्यपि भवतिः प्राप्त्यर्थः । दुःखं पापं वा प्रापामः । कदाचन कदाचिदपि । युवामपि वित्तम् ॥ ३

य॒ज्ञं पृ॑च्छाम्यव॒मं स तद्दू॒तो वि वो॑चति ।

क्व॑ ऋ॒तं पू॒र्व्यं ग॒तं कस्तद्बि॑भर्ति॒ नूत॑नो वि॒त्तं मे॑ अ॒स्य रो॑दसी ॥ ४

तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । यमग्निं अहं यज्ञं पृच्छामि । अवमम् । अन्तिकनामैतत् अग्नेश्च विशेषणम् । सन्निकृष्टम् । सर्वयजमानानामाप्तमित्यर्थः । अथवा अवममिति यज्ञस्य विशेषणम् । सन्निकृष्टं यज्ञमिति । ममार्थं कृतं मानसमित्यर्थः । सोऽग्निः तत् । व्यत्ययेनात्र नपुंसकता यज्ञप्रतिनिर्देशार्थत्वात् । तं यज्ञम् । दूतो यजमानानाम् । विवोचति । लोडर्थेऽयं लिट् । विविधं ब्रुवतु । मह्यमुपदिशतु येनाहं सुखमविगुणं करोमीत्यर्थः । क्व अग्नेः ऋतं पूर्व्यं पूर्वं चिरन्तनं गतं अपयातम् । को वा

तदिदानीं बिभर्ति धारयति । नूतनः नवोऽन्यो देवः । येन सत्येनाग्निर्यष्टृनापद्भ्यो रक्षति क्व तस्य तत् सत्यं गतमिति आत्मन आपदोऽरक्षणादुपालम्भोऽयं परिदेवना वा । वित्तम् ॥ ४

अमी ये दे॑वा स्थन॑ त्रि॒ष्वा रो॑च॒ने दि॒वः ।

कद्व॑ ऋ॒तं कदनृ॑तं॒ क्व॑ प्र॒त्ना व॒ आहु॑तिर्वि॒त्तं मे॑ अ॒स्य रोद॑सी ॥ ५

अमी ये यूयं हे देवाः । स्थन तिष्ठतेत्यर्थः । त्रिषु लोकेषु । आरोचने दीप्ते च दिवः दिवः सम्बन्धिन्यादि[illegible]ले । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । तान् पृच्छामि । कत् । केत्यस्य पर्यायः कच्छब्दः । क्व वः युष्माकमृतं सत्यम् । कत् क्व वा अ[illegible] । क्व वा प्रत्ना पुराणी वः युष्माकं असत्प्रवृत्ता आहुतिः । सत्यासत्यविवेकिभूता यूयं यज्वानं सन्तं मामित आपदो न रक्षयेत्येव[illegible]पालंभोऽयम् । वित्तम् ॥ ५

कद्व॑ ऋ॒तस्य॑ धर्ण॒सि कद्वरु॑णस्य॒ चक्ष॑णम् ।

कद॑र्य॒म्णो म॒हस्प॒थाति॑ क्रामेम दू॒ढ्यो॑ वि॒त्तं मे॑ अ॒स्य रोद॑सी ॥ ६

कद्वः क्व युष्माकं ऋतस्य धर्णसि । धारणं निस्सरति । असत्यभूताः स्थेत्यर्थः । अथवा व इति निर्धारणे षष्ठी । ऋतशब्दोऽप्यादित्यवचनः । धर्णसीत्यपि बलनाम । क्व युष्माकं मध्ये आदित्यस्य प्रकाशानुग्रहसामर्थ्यलक्षणं बलम् । क्व वा वरुणस्य चक्षणम् । भक्ताभक्तविवेकज्ञानमित्यर्थः । क्व वा अर्यम्णः महत्वम् । अतिशयदेवतामाहात्म्यमित्यर्थः । एवमयम[illegible] पूर्ववदुपालंभः । पथातिक्रामेम दूढ्य इतीयं त्वाशीः । युष्मत्प्रसादात् स्वगृहगमनपथा वयमतिक्रामेत्याशास्महे । किम् । दूढ्यः दुर्धियः पापबुद्धीन् वृकप्रभृतीन् । वित्तम् ॥ ६

अ॒हं सो अ॑स्मि॒ यः पु॒रा सु॒ते वदा॑मि॒ कानि॑ चि॒त् ।

तं मा॑ व्यन्त्या॒ध्यो॑३ वृको॒ न तृ॑ष्ण॒जं मृ॒गं वि॒त्तं मे॑ अ॒स्य रोद॑सी ॥ ७

अहमस्मि मन्त्रदृक् यः पूर्वे सुते सोमे वदामि । भूतेऽयं लट् । [illegible] । कानिचित् कान्यपि अत्यन्तोत्कृष्टानि स्तोत्राणि । तं मां युष्माकं स्तोतारं संतं व्यन्ति । व्यदिरत्र खादनार्थः । खादन्ति । असंपाद्यमाना उद्वेगेन मारयन्ती[illegible]ः । के । उच्यते । आध्यः । आधयः कामा उच्यन्ते । यक्ष्ये भोक्ष्ये अर्थिभ्यो दास्ये इत्येवमादयः कामाः । कथं खादन्ति । वृको न तृष्णजम् । तृष्णा जाता यस्य सः तृष्णजः तृषित उच्यते । यथा वृकस्तृषितमुदकस्थान आगतं हरिणं अन्यं वा मृगं कंचित्

खादति तद्वदित्यर्थः । नैतद्योग्यं युष्माकं स्तोता सन्नहं एवमसंपद्यमानैः कामैः बाध्ये इत्येवमयमुपालंभः । वित्तम् ॥ ७

सं मा तपन्त्यभितः सपत्नीरिव पर्शवः ॥

मूषो न शिश्ना व्यदन्ति माध्यः स्तोतारं ते शतक्रतो वित्तं मे अस्य रोदसी ॥ ८

तपिरत्र सामर्थ्यादन्तर्णीतण्यर्थः । सम्मा तापयन्ति अभितः । अभिशब्दादय-मुभयार्थे तसित् । वामपार्श्वतः दक्षिणपार्श्वतश्चेत्यर्थः । अथवा अग्रतः पृष्ठतश्चेत्यर्थः सपत्नीरिव यथा सपत्न्य एकं भर्तारमात्मानमेव वा परस्परतः सन्तापयन्ति तद्वत् । काः सन्तापयन्ति । उच्यते । पर्शवः । कूपभित्तय इष्टका वा इह पर्शव उच्यन्ते । ता हि कूपस्य पर्शुस्थानीयाः । इमाः कूपभित्तय इष्टका वेत्यर्थः । किंच मूषो न । मूष-शब्दोऽत्र मूषिकशब्दपर्यायः । शिश्नमित्यपि ष्णा शौचे ष्णै वेष्टन इत्यनयोरन्यतरस्य रूपम् । कथम् । धात्वादेः सकारस्य शकारश्छान्दसत्वात् । घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम् ( वा. ३. ३ ५८-४. ) इति कर्मणि कप्रत्ययः । द्विर्वचन-प्रकरणे कृञादीनां के (वा. ६. १. १२-५.) इति द्विर्वचनम् । अर्तिपिपर्त्योश्च (पा. ६. ४. ७७.) इत्यभ्यासस्येत्वम् । एवं शिश्नमिति भवति । किंपुनरत्र शिश्नशब्दे-नोच्यते । वायितं सूत्रम् । तद्धि शौचार्हं भवति अन्नगन्धित्वात् । चेष्टितं च तन्तु-वाययन्त्रे । अथवा शिश्नशब्दः प्रजननवचनः । इह तु तत्सादृश्यात् पुच्छः शिश्न-मुच्यते । मूषिको वायितानि सूत्राणि पुच्छानि वा तैलभाण्डे घृतभाण्डे वा प्रक्षिप्य ततश्चोध्दृत्य व्यदति एवं व्यदन्ति विविधं अदन्ति खादन्ति मां आध्यः यागादि-कामाः । स्तोतारं सन्तं ते तव हे शतक्रतो बहुकर्मन् बहुप्रज्ञ वेन्द्र । नैतद्योग्यं यत्तव स्तोता सन्नहं एवमसंपद्यमानैः कामैः बाध्यते इत्येवमुपालंभः । वित्तम् ॥ ८

अमी ये सप्त रश्मयस्तत्रा मे नाभिराततां ।

त्रितस्तद्वेदाप्त्यः स जामित्वाय रेभति वित्तं मे अस्य रोदसी ॥ ९

अमी ये सप्तादित्यरश्मयः । तत्र तेषु मे मम नाभिराततां । नाभिशब्दोऽत्र प्राण-मात्रोपलक्षणार्थो द्रष्टव्यः । प्राणः । आतता अवबद्धा । आयत्तेत्यर्थः । तच्चैतत् त्रितो नाम ऋषिः वेद । आप्त्यः आप्त्यपुत्रः । आत्मन एवायं परोक्षरूपेण प्रथमपुरु-षेण प्रतिनिर्देशः । अहं त्रितो वेद्मीत्यर्थः । कौत्सत्वेऽस्य सूक्तस्य अविरुद्ध एव परोक्षेण निर्देशः । विद्वांश्च स त्रितः । जामित्वाय । जामिशब्दः समानजातीयवचनः ।

समानजातीयत्वार्थम् । तद्भाव्यप्रतिपत्त्यर्थमित्यर्थः । रेभतिरर्चतिकर्मायम् । स्तौति रश्मीन् । वित्तम् ॥ ९

अमी ये पञ्चोक्षणो मध्ये तस्थुर्महो दिवः ।

देवत्रा नु प्रवाच्यं सध्रीचीना नि वावृतुर्वित्तं मे अस्य रोदसी ॥ १०

अमी ये पञ्च उक्षणः सेक्तारः । स्वेन स्वेन व्यापारेण वर्षितारः इत्यर्थः । कतमे ।

तत्र इन्द्रस्तद्वरुणः तदग्निस्तदर्यमा । ऋ. वे. १. १०७. ३.

इत्यस्यामृचि ये पञ्च निगदिताः । मध्ये तस्थुः तिष्ठन्ति । महो दिवः महतो द्युलोकस्य । देवत्रा । देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् (पा. ५. ४. ५६) इति बाहुलकादयं त्रादेशः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः । तेषां देवानां नु क्षिप्रं प्रवाच्यं प्रकर्षेण वक्तव्यं स्तोत्रमस्माभिः । तच्चोच्यमानं श्रोतुं सध्रीचीनाः । सहस्यायं सध्रिरादेशः अञ्चतावुत्तरपदे । अञ्चतिर्गत्यर्थः । सहाञ्चन्तीति सध्रीचीनाः । सहगमनशीला इत्यर्थः । निवावृतुः अस्मान् प्रति निवर्तन्ताम् । नान्यतो गमन् । अस्मान् प्रत्यागच्छन्त्वित्यर्थः । वित्तम् । १०

सुपर्णा एत आसते मध्य आरोधने दिवः ।

ते सेधन्ति पथो वृकं तरन्तं यह्वतीरपो वित्तं मे अस्य रोदसी ॥ ११

सुपर्ण इति रश्मिनाम । तच्छब्दश्रुतेश्च यच्छब्दोऽध्याहार्यः । ये रश्मय एते आसते तिष्ठन्ति त्वन्मध्ये आरोधने दिवः । आरोहति मर्यादया रुणद्धि वा तमांसीत्यारोधनमादित्यमण्डलमिहाभिप्रेतम् । यदेतद्दिवो मध्ये आदित्यमण्डलं तत्रेत्यर्थः । ते सेधन्ति । सेधतिर्गतिकर्मा सामर्थ्याच्चान्तर्णीतण्यर्थः । शुद्धोऽपि सोपसर्गार्थो द्रष्टव्यः । लोडर्थे लट् । अपगमयतु । पथः अस्मद्गमनमार्गात् इमं वृकं तरन्तमस्मान् भक्षयितुमुत्सरन्तम् । यह्वतीः । यह्वशब्दस्य महन्नाम्नः पर्यायो यह्वच्छब्दो द्रष्टव्यः । महतीरेताः सारस्वतीरपः । वित्तम् ॥ ११

नव्यं तदुक्थ्यं हितं देवासः सुप्रवाचनम् ।

ऋतमर्षन्ति सिन्धवः सत्यं तातान सूर्यो वित्तं मे अस्य रोदसी ॥ १२

तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । यदस्माभिः कर्तुमुपक्रान्तं नव्यं नवं तत् । अन्यैः स्तोतृभिरकृतपूर्वमित्यर्थः । उक्थ्यशब्दोऽत्र उक्थपर्यायः

स्तोत्रवचनः न प्रशस्यवचनः । युष्मत्स्तोत्रम् । कीदृशम् । हितम् । कस्मै । सामर्थ्यादस्मदभिप्रेतकरत्वात् अस्मभ्यं युष्मभ्यं वा वीर्यवृद्धिकरत्वात् । हे देवासः सुप्रवाचनं सुष्ठु प्रवाचनार्हम् । अत्यन्तोत्कृष्टं चेत्यर्थः । अथवैवमन्यथास्यार्धर्चस्यार्थयोजना । युष्माकं माहात्म्यं नव्यम् । नौतेरर्चतिकर्मण इदं रूपम् । स्तुत्यं तत् प्रशस्यं उक्थ्यं च हितं च स्तोतृभ्यः हे देवासः सुप्रवाचनं सुष्ठु प्रवाचनार्हम् । प्रख्यापनार्हमित्यर्थः । परोऽर्धर्चो भिन्नं वाक्यम् । ऋतमर्षन्ति । ऋतमित्युदकनाम । अर्षन्तीत्यपि ऋ गतावित्यस्य चान्तर्णीतण्यर्थस्य व्यत्ययेनायं शप् । अर्तेर्वान्तर्णीतण्यर्थस्य लेटीदं रूपम् । गमयन्ति । वहन्तीत्यर्थः । सिन्धवो नद्यः । अथवा ऋतशब्दोऽत्र यज्ञवचनः । आदित्यवचनो वा । सिन्धवो रश्मय उच्यन्ते । यज्ञमादित्यं वा प्रति रश्मयो गच्छन्तीत्यर्थः । सत्यं तातान सूर्यः सूर्योऽपि सत्यं अविसंवादि स्वं ज्योतिस्त्रिष्वपि लोकेषु विस्तारयति । वित्तम् ॥ १२

अग्ने॒ तव॒ त्यदु॒क्थ्यं॑ दे॒वेष्व॒स्त्याप्यं॑म् ॥

स नः॑ स॒त्तो म॑नु॒ष्वदा दे॒वान्य॑क्षि वि॒दुष्ट॑रो वि॒त्तं मे॑ अ॒स्य रो॑दसी ॥ १३

तच्छब्दसमानार्थत्यच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । यदिदमस्माभिः कर्तुं प्रक्रान्तं हे अग्ने तव त्यत् तत् उक्थ्यं स्तोत्रं देवेषु । निर्धारणे एषा सप्तमी । देवानां मध्ये । अस्त्याप्यं अस्ति च ज्ञातित्वं तवास्माभिः सह । ज्ञातिश्च त्वमस्माकमित्यर्थः । सर्वयजमानानां हि ज्ञातिभूतोऽग्निः । तद्धिरण्यस्तूपेनोक्तम्

आपिः पिता प्रमतिः सोम्यानाम् । ऋ वे. १ ३१. १६.

इति । य ईदृशोऽसि सः नः । तादर्थ्ये एषा चतुर्थी । अस्माकमर्थाय । सत्तः होतृत्वेन निषण्णः । होता भूत्वेत्यर्थः । कथम् । मनुष्वत् मनुष्यवत् । आ । मर्यादाया माकारः । मर्यादया देवान्यक्षि यज । विदुष्टरः अतिशयेन विद्वान् । किम् । सामर्थ्याद्यष्टुं वास्माकं वा भक्ताम् । वित्तम् ॥ १३

स॒त्तो होता॑ मनु॒ष्वदा दे॒वाँ अच्छा॑ वि॒दुष्ट॑रः ।

अ॒ग्निर्ह॒व्या सु॑षूदति दे॒वो दे॒वेषु॒ मेधि॑रो वि॒त्तं मे॑ अ॒स्य रो॑दसी ॥ १४

सत्तो होता मनुष्वत् मनुष्मवद्धोतृत्वेन निषण्णः । आ मर्यादया देवान् अच्छाप्तुम् । यष्टुमित्यर्थः । विदुष्टरः । अग्निर्हव्या हवींषि सुषूदति संस्करोति । देवो देवेषु देवानां मध्ये मेधिरः यज्ञवान् । यज्ञकारीत्यर्थः । वित्तम् ॥ १४

ब्रह्मा कृणोति वरुणो गातुविदं तमीमहे ।
व्यूर्णोति हृदा मतिं नव्यो जायतामृतं वित्तं मे अस्य रोदसी ॥ १५

तच्छब्दश्रुतेर्यच्छब्दोऽध्याहर्तव्य । यो ब्रह्म स्तुतिलक्षणं कृणोति । करोति स्वन्तर्णीतण्यर्थः । कारयति कामान् । स्तोतृभिरात्मानं स्तावयतीत्यर्थः । कः । वरुण । गातुविदं गमनस्य वेदितारम् । यज्ञान् प्रति गन्तुं ज्ञातारमित्यर्थ । तमीमहे याचामहे । किम् । उच्यते । व्यूर्णोति । लोडर्थेऽयं लट् । प्रकाशयतु । हृदा । षष्ठ्यर्थे एषा तृतीया । अस्मद्धृदयस्य । मतिं ज्ञानम् । मम मनसो ज्ञानमुत्पादयत्वित्यर्थः । नव्यः स्तुत्यश्च जायताम् । क । ऋतम् । सप्तम्यर्थे द्वितीया । ऋते यज्ञे मदीये । अथवा तृतीयपादः प्रथमपादानन्तरं योजयितव्यः । यः ब्रह्म कृणोति वरुणः यश्च प्रकाशादिकरणेन सर्वप्राणिनां व्यूर्णोति हृदयस्य मतिं घटादिविषयं ज्ञानं तं वयमीमहे । नव्यो जायतामृते अस्मदीये इति । वित्तम् ॥ १५

असौ यः पन्था आदित्यो दिवि प्रवाच्यं कृतः ।
न स देवा अतिक्रमे तं मर्तासो न पश्यथ वित्तं मे अस्य रोदसी ॥ १६

पन्था इति पततेर्गत्यर्थस्य गन्तृवचनः न मार्गशब्दपर्यायः । अन्तर्णीतमत्वर्थो वा । असौ यः उदयास्तमयलक्षितेन मार्गेण गन्ता तद्वान् वा आदित्यः । प्रवाच्यम् । व्यत्ययेनात्र नपुंसकता । प्रकर्षेण स्तुतिवचनार्हः । दिवि प्रकाशकरणार्थं कृतः स्थापितः । केन । सामर्थ्याद्युष्माभिर्वा देवैर्वा विधात्रा वा । न सः हे देवाः अतिक्रमे । कृत्यार्थेऽयं कन्प्रत्ययः । अतिक्रमयितव्यः । प्रथमं स्तोतव्य इत्यर्थः । अथवा पन्था इति पथिशब्दो मार्गवचन एव । आदित्यशब्दस्तु आदित्यस्यायमादित्य इति इदमर्थे ण्यप्रत्ययो द्रष्टव्यः । एवमर्थयोजना । असौ यः पन्थाः आदित्यस्य स्वभूतः प्रकर्षेण स्तुतिवचनार्हः कृतः । केन । सामर्थ्यादादित्येनैव भवद्भिर्वा देवैर्विधात्रा वा । न सः हे देवाः अतिक्रमयितव्यः । केन । सामर्थ्यादादित्येनैव । तमादित्यो नातिक्रामतीत्यर्थः । तमादित्यं तत्पथं वा हे मर्तासः मनुष्याः न पश्यथ न जानीथ । अहं सम्यङ् न जानामीत्यर्थः । वित्तम् ॥ १६

त्रितः कूपेऽवहितो देवान्हवत ऊतये ।
तच्छुश्राव बृहस्पतिः कृण्वन्नंहूरणादुरु वित्तं मे अस्य रोदसी ॥ १७

त्रितो नामर्षिः कूपे अवहितः अधो निहितः । पतित इत्यर्थः । देवान् हवते ऊतये । भूतेऽत्र लट् द्रष्टव्यः । आहूतवान् । यदि कुत्सस्येदमार्षं ततोऽविरुद्ध एव परोक्षरूपेण प्रथमपुरुषेण निर्देशः । अथ तत् त्रितस्येदमार्षं तत आत्मन एव परोक्षरूपेण प्रथमपुरुषेण निर्देश इति व्याख्यातव्यम् । अहं त्रितनामा देवानाहूतवानित्यर्थः । किमर्थम् । ऊतये अस्मिन् मानसे यज्ञे सोमेन तर्पणाय पालनाय वा आत्मनः । तदाह्वानं श्रुतवान् बृहस्पतिः कृण्वन् । हेतावयं शतृप्रत्ययो द्रष्टव्यः । प्रयोजनस्य हेतुत्वेन विवक्षा । करणेन हेतुना । कर्तुमित्यर्थः । किम् । सामर्थ्याद्रक्षणं वोत्तारणं वा । क्रिया सामान्यत्वाद्वा करोतिरेव रक्षणार्थः उत्तारणार्थो वा । रक्षितुमुत्तारयितुं वेत्यर्थः । कुतः । अंहूरणात् । अंहुशब्द अंहश्शब्दपर्यायः । तद्वानंहुरः । कः पुनरसौ । यदि रक्षणमत्र विवक्षितं ततः पापकर्मकारित्वाद्वृकः । अथोत्तरणं तत उद्वेगकरैस्तृणादिभिरुपेतत्वात्कूपः । अंहुर एवांहूरणः । स्वार्थिको नशब्दः । ताद्धितो दीर्घस्तु छान्दसत्वात् । पापकर्मकारिणो वृकात् उद्वेगकरतृणाद्युपेतात् वा कूपादित्यर्थः । उरु । क्रियाविशेषणमेतत् । विस्तीर्णम् । रक्षितुमुत्तारयितुं वा चिरमित्यर्थः । वित्तम् ॥ १७

अरुणो मा सकृद्वृकः पथा यन्तं ददर्श हि ।

उज्जिहीते निचाय्या तष्टेव पृष्ट्यामयी वित्तं मे अस्य रोदसी ॥ १८

अरुण आरक्तवर्णः । सकृद्वृकः पथा स्वगृहगमनमार्गेण यन्तं गृहं प्रति गच्छन्तं ददर्श दृष्टवान् । हिशब्दस्तु पदपूरणः । उज्जिहीते निचाय्य । ओहाङ् गतौ । भूते चात्र लट् द्रष्टव्यः । निचायतिरपि दर्शनार्थः प्रसिद्धः । दृष्ट्वा चोर्ध्वमगमत् । उदित इत्यर्थः । कथम् । तष्टेव पृष्ट्यामयी । पृष्टिरिति पृष्ठमुच्यते । तस्यामयं रोगः । तद्वान् पृष्ट्यामयी । यथा तक्षा नित्यकुटिलत्वादुपजातपृष्ठवेदनः तदपगमनार्थमुत्तिष्ठेत् तद्वदित्यर्थः । वित्तम् ॥ १८

एनाङ्गूषेण वयमिन्द्रवन्तोऽभि ष्याम वृजने सर्ववीराः ।

तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ १९

एनाशब्दोऽनेनेत्यस्यार्थे । अङ्गशब्दः शरीरावयववचनः । उष दाहे । अंगान्योषति दहतीति अंगोषः अन्धकूपः । स हि संबाधत्वात् पीडयत्यङ्गानि । अंगोष एवांगुषः । छान्दसत्वादोकारस्य उकारः । अंगुषे भव आंगूषः सोमः । अथवा

आघोष्यतेऽसाविति आघोष. स्तोमः। आघोष एवांगूषः। छान्दसौ वर्णागमव्यत्ययौ। एना आंगूषेण इति च उभयत्र हेतौ तृतीया। अनेन कूपे प्रकल्पितेन सोमेन स्तोमेन वा हेतुना। वयमिन्द्रवन्तः। इन्द्रः सहायभूतो येषां ते इन्द्रवन्तः। इन्द्रेणानुगृह्यमाणा इत्यर्थः। अभिष्याम अभिभवेम शत्रूनित्याशास्महे। क। वृजने। वृज्यते शत्रुभिरिति वृजनः अविगुणो यज्ञः। तत्र। अथवा वृजनशब्दो बलनाम सामर्थ्यादन्तर्णीतमत्वर्थः। सेनादिलक्षणेन बलेन तद्वति संग्रामे इत्यर्थः। सर्ववीराः सर्वैं वीरैः पुत्रैः पौत्रैश्चो पेताः। तन्नो मित्र इत्याद्युक्तार्थम्॥ १९



इन्द्रं मित्रं वरुणमग्निमूतये मारुतं शर्धो अदितिं हवामहे।
रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन॥ १

इन्द्रं च मित्रं च वरुणं चाग्निं च ऊतये तर्पणाय पालनाय वात्मनः मारुतं च शर्धः सेनालक्षणं बलं अदितिं च हवामहे आह्वयामः। किंच रथं न दुर्गात् यथा रथीः दुर्गात् प्रदेशाद्रथंरक्षति एवं हे वसवः सुदानवः शोभनदातारः शोभनदाना वा। विश्वस्मात् सर्वस्मात् अंहसः पापात् निष्पिपर्तन। पॄ पालनपूरणयोः। निश्चयेन पालयत रक्षत। यथा वयं केनचिदपि पापेन न संबध्यामहे तथा कुरुतेत्यर्थः॥ १

त आदित्या आ गता सर्वतातये भूत देवा वृत्रतूर्येषु शंभुवः।
रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन॥ २

तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः। यान् परया भक्त्या आह्वयामि ते यूयं हे आदित्याः आगत आगच्छत। किमर्थम्। सर्वतातये। सर्वदेवात्तातिल् (पा ४ ४. १४२) इत्येवं स्वार्थे तातिल्प्रत्ययः। सर्वस्मै अस्मद्यागाय। अथवा तनोतेस्तातिशब्दो यागसन्ततिवचनः। सर्वस्यै यागसन्तत्यै। सर्वानस्मद्यागानविघ्नेन संपादयितुमित्यर्थः। किंच भूत भवत अस्माकं हे देवाः वृत्रतूर्येषु। वृत्रतूर्यशब्दः संग्रामनाम। संग्रामेषु शंभुवः। शमिति सुखनाम। भवतिरप्यत्र सामर्थ्यादन्तर्णीतण्यर्थः। सुखस्य भावयितारः। शत्रुजयलक्षणं सुखमस्मान् प्रापयतेत्यर्थः। किंच रथं न॥ २

अवन्तु नः पितरः सुप्रवाचना उत देवी देवपुत्रे ऋतावृधा ।
रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥ ३

अवन्तु पालयन्तु । नः अस्मान् पितरः । कीदृशाः । सुप्रवाचनाः । प्रोच्यन्ते देवतागणा अनेनेति प्रवाचनं स्तोत्रम् । छान्दसं दीर्घत्वम् । शोभनं प्रवचनं येषां ते सुप्रवाचनाः । सुस्तुतय इत्यर्थः । न च केवलाः पितरः । किं तर्हि । उत देवी देव्यावपि द्यावापृथिव्यौ । कीदृश्यौ । देवपुत्रे । देवाः पुत्रभूता ययोः ते देवपुत्रे । देवानां मातृभूते इत्यर्थः । ऋतावृधा सत्यस्य यज्ञस्य उदकस्य वा स्वेन स्वेन व्यापारेण वर्धयित्र्यौ । किंच रथं नेत्याद्युक्तार्थम् ॥ ३

नराशंसं वाजिनं वाजयन्निह क्षयद्वीरं पूषणं सुम्नैरीमहे ।
रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥ ४

नराशंसोऽग्निर्यज्ञो वा । तं वाजिनं हविर्लक्षणेन स्तोतृभ्यो देयेन वा अन्नेन तद्वन्तम् । वाजयन् । वाजयतीत्यर्चतिकर्मा । बहुवचनस्य स्थाने एकवचनम् । स्तुवन्तः इह कर्मणि । न च केवलं नराशंसम् । किं तर्हि । क्षयद्वीरं पूषणम् । क्षि निवासगत्योः । वीराणां निवासयिता क्षयद्वीरः । षष्ठीसमासे छान्दसः पूर्वनिपातः क्षयच्छब्दस्य । पूषा ह्यस्तं गच्छन् सर्ववीरान् स्वे स्वे स्थाने निवासयति । तेनासौ क्षयद्वीर इत्युच्यते । तं क्षयद्वीरं पूषणं सुम्नैः । सुम्नमिति सुखनाम । सुखैर्हविर्भिः स्तोत्रैर्वा ईमहे याचामहे । किम् । सामर्थ्यादभिप्रेतम् । अथवा सुम्नैरित्येषैव द्वितीयार्थे तृतीया । सुखानि याचामह इति । किंच रथम् ॥ ४

बृहस्पते सदमिन्नः सुगं कृधि शं योर्यत्ते मनुर्हितं तदीमहे ।
रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥ ५

बृहस्पते सदं इत् । सदमिति सदेत्यस्य पर्यायः । इच्छब्दोऽत्र एवार्थे । सदैव नः अस्माकं सुगं कृधि । सुगमित्यपठितमपि सुखनाम द्रष्टव्यम् ।

अस्मभ्यमिन्द्र वरिवः सुगं कृधि । ऋ. वे. १. १०२. ४.

इति यथा । सुखं कुरु । न च केवलं सुखम् । किं तर्हि । शं शमं च । कस्य । सामर्थ्यादुत्पन्नानामनिष्टानां रोगादीनाम् । योः । यौतिः पृथग्भावार्थः । पृथग्भावं च ।

असम्बन्धं चेत्यर्थः । केन । सामर्थ्यादुत्पित्सुभिरनिष्टैः । अथवा [illegible] इति सुगं सुलभमत्रोच्यते । शं योरित्येताभ्यां चास्य संबन्धः । स्वश्रिगमं उत्पन्नरोगाद्युपशमं उत्पित्स्वनिष्टासम्बन्धं च नः कुर्वित्यर्थः । यत्ते तव मनुर्हितं मनुष्यहितं च किञ्चित् तत्सर्वमीमहे वयम् । किंच रथं न ॥ ५

इन्द्रं॒ कुत्सो॑ वृत्र॒हणं॒ शची॒पतिं॑ का॒टे निर्बा॑ळ्ह॒ ऋषि॑रह्वदू॒तये॑ ।

रथं॒ न दु॒र्गाद्व॑सवः सुदानवो॒ विश्व॑स्मान्नो॒ अंह॑सो॒ निष्पि॑पर्तन ॥ ६

द्वितीयपादस्थमह्वदित्याख्यातं साकांक्षत्वात् प्रथमपादेऽप्यनुषक्तव्यम् । इन्द्रं कुत्सः अह्वत् आह्वतवान् कुत्सनामायमृषिः । आत्मन एवायं परोक्षरूपेण प्रतिनिर्देशः । अहं कुत्साख्य ऋषिः आह्वतवानित्यर्थः । कीदृशम् । वृत्रहणं वृत्रस्य हन्तारम् । शचीपतिं शच्याख्यायाः स्वभार्यायाः भर्तारम् । कर्मनाम वा शचीशब्दः । सर्वयागकर्मणामधिपतिम् । न केवलं कुत्सः । किं तर्हि । काटे निबाळ्ह ऋषिरह्वत् । काट इति कूपनाम । निबाळ्ह इति निश्शब्दः प्रकर्षे । निश्शुष्कं निरुक्तमिति यथा । अतिशयेन बाध्यतेऽसाविति निबाळ्हः । कूपेऽतिसंबाधत्वात् कूपस्यातिशयेन बाध्यमानस्त्रितो नामापर ऋषिराह्वतवानित्यर्थः । किमर्थम् । ऊतये तर्पणाय पालनाय वा आत्मनः । किंच रथं न ॥ ६

दे॒वैर्नो॑ दे॒व्यदि॑ति॒र्नि पा॑तु दे॒वस्त्रा॒ता त्रा॑यता॒मप्र॑युच्छन् ।

तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑तिः॒ सिन्धुः॑ पृथि॒वी उ॒त द्यौः ॥ ७

देवैरिन्द्रादिभिः सह नः अस्मान् देवी अदितिर्निपातु नियमेन रक्षतु । न च केवला । किं तर्हि । देवश्च सविता वा आदित्यो वा अन्यो वा कश्चित् सर्वप्राणिनां त्राता अस्मानपि त्रायतां अप्रयुच्छन् । युच्छ प्रमादे । अप्रमाद्यन् । महता आदरेणेत्यर्थः । तन्नः ॥ ७

---

य॒ज्ञो दे॒वानां॒ प्रत्ये॑ति सु॒म्नमादि॑त्यासो॒ भव॑ता मृळ॒यन्तः॑ ।

आ वो॒ऽर्वाची॑ सुम॒तिर्व॑वृत्याद॒ंहोश्चि॒द्या व॑रिवो॒वित्त॒रास॑त् ॥ १

अयमस्मदीयो यज्ञो युष्माकं देवानां प्रत्येति सुम्नं सुखं प्रति साधनतामागच्छति । इष्टैः हविर्भिः स्तुतिभिश्च सम्बन्धात् सुखकरतां प्रतिपद्यत इत्यर्थः । यत एवमतो

ब्रवीमि । हे आदित्यासः भवता अस्माकं मृळयन्तः । प्रथमासमानाधिकरणोऽयं शतृप्रत्ययः छान्दसत्वात् । सुखयितार इत्यर्थः । अथवा भवतेति भवतिः सामर्थ्यात् प्राप्त्यर्थः । प्राप्नुत । इमं यज्ञमागतेत्यर्थः । किंच वः युष्माकं सुमतिः शोभनानुग्रहात्मिका बुद्धिः अर्वाची अस्मदभिमुखी आववृत्यात् । पुनः पुनरावर्तेतेत्याशास्महे । अंहोश्चित् पापस्यापि । निकृष्टस्यापि यष्टुरित्यर्थः । या वरिवोवित्तरा । वरिव इति धननाम । विन्दतिर्लाभार्थः सामर्थ्याच्चात्रान्तर्णीतण्यर्थः । धनस्यातिशयेन लंभयित्री । असद्भवति । निकृष्टायापि यष्ट्रे सा धनमतिशयेन ददातीत्यर्थः ॥ १

उप॑ नो दे॒वा अव॒सा ग॑मन्त्वङ्गि॑रसां॒ साम॑भिः स्तू॒यमा॑नाः ।
इन्द्र॑ इन्द्रि॒यैर्म॒रुतो॑ म॒रुद्भि॑रादि॒त्यैर्नो॒ अदि॑तिः॒ शर्म॑ यंसत् ॥ २

नः अस्मान् देवा इन्द्रादयः अवसा पालनेन तर्पणेन वा । तर्पणार्थं पालनार्थं वेत्यर्थः । उपागमन्तु उपागच्छन्तु । अंगिरसां सामभिः स्तूयमानाः । अंगिरसामिति अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च (पा. २ ४. ६५) इत्येवं बहुषु लुप्तप्रत्ययकमपत्यप्रत्ययान्तं द्रष्टव्यम् । पुत्रपौत्राद्यपेक्षया बहुवचनम् । सामशब्दोऽपि सामसम्बन्धात् सामसादृश्याद्वा स्तोत्रवचनः । अस्माकमङ्गिरोऽपत्यभूतानां कुत्सप्रभृतीनां स्वभूतैः सामसंबन्धिभिः सुखकरत्वादिना सादृश्येन सामसदृशैरेतैः स्तूयमाना इत्यर्थः । आगत्य च इन्द्रः इन्द्रियैः । इन्द्रजुष्टा अत्रेन्द्रियशब्देनोच्यते । य इन्द्रस्य प्रिया देवास्तैस्सहेन्द्र इत्यर्थः । मरुतः मरुद्भिः । मरुद्भिरिति मरुत्साहचर्यात् मरुज्जुष्टा उच्यन्ते । ये मरुतां प्रियास्तैस्सह मरुत इत्यर्थः । आदित्यैश्च सह नः अस्मभ्यं अदितिः शर्म गृहं वा सुखं वा यंसत् यच्छतु ददातु ॥ २

तन्न॒ इन्द्र॒स्तद्वरु॑ण॒स्तद॒ग्निस्तद॑र्य॒मा तत्स॑वि॒ता चनो॑ धात् ।
तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑तिः॒ सिन्धुः॑ पृथि॒वी उ॒त द्यौः ॥ ३

तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । यद्वयं प्रार्थयामहे पुष्टिकरं उत्कृष्टं वा तत् नः अस्मभ्यं इन्द्रः । तदेव वरुणः । तदेवाग्निः । तदेवार्यमा । तदेव सविता । चनः । चन इत्यन्ननाम । जारयायि अग्रिया चन इत्येकपदिके पठितम् । अन्नं धात् ददातु । तन्नः ॥ ३

य इ॑न्द्राग्नी चि॒त्रत॑मो॒ रथो॑ वाम॒भि विश्वा॑नि॒ भुव॑नानि॒ चष्टे॑ ।
तेना या॑तं स॒रथं॑ तस्थि॒वांसाथा॒ सोम॑स्य पिबतं॒ सुतस्य॑ ॥ १

द्वे ऐन्द्राग्ने ।

द्वे एते सूक्ते इन्द्राग्निदेवत्ये । यः हे इन्द्राग्नी चित्रतमः अतिशयेन पूज्यः विचित्ररूपो वा । रथः वां युवयोः । विश्वानि भुवनानि । भुवनशब्दोऽत्र लोकवचनः । सर्वान् लोकानभिचष्टे अभिपश्यति । अगतस्य दर्शनासंभवात् दर्शनेनात्र तद्धेतुभूतं गमनं लक्ष्यते । सर्वान् लोकान् गच्छति । न क्वचिदस्य गतिः प्रतिहन्यत इत्यर्थः । अथवा भुवनशब्दोऽपि भूतवचनः एव सामर्थ्याच्च यष्टृभूतेषु वर्तते नान्येषु । यागकारीणि यानि भूतानि तानि सर्वाणि अभिपश्यति। सर्वेषां यज्ञेषु गच्छतीत्यर्थः। तेनायातं अस्मान् प्रत्यागच्छतम् । सरथं तस्थिवांसा समानं रथमधिष्ठितवन्तौ । एकस्मिन्नेव युगपदारूढावित्यर्थः । अथानन्तरं च सोमस्य पिबतं सुतस्य । द्वितीयार्थे वा षष्ठी । षष्ठीश्रुतेर्वैकदेशमिति शेषः । सोममभिषुतं सोमस्य वाभिषुतस्य एकदेशं स्वांशलक्षणं पिबतमित्यर्थः ॥ १

याव॑दि॒दं भुव॑नं॒ विश्व॒मस्त्यु॑रु॒व्यचा॑ वरि॒मता॑ गभी॒रम् ।
तावाँ॑ अ॒यं पात॑वे॒ सोमो॑ अ॒स्त्वर॑मिन्द्राग्नी॒ मन॑से यु॒वभ्या॑म् ॥ २

यावदिदं भुवनम् । उदकनामैतत् । उदकं विश्वं सर्वमेकीभूतं सत् अस्ति भवति । कीदृशम् । उच्यते । उरुव्यचा वरिमता । उरु पृथु विस्तीर्णमिति पर्यायाः । व्यच इति व्याप्तिनाम शाकपूणिना पठितम् । उरु व्यचो यस्य स उरुव्यचः । तृतीयैकवचनस्य डादेशः । वरिमतेत्यपि उरुशब्दस्य प्रियस्थिरोरुबहुल (पा. ६. ४. १५७.) इत्येवं इमनिच् प्रत्यये वरादेशः । इमनिचश्च मघवा बहुलम् (पा. ६. ४. १२८.) इति बाहुलकात् तकारान्तादेशः । उभयत्र चेत्थंभूतलक्षणा तृतीया । विस्तीर्णव्याप्तिना पृथुत्वेन सम्बद्धं इत्यर्थः । गभीरं दुरवगाहम् । अगाधं चेत्यर्थः । तावान् अयं पातवे पातुं सोमोऽस्त्वित्याशास्महे । अरमलम् । पर्याप्तः इत्यर्थः । हे इन्द्राग्नी । किमर्थं पातुम् । उच्यते । मनसे । मनश्शब्देनात्र तत्प्रभवत्वात् प्रीतिरुच्यते । तादर्थ्ये चतुर्थी । प्रीत्यर्थमित्यर्थः । केन पातुम् । उच्यते । युवभ्याम् ॥ २

च॒क्राथे॒ हि स॒ध्र्य१॒॑ङ्नाम॑ भ॒द्रं स॑ध्रीची॒ना वृ॑त्रहणा उ॒त स्थः॑ ।
तावि॑न्द्राग्नी स॒ध्र्य॑ञ्चा नि॒षद्या॒ वृष्णः॒ सोम॑स्य वृषणा॒ वृषे॑थाम् ॥ ३

हिशब्दोऽत्र पदपूरणः। तच्छब्दश्रुतेश्च यच्छब्दोऽध्याहर्तव्यः। यौ चकाथे वृत्रहननहविर्नयनादिना स्वेन व्यापारेण कुरुथः कृतवन्तौ वा। सध्र्यक् सहगामी। सर्वत्र च युगपत् यातीत्यर्थः। नाम। उदकनामैतत्। वृष्टिलक्षणमुदकम्। भद्रं कल्याणम्। सध्रीचीना वृत्रहणौ उत। उतशब्दश्चार्थे सध्रीचीनावित्येतेन सम्बन्धयितव्यः। सहगामिनौ च यज्ञान् प्रति हे वृत्रहणौ वृत्रस्य हन्तारौ स्थः भवथः। तौ हे इन्द्राग्नी सध्र्यञ्चा सहगामिनौ। सहागत्येत्यर्थः। निषद्यासद्यीये बर्हिषि। उपविश्य वृष्णः सोमस्य। वृष्टिहेतुत्वात् सोमो वृषोच्यते। द्वितीयार्थे वा षष्ठी। षष्ठीश्रुतेर्वैकदेशमिति शेषः। वर्षितारं सोमं वर्षितुर्वा सोमस्यैकदेशं स्वांशलक्षणम्। हे वृषणा आवृषेथां आसिञ्चतं स्व उदरे। पिबतमित्यर्थः॥ ३

समिद्धेष्वग्निष्वानजाना यतस्रुचा बर्हिरु तिस्तिराणा।

तीव्रैः सोमैः परिषिक्तेभिरर्वागिन्द्राग्नी सौमनसाय यातम्॥ ४

मध्यमपुरुषसंयोगात् प्रत्यक्षकृतोऽयं मन्त्रः। आनजाना इत्यादीनि च नामन्त्रितानि। अतो यत्तच्छब्दावध्याहृत्य एकवाक्यता नेया। यौ युवां समिद्धेषु आहवनीयादिषु आनजाना। अञ्जेर्गत्यर्थस्येदं रूपम्। आगतवन्तौ। यौ च यतस्रुचा। सर्वैः यजमानैरुद्यता स्रुचो ययोरर्थाय तौ यतस्रुचौ। बर्हिरु तिस्तिराणा। उकारः पदपूरणः चार्थे वा। तिस्तिराणा इत्यपि ऋत्विक्कर्तृकस्यापि स्तरणस्य हेतुभूतत्वात् इन्द्राग्नी एव कर्तारावुच्येते। बर्हिः स्तीर्णवन्तौ। तौ तीव्रैः सोमैः परिषिक्तेभिः। तीव्रशब्दः कटुकवचनः तिक्तवचनो वा। परिषिक्तशब्दोऽपि दशापवित्रे सर्वतः सिक्तत्वात् दशापवित्रपरिपूतवचनः। कटुकरसैस्तिक्तरसैर्वा सोमैर्दशापवित्रेण परिपूतैः। तीव्रादिगुणान् सोमान् पातुमित्यर्थः। अर्वाक्। क्रियाविशेषणमेतत्। अस्मदभिमुखम्। हे इन्द्राग्नी सौमनसाय आत्मनः अस्माकं वा प्रीत्यर्थमित्यर्थः। आयातं आगच्छतम्॥ ४

यानीन्द्राग्नी चक्रथुर्वीर्याणि यानि रूपाण्युत वृष्ण्यानि।

या वां प्रत्नानि सख्या शिवानि तेभिः सोमस्य पिबतं सुतस्य॥ ५

यानि हे इन्द्राग्नी चक्रथुः वीर्याणि वीरकर्माणि। यानि चातिशयवद्देवतामाहात्म्ययोग्यानानाप्रकाराण्यात्मनो रूपाणि। उत वृष्ण्यानि। वृष्ण्यमित्यपठितमपि बलनाम वृष्टिपर्यायो वा। बलानि वृष्टीर्वा। यानि च वां युवयोः प्रत्नानि। प्रत्नमिति

पुराणनाम । चिरन्तनान्यस्माभिः सह सख्यानि शिवानि सुखानि । ताभिः । हेताविवियं तृतीया । तैः हेतुभिः । यस्मात् वीरकर्मकरणादियुक्तौ स्थः तस्मादित्यर्थः । सोमस्य पिबतं सुतस्य ॥ ५

यदब्र॑वं प्रथ॒मं वां॑ वृणा॒नो॒३ऽयं सोमो॒ असु॑रैर्नो वि॒हव्यः॑ ।
तां स॒त्यां श्र॒द्धाम॒भ्या हि या॒तमथा॒ सोम॑स्य पिबतं सु॒तस्य॑ ॥ ६

यदिति सप्तम्या एकवचनस्य लुक् । यस्यां कर्मसन्ततौ । अब्रवं ब्रवीम्यहम् । प्रथममग्रे । किम् । सामर्थ्यात् स्तुतीः । कस्य । वां युवयोः । वृणानः । वरणमभ्यर्थना । स्तुतीरस्मदीयाः शृणुतमित्यभ्यर्थयमानः । अयं सोमः असुरैः । असुरिति प्राणनाम । तद्वन्तोऽसुरा ऋत्विजः । तैर्नः अस्माकं स्वभूतैः । विहव्यः विविधं होतव्यः । तां सत्यां श्रद्धाम् । श्रद्धाशब्दोऽत्रान्तर्णीतमत्वर्थः । श्रद्धावतीम् । परया भक्त्या प्रारब्धामित्यर्थः । अभ्याहि यातम् । हिशब्दः पदपूरणः । अभ्यागच्छतम् । अथ अभ्यागमनानन्तरं च सोमस्य पिबतं सुतस्य ॥ ६

यदि॑न्द्राग्नी॒ मद॑थः॒ स्वे दु॑रो॒णे यद्ब्र॒ह्मणि॒ राज॑नि वा यजत्रा ।
अतः॒ परि॑ वृषणा॒वा हि या॒तमथा॒ सोम॑स्य पिबतं सु॒तस्य॑ ॥ ७

यदिति निपातो यदिशब्दस्यार्थे । यदि हे इन्द्राग्नी मदथः तृप्यथः । स्वे दुरोणे अस्मदीये गृहे । यत् यदि ब्रह्मणि राजनि वा । ब्रह्मन्शब्दोऽत्र ब्राह्मणशब्देन समानार्थः । राजञ्छब्दोऽपि राजन्यजातिवचनः । उभयत्र च षष्ठ्यर्थे सप्तमी । ब्राह्मणस्य राजन्यस्य वा गृहे इत्यर्थः । हे यजत्रा यष्टव्यौ । अतः । परीति सर्वतोभावे । अतः सर्वतः एतेभ्यः । सर्वेभ्यो गृहेभ्य इत्यर्थः । हे वृषणा वर्षितारौ । आ हि यातमित्यायुक्तार्थम् ॥ ७

यदि॑न्द्राग्नी॒ यदु॑षु तु॒र्वशे॑षु॒ यद्द्रु॒ह्युष्वनु॑षु पू॒रुषु॒ स्थः ।
अतः॒ परि॑ वृषणा॒वा हि या॒तमथा॒ सोम॑स्य पिबतं सु॒तस्य॑ ॥ ८

यदि हे इन्द्राग्नी यदुषु । पञ्चाप्येतानि राज्ञां नामधेयानि सोऽयमित्यभिसंबन्धात्तदपत्ये प्रयुज्यन्ते । षष्ठ्यर्थे चात्र सर्वत्र सप्तमी । दुरोण इत्येतच्च पूर्वस्या ऋचोऽनुषज्यते । यदु इत्यादिभिरेव वा स्वामिशब्दैः स्वभूतानि गृहाण्युपलक्ष्यन्ते ।

यदुपुत्रगृहेष्वित्यर्थः । यदि तुर्वशेषु । यदि द्रुह्युषु । यद्यनुषु । यदि पूरुषु । सांप्रतं वर्तेथे इत्यर्थः ॥ ८

यदि॑न्द्राग्नी अ॒व॒मस्यां॑ पृथि॒व्यां म॑ध्य॒मस्यां॑ प॒र॒मस्यां॑मु॒त स्थः ।
अतः॒ परि॑ वृषणा॒वा हि या॒तमथा॒ सोम॑स्य पिबतं सु॒तस्य॑ ॥ ९

यदि हे इन्द्राग्नी अवमस्याम् । अवम इत्यन्तिकनाम । सन्निकृष्टायां पृथिव्याम् । अस्मिन्नेव लोके इत्यर्थः । यदि मध्यमस्यां मध्यमायामन्तरिक्ष इत्यर्थः । परमस्यामुत स्थः परमायां वा द्युलक्षणायां स्थः । अतः परीत्याद्युक्तार्थम् ॥ ९

यदि॑न्द्राग्नी प॒र॒मस्यां॑ पृथि॒व्यां म॑ध्य॒मस्या॑मव॒मस्यां॑मु॒त स्थः ।
अतः॒ परि॑ वृषणा॒वा हि या॒तमथा॒ सोम॑स्य पिबतं सु॒तस्य॑ ॥ १०

पदविपर्ययमात्रयोगात् पूर्वयैव समानार्थः ॥ १०

यदि॑न्द्राग्नी दि॒वि ष्ठो यत्पृ॑थि॒व्यां यत्पर्व॑ते॒ष्वोष॑धीष्व॒प्सु ।
अतः॒ परि॑ वृषणा॒वा हि या॒तमथा॒ सोम॑स्य पिबतं सु॒तस्य॑ ॥ ११

यदि हे इन्द्राग्नी दिवि द्युलोके स्थः यदि पृथिव्यां यदि पर्वतेषु यदि ओषधीषु यद्यप्सु अतः ॥ ११

यदि॑न्द्राग्नी उदि॑ता सूर्य॑स्य मध्ये॑ दि॒वः स्वधया॑ मा॒दये॑थे ।
अतः॒ परि॑ वृषणा॒वा हि या॒तमथा॒ सोम॑स्य पिबतं सु॒तस्य॑ ॥ १२

यदि हे इन्द्राग्नी उदिता उदयेऽस्य सूर्यस्य । आदित्योदयवेलायामित्यर्थः । यदि मध्ये दिवः । द्यु इत्यहर्नाम । मध्ये अह्नः । स्वधया सोमलक्षणेनान्नेन मादयेथे अन्येषां यजमानानां गृहेषु तर्पयथः आत्मानम् । स्वार्थिकोऽत्र णिच् । तृप्यथः । अतः ॥ १२

ए॒वेन्द्रा॑ग्नी पपि॒वांसा॑ सु॒तस्य॒ विश्वा॒स्मभ्यं॒ सं ज॑यतं॒ धना॑नि ।
तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑तिः॒ सिन्धुः॑ पृथि॒वी उ॒त द्यौः ॥ १३

एवमुक्तेन प्रकारेण हे इन्द्राग्नी पपिवांसा पीतवन्तौ सन्तौ । सुतस्य सुतं सोमं सुतस्य वा सोमस्य स्वांशलक्षणमेकदेशम् । विश्वा सर्वाणि अस्मभ्यमस्मदर्थम् । अस्मभ्यं दातुमित्यर्थः । सम्यग्जयतं धनानि । तन्नः ॥ १३

---

वि ह्यख्यं मनसा वस्य इच्छन्निन्द्राग्नी ज्ञास उत वा सजातान् ।
नान्या युवत्प्रमतिरस्ति मह्यं स वां धियं वाजयन्तीमतक्षम् ॥ १

वि अख्यमित्येतद्विचष्टे इत्येतस्य पश्यतिकर्मणो रूपम् । हिशब्दस्तु पदपूरणः । युवामहं विविधं पश्यामि मनसा । वस्यः वसूनि धनानि इच्छन् । हे इन्द्राग्नी । कीदृशौ । उच्यते । ज्ञासः उत वा सजातान् । अयोनिसम्बन्धा ये ज्ञातयः ते इह ज्ञास उच्यन्ते । योनिसम्बन्धास्सजाताः । व्यत्ययेन द्विवचनस्य स्थाने बहुवचनम् । ज्ञाती सजातौ च । युवामेव मम ज्ञाती युवामेव सजाताविल्येवं पश्यामीत्यर्थः । अथवा ज्ञासः सजातानित्यनयोः बहुवचनान्तत्वादिन्द्राग्नीविषयत्वासंभवात् कर्मश्रुतेश्च साकांक्षत्वात् अनादृत्येति योग्यक्रियापदाध्याहारः । ज्ञातीन् सजातींश्चानादृत्य युवां पश्यामीत्यर्थः । किंच नान्या युवत् युवाभ्यामन्या देवता प्रमतिरस्ति मह्यम् । प्रमतिरिति मन्यतेरर्चतिकर्मणो रूपम् । कर्मणि चैष क्तिन् द्रष्टव्यः । मह्यमित्यपि षष्ठ्यर्थे चतुर्थी । प्रकर्षेण स्तुत्यास्ति मम । युवां मुक्त्वा नाहमन्या देवताः प्रकर्षेण स्तौमीत्यर्थः । योऽहमीदृशः स वां युवयोः धियं स्तुतिं कर्म यागलक्षणं वा । यागं स्तुतिं वेत्यर्थः । कीदृशीम् । वाजयन्तीम् । तद्वदर्थे अत्र व्यप्रत्ययो द्रष्टव्यः नेच्छायाम् ।

अश्वयुर्गव्यू रथयुर्वसूयुः । ऋ. वे १. ५१. १४.

इति यथा । हविर्लक्षणेनान्नेन तद्वतीम् । हविस्संयुक्तामित्यर्थः । अतक्षं करोमि कृतवान् वा ॥ १

अश्रवं हि भूरिदावत्तरा वां विजामातुरुत वा घा स्यालात् ।
अथा सोमस्य प्रयती युवभ्यामिन्द्राग्नी स्तोमं जनयामि नव्यम् ॥ २

हिशब्दो यस्मादर्थे । यस्मादहमश्रवं श्रुतवानहम् । किम् । उच्यते । भूरिदावत्तरा बहुनो धनस्य दातारौ । कौ । उच्यते । वां युवाम् । कुतः । उच्यते । विजामातुः । जामातृशब्दोऽत्र तद्गुणोपलक्षणार्थो द्रष्टव्यः । धनवत्ताव्यतिरिक्तैः कुली-

नत्वादयः । विगता जामातृगुणा यस्य स विजामाता क्रीतापतिरुच्यते । स हि विगुणत्वात् धनेनोपप्रलोभयन् अतिशयेन बहु ददाति । ततो युवां बहुदातृतरौ । न विजामातुरेव । किं तर्हि । उत वा घा स्यालात् । वाशब्दश्चार्थे । घशब्दः पदपूरणः । अपिच स्यालात् । स्यालो हि भगिनीप्रियचिकीर्षया भगिनीभर्त्रेऽतिशयेन बहु ददाति । ततोऽपि युवां बहुदातृतरौ । अथ एतस्मात् कारणात् । सोमस्य प्रयती । प्रयतिर्दानार्थः । सहयोगे चैषा तृतीया । सोमस्य प्रदानेन सह । युवभ्यां युष्मदर्थे हे इन्द्राग्नी । स्तोमं जनयामि स्तोमं च ददामि । स्तोमं च करोमीत्यर्थः । नव्यं नवं अन्यैरकृतपूर्वम् ॥ २

मा च्छे॑द्म र॒श्मीँरिति॒ नाध॑मानाः पितॄ॒णां श॒क्तीर॑नु॒यच्छ॑मानाः ।
इ॒न्द्रा॒ग्निभ्यां॒ कं वृष॑णो मदन्ति॒ ता ह्यद्री॒ धि॒षणा॑या उ॒पस्थे॑ ॥ ३

य एते सर्वयजमानानां यागनिष्पत्त्यर्थं प्रकाशं कुर्वन्ति एतान् मा च्छेद्म मा आत्मनि विच्छिदाम रश्मीन् । कः पुनः रश्मीनां विच्छेदः । यदर्थं ते प्रकाशं कुर्वन्ति तस्य यागस्य क्रियाघातं माकार्षम् । सततयागादहं सुयागान् कुर्यामित्यर्थः । इति नाधमानाः । इतिशब्दः एवमित्यस्यार्थे । नाधतिर्याच्ञार्थः । एवं याचमानाः । सर्वदा यागक्रियां प्रार्थयमाना इत्यर्थः । पितॄणां शक्तीः । शक्तिरिति कर्मनाम । पितॄणां च सम्बन्धीनि प्रजोत्पत्यादीनि कर्माणि । अनुयच्छमानाः । यमिर्बन्धनार्थः । अनुबध्नन्तः । प्रजोत्पत्यादिकर्मसन्तानाविच्छेदार्थमित्यर्थः । किं कुर्वन्ति । उच्यते । इन्द्राग्निभ्यामर्थाय । कमिति पदपूरणः । वृषणः वर्षितारः सोमस्य । इन्द्राग्निभ्यां सोमस्य दातारः । मदन्ति मदतीत्यर्चतिकर्मा । स्तुवन्तीन्द्राग्नी । किंच तौ इन्द्राग्नी । अद्री आदरयितारौ । धिषणायाः स्तुतिलक्षणाया वाचः । तथा तथा स्तोतॄणामुपकुरुतं यथा यथा एनौ स्तोतारः आद्रियन्ते इत्यर्थः । क्व । उपस्थे । उपगम्य ब्राह्मणा देवा वा यत्र तिष्ठन्ति स उपस्थो यज्ञः ॥ ३

यु॒वाभ्यां॑ दे॒वी धि॒षणा॒ मदा॒येन्द्रा॑ग्नी॒ सोम॑मुश॒ती सु॑नोति ।
ताव॑श्विना भद्रहस्ता सुपाणी॒ आ धा॑वतं॒ मधु॑ना पृ॒ङ्क्तम॒प्सु ॥ ४

युवाभ्यामिति षष्ठ्यर्थे चतुर्थी । मदायेत्येतेन चास्य सम्बन्धः । तावश्विनेति तच्छब्दाद्यच्छब्दोऽध्याहार्यः । युवयोर्मदार्थं देवी धिषणा । दीव्यतिरत्र स्तुत्यर्थः । स्तोत्री अस्मदीया वाक् । हे इन्द्राग्नी । सोममुशती तांस्तानभिप्रेतानर्थान् कामयमाना ।

सुनोति अभिषुणोति । यच्च देवनकामनाभिषवेषु आत्मनः कर्तृत्वं तदिदं कारण-भूतायां वाचि उपचर्यते । ययोर्युवयोर्मदार्थमहं स्तुतिलक्षणया वाचा तांस्तानभि-प्रेतान् उशान् सोममभिषुणोमीत्यर्थः । तौ अश्विनौ अश्ववन्तौ । भद्रहस्ता कल्याण-हस्तौ । मंगल्यहस्तावित्यर्थः । सुपाणी शोभनहस्तौ । सुरूपहस्तावित्यर्थः । आधाव-तम् । धावतीति गतिकर्मा । आगच्छतम् । आगत्य च मधुना पृङ्क्तं मधुस्वादेन सोमेन संपर्कयतं आत्मानं अप्सु । तृतीयार्थे सप्तमी । तच्छ्रुतेश्च योग्यक्रियापदाध्याहारः । अद्भिः संस्तुतेन । मधुरं सोममद्भिः संस्तुतं पिबतमित्यर्थः ॥ ४

युवामिन्द्राग्नी वसुनो विभागे तवस्तमा शुश्रव वृत्रहत्ये ।
तावासद्या बर्हिषि यज्ञे अस्मिन्प्र चर्षणी मादयेथां सुतस्य ॥ ५

युवां हे इन्द्राग्नी वसुनो धनस्य विभागे तवस्तमा । तवः इति बलनाम साम-र्थ्याच्चात्रान्तर्णीतमत्वर्थः । बलवत्तमौ । शुश्रव श्रुतवानहम् । धनं स्तोतृभ्यो विभजतो युवयोः ये प्रतिबन्धे वर्तन्ते तान् बलेन हन्तुमतिशयेन समर्थौ युवामहं शुश्रावेत्यर्थः । न च केवले वसुनो विभागे । किं तर्हि । वृत्रहत्ये वृत्रहनने । यावीदृशौ स्थः तौ आसद्य निषद्य बर्हिषि यज्ञे अस्मिन् अस्मदीये । हे चर्षणी । मनुष्यनाम वा चर्षणीशब्दः । अथवा विचर्षणिर्विश्वचर्षणिरिति पश्यतिकर्मसु पाठात् द्रष्टृशब्दपर्यायः । मनुष्या-कारौ द्रष्टारौ वा सर्वार्थानाम् । प्रमादयेथां तर्पयेथां आत्मानं सुतस्य । तृतीयार्थे षष्ठ्येषा । षष्ठीश्रुतेर्वा ऽेकदेशेनेति शेषः । सुतेन सोमेन सुतस्य सोमस्य वा एकदेशेन स्वांशलक्षणेन ॥ ५

प्र चर्षणिभ्यः पृतनाहवेषु प्र पृथिव्या रिरिचाथे दिवश्च ।
प्र सिन्धुभ्यः प्र गिरिभ्यो महित्वा प्रेन्द्राग्नी विश्वा भुवनात्यन्या ॥ ६

प्र इत्येषोऽतीत्येतस्य स्थाने । प्रतिशब्दं च रिरिचाथे इत्याख्यातमनुषक्तव्यम् । अतिरिच्येथे युवाम् । कुतः चर्षणिभ्यः । क । पृतनाहवेषु संग्रामाह्वानेषु । केन । सामर्थ्यात् बलेन । किंच अतिरिच्येथे युवां पृथिव्या दिवश्च । न च केवलाभ्यां द्यावापृथिवीभ्याम् । किं तर्हि । अतिरिच्येथे सिन्धुभ्यः नदीभ्योऽपि । अतिरिच्येथे गिरिभ्यः पर्वतेभ्योऽपि । केन । महित्वा महत्वेन । किंच अतिरिच्येथे युवां हे इन्द्राग्नी विश्वा भुवना अति अन्या । विश्वा भुवनेति कर्मश्रुतेरतीति चोपसर्गाद्योग्यक्रिया-

पदाध्याहारः। सर्वाणि भूतान्यतीत्य अन्यानि। नान्यः कश्चिदतिरिच्यते यथा युवामित्यर्थः॥ ६

आ भरतं शिक्षतं वज्रबाहू अस्माँ इन्द्राग्नी अवतं शचीभिः।
इमे नु ते रश्मयः सूर्यस्य येभिः सपित्वं पितरो न आसन्॥ ७

आभरतं धनानि। आहृत्य च शिक्षतं दत्तमस्मभ्यम्। हे वज्रबाहू। वज्रसम्बन्धाद्धस्तावत्र बाहू उच्येते। वज्रहस्तौ। किंच अस्मान् हे इन्द्राग्नी अवतं पालयतम्। शचीभिः स्वाभिः कर्मभिः वा पालनाख्यैः। किंच इमे नु त इत्यादि। इमे ते रश्मयः सूर्यस्य रश्मयः स्वभूताः। येभिः सपित्वं सह पानं पितरो नः अस्माकं पितरोऽङ्गिरसः आसन्। अस्तिरत्र प्राप्त्यर्थः। प्राप्ताः। दृश्यते ह्यस्तेः प्राप्तौ प्रयोगः यं कामयेत राष्ट्रीयमयं राष्ट्रं स्यादिति। अंगिरसो हि देवानां सखायः। तेषां सखित्वाद्रश्मिभिरन्यैश्च देवैः सहोपपन्नं सहपानम्। कथं पुनरस्यार्धर्चस्य पूर्वेण सहैकवाक्यता। अभिजन्मप्रदर्शनेन। एतदुक्तं भवति। ये रश्मिभिः सह पानं प्राप्ता अंगिरसः ते नः पितरः। तेन विशिष्टाभिजनोपेतत्वादन्नदानपालनार्हा वयम्। अतोऽस्मभ्यं दत्तं पालयतं चास्मानिति॥ ७

पुरंदरा शिक्षतं वज्रहस्तास्माँ इन्द्राग्नी अवतं भरेषु।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः॥ ८

हे पुरन्दरा असुरपुराणां दारयितारौ। शिक्षतं दत्तमस्मभ्यम्। हे वज्रहस्ता। किंचास्मान् हे इन्द्राग्नी अवतं भरेषु संग्रामेषु। तन्नः॥ ८

---

ततं मे अपस्तदु तायते पुनः स्वादिष्ठा धीतिरुचथाय शस्यते।
अयं समुद्र इह विश्वदेव्यः स्वाहाकृतस्य समु तृप्णुत ऋभवः॥ १

आर्भवे द्वे।

ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवुः। तेऽतिशयवद्भिः कर्मभिर्देवत्वमीयुः। तेऽत्र साहचर्यादन्यतमवचनेनाप्यृभुशब्देन सर्वे प्रतिपाद्यन्ते। तद्देवत्ये द्वे एते सूक्ते। ततं पूर्वस्मिन् काले विततं मे मम स्वभूतं अपः यज्ञाख्यं

कर्म। तदु तायते पुनः। उकार एवार्थे। तदेव इदानीमपि पुनस्तायते। पूर्वस्मिंश्च काले इदानीं चाहं यष्टेत्यर्थः। किंच स्वादिष्ठा अतिशयेन स्वाद्वी। मनसः प्रीतिकरीत्यर्थः। धीकर्मत्वात् स्तुत्या वा। प्रतिधीयमानत्वात् स्तुतिरत्र धीतिरुच्यते। उचथाय। उचथः स्तुतिवचनार्हः। तस्मै। शस्यते तस्मै स्तुतिरुच्यते इत्यर्थः। किंच अयं समुद्रः समुद्रसदृशः अत्यन्तप्रभूतः सोमः। इह यज्ञे विश्वदेव्यः सर्वदेवयोग्यभूतः। सम्यक् स्तुतश्चेत्यर्थः। एतत् सर्वं ज्ञात्वा स्वाहाकृतस्य। तृतीयार्थे षष्ठ्येषा। स्वाहाकृतेन सोमेनाहुतेनेत्यर्थः। समु तृप्णुत सम्यक् तृप्यत। उकारस्तु पदपूरणः। हे ऋभवः॥ १

आभोगयं प्र यदिच्छन्त ऐतनापाकाः प्राञ्चो मम के चिदापयः।
सौधन्वनासश्चरितस्य भूमनागच्छत सवितुर्दाशुषो गृहम्॥ २

अत्रेतिहासमाक्षते। ऋभवो यज्ञियत्वं प्रार्थयमानाः प्रजापतेः सकाशमगमन्। अथ प्रजापतिः सवितारमाहूयावोचत्। एतेऽपि यज्ञिया भवन्त्विति। तथेति सविता प्रतिपद्य तान् स्वगृहं नीत्वा द्वादश दिनान्यातिथ्यमेषामकार्षीदिति। तदेतद्वामदेवो वक्ष्यति।

द्वादश द्यून्यदगोह्यस्या। ऋ. वे. ४. ३३ ७.

इति। तदेवेहाप्युच्यते आभोगयं इत्यादिना। आभोगः संभोगः इति पर्यायौ। आभोग एवाभोगयः। स्वार्थिको यशब्दः उपजनः। देवैस्सह संभोगमिच्छन्तः। यज्ञियत्वं प्रार्थयमाना इत्यर्थः। यत् यदा यूयं प्र ऐतन। प्रशब्दोऽत्र धात्वर्थानुवादी लंबते प्रलम्बत इति यथा। प्रजापतेः सकाशं गताः स्थ। कीदृशाः। अपाकाः अपक्तव्यप्रज्ञाः। अत्यन्तपरिपक्वप्रज्ञा इत्यर्थः। प्राञ्चः। अञ्च गतिपूजनयोः। प्रगन्तारो देवान् यज्ञान् वा प्रति प्रकर्षेण वा पूजयितारो देवानां स्वयं वा पूज्याः। मम कुत्सस्य। केचित् आपयः ज्ञातयः। कुत्सो ह्याङ्गिरसः। ऋभवोऽपि सुधन्वन आङ्गिरसस्य पुत्राः। अत आङ्गिरसत्वात् कुत्सस्य भवन्त्यृभवः केचित् ज्ञातयः। यदेति वचनात्तदेत्यध्याहार्यम्। तदा हे सौधन्वनासः सुधन्वनः पुत्राः। एकचमसस्य चतुष्टयकरणादेव स्वस्य चरितस्य भूमना माहात्म्येन। अगच्छत गताः स्थ। सवितुर्गृहं दाशुषः। यज्ञियत्वमातिथ्यं वा युष्मभ्यं दत्तवतः॥ २

तत्सविता वोऽमृतत्वमासुवदगोह्यं यच्छ्रवयन्त ऐतन।
त्यं चिच्चमसमसुरस्य भक्षणमेकं सन्तमकृणुता चतुर्वयम्॥ ३

तत् तदा सविता वः युष्माकं अमृतत्वं देवत्वं आसुवत् अनुज्ञातवान्। अत्यन्ततेजस्वित्वात् गूहितुमशक्यं सवितारं प्रति यत् यदा श्रवयन्तः हविर्लक्षणमातिथ्यसम्बन्धि वा अन्नमिच्छन्तः। ऐतन गताः स्थ। यदातिथ्यमनुभवितुं सवितुर्गृहं गता इत्यर्थः। त्यं चित् तं चित्। तच्छब्दसमानार्थत्यच्छब्दश्रुतेः

एकं चमसं चतुरः कृणोतन। ऋ. वे. १. १६१. २.

इत्यादिमन्त्रान्तरदृष्टार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः। चिच्छब्दोऽपि चार्थे। यः देवैः प्रहितोऽग्निरेकं चमसं चतुर इत्येवमुपन्यस्तवान् तं चमसं असुरस्य भक्षणम्। असुरिति प्राणनाम। तद्वानसुरः। कोऽसौ। त्वष्टा। कुत एतत्।

उत त्यं चमसम्। ऋ वे. १. २०. ६

इति मन्त्रान्तरदर्शनात्। प्राणवतस्त्वष्टुर्भक्षणं एकं सन्तमकृणुत कृतवन्तः स्थ। चतुर्वयम्। वेतिर्गत्यर्थः। चतुर्गतिः। एकस्माच्चमसात् तदविनाशेन चतुरश्चमसान् कृतवन्तः स्थेत्यर्थः॥ ३

विष्ट्वी शमी तरणित्वेन वाघतो मर्तासः सन्तो अमृतत्वमानशुः।

सौधन्वना ऋभवः सूरचक्षसः संवत्सरे समपृच्यन्त धीतिभिः॥ ४

विष्ट्वीति न कर्मनाम शमीत्यनेन पौनरुक्त्यप्रसङ्गात्। किं तर्हि। विषेर्व्याप्त्यर्थस्य क्रियाशब्दोऽयं विष्ट्वीति। विष्ट्वा व्याप्त्वा। कृत्वेत्यर्थः। शमी। कर्मनामैतत्। एकचमसचतुष्टयकरणादीनि कर्माणि। तरणित्वेन। तरणिरिति क्षिप्रनाम। क्षिप्रत्वेन। शीघ्रमित्यर्थः। वाघतः। ऋत्विङ्नामैतत् सामर्थ्याच्चेहान्तर्णीतमत्वर्थम्। ऋत्विग्वन्तः। यष्टार इत्यर्थः। मनुष्यास्सन्तो देवत्वमानशुः प्राप्ताः। के। उच्यते। सुधन्वनः पुत्रा ऋभवो नाम। कीदृशाः। उच्यते। सूरचक्षसः सूर्यसमानदर्शनाः। सूर्यवत्तेजस्विनः प्रज्ञावन्तो वेत्यर्थः। प्राप्य च देवत्वं संवत्सरे समपृच्यन्त धीतिभिः। धीतिशब्दः कर्मवचनः। संवत्सरे यावन्ति कर्माणि यज्ञाख्यानि तैः सर्वैः संपृक्ताः। सर्वयज्ञेषु भागार्हत्वं प्राप्ता इत्यर्थः॥ ४

क्षेत्रमिव वि ममुस्तेजनेनँ एकं पात्रमृभवो जेहमानम्।

उपस्तुता उपमं नाधमाना अमर्त्येषु श्रव इच्छमानाः॥ ५

क्षेत्रमिव विममुः। यथा कश्चिद्रज्ज्वा दण्डेन वा क्षेत्रं विमिमते। तद्वद्विमितवन्त इत्यर्थः। कीदृशेन। तेजनेन। तिज निशातने। निशितेन। केन। सामर्थ्यात्

व्यथनेन । तेन हि रथकारा विमिमते । अथवा तेजनशब्दः तेजःपर्यायः । स्वेन तेजसा । किं विममुः । एकं चमसाख्यं पात्रं । के । ऋभवः । जेहमानम् । जेहते इति गतिकर्मा । चतुर्धागतम् । चतुष्ट्वं प्रतिपद्यमानमित्यर्थः । कीदृशाः । उपस्तुताः । उपेत्येतत् समित्येतस्य स्थाने । सर्वस्तोतृभिः संस्तुताः । उपमं नाधमानाः । उपम इत्यन्तिकनाम । अन्तरेणापि भावप्रत्ययं सामर्थ्यादिहान्तिकत्वे द्रष्टव्यम् । नाधिर्याच्ञार्थः । सन्निकृष्टत्वं प्रार्थयमानाः । कस्य । सामर्थ्याद्देवानाम् । देवेष्वन्तर्गतिमिच्छन्त इत्यर्थः । न चान्तर्गतिमेव केवलाम् । अमर्त्येषु । निर्धारणे षष्ठी चात्र सप्तमी । देवानां मध्ये । हविर्लक्षणमन्नमिच्छन्त इत्यर्थः ॥ ५

आ म॑नी॒षाम॒न्तरि॑क्षस्य॒ नृभ्य॑ः स्रु॒चेव॑ घृ॒तं जु॑हवाम वि॒द्मना॑ ।
त॒र॒णि॒त्वा ये पि॒तुर॑स्य सश्चि॒र ऋ॒भवो॒ वाज॑मरुहन्दि॒वो रज॑ः ॥ ६

आ इत्युपसर्गो जुहवामेत्याख्यातेन संबन्धयितव्यः । मनीषां स्तुतिमन्तरिक्षस्य । षष्ठीश्रुतेरत्र योग्यां सदृशीं वेत्यध्याहर्तव्यम् । अतिमहतोऽन्तरिक्षस्यापि योग्यां सदृशीं वा । अत्यन्तमहतीमित्यर्थः । नृभ्यः मनुष्याणामृभूणामर्थाय । मनुष्यानृभून् स्तोतुमित्यर्थः । स्रुचेव घृतमाजुहवाम । आकारोऽत्र मर्यादायाम् । यथा कश्चिदाहवनीयादौ स्रुचा घृतं मर्यादया प्रक्षिपेत् एवं प्रक्षिपामः उच्चारयामेत्येतदाशास्महे । विद्मना स्वेन ज्ञानेन । ये ऋभवः किं कृतवन्तः । तरणित्वा क्षिप्रत्वेन ये पितुः सर्वप्राणिनां पितृभूतस्य पालयितुर्वा अस्य सवितुः स्वभूतं सश्चिरे । सश्चतिर्गतिकर्मा । सोपसर्गार्थेऽयं द्रष्टव्यः । अधिगतवन्तः । लब्धवन्त इत्यर्थः । ऋभवः आतिथ्यसम्बन्धि अन्नम् । आरूढवन्तश्च दिवः अवयवभूतं रजः लोकम् । देवलोकं चारूढवन्त इत्यर्थः ॥ ६

ऋ॒भुर्न॒ इन्द्र॒ः शव॑सा॒ नवी॑यानृ॒भुर्वाजे॑भि॒र्वसु॑भि॒र्वसु॑र्द॒दिः ।
यु॒ष्माकं॑ देवा॒ अव॒साह॑नि प्रि॒ये॒३॒॑ऽभि ति॑ष्ठेम पृत्सु॒तीरसु॑न्वताम् ॥ ७

ऋभुः नः अस्माकं इन्द्रश्च ऋभूणां सखित्वात् । अथवा इन्द्र इति ऋभोर्विशेषणम् । इन्द्रसदृशः अत्यन्तेश्वरो वा । शवसा बलेन सामर्थ्यलक्षणेन । यदस्माकं स्तुतिकरणसामर्थ्यं तेन सर्वेण । नवीयान् अतिशयेन स्तुत्यः । किंच ऋभुः वाजेभिः । अन्यतरवचनेनापि वाजशब्देनात्र साहचर्याद्वाजो विभ्वा चोच्येते । व्यत्ययेन च द्विवचनस्य स्थाने बहुवचनम् । वाजविभ्वाभ्याम् । वसुभिश्च सह वसुः । अन्तर्णीतमत्वर्थमेतत् ।

धनवान्। ददिः स्तोतृभ्यो यष्टृभ्यश्च साधु दाता । किम् । सामर्थ्यात् सर्वानभिप्रेतानर्थान् । अथवा वसुरिति व्यत्ययेन पुंलिङ्गता। वसु ददिः धनं दातेत्यर्थः। आर्भवत्वाच्चास्य सूक्तस्य ऋभुविभ्वावाजानामेवात्र प्राधान्यं द्रष्टव्यं न सहयोगमात्रं निर्दिष्टानां वसूनामपि। परोऽर्धर्चः प्रत्यक्षकृतत्वात् भिन्नं वाक्यम्। युष्माकं हे देवाः अवसा तर्पणेन हेतुना। युष्मान् सोमेन तर्पयन्त इत्यर्थः । क्व। अहनि यागदिवसे। प्रिये सर्वमनुष्याणाम् । अभितिष्ठेम । अभितिष्ठतिरत्र सामर्थ्याज्जयार्थः। जयेम वयम् । पृत्सुतीः । पृत्सु तायन्ते विस्तीर्यन्ते इति पृत्सुतयः सेनाः । असुन्वतां सोमाभिषवमकुर्वतां शत्रूणां स्वभूताः । ये युष्मान्न यजन्ते अस्मच्छत्रवः तेषां स्वभूता इत्यर्थः॥ ७

निश्चर्म॑ण ऋभवो॒ गाम॑पिंशत॒ सं व॒त्सेना॑सृजता मा॒तरं॒ पुनः॑ ।
सौध॑न्वनासः स्वप॒स्यया॑ नरो॒ जिव्री॒ युवा॑ना पि॒तरा॑कृणोतन ॥ ८

अत्रेतिहासमाचक्षते । ऋषेः कस्यचिदग्निहोत्रधेनुस्तरुणवत्सा ममार। तस्यां विकर्तितायां आरुदता वत्सेन उद्वेजितः ऋभून् स्वपितरौ वृद्धौ पुनर्युवानौ कुर्वतो ददर्श। तानुवाच। ममाप्यग्निहोत्रधेनुं मृतां पुनर्जीवयतेति । तस्य स्वमाहात्म्येन तस्माच्चर्मणः तामेव गां अशेषावयवोपेतां चक्रुः इति । तदेतदिहोच्यते निश्चर्मण इत्यादिना। विकर्तिताया गोश्चर्मणः हे ऋभवः यूयं तामेव गां अपिंशत। पिशिः अवयवे। अवयववतीं कृतवन्तः। सर्वावयवोपेतां उत्पादयन्त इत्यर्थः। उत्पाद्य च सं वत्सेन असृजत संसर्जितवन्तः गमितवन्तः स्थ तां गां मातरं पुनः। कदा। उच्यते। सौधन्वनासः सुधन्वनः पुत्राः यदा स्वपस्यया । शोभनमपः कर्म यस्य सः स्वपाः। तदिच्छा स्वपस्या। शोभनकर्मकारित्वनिमित्तयशइच्छयेत्यर्थः । हे नरः मनुष्याः। जीव्री जीर्णौ सन्तौ पुनर्युवानौ स्वौ मातापितरौ अकृणोतन कृतवन्तः स्थ॥ ८

वाजे॑भिर्नो॒ वाज॑सातावविड्ढ्यृभु॒माँ इ॑न्द्र चि॒त्रमा द॑र्षि॒ राधः॑ ।
तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑तिः॒ सिन्धुः॑ पृथि॒वी उ॒त द्यौः ॥ ९

वाजेभिरित्यन्यतरवचनेनापि वाजशब्देन साहचर्यात् त्रयोऽपि ऋभव उच्यन्ते। वाजप्रभृतिभिः सह नः अस्मान्। वाजसातौ संग्रामे । अविड्ढि अत्र अपालय। किंच ऋभुमान् ऋभुभिः संयुक्तः सन् । ऋभुभिः सहेत्यर्थः । हे इन्द्र चित्रं विचित्रं पूज्यं वा। आदर्षि आदारय। देह्यस्मभ्यमित्यर्थः। किम् । राधः धनम्। आर्भवत्वाच्च

सूक्तस्य उपसर्जनतयापि निर्दिष्टानामृभूणामेवात्र प्राधान्यं द्रष्टव्यम् । इन्द्रस्य तत्सखत्वात् गुणभावेनोपादानम् । तन्नः ॥ ९

—— -:- ——

तक्ष॒न्रथं॑ सु॒वृतं॑ विद्म॒नाप॑स॒स्तक्ष॒न्हरी॑ इन्द्र॒वाहा॒ वृष॑ण्वसू ।
तक्ष॑न्पि॒तृभ्या॑मृ॒भवो॒ युव॒द्वय॒स्तक्ष॑न्व॒त्साय॑ मा॒तरं॑ सचा॒भुव॑म् ॥ १

तक्षन् । तक्षतिः करोतिकर्मा । कृतवन्तो रथम् । कस्मै । अश्विभ्याम् । कुत एतत् ।

तक्षन्नासत्याभ्याम् । ऋ. वे. १. २०. ३.

इति मन्त्रान्तरदर्शनात् । कीदृशम् । सुवृतं सुगमनमित्यर्थः । कीदृशाः । विद्मनापसः अत्यन्तोत्कृष्टकर्मत्वाद्वेदितव्यकर्माणः । किंच तक्षन् हरी इन्द्रवाहा इन्द्रस्य वोढारौ । वृषण्वसू वृष्टिधनौ वर्षितारौ वा धनानाम् । धनानां दातारावित्यर्थः । किंच तक्षन् स्वाभ्यां पितृभ्यामृभवः युवत् यौवनलक्षणं वयः । किंच तक्षन् वत्साय मातरं सचाभुवं सह भाविनीम् । मृतां सतीं चर्मण उत्पाद्य वत्सेन सह संयोजितवन्त इत्यर्थः । तदेतत् पूर्वमप्युक्तं निश्चर्मण इति ॥ १

आ नो॑ य॒ज्ञाय॑ तक्षत ऋभु॒मद्वयः॒ क्रत्वे॒ दक्षा॑य सुप्र॒जाव॑ती॒मिष॑म् ।
यथा॒ क्षया॑म॒ सर्व॑वीरया वि॒शा तन्नः॒ शर्धा॑य धासथा॒ स्वि॑न्द्रि॒यम् ॥ २

नः अस्माकं यज्ञाय यज्ञार्थम् । आतक्षत आभिमुख्येन कुरुत । अस्मभ्यं दत्त इत्यर्थः । कीदृशम् । ऋभुमत् । ऋभवो यष्टव्यत्वेन संबन्धिनो यस्य सन्ति तदृभुमत् । युष्माकमेव ऋभूणां योग्यमित्यर्थः । किं तत् । वयोऽन्नम् । न च केवलाय यज्ञाय क्रत्वे भोजनाच्छादनादिकर्मणे च । दक्षाय बलाय । न च केवलमन्नम् । सुप्रजावतीमिषं शोभनया प्रजया संयुक्तं अन्नम् । शोभनया प्रजया सहितमन्नं दत्त मा केवलमित्यर्थः । किंच यथा क्षयाम स्वस्मिन्स्थाने वयं निवसेम । न च केवलाः । सर्ववीरया विशा सर्वैर्वीरैः पुत्रैः पौत्रैश्चोपेतया परिचारकमनुष्यजात्या सह । तत् । शुद्धोऽप्ययं तच्छब्दः थाल्प्रत्ययान्तो द्रष्टव्यः । तथा नः अस्मभ्यं शर्धाय उत्साहाय बलाय वा । धासथ सु सुष्ठु दत्त । इन्द्रियं धनं वीर्यं वा ॥ २

आ त॑क्षत सा॒तिम॒स्मभ्य॑मृभवः सा॒तिं रथा॑य सा॒तिमर्व॑ते नरः ।
सा॒तिं नो॒ जैत्रीं॒ सं म॑हेत वि॒श्वहा॑ जा॒मिमजा॑मिं॒ पृत॑नासु स॒क्षणि॑म् ॥ ३

शंखमापूरयन्तौ महान्तं वा शंखशब्दं कृतवन्तौ स्थः तैरेवास्मान् प्रति शोभनमागच्छतमिति समस्तार्थः ॥ १

युवोर्दानाय सुभरा असश्चतो रथमा तस्थुर्वचसं न मन्तवे ।
याभिर्धियोऽवथः कर्मन्निष्टये ताभिरू षु ऊतिभिरश्विना गतम् ॥ २

युवयोः स्वभूतं दानाय स्तोतृभ्यो दानार्थं सुभराः सुपूर्णाः । केन । सामर्थ्याद्युष्मद्गुणैः । काः पुनरेताः । सामर्थ्यात् स्तुतयः । असश्चतः । सश्चतिर्गतिकर्मा । शुद्धोऽपि चात्र सोपसर्गार्थे द्रष्टव्यः । छान्दसत्वाच्चात्र स्त्रीप्रत्ययाभावः । असंश्चत्यः असंगच्छमानाः । असंयुक्ता इत्यर्थः । रथमातस्थुः आतिष्ठन्ति । वचसं न वाच्यमिवार्थं शब्दः । मन्तवे । तुमर्थे चायं तवेप्रत्ययः । युवां स्तोतुम् । यथा वाच्यमर्थं शब्दः सर्व आतिष्ठति एवं युष्मदीयं रथं स्तोतृभ्यो दानार्थं युष्मत्स्तुतयः युवां स्तोतुं सर्वदा आतिष्ठन्तीत्यर्थः । याभिर्धियः अन्येषां यजमानानां स्वभूतानि यागलक्षणानि कर्माणि प्रति । अवथः । अवतिर्गत्यर्थः । युवां गच्छथः । ममापि स्वभूते कर्मन् कर्मणि यागलक्षणे । इष्टये यागायात्मनः । ताभिः ॥ २

युवं तासां दिव्यस्य प्रशासने विशां क्षयथो अमृतस्य मज्मना ।
याभिर्धेनुमस्वं पिन्वथो नरा ताभिरू षु ऊतिभिरश्विना गतम् ॥ ३

तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । याः स्तोतुं यष्टुं चेच्छन्ति युवां तासां विशां मनुष्याणां प्रशासने । प्र इत्येषोन्वित्येतस्य स्थाने । अनुशासने वचने । क्षयथः निवसथः । ता विशो यत्र ब्रुवन्ति इह युवाभ्यां व्यवस्थातव्यमिति तत्रैव व्यवतिष्ठेथे इत्यर्थः । केन । उच्यते । दिव्यस्य अमृतस्य मज्मना । दिव्यशब्दोऽत्रात्यन्तोत्कृष्टवचनः । अमृतशब्दोऽप्यन्तरेणापि भावप्रत्ययममृतत्ववचनः । मज्मनेत्यपि बलनाम । अत्यन्तोत्कृष्टस्य देवत्वस्य बलेनेत्यर्थः । अथवा

दध्यङ् ह यत् । ऋ. वे. १. ११६. १२.

आथर्वणायाश्विना । ऋ. वे. १. ११८. २२.

इति मन्त्रान्तरदृष्टज्ञानमत्रामृतसादृश्यादमृतमित्युच्यते । अत्यन्तोत्कृष्टस्यामृतसदृशस्य ज्ञानस्य बलेनेत्यर्थः । किंच याभिर्धेनुमित्यादि । अत्रेतिहासमाचक्षते । शयुर्नाम राजर्षिः । सोऽश्विनौ परिचर्यया तुष्टावुवाच । मम गौरधेनुर्निवृत्तप्रसवा वृद्धा च । तां मे धेनुं कुरुतमिति । तामस्मै अश्विनौ धेनुं चक्रतुरिति । तदेतत् कक्षीवान् वक्ष्यति

युवं धेनुम्। ऋ. वे. १. ११८. ८.

अधेनुं दस्रा। ऋ. वे. १. ११७. २०.

इति च। तदेवेहोच्यते। याभिर्गत्वा शयोः स्वभूतां धेनुमस्वम्। न सूयत इत्यस्वः। तामस्वम्। निवृत्तप्रसवामित्यर्थः। पिन्वथः। पिवि मिवि सेचने। पयः सेचितवन्तौ स्थः। दोहप्रदानसमर्थां कृतवन्तौ स्थ इत्यर्थः। नरा मनुष्याकारौ। अस्माकमभिलषितार्थसिद्धये अस्मानपि प्रति ताभिः॥ ३

याभिः परिज्मा तनयस्य मज्मना द्विमाता तूर्षु तरणिर्विभूषति।
याभिस्त्रिमन्तुरभवद्विचक्षणस्ताभिरू षु ऊतिभिरश्विना गतम्॥ ४

यभिरत्यन्तशीघ्राभिः ऊतिभिः परिज्मा सर्वतोगामी वायुः। तनयस्य अपत्यभूतस्य प्राणिजातस्य। षष्ठीश्रुतेरर्थायेति शेषः। मज्मना स्वेन बलेन। द्विमाता द्वयोः प्राणिजातयोर्निर्माता। अथवा उत्पादिके प्रकृती मातराविहोच्येते। ते द्वे यस्य एका ब्राह्मां सृष्टौ अन्या देवसृष्टौ स द्विमाता। तूर्षु तरणिः। त्वरतीति तुरः क्षिप्र उच्यते। निर्धारणे चैषा सप्तमी। तरणिरित्यपि क्षिप्रनाम। क्षिप्राणां मध्ये क्षिप्रः। अत्यन्तशीघ्र इत्यर्थः। विभूषति। भवतिरत्र प्राप्त्यर्थः। विविधं प्राप्नोति। यत्र गन्तव्यं तत्र तत्र गच्छतीत्यर्थः। अथवा तूर्षु इत्येतद्विभूषतीत्येतेन संबध्यते। तूर्षु इत्येतत्तुर्वतेर्हिंसार्थस्य रूपम्। हिंस्येषु प्राप्नोति। हिंस्यानसुरादीन् प्रति गच्छतीत्यर्थः। याभिश्च। अत्रेतिहासमाचक्षते। कक्षीवान्नामर्षिरत्यन्तमूढो बभूव। सोऽतीतानागतवर्तमानेषु त्रिष्वप्यप्रहतं ज्ञानमर्थयमानः अश्विनावियाज तुष्टाव च। तस्मै अश्विनौ त्रिकालविषयं ज्ञानं सर्वार्थविषयं च ददतुरिति। तदेतत् कक्षीवानेव वक्ष्यति

युवन्नरा स्तुवते पज्रियाय ऋ. वे. १ ११६. ७.

इति। तदेवेहाप्युच्यते। याभिरिति हेतौ तृतीया। याभिश्च युष्मदीयाभिरूतिभिर्हेतुभूताभिः त्रिमन्तुः। मन ज्ञाने। त्रयाणामतीतानागतवर्तमानानां ज्ञाता कक्षीवानभवत् विचक्षणः विद्रष्टा। सर्वार्थानां च ज्ञातेत्यर्थः। पण्डितवचनो वा विचक्षणशब्दः। पण्डितश्चाभवत्। याभिश्च युवामेवं गत्वा त्रिकालविषयज्ञानोपेतं सर्वार्थविषयज्ञानोपेतं च कक्षीवन्तं चक्रथुः अस्मानपि प्रति ताभिः॥ ४

याभी रेभं निवृतं सितमद्भ्य उद्वन्दनमैरयतं स्वर्दृशे।
याभिः कण्वं प्र सिषासन्तमावतं ताभि रू षु ऊतिभिरश्विना गतम्॥ ५

अत्रेतिहासमाचक्षते। रेभमृषिं सन्ध्याकाले स्नात्वा ह्रदादुत्तीर्णं अग्निहोत्रं होतुं स्वाश्रमं गच्छन्तमसुरा ददृशुः। ते देवानामयं यष्टा स्तोता चेति ज्ञात्वा संक्रुद्धाः तं

ताडयित्वा बध्वा च तस्मिन् ह्रदे प्रक्षिप्य दशरात्रं धारयाञ्चक्रुरिति। तदपि कक्षीवानेव वक्ष्यति

दशरात्रीः। ऋ. वे. १. ११६. २४.

अश्वं न गूळ्हम्। ऋ. वे. १. ११७. ४.

इति। स तत्र मृतकल्पोऽश्विनावाजुहाव। आहूयमानावश्विनौ तं समाजग्मतुरिति। तदपि कक्षीवानेव वक्ष्यति

सन्तं रिणीथः। ऋ. वे. १. ११७. ४.

इति। आगत्य चोत्तारयाञ्चक्रतुरिति। तदपि कक्षीवानेव वक्ष्यति

विप्रुतं रेभम्। ऋ. वे. १. ११६. २४.

इति। घोषापि वक्ष्यति

युवं ह रेभम्। ऋ वे. १०. ३९. ९.

इति। तथापरमितिहासमाचक्षते। वन्दन ऋषिर्जरया परीतः कूपसमीपे गच्छन् कूपे पपात। स तत्रस्थोऽश्विनौ तुष्टाव। तमश्विनावागत्योत्तारयाञ्चक्रतुरिति। तदेतत् घोषा वक्ष्यति

युवं वन्दनमृश्यदात्। ऋ. वे. १०. ३९. ८.

इति। कक्षीवानपि वक्ष्यति

तद्वान्नरा शंस्यम्। ऋ. वे. १. ११६. ११.

सुषुप्वांसम्। ऋ. वे. १. ११७. ५.

इति। उत्तार्य च जरामस्यापनीतवन्तौ दीर्घं चायुरस्मै दत्तवन्ताविति। तदेतद्द्वयमपि कक्षीवानेव वक्ष्यति

युवं वन्दनं निर्ऋतम्। ऋ. वे. १. ११९. ७.

प्र दीर्घेण वन्दनः। ऋ. वे. १. ११०. ६.

इति च। तदितिहासद्वयमिहोच्यते याभी रेभमित्यादिना। याभिः ऊतिभिर्गत्वा रेभमृषिं निवृतम्। वृन्ङ् संभक्तौ। नीचैः संभक्तम्। निमग्नमित्यर्थः। सितम्। षिञ् बन्धने। बद्धं च। अद्भ्यः ह्रदोदकात्। न च केवलं रेभम्। किं तर्हि। वन्दनं च ऋषिं कूपात् उदैरयतम्। ईर गतौ। ऊर्ध्वं गमितवन्तौ स्थः। उत्तारितवन्तावित्यर्थः। स्वर्दृशे सर्वं द्रष्टुम्। सर्वजीवलोकं पुनः पुनरनुभवितुमित्यर्थः। याभिश्च कण्वम्। अत्रापीतिहासमाचक्षते। कण्व ऋषिरन्धो बभूव। स चक्षुष्कामोऽश्विनौ तुष्टाव। तस्मै अश्विनौ चक्षुर्ददतुरिति। तदेतत् कक्षीवान् वक्ष्यति

युवं कण्वाय। ऋ. वे. १. ११८. ७.

इति । तदेवेहाप्युच्यते । याभिश्चोतिभिः कण्वं प्रसिषासन्तं स्तुतिभिः संभक्तुमिच्छन्तम् । स्तुवन्तमित्यर्थः । प्रावतम् । अवतिरत्र गत्यर्थः । चक्षुःप्रदानार्थं प्रकर्षेण गतवन्तौ स्थः । अस्मानपि प्रति ताभिः ॥ ५

याभि॒रन्त॑कं॒ जस॑मान॒मार॑णे भु॒ज्युं याभि॑रव्य॒थिभि॑र्जिजि॒न्वथुः॑ ।

याभिः॑ क॒र्कन्धुं॑ व॒य्यं॑ च॒ जिन्व॑थ॒स्ताभि॑रू॒ षु ऊ॒तिभि॑रश्विना॒ ग॑तम् ॥ ६

अन्तको नामराजा नद्याः स्रोतसि तपश्चचार । तं वृष्ट्या प्रवृद्धजला नद्युवाह । स उह्यमानस्तपःक्षामतया बाहुभ्यां तां नदीं तरितुमशक्नुवन् मृतकल्पोऽश्विनौ दध्यौ । तं ध्यातमात्रावेवाश्विनौ अद्भ्य उत्तारयाञ्चक्रतुरिति । तथा अपरमितिहासमाचक्षते । भुज्युं नाम राजानं समुद्रमध्ये विपन्ननावं सखायः तत्यजुरिति । तदेतद्वसिष्ठो वक्ष्यति

उत त्यं भुज्युम् । ऋ. वे. ७. ६८. ७.

इति । स सखिभिः त्यक्तोऽश्विनौ तुष्टाव । तमश्विनावागत्य नौभी रथैरश्वैरुत्तारितवन्ताविति । तदेतत् कक्षीवान् वक्ष्यति

तुग्रो ह भुज्युम् । ऋ. वे. १. ११६. ३.

इत्यादितृचेन । तदेतदितिहासद्वयमिहोच्यते । याभिरूतिभिर्गत्वा अन्तकं राजानं जसमानम् । जसु मोक्षणेऽन्यत्र । इह तु सामर्थ्यात् निमज्जनार्थः । निमज्जन्तम् । क्व । उच्यते । आरणे । आरणशब्दोऽत्रागाधवचनः

यो गाधेषु य आरणेषु । ऋ वे. ८. ७०. ८.

इति यथा । अगाधे अनादेये उदके । भुज्युं च याभिरूतिभिर्गत्वा अव्यथिभिः । व्यथ भयचलनयोः । अभयरूपाभिः भयव्यावर्तिनीभिः ऊतिभिः । नौभिर्वा सामर्थ्यात् । जिजिन्वथुः समुद्रादुत्तारणेन प्रीणितवन्तौ स्थः । याभिश्च । अत्रापीतिहासमाचक्षते । कर्कन्धुः वय्यश्च राजर्षी अतिक्षामौ तपस्तप्यमानौ यदृच्छया पर्यटन्तावश्विनौ ददृशतुः । दृष्ट्वा च तावमृतेनाप्याययाञ्चक्रतुरिति । तदेतदिहोच्यते । याभिश्चोतिभिर्गत्वा कर्कन्धुं वय्यं च जिन्वथः अमृतेन तर्पितवन्तौ स्थः अस्मानपि प्रति ताभिः ॥ ६

याभिः॑ शु॒चन्तिं॑ धन॒सां सु॑षं॒सदं॑ त॒प्तं घ॒र्मम॒ोम्याव॑न्त॒मत्र॑ये ।

याभि॒ः पृश्नि॑गुं पुरु॒कुत्स॒माव॑तं॒ ताभि॑रू॒ षु ऊ॒तिभि॑रश्विना॒ ग॑तम् ॥ ७

अत्रापीतिहासमाचक्षते । शुचन्तिर्नाम राजा राजयक्ष्मणा गृहीतस्तद्व्यावृत्तये सर्वस्वं ब्राह्मणेभ्यो ददौ । अश्विनौ च तुष्टाव । तमश्विनावागत्य स्वैर्भेषजैर्नीरुजं चक्रतुरिति । तथा अपरमितिहासमाचक्षते । अत्रिर्नामर्षिः । तमसुरा अग्निकूटे प्रचिक्षिपुः । सोऽश्विनौ तुष्टाव । तमश्विनावागत्य धृष्टया निशमय्याग्निं तत उज्जहतुः । बलं चासुरप्रतिबन्धसमर्थमस्मै सहान्नेन ददतुरिति । तदेतत् कक्षीवान् वक्ष्यति

हिमेनाग्निम् । ऋ वे १ ११६. ८.

इति

युवमत्रयेऽवनीताय । ऋ. वे. १. ११८. ७.

इत्यादिभिश्च । तदेतदितिहासद्वयमिहोच्यते । याभिरूतिभिर्गत्वा शुचन्तिं राजानं प्रति । कीदृशम् । धनसाम् । षणु दाने । धनानां दातारम् । सुषंसदम् । संसत् सभोच्यते । शोभनसभम् । तप्तं चाग्निं प्रति । कीदृशम् । घर्मम् । घृ क्षरणदीप्त्योः । दीप्तम् । भवति हि किञ्चित् तप्तं न तु दीप्तं यथा निदाघे पांसवः । भवति च किञ्चिद्दीप्तं न तु तप्तं यथा माणिक्यादिरत्नम् । अत उभयेनाग्निर्विशेष्यते तप्तं घर्ममिति । ओम्यावन्तम् । अवतेः पालनार्थस्येदं रूपम् । पालयन्तं युष्मत्प्रसादात् शीतीभूतम् । अदाहकमित्यर्थः । अत्रये अत्रेरर्थाय । याभिश्च । अत्रापीतिहासमाचक्षते । पुरुकुत्सः पुत्रकामो महत्तपश्चचाराश्विनौ तुष्टाव च । तस्मै अश्विनौ पुत्रं ददतुरिति । तदेतदुच्यते । याभिश्च ऊतिभिः पृश्निगुम् । पृश्निशब्दो व्याघ्रसरूपवर्णवचनः । प्रश्न्यो गावो यस्य स पृश्निगुः । तं पृश्निगुं पुरुकुत्सं प्रति आवतम् । अवतिरत्र सामर्थ्यात् गत्यर्थः । गतवन्तौ स्थः । पालनार्थ एवा वा अवतिः । याभिरूतिभिर्गत्वा शुचन्त्यादीन् राजयक्ष्मापनयनादिभिः पालितवन्तौ स्थः इत्यर्थः । अस्मानपि प्रति ताभिः ॥ ७

याभिः॒ शची॑भिर्वृषणा परावृजं प्रान्धं श्रोणं चक्ष॑स॒ एत॑वे कृ॒थः ।
याभि॒र्वर्ति॑कां ग्रसि॒तामुमु॑ञ्च॒तं ताभि॑रू॒ षु ऊ॒तिभि॑रश्वि॒ना ग॑तम् ॥ ८

अत्रेतिहासमाचक्षते । घोरो नामाग्नेः पुत्रः । योऽथर्वाङ्गिरसो ब्रह्मदण्डः पठ्यते । तस्य ज्येष्ठः पुत्रः कुष्ठी श्याववर्णः गमनासमर्थो बभूव । सोऽश्विनौ तुष्टाव । तमश्विनौ विकृत्य जंघयोर्मध्ये शिरसि छित्वा पुनश्च सन्धाय गमनसमर्थं हिरण्यत्वचं च पुनरुज्जीवयाञ्चक्रतुरिति । तदेतदिहोच्यते । तत् कक्षीवान् वक्ष्यति

युवं श्यावाय । ऋ वे १. ११७ ८.

इति

त्रिधा ह श्यावम् । ऋ वे. १. ११७. १४.

इति च। तथापरमितिहासमाचक्षते। वार्षागिरः ऋज्राश्वो नाम राजा। तमश्विनोः स्वभूता कशा वृकी भूत्वोपतस्थौ। स तां दिव्येन चक्षुषा ज्ञात्वा अहन्यहनि विशस्य मेषशतं तस्यै आहारं कल्पयाञ्चकार। तत् ज्ञात्वा तस्मै पिता चुकोप। स तं शापेनान्धं चकार। अथ श्रुते वृषागिरि ऋज्राश्वमन्धं ज्ञात्वा तच्छत्रवः तत्पुरमुपरुरुधुः। तान्निष्क्रम्य सा वृकी बभञ्जे। भग्नेषु शत्रुषु पुनरप्युपरोधमाशंकमान ऋज्राश्वोऽश्विनौ तुष्टाव। तस्मै आश्वागत्याश्विनौ अक्षिणी ददतुरिति। तदेतत् कक्षीवान् वक्ष्यति

शतं मेषान् ऋ. वे. १. ११६. १६; ११७. १७.

इति।

अगच्छतं कृपमाणम्। ऋ. वे. १. ११९. ८.

इत्यादिभिश्च। तथापरमितिहासमाचक्षते। नार्षद ऋषिर्बधिरो बभूव। सोऽश्विनौ तुष्टाव। तस्मै अश्विनौ श्रोत्रं ददतुरिति। तदेतत् कक्षीवान् वक्ष्यति

प्र वाच्यं तत्। ऋ. वे. १ ११७. ८

इति। तदेतदितिहासत्रयमिहोच्यते। याभिरूतिभिर्गत्वा शचीभिः देवतामाहाभाग्यादतिशयवतीभिः प्रज्ञाभिः कर्मभिर्वा। हे वृषणा वर्षितारौ। परावृजं परावर्जितम्। केन। सामर्थ्यात् प्राणैः जंघादिभिर्वा अवयवैः। श्रुतं छिन्नजंघं वा सन्तं घोरस्य ज्येष्ठं पुत्रमित्यर्थः। अन्धं च ऋज्राश्वम्। श्रोणं बधिरं च नार्षदम्। चक्षसे दर्शनाय एतवे गमनाय च। साकांक्षत्वात् श्रवणाय चेति वाक्यशेषः। पूर्वैश्च सह योग्यतयैषां सम्बन्धः। चक्षसे अन्धमृज्राश्वं एतवे परावृजं घोरस्य ज्येष्ठं पुत्रं श्रवणाय नार्षदम्। प्रकृथः प्रकर्षेण कृतवन्तौ स्थः। याभिश्च। अत्रापीतिहासमाचक्षते। वर्तिका नाम चटकजातिः शीघ्रगतिः श्रमवर्जिता च। चवद इत्येव या लोके प्रसिद्धा। अस्या गच्छन्त्याः समुद्रमध्येऽपि शब्दः श्रूयते इति नाविका आचक्षते। तां शीघ्रगतित्वादृषयः प्रेषयामासुः। तां गच्छन्तीं वृकी जग्राह। साश्विनावाजुहाव। तामश्विनौ मोचयाञ्चक्रतुरिति। तदेतत् कक्षीवान् वक्ष्यति।

अजोहवीदश्विना। ऋ. वे. १. ११७. १६.

इति। तदेवेहाप्युच्यते। याभिरूतिभिर्गत्वा वर्तिकां ग्रसितां वृकेण ग्रस्तां सतीममुञ्चतम्। मुचिरत्र सामर्थ्यादन्तर्णीतण्यर्थः। अमोचयतम्। मोचितवन्तौ स्थ इत्यर्थः। ताभिः॥ ८

याभिः सिन्धुं मधुमन्तमसश्चतं वसिष्ठं याभिरजरावजिन्वतम्।
याभिः कुत्सं श्रुतर्यं नर्यमावतं ताभि रू षु ऊतिभिरश्विना गतम्॥ ९

अत्रेतिहासमाचक्षते । विश्वामित्रो वसिष्ठं जिघांसुः सरस्वतीमाहूयोवाच । मत्समीपं वसिष्ठं शीघ्रमानयेति । सा तच्छ्रुत्वा विश्वामित्रादपि वसिष्ठादपि शापात् बिभ्यती किञ्चिदप्यप्रतिपद्यमाना चिन्ताकृशा विवर्णा बभूव । अथैनामेवंरूपां ज्ञात्वा कृपाशीलतया वसिष्ठ उवाच ।

रक्षात्मानं सरिच्छ्रेष्ठे वह मां शीघ्रगामिनि ।
विश्वामित्रः शपेद्धि त्वा माकृथास्त्वं विचारणाम् ।

इति । अथ तं स्वकूले जपन्तं सरस्वती महता जलौघेन विश्वामित्राश्रमं प्रत्युवाह । ऊढा च विश्वामित्राय निवेदयामास । निवेद्य च प्रहरणान्वेषणव्याकुले विश्वामित्रे कृतं मया स्वकार्यमिति मन्यमाना ब्रह्महत्याभयात् सरस्वती वसिष्ठं ततो दूरमपोवाह । अथ तत् ज्ञात्वा विश्वामित्रः क्रुद्धः सरस्वतीं शशाप शोणितं वहेति । सा शोणितमुवाह ।

अथर्षयश्च देवाश्च गन्धर्वाप्सरसस्तथा ।
सरस्वतीं तदा दृष्ट्वा बभूवुर्दुःखिता भृशम् ॥
ज्ञात्वा तदश्विनौ तस्याः तं शापमपनिन्यतुः ।
ततः सरस्वती जाता प्रसन्नसलिला शिवा ॥

भारते तु ऋषयः शापात्सरस्वतीं मोचयामासुरित्याख्यानं तदश्विनोः प्रसादेनेति वर्णयितव्यम् । इतिहासान्तरं वा पर्येष्यम् । तथापरमितिहासमाचक्षते । वसिष्ठो हतपुत्रः पुत्रार्थी अश्विनावियाज । तस्मै अश्विनौ पुत्रं ददतुरिति । तदेतत् वसिष्ठ एव दर्शयिष्यति

अविष्टन्धीषु । ऋ. वे ऋ वे. ७. ६७. ६.

इत्यादिना । तदेतदितिहासद्वयमिहोच्यते । याभिरूतिभिर्गत्वा सिन्धुम् । सिन्धव इति नदीनाम । नदीं सरस्वत्याख्याम् । मधुमन्तम् । मध्वित्युदकनाम । व्यत्ययेन चात्र पुलिङ्गत्वम् । उदकवतीम् । असश्चतम् । सश्चतिरत्रोपक्षये । अक्षयोदकाम् । वसिष्ठं च याभिरूतिभिर्गत्वा । अजरौ जरावर्जितौ अजिन्वतम् । जिन्वतिः प्रीतिकर्मा । लोहितवहनशापापनयनेन पुत्रप्रदानेन च प्रीणितवन्तौ स्थः । याभिः कुत्सम् । अत्रापीतिहासमाचक्षते । कुत्स इयेष अपिनाम साक्षाद्रूपेणाश्विनौ पश्येयमिति । तस्य परया भक्त्या स्तुतिभिश्चाराधितावश्विनौ दर्शनमुपाजग्मतुरिति । तदेतदिहोच्यते । याभिश्चोतिभिर्मामेव कुत्सं प्रति । कीदृशम् । श्रुतर्यम् । शृणोतिरत्र सामर्थ्यादन्तर्णीतण्यर्थः । छान्दसत्वाच्च गुणाभावः । यशब्दश्च प्रत्यय उपजनः । श्रावयितारं स्तुतीनाम् । स्तोतारमित्यर्थः । नर्यं नरेषु भवम् । मनुष्यलोके एव व्यवस्थितं सन्तम् । आवतम् । अवतिरत्र गत्यर्थः । दर्शनं दातुं पूर्वमागतवन्तौ स्थः । इदानीमपि ताभिः॥९

याभि॒र्वि॒श्पलां॑ धन॒साम॑थ॒र्व्यं॑ स॒हस्र॑मीळ्ह आ॒जावजि॑न्वतम् ।
याभि॒र्वश॑म॒श्व्यं प्रे॒णिमाव॑तं॒ ताभि॑ रू षु ऊ॒तिभि॑रश्विना॒ ग॑तम् ॥ १०

अत्रेतिहासमाचक्षते । अगस्त्यपुरोहितः पेळो नाम राजा बभूव । तस्य सेनायां योध्री विश्पला नाम स्त्री । तस्या अन्नार्थं धनार्थं च युध्यमानायाः शत्रवो जंघान् चिच्छिदुः । तदपि कक्षीवान् वक्ष्यति

चरित्रं हि वेरिव । ऋ. वे. १. ११६. १५.

इति । तस्याश्छिन्नां जंघां ज्ञात्वा पुरोहितोऽगस्त्योऽश्विनौ तुष्टाव । तौ विश्पलां प्रति जग्मतुः । तदेतत् कक्षीवानपि वक्ष्यति

सूनोर्मान । ऋ. वे. १ ११७. ११.

इति । आगत्य च सद्यो लोहमयीं जंघां विश्पलायाश्चक्रतुः । तदेतत् कक्षीवानेव वक्ष्यति

सद्यो जङ्घाम् । ऋ. वे. १. ११६. १५.

इति

प्रति जङ्घाम् । ऋ. वे १. ११८. ८.

इति च । तदेवेहाप्युच्यते । याभिरूतिभिर्गत्वा विश्पलां नाम योध्रीं स्त्रियम् । धनसाम् । वन षण संभक्तावित्यस्यैतद्रूपम् । संग्रामनिमित्तभूतस्य धनस्य संभक्त्रीम् । अथर्व्यम् । थर्वतिश्चरतिकर्मा । आचरन्तीम् । छिन्नजंघत्वात् गन्तुमसमर्थामित्यर्थः । सहस्रमीळ्हे । सहस्रमिति बहुनाम । बहूनि धनानि निमित्तभूतानि यस्य स सहस्रमीळ्हः । तस्मै सहस्रमीळ्हे । बहुधनप्राप्त्यर्थमित्यर्थः । आजौ संग्रामे । अजिन्वतं लोहमयजंघाकरणेन प्रीणितवन्तौ स्थः । याभिश्च वशम् । अत्रापीतिहासमाचक्षते । वशो नाम राजा अश्वप्रायबलः । स हस्तिबलैः शत्रुभिः पराजीयमानः साहाय्यं कर्तुमश्विनौ स्तुत्वाजुहाव । तं प्रति तस्मिन्नेवाहनि अश्विनावाजग्मतुरिति । तदेतत् कक्षीवान् वक्ष्यति

एकस्या वस्तोः । ऋ वे. १. ११६. २१.

इति । तदेवेहाप्युच्यते । याभिश्चोतिभिर्वशं राजानम् । कीदृशम् । अश्व्यम् । समूहेऽर्थे यत्प्रत्ययः अन्तर्णीतमत्वर्थश्च । अश्वसमूहवन्तम् । प्रेणिम् । प्रीञ् तर्पणे । तर्पयितारं च स्तुतिभिः हविर्भिश्च देवानाम् । आवतं आगतवन्तौ स्थः । अस्मानपि प्रति ताभिः ॥ १०

याभिः॑ सु॒दानू॑ औशि॒जाय॑ व॒णिजे॑ दी॒र्घश्र॑वसे॒ मधु॒ कोशो॑ अक्ष॑रत् ।
क॒क्षीव॑न्तं स्तो॒तारं॒ याभि॒राव॑तं॒ ताभि॑रू॒ षु ऊ॒तिभि॑रश्विना॒ ग॑तम् ॥ ११

अत्रेतिहासमाचक्षते । दीर्घश्रवा ऋषिः परिक्षीणवृत्तिर्वैश्यजीविकां वणिग्वृत्तिमाश्रितः । अन्यथा जीवन् मधु विचिक्रीयमाणः तदर्थमश्विनौ तुष्टाव । तावागत्यास्य मेघात् मधु क्षारयांचक्रतुरिति । तदेतदिहोच्यते । याभिरूतिभिर्हेतुभूताभिः हे सुदानू शोभनदानौ । औशिजायेत्यादि सर्वत्र तादर्थ्ये चतुर्थी । उशिजपुत्रस्य वणिजः दीर्घश्रवसः ऋषेरर्थाय । मधु कोशः मेघः अक्षरत् । कक्षीवन्तं च स्तोतारं प्रति याभिरूतिभिरावतम् । अवतिरत्र गत्यर्थः पालनार्थो वा । त्रिकालविषयसर्वार्थविषयज्ञानप्रदानेन वा पालयितवन्तौ स्थः इत्यर्थः । तदेतत् पुरस्तादप्युक्तं याभिःत्रिमन्तुः (४) इति । अस्मानपि प्रति ताभिः ॥ ११

याभी॑ र॒सां क्षोद॑सो॒द्नः पि॑पि॒न्वथु॑रन॒श्वं याभी॒ रथ॒माव॑तं जि॒षे ।
याभि॑स्त्रि॒शोक॑ उ॒स्रिया॑ उ॒दाज॑त॒ ताभि॑रू॒ षु ऊ॒तिभि॑रश्विना॒ ग॑तम् ॥१२

अत्रेतिहासमाचक्षते । पणिभिरसुरैरपह्रियमाणा गा अनुगच्छन्तः देवगोपाला रसां नामान्तरिक्षनदीमगाधोदकां नोत्तरितुं शेकुः । तत् ज्ञात्वा देवाः संक्रुद्धाः रसां शेपुः निरुदका भवेति । सा प्रत्यानीतासु गोषु अश्विनौ परिचचार । तामश्विनौ गत्वा पुनरगाधोदकां चक्रतुरिति । तदेतदिहोच्यते । याभिरूतिभिर्गत्वा रसां नामान्तरिक्षनदीं क्षोदसा । क्षोद इत्युदकनाम । तृतीयानिर्देशाच्च रहितामिति वाक्यशेषः । देवशापादुदकेन रहिताम् । उद्नः पिपिन्वथुः । पिन्वतिरत्र सामर्थ्यात् पूरणार्थः । उदकेन पूरितवन्तौ स्थः । अनश्वं अश्ववियुक्तं च रथम् । कस्य । स्वभूतमश्विनोरेव । कुत एतत् ।

अश्विनोरसनं रथम् । ऋ. वे. १. १२०. १०.

इति मन्त्रान्तरे दर्शनात् । याभिरूतिभिरावतम् । अवतिरत्र गत्यर्थः । सामर्थ्याच्चान्तर्णीतण्यर्थो द्रष्टव्यः । लिङर्थे लट् छन्दसि लुङ्लङ्लिटः (पा. ३. ४. ६.) इति । आवयथः । शत्रून् प्रति गमयथ इत्यर्थः । अथवा आवतमिति अवतिः शुद्ध एव प्रकृत्यर्थे वर्तते । अनश्वं रथमिति तृतीयार्थे द्वितीया । अनश्वेन च रथेन शत्रून् प्रति गच्छथ इत्यर्थः । जिषे जेतुं शत्रून् । याभिश्च त्रिशोकः । अत्रापीतिहासमाचक्षते । त्रिशोको नाम राजर्षिः आत्मीयाभिः गोभिस्सह स्वर्गं गच्छेयमिति कामयमानोऽश्विनौ तुष्टाव । तस्यागत्याश्विनौ स्वर्गं गा निन्यतुरिति । तदेतदिहोच्यते । याभिश्च युष्मदूतिभिः हेतुभूताभिः त्रिशोक ऋषिरुस्रियाः गा उदाजत । अज गतिक्षेपणयोः । उत्क्षिप्तवान् । स्वर्गं गमितवानित्यर्थः । अस्मानपि प्रति ताभिः ॥ १२

याभिः सूर्यं परियाथः परावति मन्धातारं क्षैत्रपत्येष्वावतम् ।
याभिर्विप्रं प्र भरद्वाजमावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥ १३

याभिरूतिभिः सूर्यमादित्यं परिप्राप्नुथः । परावति दूरे स्थितम् । केन पुनर्दूरे स्थितमश्विनौ परिप्राप्नुथः । स्वरथचक्रेण । कुत एतत् ।

न्यघ्न्यस्य । ऋ वे. १. ३०. १९.

इति मन्त्रान्तरे दर्शनात् । मान्धातारं च राजानं प्रति याभिरूतिभिः । क्षैत्रपत्येषु । निमित्तात् कर्मसंयोगे (वा. २. ३. ३६—६) इत्येषा सप्तमी चर्मणि द्वीपिनं हन्तीति यथा । क्षेत्रपतित्वार्थम् । शत्रुणा क्रान्तस्य स्वस्य विषयस्य पुनरपि स्वामिनं कर्तुमित्यर्थः । आवतं आगतवन्तौ स्थः । अत्रेतिहासमाचक्षते । मान्धातुर्विषयभूमिमन्तरो राजा आचक्राम । स तं स्वबलेन निगृहीतुमशक्नुवन् अश्विनौ तुष्टाव । आगत्य च तस्याश्विनौ शत्रून् निगृह्य विषयं प्रत्यर्पयाञ्चक्रतुरिति । तदेतदुक्तं मान्धातारमिति । याभिश्च । अत्रापीतिहासमाचक्षते । भरद्वाज ऋषिर्धनकामोऽश्विनौ तुष्टाव । तस्य स्वरथेनानीयाश्विनौ प्रभूतं धनं ददतुरिति । तदेतत् कक्षीवान् दर्शयिष्यति

यद्यातं दिवोदासाय । ऋ. वे. १. ११६. १८.

इति । तदेवेहाप्युच्यते । याभिश्च ऊतिभिः विप्रं मेधाविनं भरद्वाजं प्रभूतधनदानार्थं प्रकर्षेण गतवन्तौ स्थः । अस्मानपि प्रति ताभिः ॥ १३

याभिर्महामतिथिग्वं कशोजुवं दिवोदासं शम्बरहत्य आवतम् ।
याभिः पूर्भिद्ये त्रसदस्युमावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥१४

अत्रेतिहासमाचक्षते दिवोदासो नाम राजा शंबरनाम्ना असुरेण युयुत्समानः अश्विनौ स्तुत्वा सहायौ आजुहाव । तस्यागत्याश्विनौ सहायौ बभूवतुरिति । तदेतदिहोच्यते । याभिरूतिभिर्महां वीर्यतः प्रभावतो वा महान्तम् । अतिथीन् प्रति परिचारकतया गच्छति इत्यतिथिग्वः । तमतिथिग्वम् । अतिथीनां परिचारकमित्यर्थः । कशोजुवम् । कशशब्दः कशापर्यायः । कशेति वाङ्नाम । जवतिर्गत्यर्थः । स्तुतिलक्षणया वाचा युवां प्रति गन्तारम् । युवयोरेव स्तोतारमित्यर्थः । दिवोदासं राजानं प्रति । शंबरनाम्नोऽसुरस्य वधे साहाय्यं कर्तुमागतवन्तौ स्थः । अत्रापीतिहासमाचक्षते । त्रसदस्योः राज्ञः पुरमुपरुध्य बलात् शत्रवो ग्रहीतुमारेभिरे ।

सोऽश्विनौ तुष्टाव । तस्यागत्याश्विनौ शत्रून् बभञ्जतुरिति । तदेतत् सध्वंसो दर्शयिष्यति

याभिर्नरा त्रसदस्युम् । ऋ. वे. ८. ८ २१.

इति । तदेतदिहाप्युच्यते । याभिश्चोतिभिः पूर्भिद्ये । पूर्नगरम् । सा भिद्यते येन यस्मिन् वा संग्रामे स पूर्भिद्यः । तस्मिन् पूर्भिद्ये । त्रसदस्युमावतं त्रसदस्युं राजानं प्रति गतवन्तौ स्थः । अस्मान् प्रति ताभिः ॥ १४

याभिर्वम्रं विपिपानमुपस्तुतं कलिं याभिर्वित्तजानिं दुवस्यथः ।
याभिर्व्यश्वमुत पृथिमावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥ १५

अत्रेतिहासमाचक्षते । वम्र ऋषिर्ग्रीष्मे तपस्यन् अत्यन्ततृषितो बभूव । स उदकार्थी अश्विनौ तुष्टाव । तस्मै आगत्याश्विनावनभ्रे नभसि वृष्टिं चक्रतुरिति । तथापरमितिहासमाचक्षते । कलिर्नाम ऋषिर्जरया परीतस्तरुणीं भार्यां लेभे । स तत्प्रीत्यै पुनर्यौवनमात्मने इच्छन् अश्विनौ तुष्टाव । तमागत्याश्विनौ पुनर्यौवनं चक्रतुरिति । तदेतत् घोषा वक्ष्यति

युवं विप्रस्य । ऋ. वे. १० ३९. ८.

इति । तदेतदितिहासद्वयमिहोच्यते । याभिश्चोतिभिः वम्रमृषिं विपिपानम् । पा पाने । सामर्थ्याच्चान्तर्णीतसनर्थो द्रष्टव्यः । विविधं पिपासन्तम् । अत्यन्ततृषितमित्यर्थः । उपस्तुतम् । कर्तर्ययं क्तप्रत्ययः छान्दसत्वात् । उपस्तोतारम् । कलिं च याभिरूतिभिर्वित्तजानिम् । वित्तशब्दो विन्दतेर्लाभार्थस्य द्रष्टव्यः । वित्ता जाया येन स वित्तजानिः लब्धभार्यकः । तं वित्तजानिम् । दुवस्यथः । दुवस्यतीति परिचरणकर्मा । वृष्टिप्रदानेन पुनर्यौवनकरणेन च परिचरितवन्तौ स्थः । याभिश्च । अत्रापीतिहासमाचक्षते । ऋषयः क्वचित् समेताः कोऽस्मासु अश्विनौ सम्यग्यजत इति जिज्ञासमाना ऊचुः । सर्वेऽश्विनौ स्वयज्ञेषु सहाह्वयामः । तद्यस्य नः आहूतावश्विनौ स्वरूपेणागमिष्यतः स सम्यग्यजत इति । तत्राश्विनावहूतौ कक्षीवतो व्यश्वस्य दीर्घतमसः पृथेश्च यज्ञे स्वरूपेणाजग्मतुरिति । तदेतच्छशकर्णो वक्ष्यति

यद्वा कक्षीवान् उत ।

इति । तदेवेहोच्यते । याभिश्चोतिभिः व्यश्वमृषिं प्रति । उत पृथिं प्रति आवतं गतवन्तौ स्थः । अस्मानपि प्रति ताभिः ॥ १५

याभिर्नरा शयवे याभिरत्रये याभिः पुरा मनवे गातुमीषथुः ।
याभिः शारीराजतं स्यूमरश्मये ताभिरू षु ऊतिभिरश्विना गतम् ॥ १६

याभिः नरा मनुष्याकारौ हे अश्विनौ शयवे शयोरर्थाय । शयोर्गां अधेनुं निवृत्तप्रसवां वृद्धां च धेनुं कर्तुमित्यर्थः । तदेतत्पुरस्तादप्युक्तम्

याभिर्धेनुम् । ऋ. वे. १. ११२. ३.

इति । याभिश्चात्रये अत्रेरर्थाय । अत्रिमसुरैरग्निकूटे प्रक्षिप्तं उद्धर्तुं बलं चासुरप्रतिबन्धसमर्थं सहान्नेनास्मै दातुमित्यर्थः । तदेतत् पुरस्तादप्युक्तम्

तप्तं घर्मम् । ऋ. वे. १. ११२. ८.

इति । याभिश्च पुरा मनवे । अत्रेतिहासमाचक्षते । मनुर्नाम राजा । स महत्यामनावृष्टौ व्यतीतायां अन्नक्षयात् प्रजासु कर्षितुमशक्नुवन्तीषु अन्नक्षयेण च बाध्यमानासु अन्नकामोऽश्विनौ तुष्टाव । तस्मै आगत्याश्विनौ हलेन कर्षयित्वा यवान्नं ददतुरिति । तदेतत् कक्षीवान् वक्ष्यति

युवं वृकेण । ऋ. वे. १. ११८. २१.

इति । सौभरिरपि वक्ष्यति ।

दशस्यन्ता मनवे । ऋ. वे. ८. २२. ८.

इति । तदेवेहाप्युच्यते । याभिश्चोतिभिः पुरा पूर्वस्मिन् काले मनवे मनोरर्थाय । हलेन कर्षयित्वा मनवेऽन्नं ददतुरित्यर्थः । गातुं गमनमीषथुः । इच्छया तत्पूर्वकमनुष्ठानं लक्ष्यते । अनुष्ठितवन्तौ स्थः । अथवा इषतिगातुशब्दयोर्द्वयोरपि गमनवचनत्वात्तस्य च तदेव प्रति करणत्वासंभवात् सामान्यविशेषभेदेन गातेरिषतेश्च क्रियासाधनभावः समर्थयितव्यः । गोपोषं पुष्यति । ओदनपाकं पचति । उष्ट्रासिका आस्यते । हतशायिकाः शय्यन्ते । इति यथा । याभिश्च शारीरित्यादि । अत्रापीतिहासमाचक्षते । इन्द्रो यतीन् सालावृकेभ्यः प्रायच्छत् । सालावृका मर्कटा उच्यन्ते । तेषामद्यमानानां स्यूमरश्मिर्ऋषिरश्विनौ तुष्टाव । तं प्रत्यागत्याश्विनौ इषुभिः सालावृकान् निरुरुधुः इति । तदेतदुच्यते । याभिश्चोतिभिर्गत्वा शारीः शरमयीरिषूः आजतम् । अज गतिक्षेपणयोः । सालावृकान् प्रति क्षिप्तवन्तौ स्थः । स्यूमरश्मये स्यूमरश्मेर्ऋषेरर्थाय । अस्मानपि प्रतिताभिः ॥ १६

याभिः पठर्वा जठरस्य मज्मनाग्निर्नादीदेच्चित इद्धो अज्मन्ना ।
याभिः शर्यातमवथो महाधने ताभिरू षु ऊतिभिरश्विना गतम् ॥ १७

अत्रेतिहासमाचक्षते । पठर्वा नाम ऋषिरामयावी कृशो विवर्णो बभूव । सोऽश्विनौ तुष्टाव । तमश्विनौ दीप्ताग्निं इव बलवन्तमतितेजास्विनं चक्रतुरिति । तदेतदिहोच्यते । याभिः युष्मदूतिभिः हेतुभूताभिः । पठर्वा नाम ऋषिः । जठरस्य मज्मना । तात्स्थ्यात्तात्र ताच्छब्द्यम् । मज्मनेति बलनाम । जाठरस्याग्नेः प्रवृद्धयर्थम् ।

अग्निर्न अदीदेत् अग्निरिवादीप्यत । कतमोऽग्निः । चितः चयनेन संस्कृतः । इद्धः आहुतिसमूहेन दीप्तः । अज्मन्ना । अज्मेति गृहनाम । आकारोऽव्यर्थे । गृहेऽधि गृहस्योपरि । यज्ञगृहे इत्यर्थः । याभिश्च शर्यातम् । अत्रागीतिहासमाचक्षते । शर्यातो नाम राजा संग्रामे भग्नबलो नश्यन् शत्रुभिरवगम्यमानोऽश्विनौ तुष्टाव । तस्यागत्याश्विनौ शत्रून् प्रतिबभञ्जतुरिति । तदेतदिहाच्यत । याभिश्चोतिभिर्गत्वा शर्यातं नाम राजानं अवथः पालितवन्तावस्थः । महाधने संग्रामे । अस्मानपि प्रति ताभिः ॥ १७

याभिरङ्गिरो मनसा निरण्यथोऽग्रं गच्छथो विवरे गोअर्णसः ।
याभिर्मनुं शूरमिषा समावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥ १८

याभिरूतिभिर्गत्वा स्तोतॄन् प्रति हे अङ्गिरः । सोऽयमित्यभिसम्बन्धादङ्गिरश्शब्देनात्राङ्गिरःसंबद्धावश्विनौ उच्येते । व्यत्ययेन च द्विवचनस्य स्थाने एकवचनम् । अङ्गिरःसम्बद्धौ । कः पुनरङ्गिरसोऽश्विनोश्च सम्बन्धः । स्तोतृस्तुत्यलक्षणः । अस्मत्पितुरङ्गिरसस्तुत्यावित्यर्थः । मनसा स्वेन चित्तेन । निरण्यथः । निशब्दोऽत्र प्रकर्षे । निरुक्तं निशुष्कमिति यथा । रण्यथ इत्यपि रमेर्वा छान्दसं णित्वम् । रणिर्वा रमेरर्थे द्रष्टव्यः । अत्यन्तं रमेथे । याभिश्चाग्रमुपरिभागं गच्छथः । किमर्थम् । उच्यते । विवरे । निमित्तात् कर्मसंयोगे (वा २ ३ ३६ ९) इत्यवं सप्तमी चर्मणि द्वीपिनं हन्तीति यथा । विवरार्थम् । विवरं कर्तुमित्यर्थः । कस्य । गोअर्णसः । गोशब्दोऽत्र गमेः क्रियाशब्दः गमनार्हवचनः । अर्ण इत्युदकनाम । प्राभूत्यात् सस्यसंपत्तिकरत्वाच्च गमनार्हमुदकं यस्य स गोअर्णा मेघः । तस्य । याभिश्च गत्वा मनुं राजानं शूरं इषा स्वयं हलकर्षितेनान्नेन समावतम् । अवतिरत्र गत्यर्थः सामर्थ्याच्चात्रान्तर्णयर्थः । समगमयतम् । हलेन कर्षित्वा अन्नं मनवे दत्तमित्यर्थः । तदेतत् पुरस्तादप्युक्तम्

याभिः पुरा मनवे । ऋ वे १ ११२ १६

इति । अस्मानपि ताभिः ॥ १८

याभिः पत्नीर्विमदाय न्यूहथुरा घ वा याभिररुणीरशिक्षतम् ।
याभिः सुदास ऊहथुः सुदेव्यं ताभिरू षु ऊतिभिरश्विना गतम् ॥ १९

अत्रेतिहासमाचक्षते । विमद ऋषिः परिणीय महत्या विभूत्या भार्यां स्वगृहं निनीषन् अश्विनौ तुष्टाव । तस्यागत्याश्विनौ भार्यां स्वसेनापरिवृतेन रथेन निन्यतुः । गाश्चास्मै प्रभूता ददतुरिति । तदेतत् कक्षीवान् वक्ष्यति

यावर्भगाय। ऋ. वे. १. ११६. १.

इति। घोषापि वक्ष्यति

युवं रथेन। ऋ. वे. १०. ३९. ७.

इति। तदेवेहाप्युच्यते। याभिरूतिभिर्गत्वा पत्नीः। व्यत्ययेनेदमेकवचनस्य स्थाने बहुवचनम्। पत्नीम्। विमदाय विमदस्यर्षेरर्थाय। न्यूहथुः रथेनोढवन्तौ स्थः। आ घ वा। आ इत्येषोऽपीत्येतस्य स्थाने। घ इति पदपूरणः वाशब्दश्चार्थे। अपिच याभिः ऊतिभिर्गत्वा अरुणीः अरुणवर्णा गाः अशिक्षतं दत्तवन्तौ स्थः। कस्मै। प्रकृतत्वात् विमदायैव। याभिश्च सुदासे इत्यादि। अत्रापीतिहासमाचक्षते। सुदासनामा पैजवनो राजा यस्य विश्वामित्रः पुरोहितो बभूव। स यष्टुकामः सारवत् प्रभूतं धनमश्विनौ ययाचे। तस्मै रथेनानीयाश्विनौ ददतुरिति। तदेतत् प्रस्कण्वेनोक्तम्

सुदासे दस्रा। ऋ. वे. १. ४७. ६.

इति। तदेवेहाप्युच्यते। याभिश्चोतिभिः सुदासो राज्ञोऽर्थाय ऊहथुः रथेनानीतवन्तौ स्थः। सुदेव्यं शोभनं देवयोग्यं च। किं तत्।

सुदासे दस्रा। ऋ. वे. १. ४७. ६.

इति मन्त्रान्तरे दर्शनात् धनलक्षणं च। अस्मानपि प्रति ताभिः॥ १९

याभिः शंताती भवथो ददाशुषे भुज्युं याभिरवथो याभिरध्रिगुम्।
ओम्यावतीं सुभरामृतस्तुभं ताभिरू षु ऊतिभिरश्विना गतम्॥ २०

याभिरूतिभिर्गत्वा शन्ताती। शिवशमरिष्टस्य करे (पा. ४. ४. १४३.) इत्येवमयं शंशब्दात् कर्तरि तातिप्रत्ययः। सुखकरौ युवां भवथः। ददाशुषे सर्वस्मै यजमानाय। भुज्युं समुद्रे विपन्ननावं सखिभिश्च त्यक्तं याभिरूतिभिर्गत्वा अवथः। व्यत्ययेनाथं भूते लट्प्रत्ययः। नौभिरश्वै रथैश्चोत्तारणेन पालितवन्तौ स्थः। याभिरध्रिगुम्। अत्रेतिहासमाचक्षते। नमुचौ हते सुरमणीयं मधु अश्विभ्यां सह पिबन्तमिन्द्रं प्रमत्त इति ज्ञात्वासुरा हन्तुमियेषुः। तमश्विनावजानन्तमेवं पालयाञ्चक्रतुरिति तदेतत् काक्षीवनः सुकीर्तिर्वक्ष्यति

युवं सुरामम्। ऋ. वे. १०. १३१. ४.

इति। तदेवेहाप्युच्यते। अध्रिगुशब्देन ह्यत्र गत्रे अधृतत्वादिन्द्र उच्यते।

शचीपमायाध्रिगवे। ऋ. वे. १. ६१. १.

इति यथा। अत्रापीतिहासमाचक्षते। देवास्सर्वे इन्द्रं ब्रह्माणं वव्रुः। सोऽब्रवीत्। अव्रतोऽहं गव इति। अनूबन्ध्यादिगोयागवर्जमहं ब्रह्मत्वं करोमीति। गोयागे त्वहम

व्रत इति । तस्मात् गवे अधृतत्वादुपपन्नं इन्द्रस्यापिगुत्वम् । अधृतगमनत्वात् वा । ओम्यावतीम् । अवतेः पालनार्थस्येदं रूपम् । फलकृते पालनेन तद्वतीम् । अस्मत्पालनफलां इत्यर्थः । सुभरां सुष्ठुभर्तुभिः संपूर्णाम् । ऋतस्तुभम् । ऋतमिति सत्यनाम । स्तोभतिरर्चतिकर्मा । सत्यस्तुतिम् । इमां अस्मदीयां प्रति ताभिः ॥ २०

याभिः॑ कृ॒शानु॒मस॑ने दुव॒स्यथो॑ ज॒वे याभि॒र्यूनो॒ अर्व॑न्त॒माव॑तम् ।

मधु॑ प्रि॒यं भ॑रथो॒ यत्स॒रड्भ्य॒स्ताभि॑रू॒ षु ऊ॒तिभि॑रश्विना ग॑तम् ॥ २१

अत्रेतिहासमाचक्षते । कृशानुर्नाम सोमपालः । तं सोममपजिहीर्षन्तोऽसुराः अभिदुद्रुवुः । स तान् हन्तुमिषूंश्चिक्षेप । तदेतद्वामदेवो दर्शयिष्यति

ऋजीपी श्येनो ददमानो अंशुम् । ऋ. वे. ४. २७. ३.

इति । तस्मै इषूंश्चिक्षिप्सतेऽश्विनावमोघानिषून् ददतुरिति । तथापरमितिहासमाचक्षते । शार्यातस्य राज्ञो मृगयायां महता वेगेन मृगमनुधावन्नश्वो भृगुमाप । तमश्विनौ वारयाञ्चक्रतुरिति । तदेतदितिहासद्वयमिहोच्यते । याभिरूतिभिर्गत्वा कृशानुं सोमपालं अस्मने । असु क्षेपणे । असुरान् हन्तुमिषूणां क्षेपणकाले । दुवस्यथः । दुवस्यतिः परिचरणकर्मा । परिचरितवन्तौ स्थः आमोघानामिषूणां प्रदानेन । जवे वेगे महति । सप्तमीश्रुतेर्वर्तमानमिति वाक्यशेषः । याभिः यूनः तरुणस्य शार्यातस्य राज्ञः स्वभूतमर्वन्तमश्वं भृगुप्रपाताद्रक्षितवन्तौ स्थः । मधु प्रियम् । अत्रापीतिहासमाचक्षते । सरडा नाम मधुकर्यः मक्षिकाः । ताः कस्यांचिदनावृष्ट्यां शुष्कासु सर्वपुष्पजातिषु क्षुधा बाध्यमाना मध्वर्थिन्योऽश्विनावाजुहुवुः । ताभ्य उपगम्याश्विनौ मधु ददतुः । तत् ताः पपुरिति । तदेतत् कक्षीवान् वक्ष्यति

उत स्या वां मधुमत् । ऋ. वे. १. ११९. ९.

इति । घोषापि वक्ष्यति

युवोर्ह मक्षा । ऋ. वे. १०. ४०. ६.

इति । तदेवेहाप्युच्यते मधु प्रियमित्यादिना । मधु प्रियमिष्टं भरथः । हरतेरिदं भत्वं हृग्रहोर्भश्छन्दसि (वा. ८. २. ३२-१) । व्यत्ययेन भूते लट् । आहरतं प्रापयतम् । दत्तवन्तौ स्थ इत्यर्थः । यत् । तृतीया बहुवचनस्यात्र लुक् । याभिः सरड्भ्यः । सरडाख्या मधुकर्यः । ताभ्यो मक्षिकाभ्यः । अस्मानपि प्रतिताभिः ॥ २१

याभि॒र्नरं॑ गोषु॒युधं॑ नृ॒षाह्ये॒ क्षेत्र॑स्य सा॒ता तन॑यस्य॒ जिन्व॑थः ।

याभी॒ रथाँ॒ अव॑थो॒ याभि॒रर्व॑त॒स्ताभि॑रू॒ षु ऊ॒तिभि॑रश्विना ग॑तम् ॥ २२

याभिरूतिभिर्गत्वा नरं सर्वमनुष्यं स्तोतारं यष्टारं च । गोषुयुधम्। गोष्वपह्रियमाणासु तद्रक्षार्थं यो युध्यते स गोषुयुत्। तं गोषुयुधम्। नृषाह्ये। नरो यत्राभिभूयंते प्रतियोद्धृभिः स नृषाह्यः संग्रामः। तस्मिन्। चोरैः सह संग्रामे। क्षेत्रस्य च सातौ लाभे। तनयस्यापत्यस्य च जिन्वथः। जिन्वतिः प्रीतिकर्मा। जयकरणेन क्षेत्रापत्यदानेन च प्रीणयथः। याभिश्च रथान् स्तोतुः स्वभूतान् अवथः रक्षथः। याभिश्चाश्वान्। अस्मानपि प्रति ताभिः॥ २२

याभिः कुत्समार्जुनेयं शतक्रतू प्र तुर्वीतिं प्र च दभीतिमावतम्।
याभिर्ध्वसन्तिं पुरुषन्तिमावतं ताभिरू षु ऊतिभिरश्विना गतम्॥ २३

अत्रेतिहासमाचक्षते। कुत्सस्तुर्वीतिर्दभीतिश्च इयेषुः। अपिनामाश्विनौ साक्षाद्रूपेण पश्येयमिति। तेषां परया भक्त्या आराधितावश्विनौ दर्शनमुपजग्मतुरिति। तदेतदिहोच्यते। पुरस्तादप्युक्तम्।

याभिः कुत्सम्। ऋ वे. १ ११२ ९.

इति। याभिरूतिभिः पालनैः पूर्वं मामेव कुत्सं प्रति। कतमम्। आर्जुनेयम्। अर्जुनी नाम कुत्सस्य माता। तस्यापत्यम्। हे शतक्रतू बहुकर्माणौ बहुप्रज्ञौ वा। न च केवलं कुत्सम्। किं तर्हि। प्र तुर्वीतिं प्र च दभीतिं आवतम्। प्र इत्येषः उपेत्यस्य स्थाने। चशब्दश्च दभीतिमित्यस्मात् परो द्रष्टव्यः। आवतिरपि गत्यर्थः। तुर्वीतिं दभीतिं च दर्शनार्थमुपगतवन्तौ स्थः। याभिर्ध्वसन्तिमित्यादि। अत्रापीतिहासमाचक्षते। ध्वसन्तिर्नाम वेश्या। तथा पुरुषन्तिः। ते उपहासकुशले इति श्रुत्वा अश्विनौ संभोगार्थमुपाजग्मतुरिति। तदेतदिहोच्यते। याभिश्च ध्वसन्ती वेश्या। वेश्यां पुरुषन्तिं च आवतं संभोगार्थमुपगतवन्तौ स्थः। अस्मानपि प्रति ताभिरू षु ऊतिभिरश्विना गतम्। २३

अप्नस्वतीमश्विना वाचमस्मे कृतं नो दस्रा वृषणा मनीषाम्।
अद्यूत्येऽवसे नि ह्वये वां वृधे च नो भवतं वाजसातौ॥ २४

अप्न इति कर्मनाम। यागकर्मणा तद्वतीम्। हे अश्विनौ वाचमिमां अस्मे अस्माकं स्वभूतां कृतं कुरुतम्। न च केवलां वाचम्। किं तर्हि। नः अस्माकं स्वभूतां हे दस्रा दस्रनामानौ। अन्यतरनाम्नापि चेदं साहचर्यादुभयोरभिधानम्। क्रियाशब्दो वा दंशेर्दर्शनार्थस्य दस्यतेर्वोपक्षयार्थस्य दस्रशब्दः। दर्शनीयौ उपक्षपयितारौ

वा शत्रूणां । वृषणा वर्षितारौ । मनीषां प्रज्ञामपि । चित्तमप्यस्माकं यागपरं कुरुतमित्यर्थः । कथं पुनरिदं उभयं भवति । उच्यते । यद्यश्विनावागच्छतः आगतयोर्हि तयोर्यागः क्रियते । तेन क्रियमाणेन कर्मवत्यौ वाक्प्रज्ञे भवतः । अथवा वाक्प्रज्ञाकरणेन तद्धेतुभूतमागमनमेव प्रतिपाद्यते । यागार्थमागच्छतमित्यर्थः । कस्मात् । उच्यते । यस्मादद्यूत्ये अवसे । दीव्यतिर्विजिगीषार्थः । देवनं द्यूतम् । विजिगीषा यस्मिन्नास्ति तदद्यूतं अविजिगिष्यन् । अद्यूतमेवाद्यूत्यम् । स्वार्थिको यत्प्रत्ययः छान्दसत्वात् । चतुर्थ्यर्थे च । अवस्तर्पणम् । युवयोरेव योग्यत्वादन्यया देवतया विजिगीषितुमशक्यं सोमतर्पणं तदर्थं निह्वये नियमेनाह्वये । वां युवाम् । किंच वृधे वर्धनाय च सर्वदा नः अस्माकं भवतं वाजसातौ सङ्ग्रामे ॥ २४

द्युभि॑र॒क्तुभि॒ः परि॑ पातम॒स्मानरि॑ष्टेभिरश्विना॒ सौभ॑गेभिः ।

तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑तिः॒ सिन्धु॑ः पृथि॒वी उ॒त द्यौः ॥ २५

द्यु इत्यह्नो नामधेयम् । अक्तुरिति रात्रेः । सप्तम्यर्थे च तृतीया । अहस्सु रात्रिषु च । परिपातं पालयतं अस्मान् । किंच अरिष्टेभिः अहिंसितैः हे अश्विनौ सौभगेभिः । भग इति धननाम । शोभनानि धनानि सुभगानि । सुभगान्येव सौभगानि । तैः सौभगेभिः । तृतीयाश्रुतेः साकांक्षत्वात् संयोजयतामिति वाक्यशेषः । अहिंसितानि च शोभनानि च धनान्यस्मभ्यं दत्तमित्यर्थः । तन्नो मित्र इत्याद्युक्तार्थम् ॥ २५

वलभीविनिवास्येतामृगर्थागमसंहृतिम् ।
भर्तृध्रुवसुतश्चक्रे स्कन्दस्वामी यथास्मृति ॥

---

मभ्यैत् (ऐ. ब्रा. ३. ३३. इत्येवमाद्युपक्रम्य तद्वा इदं प्रजापते रेतः सिक्तमधावत्त-त्सरोऽभवत् (ऐ ब्रा. ३. ३३) इति च । तदग्निना वैश्वानरेण पर्यादधुः । तं मरुतो धून्वन् । तदग्निर्वैश्वानरः प्रच्यावयत् । तस्य यद्रेतसः प्रथममुददीप्यत तदसावादित्यो भवत् (ऐ. ब्रा. ३. ३४) इत्येवं प्रजापतेः सकाशादुषसि जात आदित्य इति श्रूयते । अतश्चोपपन्नमस्य तदपत्यत्वम् । यद्वा प्रातः प्रातरुषसः सकाशादादित्यो जायते । तदभिप्रायमस्यापत्यत्वम् । असत्यपि चापत्यत्वे तदीयरसहरणसामान्यादेव वत्सव्यपदेशः । यथा हि पयोवत्सः पयआख्यं रसं पिबन्नाहरति एवमसावादित्य उषसोऽवश्यायाख्यम् । दीप्तादित्याख्य-वत्सा । रुशती स्वयमपि च दीप्ता । श्वेत्या । उषसो नामैतत् । उषाः आ अगात् उदिता । अरैक् रेचितवती । उ इति पदपूरणः । कृष्णा तमःसम्बन्धात् कृष्णवर्णा रात्रिः । सदनानि स्थानानि । अस्या उषसः । ........ . ......... . ..... ......

... ........ ... . उभे रात्र्युषसौ समानबन्धू । समानो बन्धुर्ययोः ते समानबन्धू । प्रजापतिर्हि रात्र्युषसोः समानबन्धुः जनयितृत्वात् । आदित्यो वा । स हि जनयितृत्वेन रात्रेर्बन्धुः जन्यत्वेनोषसः जनयितृत्वेन वा उभयोः । स ह्यस्तमयेन रात्रिं जनयति उदयेन चोषसम् । अमृते अमरणधर्माणौ । अहरन्तरेषु पुनःपुनरपि दृश्यमानत्वात् अनूची परस्परेणानुगते । परस्परतः संवर्तिन्यौ संबद्धे चेत्यर्थः । द्यावा । द्युतेर्दीप्यतेर्वा दीप्त्यर्थस्येदं रूपम् । स्वेन स्वेन तेजसा दीप्ते । वर्णं कृष्णं शुक्लं चात्मीयं वर्णम् । चरतः गच्छतः । प्राप्नुत इत्यर्थः । अथवा द्यावेति दिवः पर्यायः तृतीयैकवचनान्तश्चात्र द्रष्टव्यः । तृतीयानिर्देशाच्चात्र योग्य-क्रियापदाध्याहारः । दिवा सह महत्त्वादिना गुणेन स्पर्धमाने दिवा वानुगृह्यमाणे स्वं स्वं वर्णं प्राप्नुत इति । द्यौर्हि तमसा ज्योतिषश्चान्यतरप्रदानेन नानुगृह्णाति रात्र्युषसोः । आमिनाने । आङीषदर्थे । मीङ् हिंसायाम् । ईषद्धिंसत्यौ । किम् । सामर्थ्यात् परस्पर-रूपम् । रात्रिर्ह्युषसा रूपं ज्योतिरीषद्धिनस्ति । उषा अपि रात्रेस्तमः । अथवा द्यावेति सप्तम्येकवचनस्य आकार आदेशः । चरत इत्यनेन चास्य सम्बन्धः । दिवि चरतो गच्छतः । वर्णमित्येतत्तु आमिनाने इत्येतेन संबध्यते । आत्मीयं रूपमीषद्धिंसत्यौ । अथवा आमिनाने इत्याकारोऽध्यर्थे । मिनातिरपि सामर्थ्यात् करोत्यर्थः । आत्मीयं रूपमधि उपरि कुर्वाणे । कस्य । सामर्थ्यात् प्रकृतत्वाच्च दिव एव ॥ २

समानो अध्वा स्वस्रो॑रनन्तस्तमन्यान्या चरतो देवशिष्टे ॥

न मे॑थेते न त॑स्थतुः सुमेके नक्तोषासा समनसा विरूपे ॥ ३

तमिति नच्छन्दश्रुतेर्यच्छब्दोऽध्याहार्यः । योऽयं समानः अध्वा गमनमार्गः आगामिकाललक्षणः । स्वस्रोः भगिन्योः । राज्युषसौ ह्येकेन प्रजापतिना आदित्येन वा जन्येते इत्युपपन्नमनयोर्भगिनीत्वम् । कीदृशः । अनन्तः अत्यन्तबहुः । तमन्यान्या । अन्यान्याशब्दः परस्परपर्यायः तृतीयैकवचनस्यात्र लुग्द्रष्टव्यः । तृतीयाश्रुतेर्योग्य-क्रियाध्याहारः। परस्परेण सम्बद्धे चरतः गच्छतः। देवशिष्टे । शासिरत्र शुद्धोऽपि साम-र्थ्यात् सोपसर्गार्थो द्रष्टव्यः । सर्वप्राणिनामुपकाराय देवैरनुशिष्टे । अनुज्ञाते इत्यर्थः । परस्परसंबद्धे अपि च गच्छतः न मेथेते मेथतिराक्रोशकर्मा । मनुष्यवत् परस्परं नाक्रोशतः । न तस्थतुः क्षणमपि न तिष्ठतः । कीदृश्यौ । सुमेके । मेकशब्दो सुखवचन इति केचिदाहुः । सुमुख्यौ । सृष्टेः प्रथमः संवत्सरो मेक इत्युच्यते इत्यन्ये । तथाहि मेकः संवत्सरः ऋतवो मेकपुत्रा इति पौराणिकाः स्मरन्ति । शोभनो मेको ययोः सम्बन्धी सृष्टिकालजन्यतया ते सुमेके । आद्यसंवत्सरसृष्टे इत्यर्थः । के । नक्तोपसा राज्युपसौ । समनसा संगतचित्ते । परस्परवशवर्तिन्याविल्यर्थः । विरूपे विभिन्नरूपे विचित्ररूपे वा ॥ ३

भास्वती नेत्री सूनृतानामचेति चित्रा वि दुरो न आवः ।
प्रार्प्या जगद्व्यु नो रायो अख्यदुषा अजीगर्भुवनानि विश्वा ॥ ४

भास्वती दीप्तिमती । नेत्री प्रवर्तयित्री । सूनृतानाम् । अपठितमपि वाङ्नामै-तत् । वाचाम् । उषउदयकाले हि प्राणिनां वाचः प्रवर्तन्ते । अतः सैव तासां प्रवर्त-यित्रीत्युच्यते । अचेति चेत्यते ज्ञायते । दृश्यत इत्यर्थः । चित्रा विचित्रा पूज्या वा दृश्यमानैव । दुरः सर्वार्थानां दृश वाग्द्वाराणि । नः अस्मभ्यम् । वि आवः विवृ-णोति । प्रकाशयतीत्यर्थः । न चेदानीमेव केवलम् । किं तर्हि । पूर्वस्मिन्नपि काले । प्रार्प्या । आर्पिगेत्यर्थः । प्रगमय्य जगत् । तेषु तेषु व्यापारेषु कृत्स्नं जगत् प्रवर्त्येत्यर्थः । व्यु नः । उ इति पदपूरणः । नः अस्मभ्यं रायः धनानि । व्यख्यत् । ख्यतिरत्रान्त-र्णीतण्यर्थो द्रष्टव्यः । विविधं ख्यापितवती । प्रकाशितवतीत्यर्थः । किंच उषाः अजीगः । जिगर्तिरत्र सामर्थ्यात् गत्यर्थः ।

यो वां दूतो न धिष्ण्यौ । ऋ वे. ७ ६७. १.

इति यथा । उषाः गच्छति । भुवनानि विश्वा सर्वाणि भूतजातानि प्रति ॥ ४

जिह्मश्येऽ चरितवे मघोन्याभोगय इष्टये राय उ त्वम् ।
दभ्रं पश्यद्भ्य उर्विया विचक्ष उषा अजीगर्भुवनानि विश्वा ॥ ५

जिह्मशब्दः कुटिलवचनः । शीङ् स्वप्ने । किंचित् प्रति कुटिलशयनाय । चरितवे गमनाय अन्यं प्रति । मघोनी धनवत्युषाः । आ भोगये संभोगायान्यं प्रति । इष्टये

यागायान्यं प्रति। राय उ त्वम्। उ इति पदपूरणः। त्वमिति सर्वनाम एकशब्देन समानार्थः। एकशब्दश्चान्यार्थे। धनायान्यं प्रति। उषसि ह्यागतायां कश्चिन्निद्रालुः पार्श्वेनावस्थाय संकोच्य जंघे कुटिलः शेते। ... ...... ...... ... ...
कश्चित् भोजनादिसंभोगान् कर्तुमारभते। कश्चिद्यष्टुं कश्चिद्धनार्थं यतते। एतदुच्यते जिह्मश्य इत्यादिना। दभ्रं पश्यद्भ्यः। दभ्रमित्यल्पनाम। तमसा आच्छादितत्वात् अल्पं पश्यद्भ्यो मनुष्येभ्यः। उर्विया विचक्षे। उर्वियेति प्रथमाया इयादेशः। विचक्षे इत्यपि चष्टिरन्तर्णीतण्यर्थः। तुमर्थे च कन्प्रत्ययः। विस्तीर्णं विख्यापयितुम्। तमसा चाभिभूतत्वात् अस्फुटं पश्यद्भ्यः स्फुटं दर्शयितुमित्यर्थः। एवमुषा अजीगः भुवनानि विश्वा॥ ५

क्ष॒त्राय॑ त्वं श्रव॑से त्वं म॑ही॒या इ॒ष्टये॑ त्वमर्थ॑मिव त्वमि॒त्यै।
विस॑दृशा जीवि॒ताभि॑प्र॒चक्ष॑ उ॒षा अ॑जीग॒र्भुव॑नानि॒ विश्वा॑॥ ६

क्षत्रमिति धननाम। धनाय एकं प्रति श्रवसे त्वं अन्नायान्यं प्रति। महीयै। महतेर्दानकर्मणः महेर्वा पूजार्थस्येदं रूपम्। दानार्थं पूजार्थं वान्यं प्रति। इष्टये त्वं यागायान्यं प्रति। अर्थमिव त्वमित्यै। इतिर्गमनम्। यथा अर्थी नियमेनादरेण वा अर्थं प्रति गच्छति तद्वत् नियमेनादरेण वा गमनायान्यं प्रति। एवं विसदृशा विसदृशानि। जीविता। कर्तर्ययं क्तप्रत्ययः। जीवानि। अभिप्रचक्षे अभिप्रकाशयितुम्। उषा अजीगः भुवनानि विश्वाः॥ ६

ए॒षा दि॒वो दु॑हि॒ता प्रत्य॑दर्शि व्यु॒च्छन्ती॑ युव॒तिः शु॒क्रवा॑साः।
विश्व॒स्येशा॑ना॒ पार्थि॑वस्य॒ वस्व॒ उषो॑ अ॒द्येह सु॑भगे॒ व्यु॑च्छ॥ ७

एषा उषा दिवः दुहिता। द्युप्रभवत्वादुषा दिवो दुहितेत्युच्यते। प्रत्यदर्शि। प्रतिशब्दोऽत्र धात्वर्थानुवादी। दृश्यते। व्युच्छन्ती। उच्छि विवासे। तमांसि विवासयन्तीत्यर्थः। युवतिः सर्वदैव तरुणी। शुक्रवासाः। शुक्रः प्रकाशो वासःस्थानीयो यस्याः सा शुक्रवासाः। विश्वस्य सर्वस्य ईशाना ईश्वरी। पार्थिवस्य पृथिव्यां भवस्य। वस्वो धनस्य। परः पादः प्रत्यक्षकृतत्वात् भिन्नं वाक्यम्। हे उषः अद्य इहास्मदीये यज्ञे। सुभगे सुधने। व्युच्छ तमांसि विवासयन्ती जीव॥ ७

प॒रा॒य॒ती॒नामन्वे॑ति॒ पाथ॑ आयती॒नां प्र॑थ॒मा शश्व॑तीनाम्।
व्यु॒च्छन्ती॑ जी॒वमु॑दी॒रय॑न्त्यु॒षा मृ॒तं कं च॒न बो॒धय॑न्ती॥ ८

परायतीनां परागच्छन्तीनां गवादिजातीनाम् । अन्वेति अनुगच्छति । पाथ पन्थानः । आयतीनां आगच्छन्तीनां च प्रथमा शश्वतीनां बह्वीनां नित्यानां वा । याश्च दूरवर्तिन्यो गवादिजातयो याश्च सन्निकृष्टाः सर्वव्यापित्वात् ताः सर्वा अनुगच्छतीत्यर्थः । किं कुर्वन्ती । उच्यते । तमांसि विनाशयन्ती । जीवमुदीरयन्ती । जीवं प्राणिजातम् । उदित्ययं प्रेत्येतस्य स्थाने । प्राणिजातं च तेषु तेषु व्यापारेषु प्रेरयन्ती। का । उषाः । मृतं कंचन बोधयन्ती । मृतशब्दोऽत्र लुप्तोपमो द्रष्टव्यः । मृतमिव च कंचिदत्यन्तनिश्चेष्टं सुप्तं सर्वप्राणिजातं प्रबोधयन्ती ॥　　८

उषो यद॒ग्निं स॒मिधे॑ च॒कर्थ॒ वि यदाव॒श्चक्ष॑सा॒ सूर्य॑स्य ।
यन्मानु॑षान्य॒क्ष्यमा॑णाँ॒ अजी॑ग॒स्तद्दे॒वेषु॑ चकृषे भ॒द्रमप्नः॑ ॥　　९

हे उषः यदाहवनीयाख्यमग्निम् । समिधे समिन्धनाय । चकर्थ करोषि। समिन्धयसीत्यर्थः । उषसि ह्युदितायामग्निहोत्रिण आहवनीयं समिन्धयन्ति नानुदितायाम् । अतस्तमुषा एव समिन्धयतीत्युच्यते । वि यदावः विवृणो इत्यर्थः । चक्षुषा दर्शनेन प्रकाशाख्येन । सूर्यस्य संबन्धिना । सूर्यप्रभवेनेत्यर्थः । उषसो हि प्रकाशः उदेष्यतः सूर्यात् प्रभवति । यच्च मानुषान् मनुष्यान् यक्ष्यमाणान् प्रति । अजीगः गच्छसि । तत् त्रिविधमपि देवेषु । निर्धारण एषा सप्तमी । देवानां मध्ये । त्वमेवैका चकृषे करोषि । भद्रं कल्याणं अप्नः कर्म ॥　　९

किय॒त्या यत्स॒मया॒ भवा॑ति॒ या व्यू॒षुर्याश्च॑ नू॒नं व्यु॒च्छान् ।
अनु॒ पूर्वा॑ः कृपते वावशा॒ना प्र॒दीध्या॑ना॒ जोष॑म॒न्याभि॑रेति ॥　　१०

आकारोऽत्र पदपूरणः स्विदित्यस्य वार्थे । स्विच्छब्दश्च पुनरित्येतेन समानार्थः वितर्कवचनः । कियति पुनर्जगतः प्रदेशे समया भवाति। समयाशब्दः समीपवचनः। समीपीभवत्युषा । नैव जानीमः कियत्यपि जगतः प्रदेशे समीपीभवत्युषा इति । सर्वव्यापिन्येव लक्ष्यते इत्यर्थः । या किं करोतीत्युच्यते । यत् । प्रथमैकवचनस्यात्र लुग्द्रष्टव्यः । या व्यूषुः या उषसः पूर्वकालेषु व्युष्टवत्यः । याश्च नूनं व्युच्छान् । नूनमिति पदपूरणः इदानीमित्यस्य वार्थे। याश्चेदानीं व्युच्छन्ति । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः । ताः सर्वाः । पूर्वाः पूर्ववृत्ताः । अनुकृपते । कृपा कृपण्यतीत्यर्चतिकर्मसु पाठात् कृपिरत्र ... . . यच्च उषस्युदितायां स्तोतारः स्तुवन्ति तदुषा एव स्तौतीत्युच्यते । वावशाना । वश कान्तौ वाश्र शब्दने इत्यनयोरन्यतरस्येदं रूपम् । कामयमाना शब्दं वा कुर्वन्तीत्यर्थः । यच्च उषस्युदितायां ...

... कामयन्ते शब्दं वा कुर्वन्ति तदुपस्थेयोपचर्यते । या च प्रदीध्याना। दीध्यतेर्दीप्त्यर्थस्य रूपम् । प्रकर्षेण दीप्यमाना । जोषं प्रति अन्याभिरुषोभिः सह एति गच्छति। तुल्यकालाभिरुषोभिः सहैवैतां प्रतिपद्यते न विरुध्यत इत्यर्थः ॥ १०

ईयुष्टे ये पूर्वतरामपश्यन् व्युच्छन्तीमुषसं मर्त्यासः ।
अस्माभिरू नु प्रतिचक्ष्याभूदो ते यन्ति ये अपरीषु पश्यान् ॥ ११

ईयुः ते ते गताः । मृतास्त इत्यर्थः । ये पूर्वतरां पूर्वप्रवृत्ततराम् । अतीतकालामित्यर्थः । अपश्यन् दृष्टवन्तः । व्युच्छन्तीं तमांसि विवासयन्तीम् । उषसं मर्त्यासः मनुष्याः । अस्माभिरू नु । उकारोऽत्रापिशब्दस्यार्थे । नुशब्दः पदपूरणः । अस्माभिरपीदानीन्तनैः । प्रतिचक्ष्या । प्रतिशब्दोऽत्र धात्वर्थानुवादी । चक्षतिः पश्यतिकर्मा । द्रष्टव्या अभूत् भवति । अस्मादयोऽपि वर्तमानकालामुषसं पश्यन्तीत्यर्थः । ओ ते यन्ति । ओ इति आङ उना सहैकादेशः आ उ ओ इति । उश्च पदपूरणः । यन्तीत्यपि लृडर्थे लट् । आयास्यन्ति ते । ये अपरीषु । द्वितीयार्थे सप्तम्येषा । अपराः पश्चिमाः । आगामिकाला इत्यर्थः । पश्यान् द्रक्ष्यन्ति । अतीतैर्वर्तमानैरागामिभिश्च सर्वैर्मनुष्यैरुषा दृश्यते नास्मदादिवत् कैश्चिदेव इति समस्तार्थः ॥ ११

यावयद्द्वेषा ऋतपा ऋतेजाः सुम्नावरी सूनृता ईरयन्ती ।
सुमङ्गलीर्बिभ्रती देववीतिमिहाद्योषः श्रेष्ठतमा व्युच्छ ॥ १२

उष इत्यामन्त्रणयोगाद्व्युच्छेति मध्यमपुरुषयोगात् प्रत्यक्षकृतोऽयं मन्त्रः । यावयद्द्वेषा इत्यादीनि च नामन्त्रितानि । अतो यत्तच्छब्दावध्याहृत्यैकवाक्यता नेया । यावयद्द्वेषा । यौतिरत्र पृथग्भावार्थः । द्वेषशब्दोऽपि द्वेष्यत्वान्नक्तंचरान् रक्षआदीनाह । द्वेषाणां यावयित्री यावयद्द्वेषा । राजदन्तत्वात् परनिपातः । द्वेषाणां नक्तंचराणां रक्षआदीनां पृथग्भावयित्री । अपनेत्रीत्यर्थः । ऋतपाः यज्ञस्य पालयित्री । यज्ञो ह्युषस्युदितायां क्रियते न रात्रौ । अतस्तस्य पालयित्रीत्युच्यते । ऋतेजाः । ऋतशब्दोऽत्रादित्यवचनः । पञ्चम्याश्च स्थाने सप्तमी । आदित्याज्जनित्री । सुम्नावरी । सुम्नमिति सुखनाम । तद्वती । प्राणिनां सुखकारीत्यर्थः । तच्छब्दोऽध्याहर्तव्यः । ससूनृता वाचः ईरयन्ती प्रेरयन्ती । उषउदयोत्तरकालं हि प्राणिनां वाचः प्रवर्तन्ते । अतः सैव ताः प्रेरयन्तीति व्यपदिश्यते । सुमंगलीः सुष्ठु मंगलया सती । बिभ्रती धारयती । देववीतिं देवकामम् । देवानस्मदीयहविःकामान् कुर्वन्तीत्यर्थः । इहास्मदीये यज्ञे । अद्य हे उषः श्रेष्ठतमा अतिशयेन प्रशस्या । व्युच्छ तमांसि विवासय ॥ १२

शश्वत्पुरोषा व्युवास देव्यथो अद्येदं व्यावो मघोनी ।
अथो व्युच्छादुत्तराँ अनु द्यूनजरामृता चरति स्वधाभिः ॥ १३

एतस्मादित्येतत्समानार्थोऽथोशब्दः । तच्छ्रुतेर्यस्मादित्यध्याहार्यम् । शश्वत् बहु-न्नित्यं वा । पुरा पूर्वेष्वपि कालेषु । उषा देवी व्युवास । वसिरत्रान्तर्णीतण्यर्थः । तमांस्यस्मदीये कर्मणि विवासितवती । अथो एतस्मात्कारणात् । प्रसादत्वात्कारणात् । अद्यास्मदीये कर्मणि व्यावः विवृणोतु विवृतवती वा । प्रकाशितवती वेत्यर्थः । मघोनी धनवती । अथो एतस्मादेव कारणात् व्युच्छात् । आशिष्यर्थं लिङर्थे लेट् । विवासयेत्तमांस्यस्मदीये कर्मणीत्याशास्महे । उत्तरान् अनु द्यून् । अनुशब्दोऽत्र लक्षणेत्थं-भूताख्यान (पा. १. ४. ९०.) इत्येवं कर्मप्रवचनीयः प्रतिशब्दस्य समानार्थः । द्यु इत्यहर्नाम । उत्तराण्यहानि प्रति । आगामिन्यपि काल इत्यर्थः । कीदृशी । उच्यते । अजरा जरावर्जिता । अमृता मरणवर्जिता । चरति सर्वत्र गच्छति । स्वधाभिः । स्वधाशब्दोऽत्र सामर्थ्यात् ज्योतिर्वचनः । स्वैः ज्योतिर्भिः । सर्वं ज्योतिर्भिर्व्याप्नोती-त्यर्थः । अथवा स्वधेत्यन्ननाम । हविर्लक्षणैरन्नैर्निमित्तभूतैर्गच्छति । हवींष्युपभोक्तुं यज्ञेषु गच्छतीत्यर्थः ॥ १३

व्य१ञ्जिभिर्दिव आतास्वद्यौदप कृष्णां निर्णिजं देव्यावः ।
प्रबोधयन्त्यरुणेभिरश्वैरोषा याति सुयुजा रथेन ॥ १४

विशब्दः अद्यौदित्याख्यातेन सम्बन्धयितव्यः । अञ्जिभिरित्यञ्जिशब्दो व्यक्ति-रूपत्वात् ज्योतिर्वचनः । ततो ज्योतिर्भिः दिवः अवयवभूतासु आतासु ..... ... ... .. . .. दिक्षु । व्यद्यौत् विविधं द्योतते । किंच कृष्णां निर्णिजम् । कृष्णामिति षष्ठ्याः स्थाने व्यत्ययेन द्वितीया । निर्णिगित्यपि रूपनाम । कृष्णवर्णाया रात्रेः सम्ब-न्धिनमेवंलक्षणं रूपम् । आवः आवृणोति । अपनयतीत्यर्थः । किंच सुप्तान् प्राणिनः प्रबोधयन्ती । अरुणेभिः अरुणवर्णैरश्वैः । सुयुजा सुयुक्तेन रथेन । ओषा याति आगच्छत्युषाः । १४

आवहन्ती पोष्या वार्याणि चित्रं केतुं कृणुते चेकिताना ।
ईयुषीणामुपमा शश्वतीनां विभातीनां प्रथमोषा व्यश्वैत् ॥ १५

आवहन्ती आनयन्ती स्तोतॄणां यष्टॄणां चार्थाय । स्तोतृभ्यो यष्टृभ्यश्च ददाती-त्यर्थः । पोष्या पोषणसमर्थानि धनानि । वार्याणि वरणीयानि । अत्यन्तोत्कृष्टा-

नीत्यर्थः । चित्रं विचित्रं पूज्यं वा । केतुं प्रज्ञानं प्रकाशाख्यम् । कृणुते करोति । चेकिताना ज्ञायमाना । दृश्यमानैवेत्यर्थः । किंच ईयुषीणामुपमा शश्वतीनाम् । शश्वदिति बहुनाम । निर्धारणे चोभयत्र षष्ठी । गन्त्रीणां बह्वीनां मध्ये उपमानभूता । अत्यन्तोत्कृष्टेत्यर्थः । किंच विभातीनां प्रथमा । भा दीप्तौ । दीप्यमानानां मध्ये प्रथमा उत्कृष्टा । उषा व्यश्वैत् । श्वयतेर्गत्यर्थस्य वृध्यर्थस्य वेदं रूपम् । विविधं सर्वत्र गच्छति वर्धते वा ॥ १५

उदी॑र्ध्वं जी॒वो असु॑र्न॒ आगा॒दप॒ प्रागा॒त्तम॒ आ ज्योति॑रेति ।

आरै॒क्पन्थां॒ यात॑वे॒ सूर्या॒याग॑न्म॒ यत्र॑ प्रति॒रन्त॒ आयुः॑ ॥ १६

ईर गतौ । ऋत्विजां वायं प्रैषः पुत्रपौत्रप्रभृतीनां वा । ऊर्ध्वं गच्छत यष्टुं स्तोतुं च । शयनेभ्य उत्तिष्ठतेत्यर्थः । किं कारणम् । उच्यते । यस्माज्जीवः जीवितस्थानीया । असुः । असुरिति प्राणनाम । प्राणस्थानीया च । नः अस्माकमागात् । आ इत्येष उदित्येतस्य स्थाने । उद्गता । का । प्रकृतत्वादुषाः । यस्माज्जीवितात् प्राणेभ्यश्च प्रियतमा अस्माकमुषा उदितेत्यर्थः । उद्गतायां च तस्यामपप्रागात्तमः । अप प्रेति व्यस्यासेनोपसर्गौ योजयितव्यौ । आगादित्यपि च वर्तमानकाले लुङ्प्रत्ययो द्रष्टव्यः छन्दसि लुङ् लङ् लिटः (पा. ३ ४ ६. ) इति । प्रकर्षेणापगच्छति शार्वरं तमः । आ ज्योतिरेति ज्योतिश्च उषसः प्रकाशाख्यं सर्वत्र आ एति आगच्छति । सर्वं व्याप्नोतीत्यर्थः । एषा च आरैक् पन्थां रेचयति पन्थानम् । यातवे गन्तुम् । सूर्याय सूर्यार्थम् । सूर्यो गमिष्यतीत्येवमर्थमित्यर्थः । केन पुनर्व्यापारेण औषसं ज्योतिः सूर्यस्य पन्थानं रेचयति । आत्मापगमनेन । कुत एतत् । औषसस्य ज्योतिषोऽन्ते सूर्योदयदर्शनात् । यस्माच्चागन्म गता प्राप्ता वयम् । क्व । उच्यते । यत्र व्यवस्थिताः अद्य ऋत्विज ऋत्विजः प्रतिरन्ते वसतीवर्यैकधनादिभिः प्रवर्धयन्त्यायुः । अन्ननामैतत् । सोमादिहविर्लक्षणमन्नम् । यस्मादुषा उदिता वयमपि यज्ञं कर्तुं प्रवृत्ता इत्यर्थः ॥ १६

स्यूम॑ना वा॒च उदि॑यर्ति॒ वह्निः॒ स्तवा॑नो रे॒भ उ॒षसो॑ विभा॒तीः ।

अ॒द्या तदु॑च्छ गृण॒ते म॑घो॒न्य॒स्मे आयु॒र्नि दि॑दीहि प्र॒जाव॑त् ॥ १७

अद्या तदुच्छेति तच्छब्दश्रुतेर्यच्छब्दोऽत्राध्याहर्तव्यः । यस्मात् स्यूमना । स्यूमशब्दोऽत्र सुखवचनः । सुखेनाक्लेशेन । स्तुतिलक्षणा वाचः । उदियर्ति । ऋ गतौ । सामर्थ्याच्चात्रान्तर्णीतण्यर्थः । आत्मन एवायं परोक्षरूपेण प्रथमपुरुषेण व्यपदेशः । होत्राख्यं ऋत्विक् कुत्सनामा वा ऋषिः उद्गमयति । उच्चारयतीत्यर्थः ।

बलवान् वह्निरुच्यते वहनसमर्थत्वात् । स्तवानः स्तुवन् । रेभः । स्तोतृनामैतत् । स्तोता च । किं स्तुवन् । उच्यते । यस्मादुषसो विभातीः विविधं दीप्यमानाः । अद्या तदुच्छ । तदिति पञ्चम्या लुग्द्रष्टव्यः । तस्मादद्य व्युच्छ विविधं तमांसि विवासय । गृणते । स्तुवतो ममार्थाय । हे मघोनि धनवति । किंचास्मे अस्मभ्यम् । आयुश्चिरंजीवित्वमन्नं वा निदिदीहि । ददातेरेतद्रूपम् । नियमेन देहि । प्रजावत् प्रजासहितम्॥

या गोमतीरुषसः सर्ववीरा व्युच्छन्ति दाशुषे मर्त्याय ।
वायोरिव सूनृतानामुदर्के ता अश्वदा अश्नवत्सोमसुत्वा ॥ १८

या गोमतीः अरुणीभिः स्वाभिर्गोभिः गोमत्यः । उषसः सर्ववीराः सर्वैर्वीरैरुपेताः । अखण्डिताशेषपरिजनपुत्रपौत्रादिका इत्यर्थः । व्युच्छन्ति विविधं तमांसि विवासयन्ति । दाशुषे मर्त्याय । दाश्वानिति यजमाननाम शाकपूणिना पठितम् । तादर्थ्ये चोभयत्र चतुर्थी । यजमानस्य मनुष्यस्यार्थाय । कस्यां वेलायाम् । उच्यते । वायोरिव सूनृतानामुदर्के । सूनृतेत्यपठितमपि वाङ्नाम । उदर्क इत्युद्भव उच्यते । यादृग्वायोः ......... उद्भव ...............कादिवाचां उद्भवे । प्रभातवेलायामित्यर्थः । तदा ............ कादिवाचामुद्भवः । ता अश्वदाः स्तोतृभ्यो यष्टृभ्यश्चाश्वान् दात्रीः । अश्नवद्व्याप्नोति । केन । सामर्थ्यात् स्तुतिभिर्हविर्भिश्च । स्तौति यजति चेत्यर्थः । सोमसुत्वा सोमाभिषवकारी यजमानः । अथवा दक्षिणादाने अश्वस्यापि दानविधानात् अश्वदा इति सोमसुत्वनो विशेषणं नोषसाम् । अश्वस्य दाता यजमान इति ॥ १८

माता देवानामदितेरनीकं यज्ञस्य केतुर्बृहती वि भाहि ।
प्रशस्तिकृद्ब्रह्मणे नो व्युच्छा नो जने जनय विश्ववारे ॥ १९

विभाहि इति मध्यमपुरुषसंयोगात् प्रत्यक्षकृतोऽयं मन्त्रः । मातेत्यादीनि च नामन्त्रितानि । अतो यत्तच्छब्दावध्याहृत्यैकवाक्यतया योज्यानि । या त्वं माता । कस्य । देवानाम् । देवशब्देनादित्या उच्यन्ते । तेषां हि माता उषाः । तत् ।

रुशद्वत्सा रुशती । ऋ. वे. १. ११३. २.

इत्यत्र व्याख्यातम् । प्रतिमासं चादित्यभेदमङ्गीकृत्य बहुवचनम् । अदितेरनीकम् । अदितिशब्देनात्रादीनकत्वात् समग्रज्योतिरुच्यते । अनीकशब्दोऽपि ब्राह्मणानीकं क्षत्रियानीकमिति प्रयोगदर्शनात् समूहवचनः । अदीनस्य समग्रस्य प्रकाशाख्यस्य ज्योतिषः समूहः । अथवा अनीकशब्दः खड्गमुखवचनः । इहाग्रत्वसामान्यादुषसि

प्रयुज्यते । अदीनस्य समग्रस्याहर्लक्षणस्य ज्योतिषो मुखभूतेत्यर्थः । यज्ञस्य केतुः। कित ज्ञाने इत्यस्य सामर्थ्यादन्तर्णीतण्यर्थस्य रूपम्। यज्ञस्य ज्ञापयित्री । प्रकाशयित्रीत्यर्थः । बृहती महती । तच्छब्द इदानीमध्याहर्तव्यः । सा विभाहि विविधं दीप्यस्व । किंच या त्वं प्रशस्तिकृत् । प्रशस्तयः स्तुतय उच्यन्ते । तासां कर्त्री। उषसि ह्युदितायां स्तुतयः क्रियन्ते । तद्धेतुत्वात् सैव तत्र कर्त्रीति व्यपदिश्यते। ब्रह्मणे नः । ब्रह्मणे इति तादर्थ्ये चतुर्थी । अस्माकं संबन्धिनः स्तुतिलक्षणस्य ब्रह्मणोऽर्थाय । व्युच्छ विविधं तमांसि विवासय । वयं स्तुतीः करिष्याम इत्येवमर्थं तमांस्यपनयेत्यर्थः । किंच आ नो जने जनय । आ इत्येष उपेत्येतस्य स्थाने । जन इति लोक उच्यते । निर्धारणे च सप्तमी । लोकस्य मध्ये । अस्मानुपजनय धनादिभिर्वर्धय । हे विश्ववारे सर्वस्य वरणीये ॥ १९

यच्चित्रमप्न उषसो वहन्तीजानाय शशमानाय भद्रम् ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ २०

यच्चित्रं विचित्रं पूज्यं वा । अप्नः । कर्मनामैतत् । यागलक्षणं कर्म प्रति । उषसः वहन्ति प्रापयन्ति । किम् । सामर्थ्यादात्मानं गच्छन्तीत्यर्थः । किमर्थम् । ईजानाय शशमानाय । शशमान इत्यर्चतिकर्मा । तादर्थ्ये चोभयत्र चतुर्थी । यजतः स्तुवतश्चार्थाय । कीदृशं कर्म प्रति । भद्रं कल्याणम् । तन्नो मित्र इत्याद्युक्तार्थम् ॥ २०

---

इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्र भरामहे मतीः ।
यथा शमसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ॥ १

रौद्रम् ।

रुद्रदेवत्यमेतत् सूक्तम् । इमा रुद्राय तवस इति तवश्शब्दोऽत्र बलवचनः। सामर्थ्याच्चात्रान्तर्णीतमत्वर्थः । कपर्द इति शिरसि चूडा कपर्द उच्यते । तद्वान् कपर्दी। क्षयद्वीरायेति क्षि निवासगत्योरित्यस्य क्षियतेर्वा गतिकर्मणो रूपम् । शुद्धोऽपि चात्र सामर्थ्यादभिपूर्वार्थे द्रष्टव्यम् । वीराणामपि शत्रूणामभिगन्ता क्षयद्वीरः। षष्ठीसमासे छान्दसः पूर्वनिपातः । अथवा क्षयतिः निवासार्थ एव । आत्मीयानां वीराणामभिप्रेतेषु निवासयिता क्षयद्वीरः । सर्वत्र च तादर्थ्ये चतुर्थी । इमा रुद्रस्य बलवतश्चूडावतोऽपि वीराणामपि शत्रूणामभिगन्तुः स्वेषां वा वीराणामभिप्रेतेषु

स्थानेषु निवासयितुरर्थाय प्रभरामहे । हरतेरिदं रूपम् । प्रहरामः प्रापयामः । रुद्रं स्तोतुमुच्चारयाम इत्यर्थः । मतीः । मन्यते इत्यर्चतिकर्मा । स्तुतीः । कथं च पुनरुच्चारयामः । यथा सुस्तुते रुद्रे द्विपदे चतुष्पदे चास्मदीयाय । शं सुखम् । असत् भवति । विश्वं पुष्टं सर्वं च पुष्टं भवति । ग्रामे अस्मिन् अस्मदीय । अनातुरमनामयं च॥१

मृळा नो॑ रुद्रोत नो॒ मय॑स्कृधि क्षयद्वी॑राय नम॑सा विधेम ते ।
यच्छं च॒ योश्च॒ मनु॑रायेजे पि॒ता तद॑श्याम॒ तव॑ रुद्र॒ प्रणी॑तिषु ॥ २

मृळ सुखय नः । षष्ठ्यन्तमेतत् । तच्छ्रुतेश्च योग्यपदाध्याहारः । अस्माकं सम्बन्धिन... ...अस्माकमपि मयस्कृधि सुखं कुरु । किंच क्षयद्वीराय नमसा विधेम ते । क्षयद्वीराय ते इत्युभयत्र द्वितीयार्थे चतुर्थी । क्षयद्वीरं त्वां नमसा हविर्लक्षणेनान्नेन विधेम नित्यं परिचरेमेत्याशास्महे । किंच यत् शं च शमनं च । कस्य । सामर्थ्यादुत्पन्नानामनिष्टानां रोगादीनाम् । योश्च । यौतिः पृथग्भावे । पृथग्भवनं च । असम्बद्धं चेत्यर्थः । केन । सामर्थ्यादुत्पिपित्सुभिरनिष्टैः । मनुरायेजे । यजिरत्र यागपूर्विकायां तत्फलभूतायामवाप्तौ द्रष्टव्यः । तव यागेनाप्तवानित्यर्थः । पिता सर्वप्रजानाम् । वयमपि तदेवाश्याम प्राप्नुयाम । ते तव हे रुद्र प्रणीतिषु । प्रकृष्टा नीतयः उपदेशाः प्रणितयः । तासु । सप्तमीनिर्देशात् वर्तमाना इति शेषः । तृतीयार्थे वा सप्तमी । त्वदुपदेशैश्चेष्टमाना इत्यर्थः ॥ २

अ॒श्याम॑ ते सुम॒तिं दे॑वय॒ज्यया॑ क्षयद्वी॑रस्य॒ तव॑ रुद्र मीढ्वः ।
सु॒म्नाय॒न्निद्विशो॑ अ॒स्माक॒मा च॒रारि॑ष्टवीरा जुहवाम ते ह॒विः ॥ ३

अश्याम ते सुमतिं शोभना अनुग्रहरूपां बुद्धिम् । तवानुग्राह्याः बुद्धौ भवेमेत्यर्थः । केन । उच्यते । देवयज्यया देवयागेन अविगुणेन यागेन । कस्य । उच्यते । क्षयद्वीरस्य तव । हे रुद्र मीढ्वः । मिह सेचने । वृष्टिलक्षणेनोदकेन सेक्तः । अथवा मीढशब्दस्य धननाम्नो मत्वन्तस्येदं छान्दसं रूपम् । धनवन्नित्यर्थः । किंच सुम्नायन् । सुम्नमिति सुखनाम । अस्मदीयहविरुपयोगनिमित्तं सुखमिच्छन् । इच्छब्दस्तु पदपूरणः । विशः मनुष्यानस्माकं संबन्धिनः पुत्रपौत्रादीन् ऋत्विजो वा प्रति । आचर आगच्छ । आगतस्य अरिष्टवीराः अहिंसितपुत्रपौत्रा वयं जुहवाम ते हविरित्याशास्महे ॥ ३

त्वे॒षं व॒यं रु॒द्रं य॑ज्ञ॒साधं॑ व॒ङ्कुं क॒विमव॑से॒ नि ह्व॑यामहे ।
आ॒रे अ॒स्मद्दैव्यं॒ हेळो॑ अस्यतु सु॒म॒तिमिद्व॒यम॒स्या वृ॑णीमहे ॥ ४

त्वेषं दीप्तिं वयं रुद्रम् । यज्ञसाधं यज्ञानां साधयितारम् । वंकुम् । वंकुशब्दोऽत्र वकि कौटिल्ये इत्यस्य वक्रगामिवचनः ॥

वंकू वातस्य पर्णिना । ऋ वे. ८ १. ११.

इति यथा । वक्रगामिनम् । कविं मेधाविनम् । अवसे हविषा तर्पणाय पालनाय वा आत्मनः । निह्वयामहे नियमेनाह्वयामः । अत एतत् ज्ञात्वा आरे दूरे । अस्मत् अस्मत्तः । दैव्यं हेळः । क्रोधनामैतत् । देवानां स्वभूतं क्रोधम् । अस्यतु क्षिपतु । यथास्मभ्यं देवा न कुध्येयुः तथा करोत्वित्यर्थः । किंच सुमतिमित् । इच्छब्दोऽत्रै-वार्थे । शोभनमेवानुग्रहरूपां बुद्धिं आत्मनः उपरि वयमस्य रुद्रस्यावृणीमहे प्रार्थ-यामहे ॥ ४

दिवो वराहमरुषं कपर्दिनं त्वेषं रूपं नमसा नि ह्वयामहे ।
हस्ते बिभ्रद्भेषजा वार्याणि शर्म वर्म छर्दिरस्मभ्यं यंसत् ॥ ५

दिवो द्युलोकात् । वराहनामासुरः । तत्सदृशम् । अत्यन्तबलवन्तमित्यर्थः । अथवा वराह इति मेघनाम । तत्सदृशम् । एकदेशसादृश्येन चैष समस्तसादृश्यव्यपदेशः । रुद्रस्य नीलत्वात् कण्ठो मेघसदृशः । मेघसदृशकण्ठमित्यर्थः । अथवा वराहः सूकर उच्यते । तदाकारम् । देवता हि माहाभाग्ययोगात् तं तमाकारं भजते । अत उप-पन्नो रुद्रस्य वराहाकारव्यपदेशः । अरुषम् । अरुषतिर्गतिकर्मा । गन्तारं शत्रून् यज्ञान्वा प्रति । कपर्दिनम् । त्वेषं रूपम् । अन्तर्णीतमत्वर्थो रूपशब्दो द्रष्टव्यः । माहाभाग्ययोगादनेकप्रकारैः रूपैः रूपवन्तम् । नमसा नमस्कारेण । स्तुत्येत्यर्थः । अथवा नमो हविर्लक्षणमन्नम् । तेन निमित्तेन । हविरुपभोक्तुमित्यर्थः । निह्वयामहे नियमेन ह्वयामः । आहूतश्च सन्नागत्य हस्ते बिभ्रत् धारयन् । हस्तधारणेन चात्र तदुत्तरकालभावि दानं लक्ष्यते । ददादित्यर्थः । किम् । उच्यते । भेषजा सर्वरोगोप शमनसमर्थान्यौषधानि । वार्याणि वरणीयानि । अत्यन्तोत्कृष्टानीत्यर्थः । शर्मात्र सुखमुच्यते । वर्मात्र कवचमुच्यते । शत्रुप्रयुक्तहिंसाप्रतिबन्धसमर्थं च कवचम् । छर्दिः । गृहनामैतत् । गृहं च । अस्मभ्यं यंसत् प्रयच्छतु । भेषजानि च ददातु सुखा-दीनि चेत्यर्थः ॥ ५

इदं पित्रे मरुतामुच्यते वचः स्वादोः स्वादीयो रुद्राय वर्धनम् ।
रास्वा च नो अमृत मर्तभोजनं त्मने तोकाय तनयाय मृळ ॥ ६

रास्वेति मध्यमपुरुषसंयोगादमृतेति चामन्त्रणयोगात् प्रत्यक्षकृतोऽयं मन्त्रः। इदं पित्रे मरुतां पितृभूताय। ... ... ...... ... स्वादुतरम्। अत्यन्तं मनसः प्रीतिकरमित्यर्थः। कस्मै। रुद्राय। वर्धनं वृद्धिहेतुः। स्तुतिर्हि देवानां वृद्धिकरी। एतच्छ्रुत्वा रास्वा च। रातिर्दानकर्मा। चशब्दः समुच्चये। मृळत्येतदपेक्षश्च समुच्चयः। देहि। . . ... .. .. .. हे अमृत मर्तभोजम्। भोजनमिति धननाम। मर्तोपभोग्यं धनम्। त्मने तोकाय तनयाय मृळ। मृड सुखने। सुखं च कुरु। कस्मै। उच्यते। त्मने आत्मन एव मम तोकाय तनयाय। तोकं तनयमित्युभे अपत्यनामनी। पुत्रपौत्रभेदेन तु अपुनरुक्ते। पुत्रेभ्यश्च पौत्रेभ्यश्च ॥ ६

मा नो॑ म॒हान्त॑मु॒त मा नो॑ अर्भ॒कं मा न॒ उक्ष॑न्तमु॒त मा न॑ उक्षि॒तम्।
मा नो॑ वधीः पि॒तरं॒ मोत मा॒तरं॒ मा नः॑ प्रि॒यास्त॒न्वो॑ रुद्र रीरिषः ॥७

न इति षष्ठीश्रुतेर्योग्यतत्सम्बन्धिपदाध्याहारः। अस्माकं स्वभूतम्। महान्तमुत मा नो अर्भकम्। अल्पनामैतत्। अल्पम्। बालमित्यर्थः। मा च नः उक्षन्तम्। उक्ष सेचने। सिञ्चन्तम्। किम्। सामर्थ्याद्रेतः। रेतस्सेकसमर्थम्। युवानमित्यर्थः। उत मा नः उक्षितं सिक्तं गर्भस्थम्। मा च नः वधीः पितरम्। मा उत मातरम्। मा च नः प्रियाः तन्वः। एकवचनस्य स्थाने बहुवचनम्। प्रियं स्वमेव शरीरम्। हे रुद्र रीरिषः हिंसीः ॥ ७

मा न॑स्तो॒के तन॑ये॒ मा न॑ आ॒यौ मा नो॒ गोषु॒ मा नो॒ अश्वे॑षु रीरिषः।
वी॒रान्मा नो॑ रुद्र भामि॒तो व॑धीर्ह॒विष्म॑न्तः॒ सद॒मित्त्वा॑ हवामहे ॥ ८

तोके इत्यादौ द्वितीयार्थे सप्तमी। मा अस्माकं तोकं पौत्रांश्च पुत्रांश्च। मा च नः आयौ। आयव इति मनुष्यनामसु पाठात् आयुशब्दोऽत्र मनुष्यवचनः। परिचारकमनुष्यान्। मा च नः गोषु गाः। मा च नः अश्वान् रीरिषः। वीरान् स्वभ्रातृप्रभृतीन्। मा न हे रुद्र भामितः। भाम क्रोधे। क्रुद्धः वधीः। कस्मात्। उच्यते। यस्माद्धविष्मन्तः हविषा संयुक्ताः। सदमित् सदशब्दः सदेत्यस्य पर्यायः। इच्छब्द एवार्थे। सदैव त्वा हवामहे। यागाय त्वां वयमाह्वयामः ॥ ८

उप॑ ते॒ स्तोमा॑न्पशु॒पा इ॒वाक॑रं॒ रास्वा॑ पितर्मरुतां सु॒म्नम॒स्मे।
भ॒द्रा हि ते॑ सुम॒तिर्मृ॑ळ॒यत्त॒माथा॑ व॒यमव॒ इत्ते॑ वृणीमहे ॥ ९

उपेत्युपसर्गः आकरमित्याख्यातेन सम्बन्धयितव्यः । ते तव स्तोमान् । पशुपा इव यथा पशुपालः पशून् विक्षिप्तान् सतः एकीकृत्य ग्रामस्यात्मनो वा समीपे करोति । एवमुपाकरं भवतः समीपं कृतवानहम् । भवत्सन्निधौ सर्वान् उच्चारितवानित्यर्थः । एतत् ज्ञात्वा रास्व देहि । हे पितः मरुतां सुम्नं सुखमस्मभ्यम् । किंच भद्रा हि यस्मात् भद्रा कल्याणी ते तव सुमतिः शोभनानुग्राह्यबुद्धिरस्मासु । मृळयत्तमा अस्माकमतिशयेन सुखकरी । अथ एतस्मात् कारणात् वयमवः पालनम् । इच्छब्दस्तु पदपूरणः । ते तव सम्बन्धि वृणीमहे प्रार्थयामः । आत्मानं पालयमानमिच्छाम इत्यर्थः ॥ ९

आरे ते॑ गो॒घ्नमु॒त पू॑रुष॒घ्नं क्षय॑द्वीर सु॒म्नम॒स्मे ते॑ अस्तु ।
मृ॒ळा च॑ नो॒ अधि॑ च ब्रूहि दे॒वाधा॑ च नः॒ शर्म॑ यच्छ द्वि॒बर्हा॑ः ॥ १०

अस्त्वित्यर्धर्चान्तमाख्यातं प्रथमपादेऽप्यनुषक्तव्यम् । आरे अस्तु दूरे असत्तो भवतु । ते तव । षष्ठीश्रुतेर्बलं रूपं वेति शेषः । गोघ्नं गवां हन्तृ । उत पुरुषघ्नं पुरुषाणां हन्तृ । हे क्षयद्वीर वीराणामपि शत्रूणामभिगन्तः स्वेषां वा वीराणामभिप्रेतेषु स्थानेषु निवासयितः । सुम्नं यदेव बलं रूपं वा तव तदेवास्मे अस्तु । किंच मृळ च सुखय च नः । अधि च उपरि च ब्रूहि देव । आज्ञापय च यद्यदस्माभिः कर्तव्यमित्यर्थः । अधा च । अधशब्दोऽत्र अपिशब्दस्यार्थे । अपि च नः शर्म गृहं यच्छ प्रयच्छ । द्विबर्हाः । बृंहिर्वृध्यर्थः । द्वयोर्वर्धयिता यष्टुः स्तोतुश्च द्विबर्हाः । अथवा द्वयोः स्थानयोः प्रवृद्धो द्विबर्हाः । कतमयोर्द्वयोः . यज्ञसंग्रामयोर्वा वीर्येण मध्यमोत्तमयोर्वा रूपेण । रुद्रो हि मध्यमस्थानीयः सन् आप्रवृद्धो दिव्यादित्यात् शक्नोति प्रभूतान् रसान् प्रतिग्रहीतुम् । अप्यन्तरिक्षे आप्रवृद्धः शक्नोति च वर्षयितुम् । अत उपपन्नमस्य वृद्धत्वम् । तन्निबन्धनश्च द्विबर्हाः इति व्यपदेशः । प्रत्यक्षकृतश्चायं मन्त्रः । द्विबर्हा इति च नामन्त्रणम् । अतो यत्तच्छब्दावध्याहृत्यैकवाक्यता नेया । यस्त्वं द्विबर्हाः शर्म यच्छेति ॥ १०

अवो॑चाम॒ नमो॑ अस्मा अव॒स्यव॑ः शृ॒णोतु॑ नो॒ हवं॑ रु॒द्रो म॒रुत्वा॑न् ।
तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑तिः॒ सिन्धु॑ः पृथि॒वी उ॒त द्यौः ॥ ११

उक्तवन्तो वयं नमः नमस्काररूपं स्तुतिलक्षणं वचः । अस्मै रुद्राय । अवस्यवः पालनकामाः । एवं ज्ञात्वा शृणोतु नो हवं रुद्रो मरुत्वान् मरुद्भिः स्वसखैः सहितः । तन्नो मित्र इत्याद्युक्तार्थम् ॥ ११

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥ १

अथ सौर्यमुत्तरम् ।

विचित्रं पूज्यं वा ज्योतिः उदगात् उदितम् । किंरूपम् । उच्यते । देवानां रश्मीनां अनीकं समूहम् । रश्मिसमूहरूपमित्यर्थः । चक्षुः चक्षुःस्थानीयं च । मित्रस्य वरुणस्याग्नेः । मित्रादिग्रहणं चात्र प्रदर्शनार्थं द्रष्टव्यम् । देवानां मनुष्याणामन्येषां च प्राणिनामित्यर्थः । उद्गम्य च आप्राः । प्रा पूरणे । आपूरयति । द्यावापृथिवी च अन्तरिक्षं च । केन । सामर्थ्याद्रश्मिभिः । कतमदिदं ईदृशं ज्योतिः । उच्यते । योऽयं सूर्य आत्मा जगतः तस्थुषश्च जंगमस्य स्थावरस्यात्मभूतः सर्वानुग्राहकः ॥ १

सूर्यो देवीमुषसं रोचमानां मर्यो न योषामभ्येति पश्चात् ।
यत्रा नरो देवयन्तो युगानि वितन्वते प्रति भद्राय भद्रम् ॥ २

सूर्यः देवीमुषसं रोचमानां दीप्यमानाम् । यथा कश्चित् मनुष्यः कांचित् स्त्रियं यान्तीं पश्चादभिगच्छति एवमभ्येत्यभिगच्छति पश्चात् । उषस्युदितायां पश्चादुदेतीत्यर्थः । कस्मिन् काले । उच्यते । यत्र नरः मनुष्याः देवयन्तः देवमिममेव सूर्यं यष्टुमिच्छन्तः । युगानि वितन्वते । युगशब्दः कालवचनः सामर्थ्यादग्निहोत्रकालेषु वर्तते प्रतीत्येतेन संबध्यते । अग्निहोत्रकालान् प्रति । अग्निहोत्रकालेषु वितन्वते विततं कुर्वन्ति । भद्राय तत्फलाय । भद्रं अग्निहोत्रलक्षणं कर्म । यदा येषु कालेषु मनुष्याः अग्निहोत्रं जुह्वति तदा सूर्य उषसं पश्चादभ्येतीति समस्तार्थः ॥ २

भद्रा अश्वा हरितः सूर्यस्य चित्रा एतग्वा अनुमाद्यासः ।
नमस्यन्तो दिव आ पृष्ठमस्थुः परि द्यावापृथिवी यन्ति सद्यः ॥ ३

भद्रा अश्वा हयाः । हरितवर्णाः सूर्यस्य सम्भूताः । चित्राः एतग्वाः । एतग्व इत्यश्वनामान्यत्र इहत्वश्वेन पौनरुक्त्यप्रसंगात् क्रियाशब्दः । अतीतेष्वहस्सु गमयित्य गन्तार इत्यर्थः । अनुमाद्यासः । मदतिरर्चतिकर्मा । अनुष्टुत्याः । नमस्यन्तः पूजयन्तः सूर्यम् । दिवः पृष्ठमुपरिभागमातस्थुः आतिष्ठन्ति । आस्थाय च द्यावापृथिवी उभे अपि परियन्ति परिगच्छन्ति । सद्यः समान एवाहनि ॥ ३

तत्सूर्यस्य देवत्वं तन्महित्वं मध्या कर्तोर्विततं सं जभार ।
यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै ॥ ४

तत्सूर्यस्य देवत्वं तच्च महित्वम् । तच्छब्दाद्यच्छब्दोऽध्याहर्तव्यः । यत् मध्यात् मध्ये कर्तोः । कर्मनामैतत् । कृष्यादेः कर्मणः । अपरिसमाप्तेष्वेव प्रारब्धेषु कर्मस्वित्यर्थः । विततमात्मीयं रश्मिजालं सञ्जभार क्षणेनैकेन संहरति । महत्वाद्धीदमत्यन्तदुरुपसंहरं नान्यः सूर्यात् क्षणेनैकेनापि संहर्तुं शक्नोतीत्यर्थः । कदा पुनरुपसंहारः । उच्यते । यदेदयुक्त । इच्छब्दः पदपूरणः । यदास्तमयानन्तरमुत्तरेण मेरुं गन्तुं युङ्क्ते । हरितः स्वानश्वान् । क्व । उच्यते । सधस्थात् । सह तिष्ठन्ति यत्राश्वाः स सधस्थो रथ इहाभिप्रेतः । सप्तम्यर्थे चैषा पञ्चमी । सर्वेषामश्वानां सहस्थानभूते आत्मीये रथे इत्यर्थः । आत् तदैव च रात्री वासः । वासश्शब्दोऽत्र क्रियाशब्दो वस आच्छादन इत्यस्य । वस्त्रवचनो वा । सामर्थ्याच्च कृष्णं वास आह नान्यत् । तत्सारूप्याच्च तमसि प्रयुज्यते । कृत्स्नस्य जगत आच्छादयितृ कृष्णवासस्सरूपं वा तमः । तनुते विस्तारयति । सिमस्मै । सिमेति सर्वपर्यायः । सप्तम्यर्थे चैषा चतुर्थी । सर्वस्मिन् जगति ॥ ४

तन्मित्रस्य वरुणस्याभिचक्षे सूर्यो रूपं कृणुते द्योरुपस्थे ।
अनन्तमन्यद्रुशदस्य पाजः कृष्णमन्यद्धरितः संभरन्ति ॥ ५

तच्छब्दाद्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । यदिदं प्रातः प्रागुदयात् दीप्तिवर्जितं प्रकाशमात्रसम्बद्धं तन्मित्रस्य वरुणस्य । मित्रवरुणग्रहणमत्र प्रदर्शनार्थं द्रष्टव्यम् । देवानां मनुष्याणामन्येषां प्राणिनाम् । अभिचक्षे अभिदर्शनाय । सूर्य आत्मनो रूपं कृणुते करोति । द्योरुपस्थे दिवः समीपे । द्युलोकस्य पूर्वस्मिन् प्रान्त इत्यर्थः । अनन्तमन्यत् अन्यत्तु मध्येऽह्नः अनन्तमत्यन्तमहत् । रुशत् अत्यन्तदीप्तमस्य सूर्यस्य पाजः । बलनामैतत् सामर्थ्याच्चान्तर्णीतमत्वर्थम् । बलवत् । अत्यन्ततीव्रत्वात् दुरभिभवमित्यर्थः । कृष्णमन्यदपि तमोलक्षणमस्य स्वरूपम् । हरितोऽश्वाः । संभरन्ति मेरुमुत्तरेण सूर्यं नयन्तः प्रकल्पयन्ति । मेरुणा हि व्यवधीयमानः सूर्यस्तमः करोति । अतस्तस्यैव देशान्तरस्थस्य तद्रूपमिति व्यपदिश्यते । मेरुणा च व्यवधानं सूर्यस्याश्वाः कुर्वन्ति । अत एतदुच्यते । कृष्णमन्यद्धरितः संभरन्तीति ॥ ५

अद्या देवा उदिता सूर्यस्य निरंहसः पिपृता निरवद्यात् ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ६

सौर्यत्वादस्या ऋचः देवा इह रश्मय उच्यन्ते नान्ये । अद्य हे देवाः सूर्यस्य रश्मय उदिताः । सूर्योदयवेलायामंहसः पापादवद्यात् निःपिपृत । पृ पालनपूरणयोरित्यस्य छान्दसं ह्रस्वत्वम् । निश्चयेन पालयतास्मान् । न च केवलादंहसः । किं तर्हि । निरवद्यात । अवद्यं गर्हितमुच्यते । अन्यस्मादपि गर्ह्यात् निश्चयेनैवास्मान् पालयत । तन्नो मित्र इत्याद्युक्तार्थम् ॥ ६

---

नासत्याभ्यां बर्हिरिव प्र वृञ्जे स्तोमाँ इयर्म्यभ्रियेव वातः ।
याबर्भगाय विमदाय जायां सेनाजुवा न्यूहतू रथेन ॥ १

कक्षीवान् दैर्घतमसो नासत्याभ्यामिति स्मृतः ।

कक्षीवान्नाम दीर्घतमसः पुत्रः, नासत्याभ्यामित्यतः परं ऋषिः स्मृतः । अत्र ऋषिः, अयमापारुच्छेपात् ।

पञ्चाश्विनानि सूक्तानि ।

पञ्चैतानि सूक्तानि अश्विदेवत्यानि । अश्विनोरेको नासत्यनामा । दस्रनामापरः । साहचर्यात्त्वन्यतरनाम्नापि सर्वत्र उभयोरभिधानम् । न वा असत्यौ सत्यावेव नासत्यौ तादर्थ्ये चात्र चतुर्थी । नासत्ययोरर्थाय । बर्हिरिव प्रवृञ्जे । वृञ्जतिरिह संस्कारार्थः । यथा कश्चिद्वेदिस्तरणार्थं बर्हिः संस्करोति तद्वत्संस्करोमि स्तोमान् । संस्कृत्य इयर्मि । इयर्तिरत्र सामर्थ्यादन्तर्णीतण्यर्थः । गमयामि । उच्चारणेन प्रेरयामीत्यर्थः । कथम् । अभ्रियेव वातः । समुद्राभ्राद्धः (पा. ४. ४ ११८.) इत्येवमयं समूहे घप्रत्ययः । द्वितीयाबहुवचनस्य चाकारः । अभ्रसमूहानिव वातः । यौ किं कृतवन्तौ । उच्यते । यौ अर्भगाय विमदाय । अर्भकमित्यल्पनाम । तस्य पर्यायोऽर्भशब्दः । कै गै शब्दे । अन्नयर्थे यः अल्पं

अग्निमीळे भुजां यविष्ठम् । ऋ वे. १०. २०. २.

इति सूक्तद्वयमात्रमगायत् अल्पाया वा भार्याया गन्ता सोऽर्भगः । तस्यार्भगस्य विमदस्य ऋषेरर्थाय । तस्यैव भार्याम् । सेनाजुवा सेनया सह गन्त्रा । स्वसेनापरिवृतेनेत्यर्थः । न्यूहतुः तद्गृहं प्रति न्यूढवन्तौ स्वेन रथेन । एतत् कुत्सेनाप्युक्तम् ।

याभिः पत्नीः । ऋ. वे. १ ११२. १९.

इति । इतिहासश्चास्यास्माभिः तत्रैव कथितः । सर्वत्र चात्र यत् कुत्सेन कथितं तस्येतिहासं तत एवावगन्तव्यम् ॥ १

वीळुपत्मभिराशुहेमभिर्वा देवानां वा जूतिभिः शाशदाना ।
तद्रासभो नासत्या सहस्रमाजा यमस्य प्रधने जिगाय ॥ २

अत्र प्रजापतिर्वै सोमाय राज्ञे (ए. ब्रा. ४. ७. १.) इत्याद्यैतरेयब्राह्मणाधीतमिहाप्याख्यानम् । प्रजापतिः सवितुः दुहितरं सूर्यां सोमाय राज्ञे प्रायच्छत् । ये त्वन्ये देवास्तां वरयितुमागच्छन् तेभ्यो विवाहादनन्तरमृक्सहस्रमददात् । यदेतदाश्विनं नाम तस्मिन्देवा विवादमकुर्वन् । ममेदमस्तु ममेदमस्त्विति । तेऽब्रुवन् । आजिं धावाम । यो नो जेष्यति तस्येदं भविष्यतीति । तेऽग्नेर्गृहपतेरुपर्यादित्यं काष्ठां कृत्वाभिधावन् । काष्ठा आज्यन्त उच्यते । अश्वतरीरथेनाग्निराजिमधावत् । गोभिररुणैरुषाः । हरिरथेनेन्द्रः । गर्दभरथेनाश्विनौ । तत्राश्विनौ अजयतामिति । तदेतदिहोच्यते वीळुपत्मभिरित्यादिना । वीळु दृढं पत्म पतनं येषाम् । सन्ततमपि गच्छतां येषां गतिर्न हीयत इत्यर्थः । ते वीळुपत्मानोऽश्विनोः स्वभूताः रासभाः । तैर्वीळुपत्मभिः । आशुहेमभिर्वा । हि गतौ । वाशब्दश्चात्र चार्थे । शीघ्रगामिभिश्च । देवानां वा जूतिभिः । अत्रापि वाशब्दश्चार्थे एव । जूतिभिरिति जवतेर्गत्यर्थस्य करणे क्तिन्प्रत्ययः । देवानां च गमनैः । देवानामेव योग्या नान्यस्येत्यर्थः । तैः शाशदाना । शदिर्गत्यर्थः । ताच्छील्ये चात्र शानच् । षष्ठीद्विवचनस्य चाकारः । गमनशीलयोर्द्वयोः स्वभूतः रासभः गर्दभः रथे नियुक्तस्सन् हे नासत्यौ । तत्सहस्रम् । तच्छब्दश्रुतेरुक्तेतिहासार्थयुक्तो यच्छब्दोऽध्याहार्यः । यत्सूर्याविवाहानन्तरं प्रजापतिर्देवेभ्यः अददात् तत्सहस्रमृचाम् । आजा । अश्वादेर्धावनभूमिराजिरुच्यते । तस्याम् । यमस्य । नमतां यमनाद्यम आदित्य इहोच्यते । तस्य सम्बन्धिन्याम् । कः पुनरादित्यस्याजिसम्बन्धः । उच्यते । आदित्यस्तस्या अन्तः आसीत् । तथाहि ब्राह्मणम् । तेऽग्नेर्गृहपतेरुपर्यादित्यं काष्ठामकुर्वत (ऐ. ब्रा. ४. ७. ४) इति । प्रधने संग्रामे । अग्न्यादिभिः सह संस्पर्धायामित्यर्थः । जिगाय जितवान् ॥ २

तुग्रो ह भुज्युमश्विनोदमेघे रयिं न कश्चिन्ममृवाँ अवाहाः ।
तमूहथुर्नौभिरात्मन्वतीभिरन्तरिक्षप्रुद्भिरपोदकाभिः ॥ ३

तुग्र इति सोऽयमित्यभिसम्बन्धात् पितृशब्देनेदं पुत्रस्याभिधानम् । द्वितीयार्थे च प्रथमा । हेति पदपूरणम् । तुग्रपुत्रं भुज्युं नाम राजानं हे अश्विनौ उदमेघे । मिह सेचने । उदकेन सिञ्चति सिच्यते वेति उदमेघः समुद्रः । तत्र । रयिं न कश्चित् ममृवान् यथा धनं कश्चित् म्रियमाणो जहाति एवमवाहाः । अवेत्येष परीत्येतस्य

स्थाने । ओहाङ् त्यागे । प्रथमपुरुषबहुवचनस्य स्थाने मध्यमपुरुषैकवचनमेतत् । विप्र-म्ननावं सन्तं परित्यक्तवन्तः । के । सखायः । कुत एतत् ।

उत त्यं भुज्युमश्विना । ऋ. वे. ७. ६८. ७.

इति मन्त्रान्तरे दर्शनात् । तं युवामूहथुः तटं प्रापितवन्तौ । उत्तारितवन्तावित्यर्थः । केन । उच्यते । नौभिः । कीदृशीभिः । उच्यते । आत्मन्वतीभिः । आत्मसंयुक्ताभिः । स्वयमेवेत्यर्थः । अन्तरिक्षप्रुद्भिः । प्रवत इति गतिकर्मा । अन्तरिक्षगामिनीभिः । उद-कमसंस्पृशन्तीभिरिव गच्छन्तीभिरित्यर्थः । अपोदकाभिः व्यपगतोदकाभिः । मना-गप्युदकेनाभिद्यमानाभिरित्यर्थः । तदेतत् कुत्सेनाप्युक्तम् ।

भुज्युं याभिः । ऋ. वे. १. ११२. ६, २०.

इति ॥ ३

न च केवलाभिर्नौभिः । किं तर्हि ।

तिस्रः क्षपस्त्रिरहातिव्रजद्भिर्नासत्या भुज्युमूहथुः पतङ्गैः ।

समुद्रस्य धन्वन्नार्द्रस्य पारे त्रिभी रथैः शतपद्भिः षळश्वैः ॥ ४

क्षपेति रात्रिनाम । तिस्रो रात्रीः त्रीणि चाहानि सातत्येनातिव्रजद्भिः सुष्ठु गच्छद्भिः हे नासत्यौ । भुज्युमूहथुः पतङ्गैः । पतङ्गा इत्यश्वनाम । अश्वैः । क्व प्रदेशे । उच्यते । समुद्रस्यैकदेशभूते धन्वन् धन्वनि निरुदके प्रदेशे । आर्द्रस्य पारे । सोदकः प्रदेशः आर्द्रः । तस्य पारे अन्ते । समुद्रस्य मध्ये या उदकेन परिक्षिप्ता...... तास्वित्यर्थः । न च केवलैरश्वैः । किं तर्हि । त्रिभिः रथैः रथैश्च त्रिभिः । द्वाभ्या-मात्मनोः यानाभ्यां एकेन भुज्योः । कीदृशैः । शतपद्भिः शतपादैः । शतशब्दश्चात्र बहुनाम सामर्थ्याच्चात्राद्ये बहुत्वे वर्तते । पादशब्दोऽपि चक्रपादवचनः । त्रिचक्र-पादैरित्यर्थः । कुत एतत् ।

क्व त्री चक्रा त्रिवृतो रथस्य । ऋ. वे. १. ३४. ९.

इत्येवमादिषु मन्त्रान्तरेष्वश्विनोः रथस्य त्रिचक्रत्वदर्शनात् । षळश्वैः षड्भिरश्वैः युक्तैः ॥ ४

अनारम्भणे तदवीरयेथामनास्थाने अग्रभणे समुद्रे ।

यदश्विना ऊहथुर्भुज्युमस्तं शतारित्रां नावमातस्थिवांसम् ॥ ५

आरभ्यतेऽस्मिन्निति आरंभणमालम्बनमुच्यते । निरालम्बने । तत् अवीरयेथां वीरकर्म कृतवन्तौ स्थः । न चानारंभणे एव केवले । किं तर्हि । अनास्थाने । यस्मि-

नीषदपि स्थातुं न शक्यते स अनास्थानः । न चानास्थाने एव केवले । किं तर्हि । अग्रभणे । ग्रहीतुमपि यस्मिन्न शक्यते सोऽग्रभणः लताशाखादिरहितः । तत्र । क । उच्यते । समुद्रे । कलमत् । उच्यते । यत् हे अश्विनौ ऊहथुः । भुज्युमस्तं क्षिप्तम् । विपन्ननावं सन्तं सखिभिस्त्यक्तमित्यर्थः । शतारित्राम् । अर्यतेऽनेनेत्यरित्रं नावो गमनसाधनं यदवकल्पकः इत्यपभ्रंशेन नाविका आहुः । तच्छतेन युक्तां युष्मदीयां नावमातस्थिवांसं आस्थितवन्तम् ॥ ५

यमश्विना ददथुः श्वेतमश्वमघाश्वाय शश्वदित्स्वस्ति ।
तद्वां दात्रं महि कीर्तेन्यं भूत्पैद्वो वाजी सदमिद्धव्यो अर्यः ॥ ६

अत्रेतिहासमाचक्षते । अघाश्वो नाम राजा युयुत्सुरातङ्गोऽश्वं अश्विनौ ययाचे सततं चाविनाशम् । तस्मै अश्विनौ बलवन्तमत्यन्तवेगिनं जयकरं सर्वत्राप्रतिहतगमनमश्वं सततं चाविनाशं ददतुरिति । तदेतदिहोच्यते । यं हे अश्विनौ ददथुः श्वेतमश्वमघाश्वाय । शश्वदिति नित्यपर्यायः । इच्छब्दः पदपूरणः चार्थे वा । नित्यं च स्वस्ति अविनाशम् । तद्वां युवयोः दात्रं दानम् । महि महत् । कीर्तेन्यं कीर्तनार्हम् अभूत् । किं कारणमभूत् । यस्मात् पैद्वः । अश्वनामैतत् । अश्वः । वाजी बलवान् । सदमिद्धव्यः सदैव च संग्रामेष्वाह्वातव्यः । अथवा सदमित्येतत् वाजीत्येतेन संबध्यते । वाजशब्दश्च वेगवचनः । वेगवान् सदैव ह्वयश्च संग्रामेष्विति । अर्यः ईश्वरश्च । क । सामर्थ्यात् गमने । सर्वत्राप्रतिहतगतिरित्यर्थः ॥ ६

युवं नरा स्तुवते पज्रियाय कक्षीवते अरदतं पुरंधिम् ।
कारोतराच्छफादश्वस्य वृष्णः शतं कुम्भाँ असिञ्चतं सुरायाः ॥ ७

युवा हे नरा मनुष्याकारौ । स्तुवते पज्रियाय । पाज इत्यन्ननाम । तेन हविर्लक्षणेन तद्वान् पज्रः । रो मत्वर्थीयः पृषोदरादित्वात् साधुः । आकारस्य च ह्रस्वत्वम् । पज्र एव पज्रियः । स्वार्थिकस्तद्धितः छान्दसत्वात् । हविर्लक्षणेनान्नेनान्नवते । स्तुवते यजते चेत्यर्थः । अथवा पज्रा अंगिरस उच्यन्ते । तेषामपत्यभूतः पज्रियः । पौराणिका हि कक्षीवन्तमाङ्गिरसं स्मरन्ति । एवं ह्याहुः

उशिजो बृबदुक्थश्च ऋषिर्दीर्घतमास्तथा ।
कक्षीवांश्च त्रयस्त्रिंशत् स्मृता ह्याङ्गिरसां वराः ॥

इति । एवमङ्गिरसामपत्यं अयमङ्गिरस्तमः कक्षीवान् । तस्मै कक्षीवते मह्यमेवेत्यर्थः । अरदतम् । रद विलेखनेऽन्यत्र । इह तु संप्रदानचतुर्थीश्रुतेर्दानार्थः । दत्तवन्तौ स्थः । पुरन्धिं बह्वर्थविषयां प्रज्ञाम् । अथवा रदतिः विलेखनार्थ एव । चतुर्थी षष्ठ्यर्थे । कक्षीवतो बह्वर्थविषयां प्रज्ञां विलिखितवन्तौ जडां सतीं तीक्ष्णीकृतवन्तौ । अतीतानागतवर्तमानसमर्थां सर्वार्थग्रहणसमर्थां च कक्षीवतः प्रज्ञां कृतवन्तौ स्थः इत्यर्थः । तदेतत् कुत्सेनाप्युक्तम्

याभिस्त्रिमन्तुः । ऋ. वे. १. ११२. ४.

इति । किंच कारोतरादित्यादि । अत्रेतिहासमाचक्षते । अश्विनौ यदृच्छया पर्यटन्तौ पिबन्मत्तं बालसमूहं ददर्श । स तौ सुरां ययाचे । तस्मै अश्विनौ देवतामाहाभाग्यात् अश्वशफादुद्रिच्य घटशतं सुराया ददतुरिति । तदेतदिहोच्यते कारोतरादित्यादिना । कारोतर इति कूपनाम । तत्सादृश्याच्चेहाश्वशफे प्रयुज्यते । वर्तुलत्वादिना सादृश्येन कूपसदृशाच्छफात् । अश्वस्य खुरः शफः उच्यते । पञ्चमीनिर्देशाच्चात्र योग्यक्रियापदाध्याहारः । अश्वस्य शफादुद्रिच्य । कीदृशस्य । वृष्णः वर्षितुः । प्रजननसमर्थस्येत्यर्थः । शतं कुंभान् । कुंभो घट उच्यते । घटशतमसिञ्चतं क्षारितवन्तौ । मत्तबालकेभ्यो दत्तवन्तौ इत्यर्थः । कस्य घटशतम् । उच्यते । सुरायाः । परस्तात् पुनरपि वक्ष्यति

शफाद्दश्वस्य वाजिनो जनाय । ऋ. वे. १. ११७. ६.

इति ॥ ७

हिमेनाग्निं घ्रंसमवारयेथां पितुमतीमूर्जमस्मा अधत्तम् ।
ऋबीसे अत्रिमश्विनावनीतमुन्निन्यथुः सर्वगणं स्वस्ति ॥ ८

हिममित्युदकनाम । वृष्टिलक्षणेनोदकेन । यत्रासुरैरत्रिः प्रक्षिप्तः तमग्निं घ्रंसम् । घृ क्षरणदीप्त्योरित्यस्यायं क्रियाशब्दः । तत्वहर्नाम । अत्यन्तदीप्तम् । अवारयेथां निशमितवन्तौ स्थः । किंच पितुमतीमूर्जम् । पितुरित्यन्ननाम । ऊर्क्शब्दोऽत्र ऊर्ज बलप्राणनयोरित्यस्य बलवचनः । अन्नसहितमसुरप्रतिबन्धसमर्थं बलमस्मै । उत्तरार्धर्चस्थस्यात्रेरयमन्वादेशः । अस्मै अत्रये । अधत्तं दत्तवन्तौ स्थः । किंच ऋबीसे अग्निकूटे अत्रिमृषिं हे अश्विनौ अवनीतं अधोनीतम् । असुरैः प्रक्षिप्तमित्यर्थः । उन्निन्यथुः ऊर्ध्वं नीतवन्तौ युवामित्यर्थः । सर्वगणं सर्वेणेन्द्रियगणेनोपेतम् । अविकलाङ्गमित्यर्थः । स्वस्ति अन्तर्णीतमत्वर्थोऽत्र स्वस्तिशब्दः । स्वस्तिमन्तं अविनष्टम् । जीवन्तमित्यर्थः । तदेतत् कुत्सेनाप्युक्तम्

तप्तं घर्मम् । ऋ. वे. १. ११२. ७.

इति ॥ ८

परावतं नासत्यानुदेथामुच्चाबुध्नं चक्रथुर्जिह्मबारम् ।

क्षरन्नापो न पायनाय राये सहस्राय तृष्यते गोतमस्य ॥ ९

अत्रेतिहासमाचक्षते । गोतमस्तृषितोऽश्विनावुदकं ययाचे । तस्मै अश्विनौ कूपं हस्ताभ्यां प्रेर्य प्रेर्य एतत्सकाशं नीत्वाधोमुखं च कृत्वा तेनोदकं ददतुरिति । तदेतदिहोच्यते । परावतं नासत्यानुदेथामिति । अवत इति कूपनाम । कूपं हे नासत्यौ परा अनुदेथाम् । नुद प्रेरणे । पराङ्मुखं गोतमं प्रति प्रेरितवन्तौ स्थः । नीतं च सन्तं उच्चाबुध्नं चक्रथुः जिह्मबारम् । जिह्मशब्दोऽत्राधोभाववचनः न कुटिलवचनः । उपरि बुध्नमधोमुखं कृतवन्तौ स्थ इत्यर्थः । अधोमुखाच्च तस्मात् क्षरन् स्रुतवत्य आपः । पायनाय पानार्थम् । कथम् । न राये सहस्राय । नशब्दोऽत्र पुरस्तादुपचारोऽपि सामर्थ्यादुपमार्थीयो द्रष्टव्यः । राये सहस्रायेति प्रथमाबहुवचनस्य स्थाने चतुर्थी । धनानीव सहस्रसंख्यानि । यथा कूपकलशादधोमुखात् सहस्रसंख्याका रूपकाः क्षरन्ति तद्वदित्यर्थः । कस्य पानाय । तृष्यते गोतमस्य । तृष्यते इति षष्ठ्यर्थे चतुर्थी । तृषा बाध्यमानस्य गोतमस्य पानायेति ॥ ९

जुजुरुषो नासत्योत वव्रिं प्रामुञ्चतं द्रापिमिव च्यवानात् ।

प्रातिरतं जहितस्यायुर्दस्रादित्पतिमकृणुतं कनीनाम् ॥ १०

अत्र शतपथे (श. ब्रा. ४. १. ५) अधीतमितिहासमाचक्षते । शार्यातो नाम राजा संक्रीडद्भिः कृतापराधाय कुपिताय जीर्णाय च्यवनाय प्रत्यापत्यर्थं सुकन्यां नाम कन्यकां दुहितरं ददौ । तां तत्रासीनां दृष्ट्वाश्विनौ पुनःपुनरूचतुः । किं किं जीर्णीकृतरूपं कामयसे । आवां संभजेति । सा तौ प्रत्युवाच । यस्मै मां पिता अदात् नाहं तं जीवन्तं हास्यामीति । तदृषिर्ज्ञात्वा सुकन्यामुवाच । यदि त्वामेतौ पुनरेवं ब्रूयातां ततस्त्वमेनौ प्रतिब्रूयाः । असर्वौ वसुसमृद्धौ सन्तौ पतिं मे निन्दथ इति । तौ यदि त्वां प्रति ब्रूयाताम् केनासर्वौ वसुसमृद्धौ चेति तत एनौ प्रतिब्रूयाः पतिं मे पुनर्युवानं कुरुतम् । अथ वां वक्ष्यामीति । सा तौ तथोवाच । तामश्विनौ प्रत्यूचतुः । एतं ह्रदमवतरतु अतो यत् कामयते तेन वयसा युक्त उत्तरिष्यतीति । स ऋषिस्तं ह्रदमवतीर्योत्ततार युवा भूत्वेति । तदेतदिहोच्यते जुजुरुषो नासत्येत्यादिना । उतशब्दोऽप्यर्थे । अपि पूर्वोक्तानि कर्माणि चक्रथुः । अपीदमन्यत् । किं तत् । उच्यते जुजुरुषः जीर्णान्

वृद्धीभूतान् हे नासत्यौ । वव्रिं रूपं जरालक्षणम् । प्रामुञ्चतं प्रमोचितवन्तौ । अपनीतवन्तौ स्थ इत्यर्थः । किमिव । उच्यते । द्रापिमिव कवचमिव योद्धुः शरीरात् । कुतोऽपनीतवन्तौ । च्यवनात् च्यवननाम्न ऋषेः । अपनीय च जरां प्रतिरत । प्रपूर्वस्तिरतिर्वृध्यर्थः । प्रवर्धितवन्तौ स्थः । जहितस्य । ओहाङ् त्यागे । त्यक्तस्यायुषः । क्षणप्रायायुष इत्यर्थः । प्रवर्धितवन्तौ आयुः जीवितलक्षणं ह दस्रा । आदित् अथेनं पतिं भर्तारम् । अकृणुतं कृतवन्तौ स्थः । कनीनां कन्यकानां सुकन्याप्रभृतीनाम् ॥ १०

तद्वां नरा शंस्यं राध्यं चाभिष्टिमन्नासत्या वरूथम् ।
यद्विद्वांसा निधिमिवापगूळ्हमुद्दर्शतादूपथुर्वन्दनाय ॥ ११

तत् कर्म वां युवयोः । हे नरा मनुष्याकारौ । शंस्यं स्तुत्यं राध्यं चाराधनीयं च । अभिष्टिरिच्छा प्रार्थना । तद्वच्च । प्रार्थनीयं वेत्यर्थः । हे नासत्या वरूथं वरणीयम् । संभजनीयं चेत्यर्थः । कतमत् । उच्यते । यद्विद्वांसा निधिमिवापगूळ्हम् । यथा कौचिद्विद्वांसौ पुरुषौ निधिं अपगूढं आच्छादितं उत्खनेतां एवं दर्शतात् अत्यन्तागाधत्वात् दर्शनीयकूपादुदूपथुः उत्खातवन्तौ स्थः । उत्तारितवन्तावित्यर्थः । वन्दनाय । द्वितीयार्थे चतुर्थ्येषा । वन्दनमृषिम् । तदेतत् कुत्सेनाप्युक्तम् ।

याभी रेभन्निवृतम् । ऋ. वे. १. ११२. ५.

इति ॥ ११

तद्वां नरा सनये दंस उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिम् ।
दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाच ॥ १२

तत् वां युवयोः हे नरौ सनये अभिप्रेतलाभाय । दंसः कर्म । उग्रमप्रसह्यम् । आविष्कृणोमि प्राकाशीकरोमि । तन्यतुर्न स्तनयित्नुशब्द इव वृष्टिम् । कतमत् । उच्यते । दध्यङ् ह यदित्यादि । अत्रेतिहासमाचक्षते । आथर्वणाय दधीचे मध्वाख्यं परं ब्रह्म इन्द्र उवाच । प्रोच्य च यदि वक्ष्यसि शिरस्ते पतिष्यतीति । तमश्विनौ मध्वर्थिनावागत्य ऊचतुः । प्रब्रूहि नौ परं ब्रह्मेति । स तौ प्रत्युवाच । शिरः पातभयान्न ब्रवीमीति । तौ तं प्रत्यूचतुः । अन्यत्ते आवां शिर आदध्वहे । तेन प्रब्रूहि । स तथेति प्रपेद । तस्याश्विनौ शिरश्छित्वा अश्वशिर आदधाते । तेनासौ तावध्यापयाञ्चकारेति । तदेतदिहोच्यते दध्यङ् ह यदित्यादिना । दध्यङ् नाम ऋषिः । हशब्दः पदपूरणः । यत् मध्वाख्यं ब्रह्म आथर्वणः अथर्वपुत्रः । वां युवाभ्याम् । आहितेन

अश्वस्य शीर्ष्णा शिरसा । प्रोवाच । यदीमिति निपातौ पदपूरणौ । अथवा द्वियं- च्छब्दश्रुतेः प्रोवाचेत्याख्यातं भेदेन योजयितव्यम् । यदिन्द्रेण निषिद्धोऽपि सन् युष्मद्गौरवात् दध्यङ् ह प्रोवाच यच्चाश्वस्य शीर्ष्णा प्रोवाच न स्वेन तदुभयमपि उग्रं कर्म आविष्कृणोमि ॥ १२

अजो॑हवीन्नासत्या क॒रा वां॑ म॒हे याम॑न्पुरुभुजा॒ पुर॑न्धिः ।

श्रु॒तं तच्छासु॑रिव वध्रिम॒त्या हिर॑ण्यहस्तमश्विनावदत्तम् ॥ १३

अत्रेतिहासमाचक्षते । वध्रिमती नाम योध्री संग्रामे शत्रुभिश्छिन्नहस्ता अश्विनौ तुष्टाव । तस्याः अश्विनौ हिरण्मयं हस्तं ददतुरिति । तदिहोच्यते । अजो हवीत् आहूतवती । हे नासत्यौ करा । पूर्वपदलोपोऽत्र द्रष्टव्यः । छिन्नकरा शत्रुभि- श्छिन्नहस्ता । अथवा स्तुतीनां कर्त्री करा । वां युवां महे महति । यामन् । यान्ति योद्धारो यस्मिन् स यामः संग्राम इहाभिप्रेतः । तत्र । हे पुरुभुजा बहूनां हविषा- मभ्यवहर्तारौ पालयितारौ वा आर्तानाम् । पुरन्धिः बहुप्रज्ञा । श्रुतं युवामपि श्रुत- वन्तौ । तदाह्वानम् । शासुरिव शासितुरिव पितुराचार्यस्य वा । महतादरेणेत्यर्थः । कस्याह्वानम् । उच्यते । वध्रिमत्याः । श्रुत्वा च हिरण्यहस्तम् । हिरण्यशब्देनात्र तद्विकार उच्यते । हिरण्मयौ हस्तौ यस्मिन् स हिरण्यहस्तो बाहुः । तम् । हे अश्विनौ अदत्तं दत्तवन्तौ स्थः ॥ १३

आ॒स्नो वृक॑स्य व॒र्तिका॑मभी॒के॑ यु॒वं न॑रा नासत्यामुमुक्तम् ।

उ॒तो क॒विं पु॑रुभुजा यु॒वं ह॒ कृप॑माणमकृणुतं वि॒चक्षे॑ ॥ १४

आस्नः आस्यात् वृकस्य वर्तिकां नाम चटकाम् । अभीके । संग्रामनामैतत् । वृकेण सहास्याः संग्रामे । वृकेण ग्रस्यमानां सतीमित्यर्थः । युवं हे नरा नासत्या अमुमुक्तं मोचितवन्तौ । तदेतत् कुत्सेनाप्युक्तम्

याभिर्वर्तिकाम् । ऋ. वे १ ११२ ८.

इति । किंच उतो कविमित्यादि । अत्रेतिहासमाचक्षते । कण्व ऋषिरन्धोऽश्विनौ तुष्टाव । तस्याश्विनौ चक्षुर्ददतुरिति । तदेतदिहोच्यते । उतो अपि च । कविं मेधा- विनं कण्वम् । हे पुरुभुजा युवम् । हशब्दः पदपूरणः । कृपमाणम् । कृपा कृपण्यती- त्यर्चतिकर्मसु पाठात् कृपण्युरिति स्तोतृनामसु च पाठात् कृपिः स्तुत्यर्थः इति गम्यते । स्तुवन्तम् । अकृणुतं कृतवन्तौ । विचक्षे विविधाय दर्शनाय । अन्धं सन्तं चक्षुःप्रदानेन दर्शनसमर्थं कृतवन्तावित्यर्थः । तदेतत् मन्त्रान्तरेऽपि कक्षीवान् वक्ष्यति

युवं कण्वायापरिप्ताय। ऋ. वे. १. ११८ ७.

इति। कुत्सेनाप्युक्तम्

याभिः कण्वं प्र सिषासन्तम्। ऋ. वे. १. ११२. ५.

इति॥ १४

चरित्रं हि वेरिवाच्छेदि पर्णमाजा खेलस्य परितक्म्यायाम्।
सद्यो जङ्घामायसीं विश्पलायै धने हिते सर्तवे प्रत्यधत्तम्॥ १५

चरति गच्छति येन तच्चरित्रं जंघा इहाभिप्रेता। हिशब्दश्च पदपूरणः। गमनसाधनं जंघालक्षणम्। वेरिव पक्षिण इव पर्णं पिञ्छम्। अच्छेदि शत्रुभिः विश्पलायाः छिन्नमासीत्। आजा आजौ संग्रामे। खेलस्य खेलनाम्नो राज्ञः। परितक्म्यायां सेनायां वर्तमानायाम्। तत्र युवामेव सद्यः तस्यामेव वेलायां जङ्घामन्याम्। आयसीं लोहमयीम्। विश्पलायै विश्पलानाम्न्यै स्त्रियै। धने हिते। निमित्ते एषा सप्तमी। प्रयोजनस्य निमित्तत्वेन विवक्षा। धनाय हिताय। सर्तवे गन्तुम्। हितं धनं प्राप्तुं योऽनया प्रक्रान्तः संग्रामः तस्य गमनस्य व्याघातार्थमित्यर्थः। प्रत्यधत्तं प्रतिनिहितवन्तौ स्थः। कृतवन्तावित्यर्थः॥ १५

शतं मेषान्वृक्ये चक्षदानमृज्राश्वं तं पितान्धं चकार।
तस्मा अक्षी नासत्या विचक्ष आधत्तं दस्रा भिषजावनर्वन्॥ १६

ऋज्राश्वं तं पितान्धं इति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहर्तव्यः। यं युवयोः स्वभूता कशा वृकी भूत्वोपतस्थे तम्। शतं मेषान्। एकं चेति वाक्यशेषः। कुत एतत्।

ऋज्राश्वः शतमेकं च मेषान्। ऋ. वे. १. ११७. १८.

इति मन्त्रान्तरे दर्शनात्। वृक्ये वृक्या आहारार्थम्। चक्षदानम्। क्षदिरत्र विशसनार्थः। विशसन्तं ऋज्राश्वं नाम राजपुत्रं पिता शापेनान्धं चकार। तस्मै अक्षिणी हे नासत्यौ विचक्षे विविधं दर्शनाय। आधत्तम्। हे दस्रा भिषजौ वैद्यभूतौ। अनर्वन्। अर्तेर्गत्यर्थस्येदं रूपम्। अन्यं प्रत्याश्रिततया यो न गतः सोऽनर्वा। व्यत्ययेन चात्रैकवचनम्। अनर्वणि अनन्याश्रिते स्वायत्ते। पित्रा शापेनापनेतुमशक्ये इत्यर्थः। तदेतत् कुत्सेनाप्युक्तम्

याभिः शचीभिर्वृषणा। ऋ. वे. १. ११२. ?.

इति॥ १६

आ वां रथं दुहिता सूर्यस्य कार्ष्मेवातिष्ठदर्वता जयन्ती ॥
विश्वे देवा अन्वमन्यन्त हृद्भिः समु श्रिया नासत्या सचेथे ॥ १७

अत्रेतिहासमाचक्षते । सूर्यस्य दुहितरं देवा वरयामासुः । त ऊचुः । आजिं धावामः । यो नो जेष्यति तस्येयं भविष्यति । तमश्विनौ जिग्यतुः । सा जिताश्विनोः रथमारुरोहेति । तदेतादिहोच्यते । वां रथं दुहिता सूर्यस्य । कार्ष्मेव । क्रियते तदिति कार्ष्म शुभाशुभलक्षणं कर्म । तद्यथा कर्तारमातिष्ठति एवमातिष्ठदाश्रितवती । आरूढेत्यर्थः । अर्वेत्यश्वनाम सामर्थ्याच्चेहान्तर्णीतमत्वर्थम् । अश्ववता रथेन जयन्ती । व्यत्ययेनायं भूतकाले कर्मणि च शतृप्रत्ययः । जिता सती । तां चारोहन्तीं विश्वे सर्वे देवाः । अन्वमन्यन्त अनुमोदितवन्तः । हृद्भिः हृदयैः । तस्यां च भार्यायां सत्यां श्रिया लक्ष्म्या हे नासत्या समु सचेथे । उकारोऽत्र पदपूरणः । शप् च कर्मणि व्यत्ययेन । सम्यक् सेव्येथे । युवां श्रीमन्तौ जातौ स्थः इत्यर्थः ॥ १७

यदयातं दिवोदासाय वर्तिर्भरद्वाजायाश्विना हयन्ता ।
रेवदुवाह सचनो रथो वां वृषभश्च शिंशुमारश्च युक्ता ॥ १८

यत् यया अयातं गतवन्तौ स्थः । दिवोदासाय दिवोदासार्थम् । शंबरवधे दिवोदासस्य साहाय्यं कर्तुमित्यर्थः । तदेतत् कुत्सेनाप्युक्तम्

दिवोदासं शंबरहत्ये । ऋ. वे. १. ११२. १४.

इति । वर्तिः वर्तन्या मार्गेण । भरद्वाजाय भरद्वाजस्यार्थाय । भरद्वाजाय धनकामाय स्तुवते धनं दातुमित्यर्थः । हे अश्विनौ । यदेति वचनात्तदेत्यध्याहार्यम् । तत् हयन्ता । गतिकर्मायम् । गच्छन्तौ युवाम् । रेवत् धनसंयुक्तम् । उवाह ऊढवान् । यद्दिवोदासीयेभ्यो योद्धृभ्यः भरद्वाजाय च दास्यते धनं तेन सह युवामूढवानित्यर्थः । सचनः सेव्यः । वां युवयोः स्वभूतः रथः । तदैव च वृषभश्च शिंशुमारश्च युक्ता । वृषभो बलीवर्दः । शिंशुमारो नाम उदकचरो ग्राहविशेषः । तौ तस्मिन् रथे युवाभ्यां नियुक्तावास्ताम् ॥ १८

रयिं सुक्षत्रं स्वपत्यमायुः सुवीर्यं नासत्या वहन्ता ।
आ जह्नावीं समनसोप वाजैस्त्रिरह्नो भागं दधतीमयातम् ॥ १९

अत्रेतिहासमाचक्षते । जह्नोर्भार्या धनादिकामा सोमेनायजत् । तस्यै अश्विनावागत्य धनादीनि ददतुरिति । तदेतदिहोच्यते रयिमित्यादिना । रयिं धनम् ।

सुक्षत्रम् । क्षत्रमित्यपठितमपि बलनाम । सुबलम् । शोभनेनासुरादिदुष्टजननिरासपटुना बलेन सहितमित्यर्थः । शोभनैश्चापत्यैः सहितम् । आयुरन्नं च । अथवा जीवितं च । सुवीर्यं शोभनं च वीर्यम् । हे नासत्यौ आवहन्ता प्रापयन्तौ । ददताविल्यर्थः । जह्नुशब्दस्यायं मनोरौ वा (पा. ४. १. ३८) इत्यौकारः । ङीप्रत्ययश्छान्दसत्वात् । जह्नोर्भार्या जह्नावी । अथवा जह्नोरपत्यं जाह्नवी । तस्य प्रजा जाह्नवी सती जह्नावीत्युच्यते । प्रथमद्वितीययोरक्षरयोः स्वरव्यत्ययश्छान्दसत्वात् । जह्नोः प्रजां तां बलकाश्वकुशिकगाधिविश्वामित्रप्रभृतिकामित्यर्थः । समनसा समानेन चित्तेन । तुल्यचित्तौ सन्ताविल्यर्थः । वाजैरन्नैः हविराख्यैर्निमित्तभूतैः । त्रिः एकस्यैवाह्नः प्रातस्सवने माध्यंदिने सवने तृतीयसवने च । भागम् । सोमस्य सामर्थ्यात् । दधर्ती युवाभ्यां ददर्ती उपायातमुपागतवन्तौ युवाम् ॥　　　१९

परि॑ वि॒ष्टं जा॑हु॒षं वि॒श्वतः॑ सीं सु॒गेभि॒र्नक्त॑मूहथू॒ रजो॑भिः ॥

वि॒भि॒न्दुना॑ नासत्या॒ रथे॑न॒ वि पर्व॑ताँ अजर॒यू अ॑यातम् ॥　　　२०

अत्रेतिहासमाचक्षते । जाहुषो नाम ऋषिः वृद्धो वृद्धया भार्यया वृद्धैश्च पुत्रपौत्रादिभिः परिवृतः देवानियाज । तं दृष्ट्वा असुराः तुङ्गैः पर्वतैः परिक्षिप्ते मरुदेशे प्रचिक्षिपुः । स ततो प्रवृद्धत्वात् स्वयं निर्गन्तुमशक्नुवन् अश्विनौ महाकारुणिकौ तुष्टाव । तमश्विनावागत्य एकयैव रात्र्या अश्वेन रथेन तान् पर्वतानतिक्रामयांचक्रतुरिति । तदेतदिहोच्यते परिविष्टमित्यादिना । परिशब्दोऽत्र विश्वत इत्येतेन पौनरुक्त्यप्रसङ्गात् धात्वर्थानुवादी । विषिर्व्याप्त्यर्थः । व्याप्तं जरया । जाहुषं नामर्षिं विश्वतः सर्वतः स्वतः पुत्रतो दारतश्च । सपुत्रदारं वृद्धमित्यर्थः । सीमिति पदपूरणः । सुगेभिः सुगमनैरश्वैः । नक्तं रात्रौ ऊहथुः ऊढवन्तौ युवाम् । रजोभिः । रजश्शब्दोऽत्र तेजोवचनः अन्तर्णीतमत्वर्थश्च । तेजस्विभिः । शीघ्रगामिभिरित्यर्थः । विभिन्दुना पर्वतभेदनसमर्थेन हे नासत्या रथेन तुंगानपि पर्वतान् हे अजरयू । युशब्दोऽत्र तद्वदर्थे ।

अश्वयुर्गव्यू रथयुः । ऋ. वे. १. ५१. १४.

इति यथा । अजरावन्तौ । जरारहिताविल्यर्थः । व्ययातम् । यातिरत्रान्तर्णीतण्यर्थः । विगमितवन्तौ युवाम् । अतिक्रामितवन्ताविल्यर्थः ॥　　　२०

एक॑स्या॒ वस्तो॑रावतं॒ रणा॑य॒ वश॑मश्विना स॒नये॑ स॒हस्रा॑ ।

निर॑हतं दु॒च्छुना॒ इन्द्र॑वन्ता पृथु॒श्रव॑सो वृषणा॒वरा॑तीः ॥　　　२१

व्यत्ययेनात्र स्त्रीलिंगता सप्तम्यर्थे च षष्ठी । एकस्मिन् वस्तोः अह्नि । यस्मिन्नेवाहूतौ स्थः तस्मिन्नेवाहनीत्यर्थः । आवतम् । अवतिर्गत्यर्थः । गतवन्तौ युवाम् । रणाय संग्रामार्थम् । संग्रामेऽस्य साहाय्यं कर्तुमित्यर्थः । वशं नाम राजानं प्रति हे अश्विना । सनये लाभाय । सहस्रा । षष्ठीबहुवचनस्यायमाकारः । सहस्रसंख्याकानां धनानाम् । तदेतत् कुत्सेनाप्युक्तम्

याभिर्वशम् । ऋ. वे. १. ११२. १०.

इति । किंच निरहतमित्यादि । अत्रेतिहासमाचक्षते । पृथुश्रवो नाम राजा सन्ततैर्बहुभिर्दुर्भिक्षैः पीड्यमानोऽश्विनावियाज तुष्टाव च । तस्याश्विनौ तु महत्या वृष्टया तान्यपनिन्यतुरिति । तदेतदिहोच्यते निरहतमित्यादिना । निर्हतवन्तौ युवाम् । दुच्छुना दुर्भिक्षा उच्यन्ते । ताः । इन्द्रवन्ता इन्द्रसहितौ सन्तौ । इन्द्रेण सह वृष्टिं प्रदायेत्यर्थः । पृथुश्रवसो राज्ञः हे वृषणौ वर्षितारौ । अरातीः दानवर्जिताः । यासु कश्चित् कस्मैचित् किंचित् अपि दातुं न शक्नोतीत्यर्थः ॥ २१

शरस्य चिदार्चत्कस्यावतादा नीचादुच्चा चक्रथुः पातवे वाः ।
शयवे चिन्नासत्या शचीभिर्जसुरये स्तर्यं पिप्यथुर्गाम् ॥ २२

अत्रेतिहासमाचक्षते । शरो नाम ऋषिः । स मरुदेशे गच्छन् पिपासितः सन् सुदूरतोयं कूपं ददर्श । स ततः पातुमशक्नुवन् अश्विनौ तुष्टाव । तस्याश्विनौ सुलभ्यं चक्रतुरिति । तदेतदिहोच्यते शरस्य चिदित्यादिना । शरस्यापि आर्चत्कस्य ऋचत्कनाम्न ऋषेः पुत्रस्य । अवतात् । अवत इति कूपनाम । सप्तम्यर्थे चात्र पञ्चमी । कूपे । नीचात् । द्वितीयैकवचनस्यायं सुपांसु लुक् ( पा. ७. १. ३९ ) इति लुगादेशः । नीचम् । सुदूरवर्तित्वात् ग्रहीतुमशक्यमित्यर्थः । उच्चा । अयमपि द्वितीयैकवचनस्याकारः । उच्चम् । हस्तग्राह्यमित्यर्थः । आचक्रथुः आभिमुख्येन कृतवन्तौ स्थः । पातवे पानार्थम् । वाः । उदकनामैतत् । उदकम् । शयवे चित् शयवे राज्ञे हे नासत्यौ । शचीभिः स्वाभिरतिशयवतीभिः प्रज्ञाभिः कर्मभिर्वा । जसुरये । जसि ताडने । ताडयित्रे शत्रूणाम् । ताडिताय वा । गोः प्रसवनिवृत्त्या अधेनुत्वापत्त्या च पीडितायेत्यर्थः । स्तर्यम् । निवृत्तप्रसवा स्तरीरुच्यते । ताम् । पिप्यथुः आप्यायितवन्तौ । धेनुतां कृतवन्तावित्यर्थः । काम् । उच्यते । गाम् । तदेतत् परस्तादपि पुनर्वक्ष्यति

अधेनुं दस्रा । ऋ. वे. १. ११७. २०.

इति । कुत्सेनाप्युक्तम् ।

याभिर्धेनुम् । ऋ. वे. १. ११२. ३

इति । २२

अवस्यते स्तुवते कृष्णियाय ऋजूयते नासत्या शचीभिः ।
पशुं न नष्टमिव दर्शनाय विष्णाप्वं ददथुर्विश्वकाय ॥ २३

अत्रेतिहासमाचक्षते। विश्वको नाम राजर्षिः । तस्य बालः पुत्रः प्रमादादुपननाश । स्नेहाद्विपत्त्याशंकया तस्य पालनं पुनश्च दर्शनमिच्छन् अश्विनौ तुष्टाव । तस्मै तमानीयाश्विनौ ददतुरिति । तदेतदिहोच्यते अवस्यत इत्यादिना। अवः पालनम्। तत् कामयमानाय। स्तुवते कृष्णियाय । अपत्येऽयं घप्रत्ययो द्रष्टव्यः। कृष्णनाम्न ऋषेः पुत्राय। ऋजूयते । ऋजु न्याय्यम् । तदिच्छते। साधुवृत्तायेत्यर्थः। हे नासत्यौ शचीभिः स्वाभिः कर्मभिर्वा । पशुं न नष्टमिव दर्शनाय । इवशब्दोऽत्र नेत्यनेन पौनरुक्त्यात् अस्त्युपमार्थस्य संप्रत्यर्थे प्रयोगः (नि. ७ ३१) इति पदपूरणः। यथा पशुं नष्टं कश्चिदानीय कस्मैचिद्दर्शनाय दद्यात् एवम् । विष्णाप्वं नाम पुत्रं ददथुर्दत्तवन्तौ युवां विश्वकाय ऋषये ॥ २३

दश रात्रीरशिवेना नव द्यूनवनद्धं श्नथितमप्स्वन्तः ।
विप्रुतं रेभमुदनि प्रवृक्तमुन्निन्यथुः सोममिव स्रुवेण ॥ २४

दश रात्रीः। नव च द्यून् दिवसान् । अशिवेन। शिवं सुखम्। ततोऽन्यदशिवं दुःखम् । तत्करत्वादित्रासुरा अशिवा उच्यन्ते। समूहाभिप्रायश्चैकवचनम्। दुःखकरेणासुरसमूहेन। अवनद्धम्। नह बन्धने। बद्धम्। श्नथितं ताडितम्। अप्स्वन्तः अपां मध्ये। विप्रुतं विगतम्। रहितमित्यर्थः। केन।

सं तं रिणीथो विप्रुतम्। ऋ वे. १. ११७. ४.

इति परस्ताद्दर्शनात् कर्मभिः। निश्चेष्टं सन्तम्। मृतकल्पमित्यर्थः। रेभं नाम ऋषिम्। उदनि उदके । प्रवृक्तम्। वृजी वर्जनेऽन्यत्र इह तु सामर्थ्यान्निमज्जने । निमग्नम्। उन्निन्यथुः ऊर्ध्वं नीतवन्तौ स्थः । उत्तारितवन्तावित्यर्थः। सोममिव स्रुवेण । यथा कश्चित् स्रुवेण सोममुन्नयति तद्वत् । स्रुवेण च सोमस्योन्नयनाविधानात् स्रुवशब्देन कुतश्चित् सादृश्यात् चमसादिसोमपात्रमुच्यते । अथवा कठानामाग्निहोत्रहोमः सोमेन ब्रह्मवर्चसकामस्य विधीयते । तदभिप्रायमेतदुपमानम् । तदेतत् कुत्सेनाप्युक्तम्।

याभी रेभम्। ऋ. वे. १. ११२. ५.

इति ॥ २४

प्र वां दंसांस्यश्विनाववोचमस्य पतिः स्यां सुगवः सुवीरः ।
उत पश्यन्नश्नुवन्दीर्घमायुरस्तमिवेज्जरिमाणं जगम्याम् ॥ २५

वां युवयोः दंसांसि कर्माणि । हे अश्विनौ प्रावोचं प्रोक्तवानहम् । अतो ब्रवीमि । युष्मत्प्रसादेनास्य । बुद्धिस्थस्याभिप्रेतस्य धनादेरयं प्रतिनिर्देशः । यदिदमस्मदभिलषितं धनादि अस्य पतिः स्वामी स्यां भवेयमहम् । सुगवः । शोभना गावो यस्य स सुगवः । छान्दसत्वादकारः समासान्तः । शोभनाभिर्गोभिरुपेतः सन्नित्यर्थः । सुवीरः शोभनैर्वीरैः पुत्रैः पौत्रैश्चोपेतः । उत अपि च पश्यन् चक्षुषा । अनन्धश्च सन्नित्यर्थः । अश्नुवन् प्राप्नुवंश्च दीर्घमायुः । अस्तमिवेत् । इच्छब्दः पदपूरणः । यथा कश्चित् स्वगृहमनुद्विग्नो गच्छेत् तद्वत् । जरिमाणं जरात्वम् । जरामित्यर्थः जगम्यां गच्छेयम् ॥ २५

---

मध्वः सोमस्याश्विना मदाय प्रत्नो होता विवासते वाम् ।
बर्हिष्मती रातिर्विश्रिता गीरिषा यातं नासत्योप वाजैः ॥ १

मधुस्वादस्य सोमस्य हे अश्विनौ मदाय मदार्थम् । मधुस्वादं सोमं पीत्वा मदिष्यथ इत्येवमर्थमित्यर्थः । प्रत्नः पुराणः । होता नामर्त्विक् । अथवा कक्षीवान्नामर्षिः । आत्मानमेव परोक्षरूपेण प्रथमपुरुषेण निर्देशः । आविवासते परिचरति वां युवाम् । किंच बर्हिष्मती वेद्यां स्तीर्णेन बर्हिषा तद्वती । बर्हिषि सादितहविष्केत्यर्थः । रातिः दानं सवनीयपुरोडाशादेः । विश्रिता विविधमाश्रिता । मनसा चिकीर्षितेत्यर्थः । गीः स्तुतिश्च । एतत् ज्ञात्वा इषा अन्नेन सोमाख्येन निमित्तेन । सोमं पातुमित्यर्थः । यातं नासत्या उप उपयातमुपगच्छतं हे नासत्यौ वाजैः अन्नैश्चरुपुरोडाशादिभिः । चरुपुरोडाशादीनि भक्षयितुमित्यर्थः । अथवा इषा वाजैरिति सहयोगलक्षणा तृतीया । अस्मभ्यं यद्देयमन्नं बलानि च तैः सह । तानि गृहीत्वोपगच्छतमित्यर्थः ॥ १

यो वामश्विना मनसो जवीयान्रथः स्वश्वो विश आजिगाति ।
येन गच्छथः सुकृतो दुरोणं तेन नरा वर्तिरस्मभ्यं यातम् ॥ २

यः वां युवयोः स्वभूतः हे अश्विनौ मनसः सकाशात् । जवीयान् वेगवत्तरो रथः । स्वश्वः शोभनैरश्वैर्युक्तः । विशः मनुष्यान् प्रतिः आजिगाति आगच्छति । येन गच्छथः । सुकृतः पुण्यकृतो यजमानस्य स्वभूतं दुरोणं गृहम् । तेन हे नरा मनु-

ध्याकारौ । वर्तिः वर्तन्या मार्गेणास्मभ्यं अस्मदर्थम् । अस्मान् प्रतीत्यर्थः यातं गच्छतम् ॥ २

ऋषिं नरावंहसः पाञ्चजन्यमृबीसादत्रिं मुञ्चथो गणेन ।
मिनन्ता दस्योरशिवस्य माया अनुपूर्वं वृषणा चोदयन्ता ॥ ३

ऋषिं हे नरौ अंहसः पापाद्दाहकत्वात् । विनाशकत्वादित्यर्थः । पाञ्चजन्यम् । बाह्यो दैव्यः पाञ्चजन्यः (वा. ४. ३. ६० ३) इत्येवमयं हितेऽत्र त्यप्रत्ययो द्रष्टव्यः । पञ्चभ्योऽपि जनेभ्यः गन्धर्वाः पितरो देवाः असुरा रक्षांसीत्येतेभ्यः निषादपञ्चमेभ्यो वा चतुर्भ्यो वर्णेभ्यः हितम् । पञ्चानां हि जनानां स्थितिकरी वृष्टिः । तस्या हेतुभूतो यज्ञः । तस्य कर्ता अग्निरित्येवमस्य हितत्वम् । ऋबीसादग्निकूटात् । अत्रिं नाम । मुञ्चथः मोचितवन्तौ स्थः । उद्धृतवन्तावित्यर्थः । गणेन सह । कस्य ? सामर्थ्यादिन्द्रियाणाम् । अविनष्टसर्वाङ्गमित्यर्थः । मिनन्त । मीङ् हिंसायाम् । दस्योः ।

विजानीह्यार्यान् ये च दस्यवः । ऋ. वे. १. ५१. ८.

इत्यार्यप्रतियोगित्वदर्शनाद्दस्युशब्दोऽनार्यवचनः । समूहाभिप्रायं चैकवचनम् । येनासावग्निकूटे प्रक्षिप्तः तस्यानार्यस्य असुरसमूहस्य अशिवस्य । मायाः शठप्रज्ञाः । उद्धरणाच्चोर्ध्वमनुपूर्वम् । क्रियाविशेषणमेतत् । आनुपूर्व्येण यथायोग्यमित्यर्थः । हे वृषणा वर्षितारावित्यर्थः । तासु तास्वभिप्रेतफलासु अत्रिं चोदयन्ता उपदेशादिना प्रेरयन्तौ । तदेतत् कुत्सेनाप्युक्तम् ।

तप्तं घर्मम् । ऋ. वे. १. ११२. ७.

इति ॥ ३

अश्वं न गूळ्हमश्विना दुरेवैरृषिं नरा वृषणा रेभमप्सु ।
सं तं रिणीथो विप्रुतं दंसोभिर्न वां जूर्यन्ति पूर्व्या कृतानि ॥ ४

अश्वमिवात्यन्तशोभनं चोरापहृतं वा गूळ्हं संवृतम् । अदृश्यतामापादितमित्यर्थः । हे अश्विनौ दुरेवैः पापकामैरसुरैः । ऋषिं हे नरा वृषणा रेभं नाम । अप्सु अपां मध्ये । तम् । तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । यो युवामाजुहाव तम् । संरिणीथः । रिणातिर्गतिकर्मा । सम्यग्गतौ स्थः । विप्रुतं विगतम् । रहितमित्यर्थः । दंसोभिः । निश्चेष्टं सन्तम् । मृतकल्पमित्यर्थः । तदेतत् परस्तादप्युक्तम्

दश रात्रीः। ऋ वे. १. ११६. २४.

इत्यादिना। न वां युवयोः जूर्यन्ति जीर्यन्ते। विनश्यन्तीत्यर्थः। पूर्व्या। पूर्वमिति पुराणनाम। पुराणानि। कृतानि कर्माणि॥ ४

सुषुप्वांसं न निर्ऋतेरुपस्थे सूर्यं न दस्रा तमसि क्षियन्तम्।
शुभे रुक्मं न दर्शतं निखातमुदूपथुरश्विना वन्दनाय॥ ५

सुषुप्वांसं न सुप्तमिव। कश्चित् निर्ऋतेः पृथिव्या एकदेशभूते। उपस्थे स्थाने। भूम्यामित्यर्थः। सूर्यं न सूर्यमिव। हे दस्रा तमसि क्षियन्तं निवसन्तम्। कदा पुनः सूर्यः तमसि न्युषितवान् यनैवमुच्यते सूर्यमिव तमसि क्षियन्तमिति। उच्यते। यदा वृत्रो महत्तमस्ततान तं च हत्वेन्द्रः सूर्यं दिव्यारोहयाञ्चकारेति। तदेतत् सव्येनोक्तम्

वृत्रं यदिन्द्र शवसावधीः। ऋ. वे. १ ५१ ४

इति। शुभे शोभायै च। रुक्मं न। रुक्मो नामाभरणविशेषः। तमिव कश्चित्। दर्शतं दर्शनीयम। निखातं सन्तमुदूपथुः उत्खातवन्तौ हे अश्विनौ वन्दनाय। द्वितीयार्थे चतुर्थी। वन्दनमृषिम्। यथा भूमौ सुप्तं कंचित् कश्चिद्धस्तेन गृहीत्वा उत्थापयेत् यथा च वृत्रततेन तमसा अवष्टब्धं सूर्यं दिव्यारोहणार्थमिन्द्र उद्धृतवान् यथा चात्मनः शोभनार्थं रुक्मं निखातं सन्तं कश्चिदुद्धरेत् एवं युवां वन्दनं कूपे निपतितं तत उद्धृतवन्तौ इति समस्तार्थः। तदेतत् पुरस्तादप्युक्तम्

तद्वां नरा शंस्यम्। ऋ वे १. ११६. ११.

इति। कुत्सेनाप्युक्तम्

उद्वन्दनमैरयतं स्वर्दृशे। ऋ वे. १ ११२ ५.

इति॥ ५

तद्वां नरा शंस्यं पज्रियेण कक्षीवता नासत्या परिज्मन्।
शफादश्वस्य वाजिनो जनाय शतं कुम्भाँ असिञ्चतं मधूनाम्॥ ६

तत् कर्म वां युवयोः। हे नरा शंस्यं स्तुत्यम्। पज्रियेण। पाजोऽन्नं हविर्लक्षणम्। तद्वता। अथवा पज्राः अंगिरसः। तदपत्यभूतेन मया कक्षीवता। हे नासत्या परिज्मन्। सर्वतो गच्छन्ति देवा यत्र स परिज्मा यज्ञः। तस्मिन्। यत् कर्म कतमत्। उच्यते। शफात् खुरादश्वस्य वाजिनः वेगवतो बलवतो वा। जनानामर्थाय। शतं कुंभान् असिञ्चतं क्षारितवन्तौ स्थः मधूनां मधुस्वादूनां सुराणाम्। तदेतत् पुरस्तादप्युक्तम्

कारोतरात्। ऋ. वे. १. ११६. ७.

इति ॥ ६

युवं नरा स्तुवते कृष्णियाय विष्णाप्वं ददथुर्विश्वकाय ।
घोषायै चित्पितृषदे दुरोणे पतिं जूर्यन्त्या अश्विनावदत्तम् ॥ ७

युवां हे नरा स्तुवते कृष्णियाय कृष्णनाम्नः ऋषेः पुत्राय । विष्णाप्वं नामास्य पुत्रमपनष्टमानीयास्य ददथुः विश्वकाय ऋषये । तदेतत् पुरस्तादप्युक्तम् ।

अवस्यते स्तुवते कृष्णियाय। ऋ. वे. १. ११६. २३.

इति । घोषायै चित् । अत्रेतिहासमाचक्षते । घोषा नाम कक्षीवतो दुहिता । सा दुर्भगत्वात् पत्या परित्यक्ता पितुरेव गृहे जरां जगाम । सा जीर्णा अश्विनौ शोभनं भगं ययाचे । तस्यै अश्विनौ स्वयमेव भगतां जग्मतुरिति । तदेतत् घोषैव वक्ष्यति

अमाजुरश्चित्। ऋ. वे. १०. ३९. ३.

इति । तां सुभगीभूतां पतिर्भेजे । तदेतदिहोच्यते घोषायै चिदित्यादिना । चिच्छब्दोऽत्र चार्थे । घोषायै च । पितृषदे । पिता यत्र सीदति तिष्ठति तत् पितृषदम् । तस्मिन् दुरोणे गृहे । जूर्यन्त्यै जरां प्राप्नुवत्यै । पतिं हे अश्विनौ अदत्तं सौभाग्यकरणद्वारेण दत्तवन्तौ स्थः ॥ ७

युवं श्यावाय रुशतीमदत्तं महः क्षोणस्याश्विना कण्वाय ।
प्रवाच्यं तद्वृषणा कृतं वां यन्नार्षदाय श्रवो अध्यधत्तम् ॥ ८

युवं युवां श्यावाय कुष्ठितत्वात् श्याववर्णायाग्नेः पुत्रस्य घोरस्य ज्येष्ठपुत्राय । रुशतीं दीप्तां त्वचमदत्तं दत्तवन्तौ स्थः । तं हि युवां विकृत्य छित्वा च जंघयोर्मध्ये शिरसि च पुनश्च सन्धाय हिरण्यत्वचं पुनरुज्जीवयाञ्चक्रथुः । तदेतत् परस्तादपि वक्ष्यति

त्रिधा ह श्यावमश्विना। ऋ. वे. १. ११७. २४.

इति । महः । द्वितीयैकवचनान्तमेतत् । महच्च दत्तम् । किम् ।

युवं कण्वायापिरिप्ताय। ऋ. वे. १. ११८. ७.

इति मन्त्रान्तरे दर्शनाच्चक्षुः । कीदृशाय । उच्यते । क्षोणस्य । टुक्षु शब्दने इत्यस्येदं रूपम् । चतुर्थ्यर्थे षष्ठी । शब्दयित्रे । आह्वात्रे स्तोत्रे वेत्यर्थः । कस्मै । उच्यते । हे

अश्विनौ कण्वाय ऋषये । किंच प्रवाच्यं प्रकर्षेण वक्तव्यं तत् । हे वृषणा कृतं कर्म वां युवयोः । यन्नार्षदाय ऋषये बधिराय श्रवः श्रोत्रं अध्यधत्तम् । अधिशब्दः अधिपरी अनर्थकौ (पा. १. ४ ९३) इति कर्मप्रवचनीयः पदपूरणः । दत्तवन्तौ स्थः ॥ ८

पुरू वर्पांस्यश्विना दधा॑ना नि पे॒दव॑ ऊहथुरा॒शुमश्व॑म् ।

सहस्रसां वाजिनमप्र॑तीतमहि॒हनं॑ श्रवस्यं१॒॑ तरु॑त्रम् ॥ ९

अत्रेतिहासमाचक्षते । पेदुर्नाम राजा । तस्मै परया भक्त्या परितुष्टावश्विनौ महावीर्यं श्वेतमश्वं ददतुरिति । तत्परस्ताद्वक्ष्यति

युवं श्वेतं पेदव इन्द्रजूतम् । ऋ. वे. १. ११८. ९.

इति । घोषापि वक्ष्यति ।

युवं श्वेतं पेदवेऽश्विनाश्वम् । ऋ. वे. १०. ३९. १०.

इति । तदेतदिहोच्यते पुरू वर्पांसीत्यादिना । पुरू बहूनि वर्पांसि रूपाणि । हे अश्विना दधाना धारयन्तौ । आत्मनो देवतामाहात्म्यान्नानारूपतां प्रतिपद्यमानावित्यर्थः । पेदवे राज्ञे । न्यूहथुः नियमेन प्रापितवन्तौ स्थः । दत्तवन्तावित्यर्थः । आशुं शीघ्रं अश्वम् । सहस्रसां संग्रामसहस्राणां तन्निमित्तभूतधनसहस्राणां वा संभक्तारम् । वाजिनं बलवन्तं वेगवन्तं वा । अप्रतीतं अप्रतिगतपूर्वं शत्रुभिः । अहिहनम् । हि गतौ । अगन्ता अनष्टा अहिः । बलावलेपेन अनष्टुरपि शत्रोर्हन्तारं अहिनाम्नो वा असुरस्य । श्रवस्यम् । श्रवः कीर्तिः । तद्वदर्थे क्यच्प्रत्ययः ।

अश्वयुर्गव्यू रथयुः । ऋ. वे. १. ५१. १४.

इति यथा । कीर्तिमन्तम् । तरुत्रम् । तरतिः प्लवनार्थः । प्लवनं च गमनं प्लवतेर्गत्यर्थत्वात् । गन्तारं शत्रून् प्रति ॥ ९

एतानि वां श्रवस्या सुदानू ब्रह्माङ्गूषं सद॑नं रोद॑स्योः ।

यद्वां पज्रासो अश्विना हव॑न्ते यातमिषा च॑ वि॒दुषे॑ च वाज॑म् ॥ १०

एतानि वां युवयोः श्रवस्या । श्रव इत्यन्ननाम । स्वार्थे चात्र यच्प्रत्ययः । अन्नानि हविर्लक्षणानि । सुदानू शोभनदातारौ । ब्रह्म च स्तुतिलक्षणं याज्यानुवाक्यादिगतम् । आङ्गूषं स्तोत्रं च शस्त्रलक्षणम् । कीदृशम् । सदनम् । सीदतः यस्मिन् तत् सदनम् । रोदस्योः द्यावापृथिव्योः उभयोः अपि । द्यावापृथिव्यौ

यच्छ्रोतुं निषीदतः इत्यर्थः । एतत् ज्ञात्वा यत् यदा वां युवयोः पज्रासः पाजसान्नेन हविर्लक्षणेन तद्वन्तः ऋत्विजः । अथवा पितृशब्देनेदं सोऽयमित्यभिसम्बन्धात् अपत्यस्याभिधानम् । पज्राणामङ्गिरसामपत्यभूता मत्प्रभृतयः । हे अश्विनौ हवन्ते आह्वयन्ति । यदेति वचनात्तदेत्यध्याहार्यम् । तदा यातं गच्छतम् । इषा । चतुर्थ्यर्थे तृतीया । अन्नाय च । अस्माकं विदुषे च विज्ञानाय च । अन्नं विज्ञानं चास्मभ्यं दातुमित्यर्थः । वाजमन्नमस्मदीयं हविर्लक्षणम् ॥ १०

सूनोर्मानेनाश्विना गृणाना वाजं विप्राय भुरणा रदन्ता ।
अगस्त्ये ब्रह्मणा वावृधाना सं विश्पलां नासत्यारिणीतम् ॥ ११

सूनुरित्यपत्यनाम । मीयतेऽनेनेति मानः कुंभः । षष्ठीतृतीये च व्यत्यासेन योजयितव्ये । सूनुनास्यापत्यभूतेन कुंभस्य । अगस्त्यो ह्युर्वशीदर्शनात् मित्रावरुणयोः स्कन्नाद्रेतसः कुंभे जातः । एवं ह्याख्यानविद आहुः

बहुधा पतितं रेतः कलशेऽथ जले स्थले ।
स्थले वसिष्ठस्तु मुनिः संभूतो ऋषिसत्तमः ॥
कुंभे त्वगस्त्यः संभूतो जले मत्स्यो महाद्युतिः ॥

इति । वसिष्ठोऽपि तत्पुत्रो वा वक्ष्यति ।

सत्रे ह जातौ । ऋ. वे. ७. ३३. १३.

इति । एवं कुंभस्यापत्यभूतोऽगस्त्यः खेलस्य च पुरोहितः । तेन हे अश्विना गृणाना स्तूयमानौ । वाजं बलमन्नं वा । विप्राय मेधाविने तस्मै । हे भुरणा । भुरण्यतीति गतिकर्मा । गन्तारौ शत्रून् यज्ञान् वा प्रति । रदन्ता । रद विलेखनेऽन्यत्र इह तु संप्रदानचतुर्थीश्रुतेर्दानार्थः । ददतौ । अगस्त्ये । षष्ठ्यर्थेऽत्र सप्तमी । अगस्त्यस्य स्वभूतेन स्तुतिरूपेण ब्रह्मणा । वावृधाना अत्यर्थं वर्धमानौ । विश्पलां नाम खेलस्य सेनाया योध्रीं स्त्रियं शत्रुभिः छिन्नजंघां प्रति । हे नासत्यौ समरिणीतम् । रिणातीति गतिकर्मा । आयसीं जंघां तस्यै दातुं सम्यगगच्छतं युवाम् । पुरस्तादप्युक्तमेतत्

चरित्रं हि वेरिव । ऋ. वे. १ ११६. १५.

इति ॥ ११

कुह यान्ता सुष्टुतिं काव्यस्य दिवो नपाता वृषणा शयुत्रा ।
हिरण्यस्येव कलशं निखातमुदूपथुर्दशमे अश्विनाहन् ॥ १२

अत्रेतिहासमाचक्षते । अश्विनौ यदृच्छया पर्यटन्तौ श्लक्ष्णोच्चारणां रमणीयामुशनसः स्तुतिं शुश्रुवतुः । तौ भक्त्या परितुष्टावानीय हिरण्यकलशमस्य शयने निचक्रतुरिति । तदेतदिहोच्यते कुहयान्तेत्यादिना । कुह क्वापि यान्ता गच्छन्तौ । अन्यत्रापि क्वापि गच्छन्तावित्यर्थः । सुष्टुतिं शोभनां स्तुतिम् । द्वितीयाश्रुतेः श्रुत्वेति वाक्यशेषः । काव्यस्य कविपुत्रस्योशनसः । हे दिवो नपाता । दिवो हि पुत्र आदित्यः । कुत एतत् । ऐतरेयब्राह्मणे प्रजापतिरकामयत । प्रजायेय । भूयान् स्यम् इत्युपक्रम्य अग्निरेव पृथिव्या अजायत । वायुरन्तरिक्षात् । आदित्यो दिवः । (ऐ. ब्रा. ५. ३२ १) इति श्रुतेः । एवं ह्यैतिहासिकाः स्मरन्ति

दिवः पुत्रो बृहद्भानुश्चक्षुरात्मा विभावसुः ।
सविता स ऋचीकोऽर्को भानुराशावहो रविः ।
पुरा विवस्वतः सर्वे तेषां ज्येष्ठः तथापरः ॥

इति । एवं दिवः पुत्रो विवस्वान् । तस्य पुत्रावश्विनौ । एवं हीतिहासमाचक्षते । त्वाष्ट्री सरण्यूर्विवस्वत आदित्यात् यमौ मिथुनौ जनयांचकार । सा सवर्णां प्रतिविधायान्यां आश्वं रूपं कृत्वा प्रदुद्राव । विवस्वानादित्यः आश्वमेव रूपं कृत्वा तामनुसृत्य संबभूव । ततोऽश्विनौ जज्ञाते इति । एवमश्विनौ दिवः पौत्रौ । हे वृषणा वर्षितारौ । शयुत्रा शयने । हिरण्यस्येव कलशम् । इवशब्दोऽत्र अस्त्युपमार्थस्य संप्रत्यर्थे प्रयोगः (नि. ७ ३१) इति पदपूरणः । हिरण्यस्य कलशम् । निखातं सन्तम् । उत् । वपिनास्य सम्बन्धाभावात् योग्यक्रियापदाध्याहारः । उत्खाय ऊपथुः । वपिः प्रकिरणार्थः । विकीर्णवन्तौ स्थः । किं तदानीमेव । न । किं तर्हि । यस्मिन्नेव स्तुतिः श्रुता ततः दशमे हे अश्विनौ अहन् अहनि ॥ १२

युवं च्यवा॑नमश्विना॒ जर॑न्तं॒ पुन॒र्युवा॑नं चक्रथुः॒ शची॑भिः ।
यु॒वो रथं॑ दुहि॒ता सूर्य॑स्य स॒ह श्रि॒या ना॑सत्यावृणीत ॥ १३

युवं युवां च्यवानं नामर्षिम् । हे अश्विनौ जरन्तं जीर्णं सन्तम् । पुनर्युवानं तरुणं चक्रथुः । शचीभिः स्वाभिः प्रज्ञाभिः कर्मभिर्वा । तत्पुरस्तादप्युक्तम्

जुजुरुषो नासत्योत वव्रिम् । ऋ. वे. १. ११६. १०

इति । किंच युवयोः स्वभूतं रथम् । दुहिता सूर्यस्य आर्यानामाजौ जिता सती । सह श्रिया लक्ष्म्या । ऐश्वर्यं युवयोर्जनयतीत्यर्थः । हे नासत्यौ अवृणीत संभक्तवती । आरूढेत्यर्थः । तदेतत् पुरस्तादप्युक्तम्

आ वां रथं दुहिता । ऋ. वे. १. ११६. १७.

इति ॥ १३

युवं तुग्राय पूर्व्येभिरेवैः पुनर्मन्यावभवतं युवाना ।
युवं भुज्युमर्णसो निः समुद्राद्विभिरूहथुर्ऋज्रेभिरश्वैः ॥ १४

युवं युवां तुग्राय । पितृशब्दोऽयं सोऽयमित्यभिसम्बन्धात् पुत्रे प्रयुज्यते । षष्ठ्यर्थे चतुर्थी । तुग्रपुत्रस्य भुज्योः । पूर्व्येभिः पूर्वैः । एवैः पालनैः कामैर्वा । यस्मात् पूर्वं पालितवन्तौ कामान् वा संपादितवन्तौ तस्मादित्यर्थः । पुनर्मन्यौ । पुनश्शब्दोऽत्रान्तर्णीतवीप्सार्थः । मन्यत इत्यर्चतिकर्मा कान्तिकर्मा वा । पुनः पुनः स्तुत्यौ काम्यौ वा । अभवतं हे युवाना तरुणौ । यस्मात् युवं भुज्युं अर्णस उदकात् समुद्रात् । तात्स्थ्यात् ताच्छब्द्यम् । समुद्रस्थात् । विभिः । वयः पक्षिणः । तत्सदृशैः । निरित्यस्योपसर्गस्यापादनस्य च श्रुतेर्योग्यक्रियापदाध्याहारः । निष्कृष्य ऊहथुः प्रापितवन्तौ । तटं उत्तारितवन्तावित्यर्थः । ऋज्रेभिः ऋजुगामिभिः स्वैभिरश्वैः ॥ १४

अजोहवीदश्विना तौग्र्यो वां प्रोळ्हः समुद्रमव्यथिर्जगन्वान् ।
निष्टमूहथुः सुयुजा रथेन मनोजवसा वृषणा स्वस्ति ॥ १५

आहूतवान् हे अश्विनौ । तौग्र्यः तुग्रपुत्रो भुज्युः । वां युवाम् । प्रोळ्हः प्रापितः । विपन्नया नावा प्रक्षिप्त इत्यर्थः । समुद्रं जगन्वान् गतः । समुद्रे निमग्न इत्यर्थः । अव्यथिः अविकलचित्तः । स्थिरयुष्मद्भक्तिरित्यर्थः । तं युवां निरूहथुः । सुयुजा सुयुक्तेन रथेन । मनोजवसा मनस्तुल्यवेगेन । हे वृषणा स्वस्ति । अन्तर्णीतमत्वर्थमिदम् । स्वस्तिमन्तम् । अविनष्टजीवितमित्यर्थः ॥ १५

अजोहवीदश्विना वर्तिका वामास्नो यत्सीममुञ्चतं वृकस्य ।
वि जयुषा ययथुः सान्वद्रेर्जातं विष्वाचो अहतं विषेण ॥ १६

अजोहवीत् आहूतवती हे अश्विनौ । वर्तिका चटका वां युवाम् । आस्नः आस्यात् । यत् यदा । सीमिति पदपूरणः । अमुञ्चतं मोचितवन्तौ स्थः । वृकस्यावयवभूतात् । वृकेण ग्रस्यमानां सतीमित्यर्थः । कुत्सेनाप्युक्तम्

याभिर्वर्तिकम् । ऋ वे. १. ११२. ८.

इति । जयुषा जितवता शत्रून् । रथेन विययथुः विविधं गच्छथः युवाम् । सानु समुच्छ्रितं शिखरं अद्रेः पर्वतस्य मेघस्य वा । जातम् । जायते तदिति जातं सर्वं

भूतजातम्। विष्वाचः। विषुशब्दो नानापर्यायः। अञ्चतिर्गत्यर्थः। नानागामिनः। इतश्चेतश्च गन्तुमेघस्य स्वभूतेनेत्यर्थः। अहतं अहथा युवां विषेणोदकेन। सर्वस्मै भूतजाताय प्रभूतं वृष्टिं दत्तमित्यर्थः॥ १६

शतं मेषान्वृक्ये मामहानं तमः प्रणीतमशिवेन पित्रा।

आक्षी ऋज्राश्वे अश्विनावधत्तं ज्योतिरन्धाय चक्रथुर्विचक्षे॥ १७

शतं मेषान्। एकं चेति वाक्यशेषः। कुत एतत्।

ऋज्राश्वः शतमेकं च मेषान्। ऋ. वे. १. ११७. १८.

इति मन्त्रान्तरे दर्शनात्। वृक्य ममहानम्। मंहतेर्दानकर्मण एतद्रूपम्। चतुर्थ्यर्थे द्वितीया। आहारार्थं विशस्य विशस्य ददते। तमः। आन्ध्यलक्षणम्। प्रणीतम्। इयमपि चतुर्थ्यर्थे एव द्वितीया। शापेन प्रापिताय। अशिवेन दुःखकरेण च पित्रा। अक्षी अक्षिणी। ऋज्राश्वे। इयमपि चतुर्थ्यर्थ एव सप्तमी। ऋज्राश्वाय हे अश्विनौ। आ अधत्तं मर्यादया दत्तवन्तौ। के च दत्ते। ज्योतिः दर्शनसामर्थ्यलक्षणम्। अन्धाय। षष्ठ्यर्थे चतुर्थी। चक्रथुः कृतवन्तौ युवाम्। विचक्षे विविधं दर्शनाय॥ १७

कस्मात् पुनर्हेतोः मेषान् वृक्ये ददावृज्राश्वः। उच्यते—

शुनमन्धाय भरमह्वयत्सा वृकीरश्विना वृषणा नरेति।

जारः कनीन इव चक्षदान ऋज्राश्वः शतमेकं च मेषान्॥ १८

शुनमिति सुखनाम। शुनं शत्रुजयलक्षणम्। अन्धाय मह्यम्। भरम्। सप्तम्यर्थे द्वितीया। भरे संग्रामे। अह्वयत्। आह्वानं सर्वत्र प्रापणार्थम्। अतस्तेन हेतुभूतेन फलमत्र प्रापणं लक्ष्यते। भविष्यति च काले लङ्। छन्दसि लुङ्लङ्लिटः (पा. ३. ४. ६) इति। प्रापयिष्यति। करिष्यतीत्यर्थः। सा वृकीः। हे अश्विनौ वृषणा नरा। छान्दसत्वादत्रानुदात्ताभावः। इतिशब्दश्चक्षदान इत्येतेन सम्बन्धयितव्यः। क इवाह्वयत्। उच्यते। जारः कनीन इव। कनीनशब्दोऽत्र न कन्यावचनः कन्याया जारत्वासंभवात्। न च स कन्यायां संभवति भर्तुरभावात्। कन्यावचनत्वे च नेदमाह्वानस्योपमानं संभवति। न वक्ष्यमाणस्य क्षदनस्य। कन्याया जारेणाह्वानस्य क्षदनस्य वा असंभवात्। अत इदं कनतेः कान्तिकर्मणो रूपम्। कनतीति कनः कामयिता। कन एव कनीनः। स्वार्थिकः खप्रत्ययश्छान्दसत्वात्। यथा जारः कामयिता कस्यांचित्कमनीययां सक्तः तां नियमेनाह्वयति तद्वदित्यर्थः। ऋज्राश्वो हि योगैश्वर्यात् पूर्वमेव ज्ञातवान्। इयं वृकी अश्विनोः कशा। सा ममान्धीभूतस्य

मृते पितरि शत्रुभिः रुद्धस्य शत्रुजयं करिष्यतीति चक्षदानः । इतिशब्दोऽत्र हेत्वर्थः । हन्तीति पालयते वर्षतीति धावति इति यथा । क्षदिः विशसनार्थः । एतस्माद्धेतोः विशसमान ऋज्राश्वः । शतमेकं च मेषान् । वृक्या आहारार्थं ददाविति वाक्यशेषः ॥ १८

मही वा॑मू॒तिर॑श्विना मयो॒भूरु॒त स्रा॒मं धि॑ष्ण्या॒ सं रि॑णीथः ।
अथा॑ यु॒वामिद॑ह्वय॒त्पुरं॑धि॒राग॑च्छतं सीं वृषणा॒ववो॑भिः ॥ १९

अथ युवामिति एतस्माच्छब्दसमानार्थाथशब्दश्रुतेर्यस्माच्छब्दोऽध्याहर्तव्यः । यस्मात् महती वां युवयोः ऊतिः पालनं हे अश्विनौ । मयोभूः सुखस्य भावयित्री जनयित्री । उत स्रामम् । स्रामशब्दः द्वाभ्यां स्रामः स्वप्नाय अन्धं अधर्माय बधिरम् (वा. सं. ३०. १०) इति पुरुषमेधमन्त्रेषु प्रयोगदर्शनात् काणवचनः । यस्माच्च काणमपि हे धिष्ण्या । धिषणा वाक् । तस्याः पुत्रौ । अथवा धीः प्रज्ञा । ष्णै वेष्टने । प्रज्ञा वेष्टयित्री सर्वार्थग्रहणसमर्था ययोस्तौ धिष्ण्यौ । अत्यन्तप्रज्ञावित्यर्थः । संरिणीथः । रिणातीति गतिकर्मा इह चान्तर्णीतण्यर्थः । संगमयथः । केन । सामर्थ्यात् द्वितीयेनाक्ष्णा । काणमप्यकाणं शक्नुथः कर्तुमित्यर्थः । अथ एतस्मात्कारणात् युवाम् । इच्छब्दः पदपूरणः । अह्वयदाहूतवती । पुरन्धिः बहुप्रज्ञा । कासौ । वध्रिमती । कुत एतत् । तस्याः

अजोहवीन्नासत्या । ऋ. वे. १. ११६. १३.

इति पुरन्ध्रित्वदर्शनात् । अथवा कक्षीवानपि हि पुरन्धिः ।

कक्षीवते अरदतम् । ऋ. वे. १. ११६. ७.

इति दर्शनात् । आहूयमानौ च आगच्छतमागतवन्तौ युवाम् । सीमिति पदपूरणः । हे वृषणौ अवोभिः पालनैः सम्बद्धौ । वध्रिमतीं हिरण्मयहस्तप्रदानेन कक्षीवन्तं वा त्रिकालविषयसर्वार्थविषयज्ञानप्रदानेन पालयन्तावित्यर्थः ॥ १९

अधे॑नुं दस्रा स्त॒र्यं१॒॑ विष॑क्ता॒मपि॑न्वतं श॒यवे॑ अश्विना॒ गाम् ।
यु॒वं शची॑भिर्विम॒दाय॑ जा॒यां न्यू॑हथुः पुरुमि॒त्रस्य॒ योषा॑म् ॥ २०

अधेनुं हे दस्रौ । स्तर्यं निवृत्तप्रसवां च विषक्तां च । सक्तिरत्र सदोऽर्थे । विविधं चावसन्नाम् । दुर्बलां वृद्धां चेत्यर्थः । अपिन्वतं युवं सेचितवन्तौ च । धेनुकां कृतवन्तावित्यर्थः । शयवे शयोरर्थाय । हे अश्विनौ गाम् । तदेतत् पुरस्तादप्युक्तम् ।

शयवे चित्। ऋ. वे. १. ११६. २२.

इति। किंच युवं शचीभिः स्वाभिः प्रज्ञाभिः कर्मभिर्वा । विमदाय। षष्ठ्यर्थे चात्र चतुर्थी । विमदस्य ऋषेः। जायां भार्यां परिणीतमात्रां सेनापरिवृतेन रथेन न्यूहथुः तद्गृहं प्रत्यूढवन्तौ । पुरुमित्रस्य । मित्रग्रहणमत्र प्रदर्शनार्थम् । बहुमित्रस्वजनस्य। योषां स्त्रियम्। तदेतत् पुरस्तादप्युक्तम्।

यावर्भगाय। ऋ. वे. १. ११६. १.

इति ॥ २०

यवं वृके॑णाश्विना वपन्तेषं॑ दुहन्ता मनु॑षाय दस्रा ।
अभि दस्युं॒ बकु॑रेणा धम॑न्तोरु ज्योति॑श्चक्रथुरार्या॑य ॥ २१

यवग्रहणमत्र प्रदर्शनार्थम्। यवादिधान्यम् । वृकेण । वृक इति लाङ्गलमत्रोच्यते। तेन हे अश्विनौ। वपन्ता प्रकिरन्तौ । इषम् । इडित्यन्ननाम तद्धेतुत्वादत्र वृष्ट्युदके वर्तते। अन्नहेतुभूतं च वृष्ट्युदकम्। दुहन्ता क्षारयन्तौ। मनुषाय। मनुषशब्दोऽत्र मनोः पर्यायः। मनुनाम्नो राज्ञोऽर्थाय हे दस्रा। तदेतत् कुत्सेनोक्तम्

याभिः पुरा मनवे। ऋ. वे. १ ११२. १६.

इति । अथवा वपिरन्तर्णीतण्यर्थः । मनुषायेत्यपि मनुष्यपर्यायः । यवादिधान्यं कर्षकैर्वपयन्तौ वृष्ट्युदकं च क्षारयन्तौ मनुष्यस्यार्थाय । दस्युं चानार्यं रक्षःपिशाचादिकम्। बकुरेण भयंकरेण स्वेनायुधेन ज्योतिषा वा । अभिधमन्ता । धमतीति वधकर्मा। अभिघ्नन्तः। उरु विस्तीर्णमात्मनो ज्योतिः तेजः प्रभालक्षणम् । चक्रथुः कृतवन्तौ युवामार्याय आर्यस्यार्थाय । वपनवृष्टिदोहनदस्युहननैस्त्रिभिः कर्मभिर्महाप्रभावौ युवां जातौ साधूनामनुग्रहार्थमित्यर्थः। अथवा अभि दस्युमिति दस्युशब्देनोपलक्षणत्वात् दुर्भिक्ष उच्यते। बकुरशब्देनापि महान् वृष्ट्युदकसमूहः । ज्योतिःशब्देनापि सुभिक्षमिति । महत्त्वात् भयंकरेण वृष्ट्युदकसमूहेनाभिघ्नन्तौ विस्तीर्णं सुभिक्षं कृतवन्तौ कुरुथो युवां आर्यस्यार्थायेत्यर्थः ॥ २१

आथर्वणायाश्विना दधीचेऽश्व्यं शिरः प्रत्यै॑रयतम् ।
स वां मधु प्र वो॑चदृतायन्त्वाष्ट्रं यद्द॑स्रावपिकक्ष्यं॑ वाम् ॥ २२

षष्ठ्यर्थे चतुर्थी। आथर्वणः पुत्रस्य । हे अश्विनौ दधीचे दध्यङ्नाम्न ऋषये। अश्व्यं अश्वस्यावयवभूतं शिरः। प्रत्यैरयतम्। प्रतीत्येष उपेत्येतस्य स्थाने। उपगमि-

तवन्तौ युवाम् । आहितवन्ताविल्यर्थः । आहितेनैतेन सः वां युवाभ्यां मधु मध्वाख्यं परं ब्रह्म । प्रवोचत् प्रोक्तवान् । ऋतयन् । सुप आत्मनः क्यच् (पा. ३. १. ८) इति क्यच्प्रत्ययः परेच्छायामत्र द्रष्टव्यः ।

रक्षा राजन्नघायतः । ऋ. वे. १. ९१. ८.

इति यथा । ऋतं सत्यं । तदेव ब्रह्म तद्युवयोरिच्छन् । तदेतत् पुरस्तादप्युक्तम् ।

तद्वान्नरा सनये । ऋ. वे. १. ११६ १२.

इति । कीदृशं यत् ब्रह्म । उच्यते । त्वाष्ट्रम् । त्वष्ट्रा दृष्टत्वात् त्वाष्ट्रम् । त्वष्ट्रा ज्ञातमेव यदित्यर्थः । दस्रौ अपिकक्ष्यं गुह्यम् । वां युवयोः । युवां न कस्मैचित् ब्रूथं इत्यर्थः । अथवा त्वाष्ट्रं यदित्यश्वशिरसो विशेषणं न ब्रह्मणः । त्वष्टेत्यत्रेन्द्र उच्यते शत्रूणां तनूकर्तृत्वात् । युवाभ्यां शर्यणावति निहितं शत्रूणां तनूकर्त्रा इन्द्रेण दृष्टं यच्छिरः गुह्यमपि युवयोरित्यर्थः । तदेतत् गौतमेनोक्तम् ।

इच्छन्नश्वस्य यच्छिरः । ऋ. वे. १. ८४. १४.

इति ॥ २२

सदा॑ क॒वी सु॑म॒तिमा च॑के वां॒ विश्वा॒ धियो॑ अश्विना॒ प्राव॑तं मे ।
अ॒स्मे र॒यिं ना॑सत्या बृ॒हन्त॑मपत्य॒साचं॒ श्रुत्यं॑ रराथाम् ॥ २३

सदा कवी मेधाविनौ । सुमतिं भक्तानुग्रहात्मिकां शोभनां बुद्धिम् । आचके कामये । वां युवयोः स्वभूताम् । युवयोरनुग्राह्यो भवेयमित्येवं कामये इत्यर्थः । एतत् ज्ञात्वा विश्वा सर्वाणि धियः प्रज्ञाः कर्माणि वा । हे अश्विनौ प्रावतं प्रकर्षेण रक्षतं मे मम । किंच अस्मे अस्मभ्यं रयिं धनम् । हे नासत्या बृहन्तं महत् । अपत्यसाचम् । अपत्यानि यत् सचते तदपत्यसाचम् । अपत्यसहितमित्यर्थः । श्रुत्यं श्रुतं प्रख्यातं लोके । रराथां दत्तम् । २३

हिर॑ण्यहस्तमश्विना॒ ररा॑णा पु॒त्रं न॑रा वध्रिम॒त्या अ॑दत्तम् ।
त्रिधा॑ ह॒ श्याव॑मश्विना॒ विक॑स्त॒मुज्जी॒वस॑ ऐरयतं सुदानू ॥ २४

हिरण्मयौ हस्तौ यस्मिन् स हिरण्यहस्तः बाहुः । तं हे अश्विनौ । रराणा ददतौ । पुत्रं हे नरा । कस्य पुत्रम् । उच्यते । वध्रिमत्याः । अदत्तं दत्तवन्तौ स्थः युवाम् । कस्मै । प्रकृतत्वात् वध्रिमत्यै । तस्यै एव अत्र वध्रिमत्यै अव्यवहितदानसंबन्धे संभवति नरापदव्यवहितपुत्रकस्य संबन्धस्य अन्यायत्वात् दानसंबन्धे चतुर्थ्या न्यायत्वात् संहितायाश्च तुल्यत्वात् वध्रिमत्यै इति चतुर्थ्यन्ते पदे कर्तव्ये

यत् पदकारेण षष्ठ्यन्तं पदं कृतं तत्र तस्याभिप्रायः पर्येष्यः । हिरण्यहस्तबाहुमात्रदानं च पुरस्तादप्युक्तम्

श्रुतं तच्छासुरिव । ऋ. वे १. ११६. १३.

इति । किंच त्रिधा त्रिभिः प्रकारैः । जंघयोर्मध्ये शिरसि च । हशब्दः पदपूरणः । श्यावं कुष्ठितत्वात् श्याववर्णं अग्नेः पुत्रस्य घोरस्य ज्येष्ठपुत्रम् । हे अश्विनौ विकस्तम् । विकस्तिरत्र छेदनार्थः । विविधं छिन्नम् । जीवसे जीवनाय । उदैरयतं ऊर्ध्वं गमितवन्तौ स्थः उत्थापितवन्तौ युवाम् । पुनरुज्जीवितवन्तौ युवामित्यर्थः । हे सुदानू शोभनदातारौ । तदेतत् पुरस्तादप्युक्तम्

युवं श्यावाय । ऋ वे. १. ११७. ८.

इति । कुत्सेनाप्युक्तम्

याभिः शचीभिः । ऋ. वे. १ ११२. ८.

इति । २४

एतानि॑ वामश्विना वी॒र्या॑णि॒ प्र पू॒र्व्याण्या॒यवो॑ऽवोचन् ।

ब्रह्म॑ कृ॒ण्वन्तो॑ वृषणा यु॒वभ्यां॑ सु॒वीरा॑सो वि॒दथ॒मा व॑देम ॥ २५

एतानि वां युवयोः हे अश्विना । वीर्याणि वीरकर्माणि । पूर्व्याणि पुराणानि । आयवः मनुष्याः सर्वे स्तोतारः । प्रावोचन् प्रब्रुवन्ति । किंच ब्रह्म स्तुतिरूपं कृण्वन्तः कुर्वन्तो वयं हे वृषणा वर्षितारौ । युवाभ्यां युवयोरर्थाय । सुवीरासः शोभनैः पुत्रैः पौत्रैश्च युक्ताः । विदथम् । सप्तम्यर्थे द्वितीया । यज्ञे । आवदेम मर्यादया वदेमेत्येतदाशास्महे ॥ २५

---

आ वां॒ रथो॑ अश्विना श्ये॒नप॑त्वा सुमृळी॒कः स्ववाँ॑ यात्व॒र्वाङ् ॥

यो मर्त्य॑स्य॒ मन॑सो॒ जवी॑यान्त्रिवन्धु॒रो वृ॑षणा॒ वात॑रंहाः ॥ १

आकारः यात्वित्याख्यातेन संबन्धयितव्यः । वां युवयोः स्वभूतो रथः । हे अश्विनौ श्येनपत्वा । श्येनसदृशैः शीघ्रैरश्वैर्यः पतति गच्छति स श्येनपत्वा । सुमृळीकः सुसुखः । स्ववान् अस्मभ्यं यद्देयं धनं तेन सहेत्यर्थः । आयातु आगच्छतु । अर्वाङ् अस्मदभिमुखम् । यः कीदृशः । उच्यते । यः मर्त्यस्य मनुष्यस्य स्वभूतात् मनसो जवीयान् वेगवत्तरः । त्रिवन्धुरः त्रिसारथिस्थानः । हे वृषणा वातरंहाः । क्षिप्रनामैतत् । रंहतिर्गतिकर्मा । वात इव यो रंहति गच्छति सः वातरंहाः क्षिप्रः ॥ १

त्रिवंधुरेण त्रिवृता रथेन त्रिचक्रेण सुवृता यातमर्वाक् ।
पिन्वतं गा जिन्वतमर्वतो नो वर्धयतमश्विना वीरमस्मे ॥ २

त्रिवन्धुरेण त्रिसारथिस्थानेन । त्रिभिश्चक्रैर्वर्तते गच्छतीति त्रिवृत् । तेन त्रिवृता स्वेन रथेन । त्रिचक्रेण । अवयवभूतान्यपि त्रीण्येव चक्राणि यस्य स त्रिचक्रः । तेन । सुवृता सुगमनेन । आयातमागच्छतम् । अर्वागस्मदभिमुखम् । आगत्य च पिन्वतं सेचयतं धेनुकाः कुरुतमित्यर्थः । गाः । जिन्वतं प्रीणयतं अर्वतः अश्वान् । नः अस्माकम् । वर्धयतं हे अश्विनौ । वीरं पुत्रपौत्रादिं अस्मे अस्माकम् ॥ २

प्रवद्यामना सुवृता रथेन दस्राविमं शृणुतं श्लोकमद्रेः ।
किमङ्ग वां प्रत्यवर्तिं गमिष्ठाहुर्विप्रासो अश्विना पुराजाः ॥ ३

प्रवते इति गतिकर्मा । यान्ति देवता यस्मिन् स यामा यज्ञः । यज्ञानां गन्ता प्रवद्यामा । षष्ठीसमासे पूर्वनिपातश्छान्दसत्वात् । केन प्रवद्यामना । सुवृता सुगमनेन स्वेन रथेन । तृतीयाश्रुतेः साकाङ्क्षत्वादागत्येति वाक्यशेषः । हे दस्रौ इमं शृणुतम् । श्लोकं शब्दम् । अद्रेः अभिषवग्राव्णः । परेणार्धर्चेन उक्तमात्रौ अनागच्छन्तौ कुपित इवाह । किमङ्ग क्षिप्रम् । वां युवाम् । अवर्तिम् । तृतीयार्थे द्वितीया । अवर्तन्या अमार्गेणापि । प्रतिगमिष्ठा । प्रतीत्येष उपेत्येतस्य स्थाने । अतिशयेनोपगन्तारौ यज्ञान् । आहुः विप्रासः मेधाविनः । हे अश्विनौ पुराजाः पुरा जाताः । वृथैव वृद्धाः एतदाहुः । नैव हि युवां क्षिप्रमुपगन्तारौ यज्ञानां यावदस्मद्यज्ञमुक्तमात्रेण नागच्छथ इत्यर्थः ॥ ३

आ वां श्येनासो अश्विना वहन्तु रथे युक्तास आशवः पतङ्गाः ।
ये अप्तुरो दिव्यासो न गृध्रा अभि प्रयो नासत्या वहन्ति ॥ ४

आकारो वहन्त्वित्याख्यातेन संबन्धयितव्यः । वां युवां श्येनासः श्येनसदृशाः । हे अश्विनौ आवहन्तु अस्मान् प्रति रथे युक्तासः नियुक्तास्सन्तः । आशवः क्षिप्राः । पतंगाः । अश्वनामैतत् । अश्वाः । ये किं कुर्वन्ति । उच्यते । ये अप्तुरः । आपोऽन्तरिक्षम् । तत्र त्वरितारौ त्वारयितारौ वा मेघस्य । अथवा आप उदकानि । तत्र त्वरितारौ । दिव्यासो न दिव्या इव गृध्राः । अभि प्रयः हविर्लक्षणमन्नं प्रति । हे नासत्यौ वहन्ति ॥ ४

आ वां रथं युवतिस्तिष्ठदत्र जुष्ट्वी नरा दुहिता सूर्यस्य ।
परि वामश्वा वपुषः पतङ्गा वयो वहन्त्वरुषा अभीके ॥ ५

आकारस्तिष्ठदित्याख्यातेन संबन्धयितव्यः । वां युवयोः स्वभूतं रथं युवतिः प्राप्तयौवना आतिष्ठत् आस्थितवती । आजौ जिता सती आरूढेत्यर्थः । अत्र । अश्विनो रथं सन्निहितयोः प्रतिनिर्देशः । एतयोर्युवयोरश्विनोः जुष्ट्वी । जुषिः प्रीत्यर्थः । प्रीत्वा । युवयोरनुरज्येत्यर्थः । हे नरा मनुष्याकारौ । दुहिता सूर्यस्य सूर्या नाम । तदेतत् पुरस्तादप्युक्तम्

आ वां रथं दुहिता । ऋ वे १ ११६. १७.

इति । किंच परि वाम् । परि इत्येष वहन्त्वित्याख्यातेन संबन्धयितव्यः । वां युवामश्वाः । अशु व्याप्तौ । व्याप्तारः । वपुषः । वपुरिति रूपनाम इह चान्तर्णीतमत्वर्थम् । वपुष्मन्तः रूपवन्तः । पतङ्गाः । अश्वनामैतत् । अश्वाः । वयः पक्षिसदृशाः शीघ्राः । परिवहन्तु परिप्रापयन्तु । अरुषाः । अरुषतीति गतिकर्मा । गमनशीलाः । अभीके । आसन्ननामैतत् । आसन्ने यागकाले ॥ ५

उद्वन्दनमैरतं दंसनाभिरुद्रेभं दस्रा वृषणा शचीभिः ।
निष्टौग्र्यं पारयथः समुद्रात् पुनश्च्यवानं चक्रथुर्युवानम् ॥ ६

वन्दनमृषिमुदैरतम् । ईरिरत्रान्तर्णीतण्यर्थः । ऊर्ध्वं गमितवन्तौ । कूपात् उत्तारितवन्तावित्यर्थः । दंसनाभिः दर्शनीयाभिः । काभिः । शचीभिरिति वक्ष्यति । उद्रेभं रेभं च ह्रदादुत्तारितवन्तौ युवाम् । हे दस्रा वृषणा वर्षितारौ । शचीभिः स्वाभिः प्रज्ञाभिः कर्मभिर्वा । किंच तौग्र्यं तुग्रपुत्रं भुज्युम् । निः पारयथः । निरित्युपसर्गस्य समुद्रादित्यपादानस्य च श्रुतेर्योग्यक्रियापदाध्याहारः । निष्कृष्य समुद्रात् पालितवन्तौ युवाम् । किंच च्यवानमृषिं सुकन्याया वचनात् चक्रथुः पुनर्युवानम् ॥ ६

युवमत्रयेऽवनीताय तप्तमूर्जमोमानमश्विनावधत्तम् ।
युवं कण्वायापिरिप्ताय चक्षुः प्रत्यधत्तं सुष्टुतिं जुजुषाणा ॥ ७

युवामत्रये ऋषये अवनीताय अधः प्रापिताय । तप्तं अग्निकूटं प्रति । अग्निकूटे प्रक्षिप्तमित्यर्थः । तत उत्तार्य ऊर्जमन्नम् । ओमानम् । अवतेरिदं रूपम् । पालनं च । हे अश्विनौ अधत्तं दत्तवन्तौ युवाम् । किंच युवं कण्वाय ऋषये अपिरिप्ताय । अपी-

श्लेषः अवेत्येतस्य स्थाने। रिपिः लिपिना समानार्थः। अवलिप्ताय घट्टिताक्षाय। अन्धायेत्यर्थः। चक्षुः प्रत्यधत्तं प्रतिनिहितवन्तौ। दत्तवन्तावित्यर्थः। सुष्टुतिं शोभनां तदीयां स्तुतिम्। जुजुषाणा अत्यर्थं पुनःपुनर्वा सेवमानौ ॥ ७

युवं धेनुं शयवे नाधितायापिन्वतमश्विना पूर्व्याय।
अमुञ्चतं वर्तिकामंहसो निः प्रति जङ्घां विश्पलाया अधत्तम् ॥ ८

युवं युवां धेनुं शयवे राज्ञे। नाधिताय। कर्तर्ययं क्तप्रत्ययः। याचितवते। अपिन्वतं सेचितवन्तौ पयः। हे अश्विनौ पूर्व्याय पुराणाय। किंच अमुञ्चतम्। निरिति पादान्त्यः उपसर्गोऽपकृष्टव्यः। निर्मोचितवन्तौ युवाम्। वर्तिकां नाम चटकाम्। अंहसः पापात् क्रूरात् वृकात्। किंच जंघामायसीं विश्पलायाः छिन्नजंघायाः सत्याः। प्रति अधत्तं आहितवन्तौ युवाम् ॥ ८

युवं श्वेतं पेदव इन्द्रजूतमहिहनमश्विनादत्तमश्वम्।
जोहूत्रमर्यो अभिभूतिमुग्रं सहस्रसां वृषणं वीड्वङ्गम् ॥ ९

युवां श्वेतं शुक्लम्। पेदवे राज्ञे इन्द्रजूतम्। कर्तर्ययं क्तप्रत्ययः। इन्द्रमिव गन्तारं शत्रून् प्रति। अहिहनम्। हि गतौ। शौर्यापलेपादगन्तुरपि शत्रोरहिनाम्नो वा असुरस्य हन्तारम्। हे अश्विनौ अदत्तं दत्तवन्तौ। अश्वम्। जोहूत्रं आह्वातव्यं संग्रामेषु जयकरत्वात्। अर्यः अरेर्वैरिणः। सर्वस्याभिभूतिमभिभवितारम्। उग्रमप्रसह्यम्। सहस्रसां संग्रामसहस्राणां तन्निमित्तभूतधनसहस्राणां वा संभक्तारम्। वृषणं वर्षितारं रेतस्सेचनसमर्थं तरुणं बलवन्तं वेत्यर्थः। वीड्वङ्गं दृढाङ्गम् ॥ ९

ता वां नरा स्ववसे सुजाता हवामहे अश्विना नाधमानाः।
आ न उप वसुमता रथेन गिरो जुषाणा सुविताय यातम् ॥ १०

तच्छब्दश्रुतेः प्रत्यक्षकृतत्वाच्च मन्त्रस्य सुजाता इत्यस्य चानामन्त्रितत्वात् तत्सम्बन्धो यच्छब्दोऽध्याहार्यः। यौ सुजातौ सुजन्मानौ तौ युवाम्। हे नरा स्ववसे। द्वितीयार्थे चतुर्थी नाधमाना इत्येतेन च संबन्धः। शोभनमवः तर्पणं पालनं वा याचमाना वयं हवामहे आह्वयामः हे अश्विनौ। एतत् ज्ञात्वा आ नः उप। आ उप इत्युपसर्गौ यातमित्याख्यातेन संबन्धयितव्यौ। नः अस्मान् वसुमता अस्मभ्यं

दितिसतेन धनेन तद्वता स्वेन रथेन । गिरः स्तुतिरस्मदीयाः जुषाणा सेवमानौ । सुविताय सुगताय यागकर्मणे प्रजायै वा अस्माकं उपायातमुपागच्छतम् ॥ १०

आ श्येनस्य जवसा नूतनेनास्मे यातं नासत्या सजोषाः ।

हवे हि वामश्विना रातहव्यः शश्वत्तमाया उषसो व्युष्टौ ॥ ११

आ इत्युपसर्गो यातमित्याख्यातेन संबन्धयितव्यः । श्येनस्य जवसा वेगेन । नूतनेन नवेन । यादृशः प्रथमोऽश्रान्तस्य श्येनस्य वेगः तादृशेन वेगेनेत्यर्थः । अस्मे अस्मान् प्रति । आयातमागच्छतं हे नासत्यौ । सजोषाः । व्यत्ययेनेदमेकवचनम् । सजोषसौ । संप्रीयमाणौ इत्यर्थः । कस्मात् । उच्यते । हवे हि यस्मादाह्वयामि वां युवाम् । रातहव्यः दत्तहविष्कः सन् मनसा । शश्वत्तमायाः अत्यन्तनित्यायाः । उषसः व्युष्टौ विवासनवेलायां तमसः । उषउदयवेलामित्यर्थः ॥ ११

आ वां रथं पुरुमायं मनोजुवं जीराश्वं यज्ञियं जीवसे हुवे ॥

सहस्रकेतुं वनिनं शतद्वसुं श्रुष्टीवानं वरिवोधामभि प्रयः ॥ १

आ इत्युपसर्गः हुवे इत्याख्यातेन संबन्धयितव्यः । वां युवयोः स्वभूतं रथम् । पुरुमायं बहुप्रज्ञम् । मनोजवं मनोवत् गन्तारम् । जीराश्वम् । जीरमिति क्षिप्रनाम । क्षिप्राश्वम् । यज्ञियं यज्ञार्हम् । जीवसे जीवितुम् । आहूतो मां जीवयिष्यतीत्येव-मर्थमित्यर्थः । आहुवे आह्वयामि । सहस्रकेतुम् । केतुः पताकोच्यते । सहस्रपताकम् । वनिनम् । वनमुदकम् । तद्वन्तम् । संभजनवन्तं वा । शतद्वसुं शतधनम् । श्रुष्टीवानम् । श्रुष्टिरिति क्षिप्रनाम । तद्वन्तम् । वरिवोधां धनस्य स्तोतृभ्यो दातारम् । अभि प्रयः हविर्लक्षणमन्नं प्रति ॥ १

ऊर्ध्वा धीतिः प्रत्यस्य प्रयामन्यधायि शस्मन्त्समयन्त आ दिशः ।

स्वदामि घर्मं प्रति यन्त्यूतय आ वामूर्जानी रथमश्विनारुहत् ॥ २

ऊर्ध्वत्वेनात्र व्यापाराभिमुख्यं लक्ष्यते । स्तुतेश्च व्यापारो युवाभ्यां सम्बन्धः । तदभिमुखी । धीतिः स्तुत्येषु धीयमानत्वात् स्तुतिरुच्यते । सा अस्य युष्मदर्थस्य । प्र यामनि । प्र इत्येष आ इत्येतस्य स्थाने । आगमने सति । आगतेऽस्मिन् रथे इत्यर्थः । प्रत्यधायि । प्रतिशब्दोऽत्र धात्वर्थानुवादी । दधातिर्धारणार्थः । धार्यते । स्तोतृभिः

क्रियते इत्यर्थः । शस्मन् शासनम् । चतुर्थ्याश्चात्र लुक् । आज्ञायै च समयन्ते आ दिशः । सर्वा आज्ञाश्च प्रतिग्रहीतुं सर्वतः आगच्छन्तीत्यर्थः । अहमपि स्वदामि घर्मम् । घर्ममिति यज्ञनाम । यज्ञस्य चास्वदनासंभवात् स्वदिः करोत्यर्थः । करोमि यज्ञम् । क्रियमाणे च तस्मिन् प्रति । कर्मप्रवचनीयोऽयम् । तच्छ्रुतेस्तत्सम्बन्धिपदाध्याहारः । युवां प्रति । यन्ति गच्छन्ति । ऊतयः तर्पणानि । सोमेन युवां तर्प्येथे इत्यर्थः । किंच वां युवयोः स्वभूता ऊर्जानी अन्नवती । ऐश्वर्ययुक्तेत्यर्थः । रथं हे अश्विनौ । आरुहत् आरूढा आजौ जिता सती सूर्या । तदेतत् पुरस्तादप्युक्तम्

आ वां रथं दुहिता सूर्यस्य । ऋ. वे. १. ११६. १७.

इति ॥ २

सं यन्मिथः पस्पृधानासो अग्मत शुभे मखा अमिता जायवो रणे ।
युवोरह प्रवणे चेकिते रथो यदश्विना वहथः सूरिमा वरम् ॥ ३

यत् यदा मिथः परस्परतः । पस्पृधानासः स्पर्धमाना इव । युष्मदीया अश्वाः समग्मत रथे युक्तास्सन्तः मेघं प्रति सम्यग्गच्छन्ति । शुभे उदकार्थम् । मखाः यज्ञस्य युष्मदानयनेन वृष्टिद्वारेण वा कर्तारः । अमिताः अपरिमिताः । बहव इत्यर्थः । अथवा बलेनापरिमिताः । महाबला इत्यर्थः । जायवः जयशीला इत्यर्थः । रणे संग्रामे । अथवा यत् रणे इति समानाधिकरणे । मिथः पस्पृधानास इत्यादिभिरपि योद्धार उच्यन्ते नाश्वाः । यस्मिन् संग्रामे परस्परतः स्पर्धमाना योद्धारः संगच्छन्ते। शुभे शोभार्थम् । जयार्थमित्यर्थः । मखा अमिता जायवश्च । यदा यस्मिन् वेति श्रुतेः तदा तस्मिन् वा इत्यध्याहार्यः । तदा तस्मिन् वा युवयोरह । अहेति विनिग्रहार्थीयः एवशब्देन समानार्थः । युवयोरेव स्वभूतः । प्रवणे निम्ने देशे । चिकिते ज्ञायते । लक्ष्यते इत्यर्थः । कोऽसौ । उच्यते । रथः । किमपेक्षं पुनरेतद्रथस्य निम्नदेशवर्तित्वम् । उच्यते । अश्वापेक्षम् । अश्वा ह्युच्चाः रथो नीचः । तेन स तेभ्यो निम्नदेशवर्ती । उच्चत्वादश्वानां तेभ्यो नीचो रथो दृश्यते इत्यर्थः । न च संग्रामे एव केवले । किं तर्हि । यत् यदा हे अश्विनौ वहथः प्रापयथः सूरिमा । सूरिरिति स्तोतृनाम । आकारः प्रतीत्यस्यार्थे । स्तोतारं प्रति । वरं वरणीयं धनम् । यदा च स्तोतृभ्यो दानार्थं रथेन नयथ इत्यर्थः ॥ ३

युवं भुज्युं भुरमाणं विभिर्गतं स्वयुक्तिभिर्निवहन्ता पितृभ्य आ ।
यासिष्टं वर्तिर्वृषणा विजेन्यं१ दिवोदासाय महि चेति वामवः ॥ ४

युवं युवां भुज्युं नाम राजानं भुरमाणम्। भुरतिर्ग्रसनार्थः। ग्रस्यमानं मत्स्यैर्मकरैश्च। गतं समुद्रे निमग्नमित्यर्थः। विभिः पक्षिसदृशैः शीघ्रैरश्वैः। स्वयुक्तिभिः। स्वयमेव ये रथे युज्यन्ते ते स्वयुक्तयः। तैः। निवहन्ता नियमेन वहन्तौ। पितृभ्यः पितृणामर्थाय। पितृणामस्य स्वर्गादप्रच्युतिहेतोः। प्रजासन्तानादेरविच्छेदार्थमित्यर्थः। आयासिष्टं तदा प्रत्यागतवन्तौ स्थः। वर्तिः वर्तन्या मार्गेण हे वृषणा। किंच विजेन्यं विजेतृ शत्रूणाम्। दिवोदासाय दिवोदासार्थम्। महि महत्। चेति ज्ञायते लोकैः प्रकाशमित्यर्थः। वां युवयोः स्वभूतं अवः पालनं शम्बरवधे॥ ४

युवोर॑श्विना॒ वपु॑षे युवा॒युजं॒ रथं॒ वाणी॑ येमतुरस्य॒ शर्ध्य॑म्।
आ वां॑ पति॒त्वं स॒ख्याय॑ ज॒ग्मुषी॒ योषा॑वृणीत॒ जेन्या॑ यु॒वां पती॑॥ ५

अत्रेतिहासमाचक्षते। अश्विनौ काष्ठमयेन दुर्बलेन रथेन गच्छन्तौ दृष्ट्वा वृत्रोऽपजहास। तच्छ्रुत्वा अमर्षेण द्यावापृथिव्यौ तं रथं सुवर्णखचितं बलवन्तं चक्रथुरिति। तदेतदिहोच्यते। युवोः युवयोः स्वभूतं हे अश्विनौ। वपुषे। वपुः रूपं शोभा। तदर्थम्। युवायुजम्। युवाभ्यां युज्यते इति युवायुक्। तं युवायुजम्। युवयोरेव योग्यमित्यर्थः। रथं वाणी। अपठितमपीदमिह द्यावापृथिवीनामधेयम्। द्यावापृथिव्यौ। येमतुः। यमु बन्धने। सुवर्णेन बद्धवत्यौ। न च केवलम्। किं तर्हि। अस्य रथस्य शर्ध्यम्। शर्ध इति बलनाम। शर्ध एव शर्ध्यम्। स्वार्थिकस्तद्धितः। बलं च बद्धवत्यौ। बलवन्तं च एनं कृतवत्यावित्यर्थः। किंच आ वाम्। आकारस्य जग्मुषी इत्येनेन संबन्धः। आजग्मुषी युवां प्रति। आजौ जिता युवां प्रत्यागता सतीत्यर्थः। पतित्वम्। चतुर्थ्यर्थे द्वितीया। पतित्वाय। सख्याय च। एतौ मे पती च सखायौ च स्यातामित्येवमर्थमित्यर्थः। योषा स्त्री सूर्या नाम। अवृणीत वृतवती। जेन्या जेतारौ युवां पती भर्तारौ॥ ५

युवं रेभं॒ परि॑षूते॑रुरुष्यथो हि॒मेन॑ घ॒र्मं परि॑तप्त॒मत्र॑ये।
युवं श॒योर॑व॒सं पि॑प्यथु॒र्गवि॒ प्र दी॒र्घेण॒ वन्द॑नस्ता॒र्यायु॑षा॥ ६

युवां रेफमृषिं परिषूतेः। षू प्रेरणे। असुरैरुदके सर्वतः प्रेरणात्। निमज्जनादित्यर्थः। उरुष्यथः रक्षितवन्तौ युवाम्। युवामेव हिमेन वृष्ट्युदकेन। घर्मं दीप्तम्। परितप्तं सर्वतश्च तप्तं अग्निकूटम्। अत्रये अत्रेरर्थाय। साकाङ्क्षत्वात्

हिमेनाग्निं घ्रंसम्। ऋ. वे. १. ११६. ८.

इत्यादौ च दर्शनात् निशमितवन्ताविति वाक्यशेषः। युवामेव शयोः राज्ञः स्वभूतायामवसम्। अवसं पथ्योदनमुच्यते। पयोलक्षणं पथ्योदनम्। पिप्यथुः आप्यायितवन्तौ

गवि । युवाभ्यामेव च दीर्घेण वन्दन ऋषिः कूपादुत्तार्य प्रवर्धितः आयुषा जीवितेन ॥ ६

युवं वन्दनं निर्ऋतं जरण्यया रथं न दस्रा करणा समिन्वथः ।
क्षेत्रादा विप्रं जनथो विपन्यया प्र वामत्र विधते दंसना भुवत् ॥ ७

युवं वन्दनमृषिम् । निर्ऋतं निश्चयेन गतं प्राप्तम् । व्याप्तमित्यर्थः । जरण्यया जरया । रथं न यथा कश्चित् तक्षा पुराणं रथं पुनर्नवं कुर्यात् एवं हे दस्रा । करणा करणेन पुनर्यौवनस्य । समिन्वथः सम्यग्व्याप्तवन्तौ । किंच क्षेत्रादा विप्रमित्यादि । अत्रेतिहासमाचक्षते । कश्चिदृषिर्मृतभार्यो वृद्धश्च पुत्रकामोऽश्विनौ तुष्टाव । तस्याश्विनावयोनिजं क्षेत्रात् पुत्रं जनयांचक्रतुरिति । तदेतदिहोच्यते । क्षेत्रात् । कृष्टा भूमिः क्षेत्रमुच्यते । ततः । विप्रं मेधाविनम् । आजनथः । आकारोऽत्र धात्वर्थानुवादी । जनितवन्तौ युवाम् । विपन्यया स्तुत्या हेतुना । स्तुतौ सन्तावित्यर्थः । प्र वामत्र । प्रेत्युपसर्गश्रुतेर्योग्यक्रियापदाध्याहारः । अत्रेत्यपि प्रथमार्थे सप्तमी । प्रवृत्तिर्युवयोरेषा क्षेत्रजननलक्षणा स्तुतिभिः परिचरितुः तस्य ऋषेरर्थाय । दंसना दर्शनीया । भुवदभवत् । युवां मुक्त्वा नान्यस्य कस्यचिदीदृशी प्रवृत्तिरित्यर्थः ॥ ७

अगच्छतं कृपमाणं परावति पितुः स्वस्य त्यजसा निबाधितम् ॥
स्वर्वतीरित ऊतीर्युवोरह चित्रा अभीके अभवन्नभिष्टयः ॥ ८

अगच्छतं चक्षुःप्रदानार्थं गतवन्तौ युवाम् । कृपमाणं स्तुवन्तम् । ऋज्राश्वं प्रति । परावति दूरे । सतस्मीश्रुतेःस्थितमिति वाक्यशेषः । पितुः स्वस्यात्मीयस्य । त्यजसा क्रोधेन । निबाधितं शापजनितेनान्ध्येनात्यन्तपीडितम् । किंच स्वर्वतीः सर्वैः परिचारकैस्तद्वत्यः । सहेत्यर्थः । इतः । स्थानस्यायं प्रतिनिर्देशः । अस्मात् स्थानात् । ऊतीः यज्ञान् प्रति गतयः । युवोः युवयोः । अहशब्दस्तु पदपूरणः । चित्राः विचित्राः पूज्या वा । अभीके । आसन्ननामैतत् । आसन्ने यागकाले । अभवन् भवन्ति । अभिष्टयः अभियागाश्च । सर्वैः परिचारकैः सह इतः स्थानाद्यज्ञान् प्रत्यासन्ने यागकाले युवां गच्छथः । तत्र चाभीज्येथे इत्यर्थः । अथवा अभीक इति संग्रामनाम । अभिष्टिशब्दोऽपि इषेर्गत्यर्थस्य । सर्वैः स्वैर्योद्धृभिः सह गच्छथो युवां संग्रामे । गत्वा चाभिगच्छथः शत्रूनित्यर्थः ॥ ८

उत स्या वां मधुमन्मक्षिकारपन्मदे सोमस्यौशिजो हुवन्यति ।
युवं दधीचो मन आ विवासथोऽथा शिरः प्रति वामश्व्यं वदत् ॥ ९

उत अपिच स्या वाम् । तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । यस्यै मधु दत्तवन्तौ स्थः सा वां युवाम् । मधुमत् मधुसंयुक्तम् । मक्षिका । जात्यभिप्रायमिदमेकवचनम् । सरडाख्या मक्षिकाजातिः । अरपत् । रप लप व्यक्तायां वाचि । मधु मह्यं दत्तमित्येतत् व्यक्तमुक्तवतीत्यर्थः । तदेतत् कुत्सेनाप्युक्तम

मधु प्रियं भरथः । ऋ. वे १. ११२. २१

इति । अथवा मक्षिकाशब्देनात्र कुतश्चित् मक्षिकासादृश्यात् दधीचो ...... .. उच्यते । सा युवाभ्यां मधुशब्दसंयुक्तं परं ब्रह्म व्यक्तमुक्तवती । किंच मदे । निमित्त एषा सप्तमी । मदे निमित्ते । सोमस्य संबन्धिनि । प्रयोजनस्य चात्र निमित्तत्वेन विवक्षा । सोमजन्यो यो मदः तदर्थमित्यर्थः । औशिजः उशिजोऽपत्यभूतः । कोऽसौ । कक्षीवान् । तं उशिज. प्रपौत्रं पौराणिकाः स्मरन्ति

उशिजो ब्रह्मदुक्थश्च ऋषिर्दीर्घतमास्तथा ।

कक्षीवांश्च त्रयस्त्रिंशत् स्मृता ह्यङ्गिरसां वराः ॥

इति । सः हुवन्यति युवामाश्रयति । आत्मन एवायं परोक्षरूपेण प्रथमपुरुषेण निर्देशः । अहमुशिजः प्रपौत्रः कक्षीवानाह्वयामीत्यर्थः । अथवा उशिजः पुत्रः औशिजः दीर्घश्रवाः । स युवामाहूतवान् । तदेतत् कुत्सेनाप्युक्तम्

याभिः सुदानू । ऋ वे १. ११२. ११.

इति । युवं दधीच ऋषेः मनः आविवासथः परिचरितवन्तौ । युवामाराधितवन्ताविल्यर्थः । अथाराधनाच्चानन्तरं शिरः । तृतीयार्थे द्वितीया । शिरसा प्रति वां युवां प्रति । युवाभ्यामित्यर्थः । अश्व्यम् । अत्रापि तृतीयार्थे द्वितीया । अश्वस्यावयवभूतेन । वदत् उक्तवान् मध्वाख्यं परं ब्रह्म । कः । प्रकृतत्वात्

दध्यङ् ह यन्मध्वाथर्वणो वाम् । ऋ. वे १ ११६, १२.

इति दर्शनाच्च दध्यङ् । अथवा शिरः अश्व्यं इति स्वार्थे एव प्रथमा । शिरस एव वदनं प्रति कर्तृत्वम् । शिर उदितवत् इति ॥ ९

युवं पेदवे पुरुवारमश्विना स्पृधां श्वेतं तरुतारं दुवस्यथः ।

शर्यैरभिद्युं पृतनासु दुष्टरं चर्कृत्यमिन्द्रमिव चर्षणीसहम् ॥ १०

युवं युवां पेदवे राज्ञे । पुरुवारं बहुना वरणीयं वारयितारं वा शत्रूणाम् हे अश्विनौ श्वेतमश्वम् । स्पृधां संग्रामाणां तरुतारं निस्तरितारम् । दुवस्यथः । पेदव इति संप्रदानश्रुतेः दुवस्यतिरत्र दानार्थः । दत्तवन्तौ कीदृशम् । उच्यते । अभिद्युं अभिगतं दीप्तिम् । दीप्तिमित्यर्थः । [illegible] । [illegible] । [illegible] । पृतनासु संग्रामेषु ।

दुष्टरम् । अवतिरिणीति वधकर्मसु पाठात् तिरतिर्हननार्थः । तस्येदं रूपम् । दुर्ह- णम् । चर्कृत्यम् । इदमपि कृन्तेर्वधकर्मणो रूपम् । अत्यर्थं हन्तारम् । इन्द्रमिव चर्ष- णीसहं मनुष्याणां शत्रुभूतानामभिभवितारम् ॥ १०

---

का राधद्धोत्राश्विना वां को वां जोषं उभयोः ।
कथा विधात्यप्रचेताः ॥ १

किंशब्दोऽत्र प्रकारे द्रष्टव्यः । का किंप्रकारा राधत् आराधयति । होत्रा । हूयतेऽसाविति होत्रा आहुतिः । यज्ञनाम वा होत्राशब्दः । आहुतिरिज्या वा । हे अश्विना वां युवाम् । कः किंप्रकारः यजमानः स्तोता वा । वां युवयोः जोषे प्रीतौ । साकांक्षत्वाद्वर्तमाना इति वाक्यशेषः । उभयोर्द्वयोरपि सहितयोः । किंप्रकारस्य यजमानस्य स्तोतुर्वा युवामुभावपि प्रीयेथे इत्यर्थः । कथा केन प्रकारेण । विधाति युवां परिचराति । अप्रचेताः यज्ञः । एतत्सर्वं कथय । तत्सुखमहं करोमीत्यर्थः ॥ १

विद्वांसाविद्दुरः पृच्छेदविद्वानित्थापरो अचेताः ।
नू चिन्नु मर्ते अक्रौ ॥ २

परस्यामृचि तच्छब्दश्रुतेर्यच्छब्दोऽध्याहर्तव्यः । तया चैकवाक्यता । यै विद्वांसौ जानन्तौ । इच्छब्दः पदपूरणः । दुरः स्तुतेः द्वाराणि । उपाया इत्यर्थः । पृच्छेत् पृच्छति सर्वं स्तोता । अविद्वानित्था । इत्थेति सत्यनाम । सत्यमेवाजानन् अशाठ्येन । अपरः न्यूनशक्तिः । अचेताः ज्ञातुमसमर्थः स्वयम् । नुचित् । नु इति पदपूरणः । चिच्छब्द एवार्थे । पुराणावेव । मर्ते । षष्ठ्यर्थेऽत्र सप्तमी । मर्त्यस्य मनुष्यस्य । अक्रौ । आङ्पूर्वस्य क्रमेरिदं छान्दसं रूपम् । आक्रमितारौ । वशीकर्तारा- वित्यर्थः ॥ २

ता विद्वांसा हवामहे वां ता नो विद्वांसा मन्म वोचेतमद्य ।
प्रार्चद्दयमानो युवाकुः ॥ ३

तौ विद्वांसौ हवामहे आह्वयामो वयम् । युवामाहूतौ च सन्तौ नः अस्मभ्यम् । विद्वांसौ मन्म । मन्यतीत्यर्चतिकर्मा । मननं मन्म स्तुतिः । यया युवामेव स्तुमः तां

वोचेतं कथयतमित्याशास्महे । अद्य अस्मिन्नहनि । कस्मात् । उच्यते । यस्मात् प्रार्चत् । अर्चतिरत्र शुद्धोऽपि सन्नन्तो द्रष्टव्यः । उत्तमपुरुषस्य स्थाने प्रथमपुरुषः । प्रकर्षेणार्चिचिषामि । स्तोतुमिच्छामीत्यर्थः । दयमानः दधद्बीपि । युवाकुः युष्मत्कामः ॥ ३

वि पृ॒च्छामि पा॒क्या॒३ न दे॒वान्वष॑ट्कृतस्याद्भु॒तस्य॑ दस्रा ।

पा॒तं च॒ सह्य॑सो यु॒वं च॒ रभ्य॑सो नः ॥ ४

विविधं स्तुत्युपायान् पृच्छामि । पाक्या । भूतेऽत्र काले ण्यप्रत्ययो द्रष्टव्यः । प्रज्ञायाश्च यत् परिपक्वत्वं तदश्विनो रेवाणदिश्यते । परिपक्वप्रज्ञा युवाम् । न देवान् न तु देवानन्यान् । युवां पृच्छामि नान्यान् देवानित्यर्थः । एवमयमत्स्तुतिपरोऽयमिति ज्ञात्वा वषट्कृतस्य अद्भुतस्य । वषट्कारेण करणं होमः । अद्भुत इति महन्नाम । तृतीयार्थे चोभयत्र षष्ठी । वषट्कारहुतेन सोमेन महता मदीयेन । साकाङ्क्षत्वात्तृप्यतमिति वाक्यशेषः । हे दस्रा पातं च रक्षतं च । सह्यसः सहीयसः अतिशयेनाभिभवितुः शत्रुबलात् । युवां च गम्यतः । रभ्यो रभीयः अतिशयेन वेगवत् । चशब्दश्चास्मात् परो द्रष्टव्यः । वेगवत्तराच्च । नः अस्मान् ॥ ४

प्र या घोषे॒ भृग॑वाणे॒ न शोभे॒ यया॑ वा॒चा यज॑ति पज्रि॒यो वा॑म् ।

प्रैष॒युर्न वि॒द्वान् ॥ ५

प्र या घोषे । घोष्यमाणत्वात् घोषस्तोमः । तस्मिन् । सप्तमीश्रुतेः साकाङ्क्षत्वात् स्थितेति वाक्यशेषः । भृगवाणे न भृगवाणशब्दो भृगोः पर्यायः । षष्ठ्यर्थे च सप्तमी । भृगोरिव । प्रशोभे प्रकर्षेण शोभते । यया वाचा यजति । तृतीयपादाद्यः प्रशब्दः इहापकृष्टव्यः । प्रकर्षेण यजति । पज्रियः । पाज्रो हविर्लक्षणमन्नम् । तद्वान् प्रज्रियः । अथवा पज्रा अङ्गिरसः । तेषामपत्यभूतः पज्रियः । कोऽसौ कक्षीवान् । आत्मन एवायं परोक्षरूपेण प्रथमपुरुषेण निर्देशः । कं यजति । उच्यते । वां युवाम् । क इव । उच्यते । इषयुर्न अन्नकाम इव कश्चित् । विद्वान् जानन् । किम् । सामर्थ्याद्यष्टुं वा युष्मन्माहात्म्यं वा साकाङ्क्षत्वात् ॥ ५

श्रु॒तं गा॑य॒त्रं तक॑वानस्या॒हं चि॒द्धि रि॒रेभा॑श्विना वाम् ।

आ॒क्षी शु॑भस्पती॒ दन् ॥ ६

श्रुतम् । लडर्थे लोट् । शृणुथः । गायत्रम् । गायतीत्यर्चतिकर्मसु पाठात् अर्चतिकर्मायम् । गीयतेऽनेनेति गायत्रं स्तोत्रम् । तकवानस्य । तकतेर्गतिकर्मण एतद्रूपम् । उपगच्छतस्स्तोतुः । एतत् ज्ञात्वा अहं चित् अहं अपि । हिशब्दस्तु पदपूरणः । रिरेभ स्तुतवान् स्तौमि वा । हे अश्विनौ वां युवाम् । किंचाक्षी अक्षिणी हे शुभस्पती वृष्टिलक्षणस्योदकस्यापि पती । आदन् । भूतकालेऽत्र शतृप्रत्ययो द्रष्टव्यः । व्यत्ययेन चैकवचनम् । मर्यादया दत्तवन्तौ युवां ऋज्राश्वाय ॥ ६

युवं ह्यास्तं महो रन्युवं वा यन्निरततंसतम् ।
ता नो वसू सुगोपा स्यातं पातं नो वृकादघायोः ॥ ७

द्वितीयपादस्थो यच्छब्दः प्रथमपादेऽप्यनुषक्तव्यः । यौ युवाम् । हिशब्दस्तु पदपूरणः । आस्तम् । अस भुवि । लडर्थे चात्र लङ् । भवथः । महः महतो धनस्य रन् । रा दाने । प्रथमासमानाधिकरणश्चात्र शतृप्रत्ययः । दातारौ युवाम् । वा यत् । वाशब्दः चशब्दस्यार्थे । यच्छब्दस्तु खलु पुंद्वितीयाविभक्तिकः । यौ च युवाम् । निरततंसतम् । तसु उपक्षये इत्येतस्येदं रूपं न तनोतेः । अत्यर्थमुपक्षयथाः । यस्मै देयं तस्मै च धनं दत्तं य उपक्षयितव्यः तमुपक्षयथ इत्यर्थः । ता तौ नः अस्मान् हे वसू प्रशस्यौ वसुमन्तौ वा । सुगोपा सुष्ठु गोप्तारौ । स्यातं भवतम् । पातं रक्षतं च । नः अस्मान् । वृकात् प्राणिविशेषात् । अघायोः पापकामात् । भक्षयितुमिच्छत इत्यर्थः । अथवा कुक वृक इत्यस्य वृकशब्द आदातृवचनः । आदातुश्चोरादेः पापकामात् ॥ ७

मा कस्मै धातमभ्यमित्रिणे नो माकुत्रा नो गृहेभ्यो धेनवो गुः ।
स्तनाभुजो अशिश्वीः ॥ ८

मा कस्मैचित् अभिधातम् । अयं दधातिर्दानार्थः । आभिमुख्येन दत्तम् । किम् । द्वितीये पादे धेनूनामुपादानात् तत्सान्निध्यात् धेनूर्वा धनं वा । अमित्रिणे अमित्राय । नः अस्माकम् । मा च अकुत्र । यत्र ज्ञायते किं तदिति तदर्किं चोरस्थानम् । तत्राकुत्र । अज्ञेयं चोरस्थाने इत्यर्थः । अस्माकं संबन्धिभ्यो गृहेभ्यो युवाभ्यां दत्ता धेनवः दुह्यन्ते या गावः ताः । गुः गमन् । चोरैर्मापहरिषतेत्यर्थः । स्तनाभुजः । स्तना भुज्यन्ते यासां ताः स्तनभुजः ।... .........इत्यर्थः । अशिश्वीः । शिशवो बाला वत्सकाः । तद्रहिताः । गृहेषु बद्धवत्सका इत्यर्थः । युष्मत्प्रसादेनेति शेषः ॥ ८

दुहीयन्मित्रधितये युवाकु राये च नो मिमीतं वाजवत्यै ।
इषे च नो मिमीतं धेनुमत्यै ॥ ९

दुहीयन् दुह्यतां मित्रधितये । धेट् पान इत्यस्य दधातेर्वा दानार्थस्येदं रूपम् । मित्राणां पानार्थं मित्रेभ्यो वा दानार्थम् । युवाकु । यु मिश्रणे । मिश्रणीयं पयः । पानार्हमित्यर्थः । युष्मत्कामं वा युवाकु । युवयोर्यागयोग्यमित्यर्थः । किंच राये च । सर्वत्रात्र द्वितीयार्थे चतुर्थी । यं च नः अस्मभ्यं मिमीतम् । मिमीहिर्याच्ञकर्मा । याच्ञया अत्र तत्पूर्वकं दानं लक्ष्यते । दत्तम् । वाजवत्यै बलवतीम् । बलसहितं धनं न केवलमित्यर्थः । इषे चान्नं च । नः मिमीतं दत्तम् । धेनुमत्यै धेनुमतीम् । धेनुभिस्सहितमन्नं न केवलमित्यर्थः ॥ ९

अश्विनोरसनं रथमनश्वं वाजिनीवतोः ।
तेनाहं भूरि चाकन ॥ १०

अश्विनोः स्वभूतं असनं स्तुतिभिः संभक्तवानहम् । स्तुतवानित्यर्थः । रथम् । कीदृशम् । अनश्वं अश्ववर्जितम् । वाजिनीवतोः । वाजो बलम् । तद्वती सेना वाजिनी । अन्नं वा हविर्लक्षणं वाजम् । तद्वती । सत्राहीनादियागसन्ततिर्वाजिनी । तद्वतोः । स्वार्थिको वा एको मत्वर्थीयः । बलवतोरन्नवतोर्वा तेन स्तुतेन हेतुना अहं भूरि बहु चाकन कामयेऽश्विनौ । यस्मात् तं रथं स्तुतवान् तस्मान् बहु यद्यदभिप्रेतं तत्सर्वमश्विनौ याचे इत्यर्थः ॥ १०

अयं समह मा तनूह्याते जनाँ अनु ।
सोमपेयं सुखो रथः ॥ ११

योऽयं हे समह । मह उत्सवः पूजा वा । सहितो महेन समहः नित्योत्सवयुक्तः पूज्यो वा । व्यत्ययेन चात्र एकवचनम् । हे समहौ । नित्योत्सवयुक्तौ पूज्यौ वेत्यर्थः । मा मां तनु । लडर्थेऽयं लोट् । प्रथमपुरुषस्य स्थाने मध्यमपुरुषः । तनुते । सर्वकामसमृध्या विस्तारयतीत्यर्थः । ऊह्याते प्राप्यते च युवाभ्याम् । जनान् अनु मनुष्यान् शत्रुभूतान् प्रति । सोमपेयं सोमपानं च प्रति । सुखो रथः ॥ ११

अध स्वप्नस्य निर्विदेऽभुञ्जतश्च रेवतः ।
उभा ता बस्रि नश्यतः ॥ १२

उत्तमा स्वप्ननाशिनी।

पञ्चानामाश्विनानां सूक्तानामुत्तमा या ऋक् एषा स्वप्ननाशनार्था। अधशब्दोऽत्र पदपूरणः एतस्मादित्यस्यार्थे वा। एतस्मात् पञ्चभिः सूक्तैरश्विनोः स्तुतेः कारणात्। स्वप्नस्य। स्वप्नशब्देनात्र यः शयितुर्दुस्वप्न इष्यते स उच्यते न स्वप्नमात्रम्। द्वितीयार्थे च षष्ठी। दुस्वप्नम्। निर्विदे। विद सत्तायामित्यस्यान्तर्णीतण्यर्थस्य रूपम्। निर्वेदयामि निस्सत्तां करोमि। नाशयामीत्यर्थः। न च केवलं दुस्वप्नम्। किं तर्हि। अभुञ्जतश्च। इयमपि द्वितीयार्थे एव षष्ठी। अभुञ्जानं च। भोक्तुं चासमर्थमित्यर्थः। कम्। सामर्थ्याज्जाठराग्निम्। रेवतः धनवतः। सति भोज्ये या भोजनशक्तिः तां चेत्यर्थः। नाश्यमानौ उभावपि ता तौ बाश्नि। निपातोऽयं क्षिप्रार्थः। क्षिप्रं नश्यतः। लोडर्थेऽत्र लट्। अश्विनोः प्रसादेन मत्तो नश्यताम्॥ १२



कदित्था नॄँः पात्रं देवयतां श्रवद्गिरो अङ्गिरसां तुरण्यन्।
प्र यदानड्विश आ हर्म्यस्योरु क्रंसते अध्वरे यजत्रः॥ १

ऐन्द्रं च।

ऐन्द्रमेतत्सूक्तम्।

ऐन्द्रं यदुच्यते सूक्तं तत्र कदित्थेत्येतत् षष्ठमौशिजस्य।
वैश्वदेवमप्येतत् समाम्नातम् प्रतिनाभोनेदिष्ठं ब्रह्मणोक्तम्॥

तत्रेत्ययम्।

ऐन्द्रं च वैश्वदेवं च उषस्ये दानसंस्तवः।

इत्येतेषां परस्तादुक्तानां प्रतिनिर्देशः। तेषां मध्ये यदैन्द्रं सूक्तमुच्यते कदित्थेत्येतत् षष्ठमौशिजस्य कक्षीवतः। एतत् वैश्वदेवमपि। एवं हि साङ्ख्यायनानां ब्राह्मणे समाम्नातम्। तद्यानि तत्र वैश्वदेवानि तान्युद्धृत्यान्यानि निरुक्तानि प्राजापत्यानि परोक्षवैश्वदेवान्यधीयन्ते। प्रवः पान्तं रघुमन्यवः (ऋ॰ वे. १.१२२.) तं प्रत्नथा (ऋ. वे. ५. ४४.) कदित्था इति प्रतिनाभानेदिष्ठं इति। अत्र ब्राह्मणे परोक्षवैश्वदेवं प्रतिनाभानेदिष्ठं चेदमुक्तम्। प्रतिनाभानेदिष्ठमिति च नाभानेदिष्ठस्य प्रतिनिधिरुच्यते। नाभानेदिष्ठं वैश्वदेवम्। तस्य प्रतिनिधित्वादिदमपि वैश्वदेवम्। परोक्षवैश्वदेवं तु इन्द्रादन्यासां स्तम्भीद्ध द्यां इत्यादीनां देवतानां विशेषणत्वेन कीर्त्यमानत्वात्। कच्छब्दोऽत्र

कद्ध नूनम्। ऋ. वे. १. ३८ १.

इतिवत् कदेत्यस्यार्थे। कदा इत्था सत्यम्। नॄन्। षष्ठ्यर्थेऽत्र च द्वितीया। मनुष्याणामस्माकं स्वभूतम्। पात्रं गृहचमसादि देवयतां देवकामानामङ्गिर-

साम् । पितृशब्दस्यायं सोऽयमित्यभिसम्बन्धापन्ये प्रयोगः । अंगिरसोऽपत्यभूतानाम् । तुरण्यन् त्वरमाण इन्द्रः । पिबेदिति वाक्यशेषः । श्रवत् शृणुयाच्च । गिरः स्तुतिलक्षणा वाचः । प्रत्ययमुपसर्गो धीत्यस्यार्थे । व्याप्नोति । विशो मनुष्यान्यष्टन् । आकारस्तु पदपूरणः मर्यादायां वा । मर्यादया व्यप्नोति । किंच हर्म्यस्य । हन्तेरिदं रूपम् । हन्तुः शत्रुघ्नानामिन्द्रस्य । उरु बहु । क्रंसते । करोतेरयम् । लोटि नुमागमश्छान्दसत्वात् । क्रमेर्या करोतेरर्थे । करोति । अध्वरे यज्ञे । यजत्रः यष्टा मनुष्यः । अथवा हर्म्यमिति गृहनाम । सप्तम्यर्थेऽत्र षष्ठी । अध्वरे इत्येतेन चास्य संबन्धः । क्रंसते इति क्रमिः स्वार्थे एव । यज्ञगृहे योऽध्वरः तस्मिन् बहु क्रामतीन्द्रः । पुनः पुनः गच्छतीत्यर्थः । यजत्रः यष्टव्यः ॥ १

स्तम्भी॑द्ध॒ द्यां स ध॒रुणं॑ प्रुषायदृ॒भुर्वाजा॑य॒ द्रवि॑णं॒ नरो॒ गोः ।
अनु॑ स्व॒जां म॑हि॒षश्च॑क्षत॒ व्रां मेना॒मश्व॑स्य॒ परि॑ मा॒तरं॒ गोः ॥ २

स्तंभिः प्रतिबन्धार्थः । तैस्तैरुपकारैः प्रतिबद्धवान् । हेति पदपूरणः । द्यां दिवम् । स प्रकृत इन्द्रः । किंच धरुणमुदकम् । प्रुषायत् क्षारयति मेघान् । ऋभुः । मेधाविनामैतत् । मेधावी । वाजायान्नाय सत्यलक्षणाय । द्रविणं धनभूतम् । नरो मनुष्याकारः । कस्य धनभूतम् । उच्यते । गोः माध्यमिकाया वाचः । किंच स्वजाम् । स्वत एव प्रजापतेर्या जाता सा स्वजा । तां महिषः महानिन्द्रः । अनुचक्षत । परिशब्दोऽप्यपकृष्य एतेनैव संबन्धयितव्यः । आनुपूर्व्येण सर्वतः पश्यति । जानातीत्यर्थः । व्रां वरणीयां मेनां स्त्रियम् । भार्यामित्यर्थः । अश्वस्य । अशू व्याप्तौ । व्याप्तुः प्रजापतेः । मातरं मातृभूताम् । गोः । गन्तृत्वादिन्द्रोऽत्र गौरुच्यते । आत्मन एवेत्यर्थः । अथवा व्रा इति रात्रिनाम । उक्तं हि शाकपूणिना रात्रिरपि व्रा उच्यते इति । स्वजा चासौ स्वयमेव जायमानत्वात् । स्वयं जनयित्रीं महानिन्द्रो जानाति रात्रिं नाम स्त्रियमश्वस्य मातरम् । अश्वग्रहणमत्रोपलक्षणार्थम् । अश्वादेः प्राणिमात्रस्य । सस्यगाहारपरिणामादिकरणेन मातृभूतां गोरुषसश्च ॥ २

नक्ष॒द्धव॑मरु॒णीः पू॒र्व्यं राट् तु॒रो वि॒शामङ्गि॑रसा॒मनु॒ द्यून् ।
तक्ष॒द्वज्रं॒ नियु॑तं त॒स्तम्भ॒द्द्यां चतु॑ष्पदे॒ नर्या॑य द्वि॒पादे॑ ॥ ३

दक्ष स्तृक्ष नक्ष गतौ । गच्छतीन्द्रः । हवमाह्वानं प्रति । कदा । उच्यते । यदा अरुणीः अरुणवर्णा उषाः । पूर्व्यं पूर्वं प्रथमम् । राट् । आख्यातमेतत् । छान्दसत्वात्तु निघाताभावः । राजते दीप्यते उषसि उदितमात्रायामित्यर्थः । तुरः त्वरिता तुर्विता वा शत्रूणाम् । कस्य हवम् । उच्यते । विशां मनुष्याणां अङ्गिरसामृषीणां तदपत्य-

भूतानां वा अस्माकम् । अनुद्यून् । अनुशब्दोऽत्र लक्षणेत्थंभूताख्यानभागवीप्सासु (पा. १. ४. ९०) इत्येवं वीप्सयां कर्मप्रवचनीयः । द्यु इत्यह्नो नामधेयम् । अहान्यहानीत्यर्थः । किंच तक्षत् । तक्षतिः करोतिकर्मा । शुद्धोऽपि सोपसर्गो द्रष्टव्यः । संस्करोति वज्रम् । कीदृशम् । उच्यते । नियुतम् । निशब्दोऽत्र प्रकर्षे निशुक्रं निरुक्तमिति यथा । प्रकर्षेण शत्रुभिः सहात्मनो मिश्रयितारम् । शत्रुशरीरेषु प्रवेष्टारमित्यर्थः । तस्तंभत् । तुल्यत्वेऽपि संहितायाः तक्षदित्यनेन लेडन्तेन समुच्चरणादिदमपि पदकारेण तस्तंभदिति लेडन्तं परिगृहीतं न लिडन्तं तस्तंभेति । अत्यर्थं स्तभ्नाति तैस्तैरुपायैः । द्यां दिवम् । कस्यार्थाय सर्वमेतत् करोति । उच्यते । चतुष्पदे नर्याय द्विपादे । नरेषु भवन्नर्यम् । मनुष्येषु भवं यच्च चतुष्पात यच्च द्विपात् तस्य सर्वस्यार्थाय ॥ ३

अस्य मदे स्वर्यं दा ऋतायापीवृतमुस्रियाणामनीकम् ।
यद्ध प्रसर्गे त्रिककुम्निवर्तदप द्रुहो मानुषस्य दुरो वः ॥ ४

अस्येत्ययं मदसंबन्धात् सोमस्य प्रतिनिर्देशः । अस्यसोमस्य मदे । यस्य च भावेन ( पा. २ ३. ३७ ) इत्यवमियं सप्तमी । तच्छ्रुतेश्च लक्षणभूतक्रियाध्याहारः । मदे प्राप्ते । एतेन सोमेन मत्तस्सन्नित्यर्थः स्वर्यम् । स्वृ शब्दोपतापयोः । शब्दकारि दाः । व्यत्ययेनात्र मध्यमः यष्ट्रे ददातीन्द्रः । ऋताय यज्ञार्थम् । अपीवृतं घटितम् । स्वगोष्ठे द्वारं निरुध्य स्थापितमित्यर्थः । उस्रियाणां गवामनीकं समूहम् । कदा । यत् यदा । हशब्दस्तु पदपूरणः । प्रसर्गे । प्रसृज्यते यस्मिन् स प्रसर्गो दानकालः । तस्मिन् । त्रिककुप् । त्रीणि अभिजनं शौर्यं यशश्च ककुभः सदृशानि समुच्छ्रितानि यस्य स त्रिककुप् । निवर्तत् यष्टारं प्रति निवर्तते । दानार्थं यष्टुरभिमुखो भवतीत्यर्थः। किंच द्रुहः द्रोग्धुर्मेघस्य । कस्य द्रोग्धुः । उच्यते । मानुषस्य मनुष्यजातस्य सर्वस्य । मेघो ह्युदकं निरुन्धन् सर्वं मनुष्याजातं द्रोग्धि । तस्य दुरः द्वाराणि उदकनिर्गमनद्वाराणि । अपवः अपावृणोति ॥ ४

तुभ्यं पयो यत्पितरावनीतां राधः सुरेतस्तुरणे भुरण्यू ।
शुचि यत्ते रेक्ण आयजन्त सबर्दुघायाः पय उस्रियायाः ॥ ५

तुभ्यमिति तादर्थ्ये चतुर्थी । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः । यज्ञार्थाय तत्पयः उदकम् । त्वं वर्षतीत्येवमर्थं तदुदकमित्यर्थः । यत् कतमत् । उच्यते । यत्

पितरौ सर्वस्य पितृभूते द्यावापृथिव्यौ। अनीतां दिव्यं प्रति नीतवत्यौ। यच्च द्यावापृथिवीभ्यामाहृत्य रश्मयो नीतवन्तः तद्धेतुत्वप्रतिपत्त्या द्यावापृथिव्यावेव नीतवत्यावित्युच्यते। राधः धनभूतं सर्वस्य। सुरेतः शोभनमुदकम्। पय इत्यनेन चोदकत्वमुक्तम्। सुरेत इत्यनेन तु तस्य शोभनत्वमुच्यते इति नास्ति पौनरुक्त्यम्। किंरूपाय तुभ्यम्। उच्यते। तुरणे त्वरणाय तुर्वित्रे वा शत्रूणाम्। किंरूपे द्यावापृथिव्यौ। भुरण्यू क्षिप्रे। न च केवलमुदकम्। किं तर्हि। शुचि शुद्धं यत् ते रेक्णः धनभूतम्। आयजन्त आभिमुख्येन दत्तवन्तः। कृतमन्न इत्यर्थः। के। सामर्थ्यात् प्रजापतिप्रभृतयः सर्वे देवाः। सबर्दुघायाः। सबः अमृतमुच्यते। अमृतमयं दोग्ध्र्यः। पयःक्षीरम्। उस्रियायः गोः। तदपि तुभ्यं तव पानार्थमित्यर्थः। अथवैवमन्यथा अस्या ऋचोऽर्थयोजना। तुभ्यं पय इत्यत्र दध्युच्यते। पितरावपि स्वेषामपत्यानां पितृत्वत् पालयितृत्वाद्वा दंपती यजमानौ। अनीतामित्यपि लङर्थे लङ्। दर्शपूर्णमासयोर्यद्दधि यजमानौ वेदिं प्रति नयतः तत्तवार्थाय। यच्च धनं पुरोडाशाख्यं सुरेतः। शोभनं प्रणीतालक्षणं संस्कारकमुदकं यस्य तत् सुरेतः। यच्च ते तुभ्यमायजन्त मर्यादया ददत्यार्त्विजः पयः उस्रियायाः स्वभूतं तदपि तवैवार्थाय। शिष्टपदयोजना सदृशी॥ ५

अध प्र जज्ञे तरणिर्ममत्तु प्र रोच्यस्या उषसो न सूरः।
इन्दुर्येभिराष्ट स्वेदुहव्यैः स्रुवेण सिञ्चन् जरणाभि धाम॥ ६

अधशब्दोऽत्र पदपूरणः। एकवाक्यताप्रसिध्यर्थं यत्तच्छब्दावध्याहार्यौ। यः वृत्रवधादिषु प्रजज्ञे तरणिः यशसा शौर्येण च परिवृद्धोऽभूत्। यश्च प्रकर्षेण अमाद्यत् अथवा तच्छब्दमध्याहृत्य स्वार्थ एवायं योज्यो लोट्प्रत्ययः। ममत्तु तृप्यत्विति। यश्च प्ररोचि प्रकर्षेण दीप्यते। अस्या उषसो न सूरः। नशब्दोऽत्र पुरस्तादुपचारोऽप्युपमार्थनीयः। यथायमस्या उषसः संबन्धी सूर्यः तद्वत्। सूर्यस्योषसः पुत्रत्वेन सम्बन्धः।

रुशद्वत्सा रुशती। ऋ. वे. १. ११३. २.

इत्यत्रोक्तम्। न च केवलमेवंविधमेव। किं तर्हि। इन्दुः सोमः। येभिः यैः आष्ट। व्याप्तिकर्मायम्। देवैः सह प्राप्तम्। स्वेदुहव्यैः स्वेन्दुहव्यैः। नकारलोपश्छान्दसः। स्वा इन्दुहव्या येषां ते स्वेन्दुहव्याः। स्वैः सोमैः देवानां यष्टारः। के पुनस्ते। इन्द्रस्य सखायोऽङ्गिरसः। तैः स्वेन्दुहव्यैः। वेस्रुण स्रुवसदृशेन ग्रहचमसादिना पात्रेण। सिञ्चन्। व्यत्ययेनायं कर्मणि शतृप्रत्ययः। सिच्यमानः। अभि धाम स्थानं तेजो

त्वा आ हवनीयाख्यं प्रति। आहवनीये हूयमान इत्यर्थः। न च केवल इन्दुः। किं तर्हि। जरणा स्तुतिश्च। यो यैर्देवैस्सह सोमं पिबति स्तूयते चेत्यर्थः। यच्छब्दश्रुतेः साकाङ्क्षत्वाच्च तैः स्वसखैरङ्गिरोभिः सह तृप्यत्विति वाक्यशेषः॥ ६

स्विध्या यद्वनधितिरपस्यात् सूरो अध्वरे परि रोधना गोः।
यद्ध प्रभासि कृत्व्याँ अनु द्यूननर्विशे पश्विषे तुराय॥ ७

यदा सुष्ठु इद्धा दीप्ता स्विध्मा। सुनिशितेत्यर्थः। वनधितिः। वनसब्दोऽत्र

न हि मे अस्त्यघ्न्या। ऋ वे. ८. १०२. १९.

इति दर्शनात् तीक्ष्णवचनः। धितिशब्दः स्वधितिपर्यायः। तीक्ष्णस्वधितिः। अपस्यात्। अपः कर्म विशसनाख्यम्। तत् कर्तुमिच्छति। पशुं विशसतीत्यर्थः। सूरः। षष्ठ्यर्थे प्रथमा। सूर्यस्य संबन्धिनि अध्वरे यज्ञे। अदिते ह्यादित्ये यज्ञः क्रियत इत्ययं सूर्यस्य यज्ञेन संबन्धः। परिरोधना सर्वतो निरोध्री। मारयित्रीत्यर्थः। गोः। गोग्रहणमत्रोपलक्षणार्थम्। गवादेः पशोः। यद्ध। हशब्दश्चार्थे। यदा च प्रभासि। भा दीप्तावन्यत्र इहतु गत्यर्थः। यज्ञं प्रति गच्छसि। कृत्वीति कर्मनाम। कृत्व्यान् यागकर्मार्हान्। प्रति द्यून् दिवसान्। यागदिवसानित्यर्थः। कस्यार्थाय। उच्यते। अनर्विशे पश्विषे तुराय। ऋ गतौ। अगता विशो यस्य सोऽनर्वित्। कोऽसौ। यस्य मित्रादयो वा मनुष्या यष्टृत्वान्नरकं न गताः परिचारका वा सर्वे। पशूनय इच्छति स पश्विट्। देवान् परिचरितुं यस्त्वरते स तुरः। सर्वत्र च तादर्थ्ये चतुर्थी। अगतमनुष्यस्य पशुकामस्य त्वरणस्य च यजमानस्यार्थाय। यज्ञमस्याविघ्नेन समापयितुमित्यर्थः। यदेति श्रुतेस्तदित्यध्याहृत्य परयर्चैकवाक्यता॥ ७

अष्टा महो दिव आदो हरी इह द्युम्नासाहमभि योधा न उत्सम्।
हरिं यत्ते मन्दिनं दुक्षन्वृधे गोरभसमद्रिभिर्वाताप्यम्॥ ८

अष्टा व्याप्ता। महः महतो दिवो द्युलोकस्य। आदः अभक्षयः। हरी इत्येतदभियोधान इत्येतेन संमन्वयितव्यः। भक्षय किम्। उच्यते। इहास्मद्यज्ञे। द्युम्नासाहम्। द्युम्नमन्नं मांसमण्डादि। तद्यत् स्वादुत्वेनाभिमतं यस्तत्सर्वमेवाभिभवति। स द्युम्नासाहः। तम्। हरी अभियोधानाः। हरी इति तृतीयार्थे प्रथमा। अरिभ्यामभियोधन्। उत्सं मेघम्। वर्षन्नित्यर्थः। कतमं सोमम्। उच्यते। हरिं हरितवर्णं यत् यं ते तवार्थाय। मदिनं स्तुतिमन्तं मोदयितारं वा। धुक्षन् दुग्धवन्तः ऋत्विजः।

क्षरितवन्त इत्यर्थः । वृधे वर्धनाय इन्द्रस्य तनात्मनो वा । गोरभसम् । गावः स्तुतयः आपो वा । रभस इति महन्नाम । तस्मात् तत् करोति (वा° ३. १. २६. ५, ६) इति णिच् । ण्यन्तादच् । गावो रभयितारो यस्य स गोरभसः । गोभिरद्भिर्वा महत्कृत इत्यर्थः । तं गोरभसम् । केन धुक्षन् । उच्यते । अद्रिभिरभिषवग्रावभिः । वाताप्यं उदकरूपम् । अथवा वातं प्राणः । तस्याप्यायितारम् । प्राणकरमित्यर्थः ॥ ८

त्वमा॑य॒सं प्रति॑ वर्तयो॒ गोर्दि॒वो अश्मा॑न॒मुप॑नीत॒मृभ्वा॑ ।
कुत्सा॑य॒ यत्र॑ पुरुहूत व॒न्वञ्छुष्ण॑मन॒न्तैः प॑रि॒यासि॑ व॒धैः ॥ ९

त्वमायसं लोहमयं वज्रम् । प्रतिवर्तयः गमितवानसि । चक्रे प्रोतवानसीत्यर्थः । कम् । उच्यते । गोः सर्वगताया अपि दिवः । अश्मानं व्याप्तारं शुष्णं नामासुरम् । उपनीतं प्रापितम् । किम् । सामर्थ्याद्युद्धभूमिम् । ऋभ्वा । ऋभुरिति मेधाविनाम । मेधाविना । केन । सामर्थ्यात्त्वयैव । कस्मिन् काले । उच्यते । कुत्साय कुत्सस्य ऋषेरर्थाय । यस्मिन् काले । हे पुरुहूत बहुभिराहूत वन्वन् याचमानः । यत् कुत्सस्याभिप्रेतं तत् प्रार्थयमान इत्यर्थः । शुष्णं नाम असुरम् । अनन्तैरत्यन्तबहुभिः । परियासि । यियात इति वधकर्मसु पाठात्

यथा वज्रिवः परियास्यंहः । ऋ. वे. ६. ३७. ४.

इति च दर्शनात् यातिरत्र वधार्थः । वधैः प्रहारैः ॥ ९

पु॒रा यत्सूर॒स्तम॑सो॒ अपी॑ते॒स्तम॑द्रिवः फलि॒गं हे॒तिम॑स्य ।
शुष्ण॑स्य चि॒त्परि॑हितं॒ यदोजो॑ दि॒वस्परि॒ सुग्र॑थितं॒ तदादः॑ ॥ १०

अत्रेतिहासमाचक्षते । वृत्रः किल सूर्यनिरोधनसमर्थं महत्तमस्ततान । तं हत्वेन्द्रः तमसोऽपनोदनार्थं सूर्यं दिव्यारोहयाञ्चकार इति । तदेतत् सव्येनोक्तम् ।

वृत्रं यदिन्द्र शवसावधीः । ऋ. वे. १. ५१. ४.

इति । तत्र तमस्वतो वृत्रस्य फलिगोऽपि सहायो बभूव । तमपीन्द्रो जघानेति । तदेतदिहोच्यते । यदित्येतस्य तमित्येतेन सामानाधिकरण्याद्व्यत्ययेन नपुंसकता । यच्छब्दश्रुतेश्च उक्तेतिहासार्थसंयुक्तादध्याहारः । यस्तमस्तन्वतो वृत्रस्य सहायो बभूव तं पुरा प्राक् । सूरः । षष्ठ्यर्थे प्रथमा । सूर्यस्य संबन्धिनः । सूर्यनिरोधसमर्थस्येत्यर्थः । तमसः अपीतेः अपीत्येषोऽपेत्यस्य स्थाने । अपगतेः । यावत् तत्कृतं सूर्यनिरोधसमर्थं तमो नापागच्छति तावदित्यर्थः । हे अद्रिवः । वज्रोऽत्राद्रिवाचकत्वा-

द्रादरणाद्वा अद्रिरुच्यते । तद्रन् । फलिगं नामासुरं प्रति । हेति वज्रम् । अस्य । भूते काले लोडयं द्रष्टव्यः । क्षिप्तवानसि । वज्रेण फलिगं हतवानसीत्यर्थः । शुष्णस्य चित् । चिच्छब्दोऽत्र चार्थे । शुष्णनाम्नश्चासुरस्य । परिहितं सर्वतो निहितं यदोजः सेनालक्षणं बलम् । दिवः परि द्युलोकस्योपरि सुग्रथितं युद्धयोग्येन सूचीमुखादिना व्यूहेन व्यवस्थापितम् । तदादः आदारितवात् । हतवानित्यर्थः । अथवैवमन्यथास्या ऋचोऽर्थयोजना । फलिग इति मेघनाम । य उदकं निरुध्य स्थितः तं मेघं प्रति पुरा तत्कृतस्य सूर्यनिरोधसमर्थस्य तमसोऽपगतेः वज्रं क्षिप । शुष्णस्य च शोषयितुरादित्यस्य स्वभूतं रश्मिभिराहृतस्य सर्वतो निहितं यदोजः । ओज इत्युदकनाम । उदकं सुग्रथितम् । तच्चादारय ॥ १०

अनु॑ त्वा म॒ही पाज॑सी अच॒क्रे द्यावा॒क्षामा॑ मदतामिन्द्र॒ कर्म॑न् ।
त्वं वृ॒त्रमा॒शया॑नं सि॒रासु॑ म॒हो वज्रे॑ण सिष्वपो व॒राहु॑म् ॥ ११

.............................................................................

अचक्रे । क्रमेरिदं रूपम् । अचंक्रमणे स्थिरे । द्यावाक्षामा । क्षामेति पृथिवीनाम । अनुमदतां द्यावापृथिव्यौ मदिर्मोदनार्थः । अनुमोदितवत्यौ । हे इन्द्र कर्मन् कर्मणि वृत्रवधाख्ये । वृत्रघ्नं तं त्वामनुज्ञातवत्यावित्यर्थः । अनुज्ञातश्च सः त्वं वृत्रमाशयानम् । शेतिरत्र स्थानार्थः आमाशयो जलाशय इति यथा । तिष्ठन्तम् । सिरासु । सीरा इति नदीनाम । छान्दसं ह्रस्वत्वम् । नदीषु । नदीभिश्च तदीया आपो लक्ष्यन्ते । अन्तरिक्षे या नद्यः तदप्सु गूहितमित्यर्थः । तद्धिरण्यस्तूपेनोक्तम्

अतिष्ठन्तीनाम् । ऋ. वे. १. ३२. १०.

इति । महः महांस्त्वम् । महता वज्रेण । सिष्वपः आत्यन्तिकेन मरणलक्षणेन स्वापेन स्वापितवान् । मारितवानित्यर्थः । वराहुं वराहाकारम् ॥ ११

त्वमि॑न्द्र॒ नर्यो॒ याँ अवो॒ नॄन्तिष्ठा॒ वात॑स्य सु॒युजो॒ वहि॑ष्ठान् ।
ये तं॑ का॒व्य उ॒शना॑ म॒न्दिनं॒ दाद्वृ॑त्र॒हणं॒ पार्यं॑ ततक्ष॒ वज्र॑म् ॥ १२

त्वं हे इन्द्र नर्यः नृभ्यो हितः नृषु वा साधुः । यान् अवः पालितवानसि । नॄन् मनुष्यानस्मान् । यच्छब्दश्रुतेर्योग्यविभक्त्यर्थयुतस्तच्छब्दोऽध्याहर्तव्यः । तदर्थं तिष्ठ आतिष्ठ । आरोहेत्यर्थः । वातस्य । षष्ठीश्रुतेरत्र सकाशादिति वाक्यशेषः । वहिष्ठा नित्येतेन च संबन्धः । वातस्य सकाशाद्वोढृतमान् । सुयुजः । सुखं ये युज्यन्ते ते सुयुजः । नात् । आस्थाय च यं ते काव्यं इत्यादि । अत्रेतिहासमाचक्षते । त्वष्टा इन्द्रार्थं वज्रं चकारेति । तद्धिरण्यस्तूपेनोक्तम् ।

त्वष्टाऽस्मै वज्रम्। ऋ वे १ ३२ २.

इति। तं कृन्तमानीयेन्द्राय उशना दत्तवानिति। तदेतदिहोच्यते। ...

... त्वष्टा कृन्तं स्वन्तमानीय दत्तवान्। वृत्रहणं वृत्रस्य हन्तारम्। पार्यम्। पॄ पालनपूरणयोः। पालयितारं स्तोतॄणाम्। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। तं ततक्ष। तक्षिनः करोतिकर्मा। शुद्धोऽपि सोपसर्गार्थो द्रष्टव्यः। लोडर्थे लिट्। मध्यमपुरुषस्य स्थाने प्रथमपुरुषः। अस्मदीयशत्रुवधार्थं संस्कुरु। निश्यैत्यर्थः। वज्रम्॥ १२

त्वं सूरो॑ ह॒रितो॑ रामयो॒ नॄन् भर॑च्च॒क्रमेत॑शो॒ नायमि॑न्द्र।

प्रास्य॑ पा॒रं न॑व॒तिं ना॒व्या॑नाम॒पि॑ क॒र्तम॑वर्त॒योऽय॑ज्यून्॥ १३

त्वं सूरः। षष्ठ्यर्थे प्रथमा। सूर्यस्य स्वभूतान् हरितः हरितवर्णानश्वान्। रमयः रतिं कारितवान्। क। अस्यैव सूर्यस्य रथे। नॄन्। चतुर्थ्यर्थे द्वितीया। नृभ्यः मनुष्याणामनुग्रहार्थं सूर्याश्वान् रथे रतिं कारितवानित्यर्थः। किं कुर्वन्। उच्यते। भरत्। बिभर्तेर्धारणार्थस्येदं रूपम्। असुरैर्भज्यमानं धारयन्। रक्षन्नित्यर्थः। चक्रं सूर्यरथस्य। एतशो न। द्वितीयार्थे प्रथमा। नशब्द उपमार्थत्वाभावात्। पदपूरणः। अश्वं चासुरैरपह्रियमाणम्। तदेतत् सव्येन नोधसा चोक्तम्।

त्वं रथमेतशम्। ऋ वे. १. ५४. ६.

प्रैतशं सूर्ये। ऋ. वे. १. ६१. १५.

इति। अयम्। इन्द्रस्यायं प्रतिनिर्देशः। अयं त्वं हे इन्द्र। किं च प्रास्य। असु क्षेपणे। प्रक्षिप। पारमन्तम्। नवतिम्। षष्ठ्यर्थेऽत्र द्वितीया। नवतेर्नदीनाम्। नाव्यानां नौभिस्तार्याणाम्। अगाधापगानामित्यर्थः। कर्तं गर्तम्। अपि अव्रर्तयः। अपि इत्येषः प्रत्येतस्य स्थाने। प्रावर्तयः। कूपे प्रक्षिपेत्यर्थः अयज्यून् अयजनशीलान्॥ १३

त्वं नो॑ अ॒स्या इ॑न्द्र दु॒र्हणा॑याः पा॒हि व॑ज्रिवो दुरि॒तादभी॑के।

प्र नो॒ वाजा॑न् र॒थ्यो॒३ अश्व॑बुध्यानि॒षे य॑न्धि॒ श्रव॑से सू॒नृता॑यै॥ १४

त्वं नः अस्मान् अस्या हे इन्द्र दुर्हणायाः। क्लेशेन या हन्ति सा दुर्हणा। तस्याः कस्याः। स्त्रीलिङ्गनिर्देशात् दुर्हणायाः। अस्माद्दुर्भिक्षादित्यर्थः। पाहि हे वज्रिवः। वज्रो यस्मिन्नस्ति स वज्री आयुधसमूहः। तद्वन्। न च केवलाद्दुर्भिक्षात्। किं तर्हि। दुरितात् अपुण्याच्च। अभीके संग्रामे च। किंच नः अस्मभ्यं वाजान् बलानि सेना-

लक्षणानि । रथ्यः . ... ... .......... ......... ... ... ...... ..
अन्नं च प्रयन्धि प्रयच्छ । श्रवसे । श्रवः कीर्तिर्धनं वा । तच्च । वाचं च ॥ १४

मा सा ते अस्मत्सुमतिर्वि दसद्वाजप्रमहः समिषो वरन्त ।
आ नो भज मघवन्गोष्वर्यो मंहिष्ठास्ते सधमादः स्याम ॥ १५

सेति तच्छब्दश्रुतेरस्मत्सुमतिरित्येतेन संबद्धो यच्छब्दोऽध्याहर्तव्यः । अस्मदिति सप्तम्यर्थे पञ्चमी । येयमस्मासु सुमतिः शोभनानुग्रहपरा बुद्धिः सा ते तव कदाचिदपि विदसत् अविच्छिन्ना । सर्वदैवास्त्वित्यर्थः । हे वाजप्रमहः । वाजं बलं प्रकर्षेण महद्यस्य स वाजप्रमहाः । तस्य संबोधनं हे वाजप्रमहः । कस्मात् । उच्यते । यस्मादिषः अन्नान्यस्मदीयहविर्लक्षणानि । संवरन्त सम्यक् त्वा संभजन्त । यस्मात् त्वां यजाम इत्यर्थः । किंच नः अस्मानाभज आभिमुख्येन भज । हे मघवन् गोषु । सप्तमीनिर्देशात् स्थिता इति वाक्यशेषः । गवां......... स्थित इत्यर्थः । अर्यः यस्त्वमीश्वरः । अथवा अर्यशब्दोऽत्र षष्ठ्यन्तः । अरेः स्वभूतासु गोषु स्थितान् । शत्रोर्या गावास्ता अस्मभ्यं दत्वा अस्मान् भजेत्यर्थः । भज्यमानाश्च वयं मंहिष्ठाः । मंहतीति दानकर्मा । अतिशयेन दातारः सोमस्येत्यर्थः । ते तुभ्यं सधमादः सह च मदितारः । सह सोमस्य पातार इत्यर्थः । स्याम नित्यं भवेमेत्याशास्महे ॥ २५

इति ऋग्वेदभाष्ये अष्टमोऽध्यायः
समाप्तः

प्रथमोऽष्टकः समाप्तः ।



# LIST OF CORRECTIONS.

| Page | line | for | read |
|---|---|---|---|
| 1 | 11 | अनुष्टातु | अनुष्ठातु |
| | 13 | प्रदिपाद् | प्रतिपाद् |
| 2 | 5 | विश्वामित्र | विश्वामित्रस्य |
| | 10 | स्त्रायंते | स्त्रायते |
| 3 | 10 | इद्वेषु | इद्देवेषु |
| | 15 | च्छिती: | च्छिूती: |
| 4 | 9 | प्रप्रजाकामः | प्रजाकामः |
| | 17 | २६ | २६-५,६ |
| 5 | 6 | ति | इति |
| 6 | 5 | गता | गतौ |
| | 22 | आद्युदात्तः | अनुदात्तः |
| 7 | 9 | घृत्ची | घृताची |
| | 15 | पति | परि |
| | 26 | उतकाधि | उदकाधि |
| 8 | 5 | अश्विनै | अश्विनौ |
| | 21 | गामिनो | गामिनौ |
| 10 | 22 | यजमानात् | यजमानान् |
| 11 | 3 | स यज्ञे | सा यज्ञे |
| | 18 | पानान्त | पानानन्त |
| 16 | 25 | वशत् | वशात् |
| 17 | 6 | केनुं | केतुं |
| | 19 | दुकं | दुदकं |
| 18 | 23 | सुष्टु | सुष्ठु |
| | 26 | गुंगौः | गुणैः |
| 19 | 2 | समस्मि | समस्मि |

| Page | line | for | read |
|---|---|---|---|
| 19 | 5 | १३ | ९३ |
| | 6 | मंलाद्धा | मण्डलाद्धा |
| 20 | 2 | माह्लो | माँह्लो |
| | 10 | प्रकुष्ट | प्रकृष्ट |
| | 26 | वृाष्ट | वृष्टि |
| 21 | 11 | देवानां | देवानां वा |
| 22 | 7 | दर्शनीय | दर्शनीया |
| 23 | 1 | ना | न । |
| | 20 | उर्वीः | उर्वीः |
| 24 | 22 | त्तव | तव |
| 25 | 21 | सृज्जुति | सृजति |
| 27 | 12 | कीर्ति | कीर्ति |
| | 15 | गृणंत | गृणन्त |
| 29 | 2 | सोमषा | सोमपा |
| | 3 | मृषु | वृष |
| | 17 | शर | रार् |
| | 18 | निषेध्रे | निषेद्धे |
| | 19 | अस्मत्सो | अस्मत्स्तो |
| | 24 | तास्मित् | तमित् |
| 30 | 9 | व्याानुतः | व्याप्नुतः |
| 31 | 12 | विश्वताः | विश्वतः |
| 33 | 3 | विदु । | विदुः |
| 35 | 6 | मृडय | मृळय |
| | 11 | हविश्व | हविश्व |
| 36 | 19 | वक्त्वाम् | वाक्त्वम् |
| 37 | 3 | पूव्यस्य | पूर्व्यस्य |
| | 6 | सदशस्य | सदृशस्य |
| | | दृदृश्यते | दृश्यते |
| | 17 | रात्रि | रात्रिः |

| Page | line | for | read |
|---|---|---|---|
| 38 | 1 | इळा॒ | इ॒ळा |
| 39 | 14 | द्र॒ब्साः | द्र॒प्साः |
| | 24 | वाद्यतौ | वाघतौ |
| 40 | 1 | ताघ्न | तान्य |
| 41 | 2 | योज्य | योजय |
| | 4 | विशा॑न्त्वि | विश॒न्त्वि |
| 42 | 20 | धध्व॒रे | अध्व॒रे |
| | 27 | शब्द- | शब्दः |
| 43 | 3 | नि यानि॑ यानि॒ | नि॒ यानि॑ |
| | 17 | भैब | भैव |
| 45 | 24 | क्षत | शत |
| 46 | 6 | वकण | वरुण |
| | 26 | स्सर्वं | त्सर्वं |
| 51 | 2 | म॒र | म॒रु |
| | 9 | घृष्ठा | धृष्टा |
| 52 | 9 | मेद्यान् | मेघान् |
| 53 | 1 | वि॑प्रे | विप्रे॑ |
| | 19 | सुं॒ख | सु॒खं |
| | 20 | धा॑म् | घा॑म् |
| 54 | 13 | १०१ | १६१ |
| | 17 | दशतौ | द्दशतौ |
| | 22 | मौस्ति | मौक्ति |
| 56 | 1 | हबा | हवा |
| 57 | 3 | सारयी | सारथी |
| 60 | 2 | यन्दि | यन्ति |
| | 21 | केचित्त | केचित्तु |
| 61 | 25 | तत॑मम् | तत॑म |
| 63 | 15 | सुधनाम् | सुध्नान् |

| Page | line | for | read |
|---|---|---|---|
| 67 | 24 | चरिषं | चारिषं |
| 68 | 9 | विद्यमें | विद्युमें |
| | | ऋषिभिः | ऋषिभिः |
| | 13 | विद्यः | विद्युः |
| | | कुयात् | कुर्यात् |
| 69 | 16 | प्रयः | प्रायः |
| | 19 | सवितवै | सवितवैं |
| | | ३२ | ७ |
| 70 | 18 | प्रत्यक्ष | अप्रत्यक्ष |
| | 21 | (ए ब्रा. ) | (ए. ब्रा. ७. १६. ६) |
| | 24 | धनबलं | धनं बलं |
| | 28 | मीड | मीढ् |
| 71 | 20 | वक्रा | वक्ता |
| | 25 | शवोः | शत्रोः |
| 72 | 11 | दद्श्रे | ददृश्रे |
| | 21 | दुंभु | दंभु |
| | | ष्टव | पव |
| | 23 | रातौ | रात्रौ |
| 74 | 5 | हबि | हवि |
| | 24 | हलेम | हलवें |
| | | वीरधः | रीरधः |
| 75 | 12 | सीमहे | सीमहि |
| 76 | 2 | दाशुष | दाशुषे |
| | 18 | मसः | मासः |
| | 23 | बृहतः | बृहतः |
| 77 | 4 | कृत्वा | कुत्वा |
| | 5 | निपीदति | निषीदति |
| 78 | 25 | रेष्व | रेष्वा |
| | 27 | इद्रे | उद्रे |

| Page | line | for | read |
|---|---|---|---|
| 94 | 17 | प्रत्वचा | प्रश्न वा |
| | 19 | स्तरं | स्तरं |
| | | वा॒ वाजेबाजे | वाजेवाजे |
| | 22 | प्रत्वौ | प्राप्तौ |
| | 23 | इदमिदं इदमिद् | इदमिदं |
| 96 | 26 | उपथास्या | उपथाया |
| 99 | 10 | अग्नेः | अग्ने |
| 100 | 7 | याज्योाऽ | याज्योऽ |
| | 10 | स्ववलंबसे | अवलंबसे |
| 101 | 13 | मत्रि | मश्नि |
| | 21 | भयेव | भयवे |
| 102 | 10 | विवस्तते | विवस्वते |
| | 16 | मुच्यसे | मुंच्यसे |
| | 24 | वेदा | वेदा |
| | | मेका | मेका |
| 103 | 5 | तकस्ये | तक्ष्म्ये |
| 104 | 13 | मम्तुत्या | मत्म्तुस्या |
| | 26 | स त्वा | सं त्वा |
| | 28 | त्वप्तु | त्वत्पु |
| 105 | 23 | नम | नाम |
| | 29 | रक्षमा | रक्षमा |
| 106 | 25 | याऽत्रा | याच्ञा |
| 107 | 23 | वसानि | वसाति |
| 108 | 3 | तितिक्षायम् | तितिक्षायाम |
| | 10 | एध्रं | राध्रं |
| | 17 | मुक्त्यर्थो | मुक्त्यर्थः |
| | | अग्ने | अग्ने |
| | | मरणादिन्य | मरणादीन्य |
| | 25 | मनु | मनु |

| Page | line | for | read |
|---|---|---|---|
| 120 | 12 | व्याप्तो | व्याप्तौ |
| | 13 | युयुत्समानः | युयुत्समाना |
| | 16 | अयन् | आयन् |
| 121 | 8 | ञ्चारः चक्षु | ञ्चारचक्षु |
| | 9 | अवुभो | अबुभो |
| | 20 | अदुक्ष्यन् | अधुक्षत् |
| 122 | 25 | इळाबशो | इळाबिशो |
| | 26 | हृळहा | दृळहा |
| | 29 | कश्चित्तु | कश्चित्तु |
| 123 | 3 | बन्धाच्छ | बन्धाच्च |
| | 5 | यावन् | यावत् |
| | 15 | मतिरन् | मतिरत् |
| | 17 | स्तुति | स्तुतिं |
| | 18 | हि | यो |
| 124 | 12 | श यतां | शत्रूयतां |
| 125 | 1 | वासः । | वासः । ऋ. वे. १. ११५. ४ |
| | 6 | सैनाया | सेनायां |
| | 19 | स्कम्सासः | स्कम्भासः |
| | 26 | त्रयस्क | त्रयः स्क |
| 126 | 14 | वहतमा | वहतम |
| | 15 | क्वात्रि | क । त्रि |
| | 26 | वच्चिन्वतम् । | व पिन्वतम् । |
| 127 | 8 | वहत | वहतं |
| | 12 | अश्यिनोःरथ | अश्विनोः रथ |
| | 22 | त्रिप्राकरा | त्रिप्रकारा |
| 128 | 3 | दत्तं इ | दत्तं |
| | 4 | मित्यर्थः | इत्यर्थः |
| | 23 | खसाराणि | खसराणि |
| 129 | 7 | कूपादे- | कूपादेः |
| | 9 | दस्राः | दस्रा- |

| Page | line | for | read |
|---|---|---|---|
| 130 | 8 | यस्मादर्थे | यस्मादर्थे |
| | 15 | लट्व्यस्य | लट्र व्यत्य |
| | 23 | यैषां | येषां |
| | 25 | पानाहं | पानाहैं |
| 131 | 14 | निवे॑शनां | नि॒वे॑शनीं |
| | 17 | द्वितीययो मैत्र | द्वितीयो मैत्रा |
| | 19 | अग्र | अग्र |
| | 23 | देवो | दे॒वो |
| | 25 | जसा | रजसा |
| 133 | 6 | प्रउगमु | प्रउग उ |
| | 27 | कश्चिकेत | कश्चि॑केत |
| 134 | 11 | आततानि | आततान |
| | 26 | सविता | सवि॒ता |
| 135 | 9 | तव्यर्थः | तण्यर्थः |
| | 25 | आद्य | अद्य |
| 136 | 4 | हिरण्यस्तूःपा | हिरण्यस्तूपा |
| | 16 | विधमे | विधेम |
| 137 | 14 | यस्मिन् | यस्मिन् |
| | 15 | यवीष्ठ्य | यविष्ठय |
| | 22 | च ईमिति | घ ईमिति |
| 138 | 4 | द॑श्वो॒ | दश्वो॒ |
| | 15 | यत्रेप्यन्ते | यत्रेष्यन्ते |
| 139 | 7 | यष्टतमम् | यष्टृतमम् |
| | 22 | अन्ननि | अन्नानि |
| 140 | 26 | ऊध्वात् | ऊर्ध्वात् |
| 141 | 11 | थूर्तैः | धूर्तैः |
| | 18 | इन्योत् | इन्यात् |
| | 25 | सामर्ब्यादस्म | सामर्थ्यादस्मा |
| 142 | 14 | तुर्वि— | तुर्वी— |

| Page | line | for | read |
|---|---|---|---|
| 143 | 4 | मध्योतिथि | मेध्यातिथिः |
| | | ऋता दधी | ऋतादधि |
| | 15 | छान्दसि | छन्दसि |
| | 19 | व्याघ्रदि | व्याघ्रादि |
| | 2) | शुभ्म् | शुभम् |
| | 23 | त्रीव्योतानि | त्रीण्येतानि |
| | 25 | अन्यत्राश्वि | अन्यत्राश्वि |
| | | ततोऽन्योः | ततोऽन्यः |
| | 26 | त्यमेन | त्ययेन |
| 144 | 1 | पुत्रः पात्रैश्च | पुत्राः पौत्राश्च |
| | | योश्चत्र | योश्चात्र |
| | 4 | अजायन्तं | अजायन्त |
| | 5 | वृषद्वर्णाभिः | पृषद्वर्णाभिः |
| | 8 | नातळना | नात्तळना |
| | 15 | अस्तु | अस्त्यु |
| | 19 | गुहिता | गृहीता |
| | 20 | द्राब्दं | शाब्दं |
| 145 | 14 | गोष्वर्ध्न्यें | गोष्वर्ध्न्यं |
| 146 | 18 | जजुर्वाँ | जुजुर्वाँ |
| 147 | 7 | जनं | जानं |
| 148 | 7 | दार्शीतः | दर्शितः |
| | 14 | अजुच्य | अचुच्य |
| | 15 | च्यर्वातन | च्यवीतन |
| | 27 | क्षिप्रनमै | क्षिप्रनामै |
| 149 | 12 | बहूनाम | बहुनाम |
| | 23 | रव्यन्ति | रण्यन्ति |
| 150 | 4 | एतदुक्तं | एतदुक्तं |
| | 19 | स्यातू | स्यात् |
| 151 | 2 | प्रासत्स्यत | प्रासत्स्यथ |
| | 7 | जरितेत्येन | जरितेत्येतेन |

| Page | line | for | read |
|---|---|---|---|
| 151 | 9 | देशात्सर्वं | देशात्सर्वं |
| | 22 | दुर्हणा | दुर्हणा |
| 152 | 3 | रोगेवन्तः | रोगवन्तः |
| 154 | 12 | इमत्यर्धर्चे | इत्यर्धर्चे |
| | 13 | असद्भवन्तु | असन् भवन्तु |
| 155 | 9 | बन्धकाय | बन्धाय |
| | 18 | पर्यैष्यम् | पर्यैष्यः |
| | 24 | यत्स्थिथरं | यत्स्थिरं |
| 156 | 6 | बर्वत | पर्वत |
| | 16 | मिह्ळुष | मीळ्हुष |
| 157 | 18 | द्वितीर्याथ | द्वितीयार्थे |
| 158 | 6 | पालह | पालनह |
| | 12 | द्विासता | द्विसिता |
| | 25 | द्रिषे | द्विषे |
| | | सुजत | सृजत |
| 159 | 19 | दंध्रति | दर्धात |
| 160 | 3 | श्वैत | श्चैत |
| | 24 | यत्यास्तां | यस्यास्तां |
| 161 | 8 | रान्यैः | रन्यैः |
| | 24 | सिध्यर्थः | सिध्यर्थं |
| | 27 | गज्छन्ती | गच्छन्ती |
| 162 | 5 | सपर्के | संपर्के |
| | 6 | दीप्तेः | दीप्तैः |
| 164 | 11 | ध्रन्तं | ध्रन्तं |
| | 19 | संख्याा | संख्या |
| 165 | 22 | स्तृतिः | स्तुतिः |
| 166 | 26 | कम | कर्म |
| 167 | 5 | भुक्षिता | भुक्षितः |
| | 11 | किञ्चा | किंचा |

| Page | line | for | read |
|---|---|---|---|
| 167 | 22 | राभि | रभि |
| | 26 | चोरणां | चोराणां |
| 168 | 2 | वोयेम | वोचेम |
| | 11 | करप्त | करत्प |
| | 13 | अदि्तिः | अदितिः |
| 169 | 7 | बृ.दे. | बृ. दे. ३. १०८, १०९ |
| | 11 | य च | यथा च |
| | 13 | कद् | कदा |
| | 27 | त्मने | त्मनो |
| | 28 | राचत | शोचते |
| 171 | 10 | विवख | विवस्व |
| 172 | 8 | बसु | वसु |
| | 15 | राश्रि यम् | रश्रियम् |
| | | हिंसा | हिंसा |
| | 16 | यज्ञनाम् | यज्ञानाम् । |
| | | श्रियं | श्रिय |
| 173 | 17 | राहूत | राहूत |
| 174 | 6 | आग्ने | अग्ने |
| 175 | 3 | वह्नि | वह्नि |
| | 10 | श्रुण्व | शृण्व |
| | 21 | क्षराति | क्षरति |
| 176 | 1 | षूरणः | पूरणः |
| | 7 | शादि् ाः | शादित्याः |
| | 16 | यज्ञानम् | यज्ञानाम् |
| 177 | 3 | चित्रश्राव | चित्रश्रव |
| | 8 | दीधिरे | दधिरे |
| | 12 | म्नजौ | म्नाजौ |
| | 14 | ष्ठिषु | ष्ठिषु |
| | 18 | अ अच्चु | आ अच्चु |

| Page | line | for | read |
|---|---|---|---|
| 178 | 23 | इह्य | इहाद्य |
| 179 | 3 | क्षयितारौ | क्षपयितारौ |
| | 6 | त्रपूर्वं | त्र तत्पूर्वं |
| | 12 | न्तोऽश्वः | न्तोऽश्वाः |
| | | सृष्टावुत्त | सृष्टावुत्प |
| | 13 | विष्टपितिदि | विष्टबिति दि |
| | 15 | पतन्ति | पतति |
| | 23 | कधना | कधाना |
| 180 | 29 | णाम्। | णम्। |
| 181 | 3 | ण्यन्तरस्य | ण्यन्तस्य |
| | 17 | बद्धान | बद्धान् |
| 182 | 5 | द्योग्याक्षि | द्योग्याक्षि |
| | 13 | इति। अथ तास | इति यथा। तास |
| 183 | 8 | समाप्य | समाप्स्य |
| | 15 | संबंन्ध | संबन्ध |
| | 17 | पिप्रतो | पिप्रतोः |
| | 18 | सोमेनान | सोमेना |
| 184 | 7 | त्ह्यूं | ह्यूं |
| | 19 | ऊतिभि | ऊतिभिः |
| | 7 | स्तिरोरो | स्तिरो |
| 185 | 9 | र ानि | रत्नानि |
| | 13 | त्रिभिश्चकै | त्रिभिश्चक्रै |
| | 16 | सुष्ठ | सुष्टु |
| | 21 | दाश्वासं | दास्वांसं |
| 186 | 3 | सधस्याः | सधस्थाः |
| 187 | 1 | याश्चा | याच्ञा |
| | 18 | त्तेऽध्व | तेऽध्व |
| 188 | 12 | निस्यमस्म | निस्यमस्स |
| | 24 | विश्व | र्विश्व |
| | 25 | उषश्चेद् | उषश्चोद् |

| Page | line | for | read |
|---|---|---|---|
| 189 | 3 | माच्छद् | माच्छाद् |
| | 9 | स्वंबोधनम् | संबोधनम् |
| 190 | 3 | कण्म एव | कण्व एव |
| | 5 | कण्शब्दो | कण्वशब्दो |
| | 14 | उदित्येत्यर्थः | उदितेत्यर्थः |
| 192 | 9 | सुनरि | सूनरि |
| 193 | 7 | सुग्मयम् | सुम्मयम् |
| 195 | 1 | यमध्यस्याः | यमध्यस्थाः |
| | 8 | अर्धुनः | अर्जुनः |
| | 11 | स्तुधिपरी | स्तु अधिपरी |
| | 17 | विक्ष्वमाभासि | विश्वमाभासि |
| | 19 | गीभिः | गीर्भिः |
| | 20 | णार्भिः | णाभिः |
| | 23 | दुशे | दृशे |
| | 27 | वहम्ति | वहन्ति |
| | | सत्वतत्वाः | सत्यतत्त्वाः |
| 198 | 5 | पस्यसि | यश्यसि |
| | 12 | अक्तुसब्दो | अक्तुशब्दो |
| | 19 | संख्याक | संख्याका |
| 199 | 8 | अङ्घ्रयो | अंङ्घ्रयो |
| 200 | 21 | शत्रोवशं | शत्रोर्वशं |
| 201 | 12 | त्यचातिकर्मसु | त्यचीतिकर्मसु |
| 202 | 16 | रण्यार्थाय | रण्यर्थाय |
| | 17 | शतद्रुराणि | शतदुराणि |
| 205 | 17 | उपचंयात् | उपचयात् |
| 206 | 10 | स्वामर्थं | स्वार्थं |
| | 13,14 | वज्रे | पज्रे |
| | 22 | नामो | नमो |
| 207 | 6 | यर्चति | अर्चति |
| 208 | 19 | महतिः | मंहतिः |

| Page | line | for | read |
|---|---|---|---|
| 208 | 23 | वृत्रहन्ये | वृत्रहत्ये |
| | 24 | व्यस्थितम् | व्यवस्थितम् |
| 210 | 18 | नेत्यनोप | नेत्यनेनोप |
| | 19 | उदकोर्मेयो | उदकोर्मयो |
| 212 | 1 | ब्राह्मा | ब्राह्म- |
| 213 | 16 | दर्शनीय | दर्शनीया |
| | 20 | न मस्य | न यस्य |
| 214 | 3 | अन्वज्जनं | अन्वञ्जनं |
| | 6 | द्व्याख्येय । | द्व्याख्येयः । |
| 215 | 16 | सखिथ्य | सखिभ्य |
| 216 | 6 | मित्यथः | मित्यर्थः |
| | 15 | साथिको | स्वार्थिको |
| 217 | 1 | माहि | महि |
| | 10,13 | सप्तते | सत्पते |
| 219 | 18 | कुत्सातिथि | कत्सुमतिथि |
| | 27 | त्वां | त्वां |
| 220 | 8 | दीघं | दीर्घं |
| | 10 | मघवन् | मघवन् |
| | | शन्तः अवसः | अन्तः शवसः |
| | 25 | न्पृञ्जते | न्यृञ्जते |
| 221 | 2 | सान्निकृष्टं | सन्निकृष्टं |
| | 24 | अत्मनोऽ | आत्मनोऽ |
| | 27 | विविध- | वध- |
| 222 | 22 | अस्त्यघ्ना | अस्त्यघ्न्या |
| | 23 | तृतीयेक | तृतीयैक |
| 223 | 7 | तुर्वितये | तुर्वीतये |
| | 8 | वर्ध्यं | वध्यं |
| | 14 | दृम्नाति | दभ्नाति |
| 224 | 14 | वृष्ण्यं | वृष्ण्यं |

| Page | line | for | read |
|---|---|---|---|
| 224 | 19 | बहुवः | बह्वः |
| | 28 | दहीत्येर्थः | देहीत्यर्थः |
| 225 | 12 | अभाम् । | अभीम् । |
| 227 | 11 | लक्षतृतीया | लक्षणतृतीया |
| 228 | 4 | नि॒घनि॑ध्नते | नि॒घनि॑घ्नते |
| 229 | 2 | द॑म्नुवन्ति॒ | द॑म्नुवान्ति॒ |
| | 22 | मृम्व॑सम् | मृभ्व॑सम् |
| 231 | 7 | रिन्दस्य | रिन्द्रस्य |
| | 14 | स्तुत्यर्हे | स्तुत्यर्हे |
| 232 | 15 | इत्यर्थः | इत्यर्थः |
| 233 | 5 | स्तुस्त्यो | स्तुत्यो |
| | 10 | भिगुभि | भिर्भृगुभि |
| | 11 | व्यदार्भृइति | व्यदा इति |
| | 30 | त्र्यैण | सूर्यैण |
| 234 | 4 | प्रतिबन्ध | प्रातिबद्ध |
| 235 | 1 | रात्युषसो | रात्र्युषसो |
| | 14 | वेपुर्भिः | वपुर्भिः |
| | 18 | ताश्वित् | ताश्चित् |
| | 20 | भूजात | भूतजात |
| 237 | 6 | इन्द॒ | इन्द्र॒ |
| | 9 | धानानि | धनानि |
| 238 | 14 | अ॒भित्रा॒न् | अ॒मित्रा॒न् |
| 239 | 20 | कृतते | कृन्तते |
| | 22 | दस्यून्येनौ | दस्यून् योनौ |
| 242 | 24,25 | विव | वव |
| 244 | 2 | बन्धेषु | बद्धेषु |
| | 18 | अङ्क्ता | भङ्क्ता |
| | 24 | रयुध्वं | रयुग्ध्वं |
| 245 | 2 | नानदति | नानदन्ति |

| Page | line | for | read |
|---|---|---|---|
| | 9 | श्रहीन | अहीन |
| | 18 | येत्यूय | यूय |
| 246 | 6 | ऋष्ट्यो | ऋष्ट्यः |
| 248 | 3,4 | क्रव्यादिक | क्रव्यादिक |
| | 8 | बी॒रव | वी॒रव |
| 249 | 1 | दुल्पम् | दुल्बम् |
| 250 | 3 | सुखस्म | सुखस्य |
| | 6 | द्रावररूपः | द्रावरूपः |
| 252 | 1 | इस्येतस्य | इत्येतस्य |
| | 11 | सुमत्सु | समत्सु |
| | 13 | दीप्तिः | दीप्तः |
| | 18 | जुज्ञानः | जज्ञानः |
| | 20,21 | विद्य | दिद्यु |
| | 22 | तस्य | नस्य |
| 253 | 20 | एक्ष | णक्ष |
| 254 | 15 | प्रथमाक्षेमकरस्तु । | प्रथमा । क्षेमकरस्तु |
| 255 | 9 | स्तृम्नातिः | स्तभ्नातिः |
| | 15 | गृहा गृहं | गुहा गुहं |
| 256 | 24 | क्रनुं॑ | क्रतुं॑ |
| | 26 | इन् | इत् |
| 257 | 12 | कृर्वन्ति | कुर्वन्ति |
| 259 | 10 | स्वार्थः | स्वार्थ |
| 261 | 4 | चिकित्वात् | चिकित्वान् |
| | 14 | चतृर्थौं | चतुर्थी |
| 262 | 14 | जिव्रे॒र्विं | जिव्रे॒र्विं |
| | 23 | विविधबन्न | विविधमन्न |
| 263 | 26 | वीळू | वीळु |
| 264 | 6 | उक्तैः | उक्थैः |
| | 15 | विन्द्तेलाभा | विन्दतेर्लाभा |
| 265 | 11 | श्येनः | श्येनः |

| Page | line | for | read |
|---|---|---|---|
| 266 | 20 | द्विबर्हाः | द्विवर्हाः |
| | 25 | यष्ठारं | यष्टारं |
| 267 | 10 | मवनद्यं | मनवद्यं |
| 269 | 23 | शकवन्तः | शक्नुवन्तः |
| 270 | 7 | चिकित्वात् | चिकित्वान् |
| | 23 | इत्यदा | इत्पदा |
| 271 | 7 | सप्तानमे | सप्तानामे |
| | 22 | क्रियायायां | क्रियायां |
| | 27 | यह्वी | यह्वी |
| 273 | 23 | श्येनशीः | स्योनशीः |
| 275 | 8 | दततो | ददतो |
| 276 | 14 | केवलंन | केवलं |
| | 22 | दधिरेय | दधिरे |
| 277 | 12 | व्यश्यु- | व्यश्नुः |
| 2/8 | 9 | श्रशणं | श्रवणं |
| 280 | 11 | देवभ्यो | देवेभ्यो |
| | 12 | पदपद | पदं |
| 281 | 3 | मेधावितम् | मेधाविनम् |
| 284 | 25 | एवाग्नि | एवाग्नि |
| 287 | 5 | शब्देनत्यर्थे | शब्देनात्यर्थे |
| 290 | 18 | उकथ्यः | उक्थ्यः |
| 291 | 9 | दृषा | दृषा |
| | 16 | जगति | जगती |
| | 19 | श्यनभृत | श्येनाभृत |
| 293 | 9 | मयया | मायया |
| 295 | 2 | अभितेने | अभीतेने |
| | 4 | अभिगतै | अभिगतः |
| | 17 | अथेत्द्रस्य | अथेन्द्रस्य |
| | 20 | इन्द | इन्द्र |
| | 25 | केमलं | केवलं |

| Page | line | for | read |
|---|---|---|---|
| 296 | 22 | भृत्रृ | भर्तृ |
| 300 | 10 | शातानि | शतानि |
| 303 | 11 | अभिष्टुताः | अभिषुताः |
| 304 | 15 | शाक्ति | शक्ति |
| | 18 | न्मदधात् | न्यदधात् |
| 306 | 26 | श णाम् | शत्रूणाम् |
| 308 | 18 | शुश्चान | शुश्रान |
| 309 | 20 | ददम् | इदम् |
| 311 | 4 | ध्द्यानेना | ध्यानेना |
| | 5 | अस्विभिः | अस्थिभिः |
| | 22 | शर्वणा | शर्यणा |
| 312 | 20 | आद्य | अद्य |
| 313 | 8 | अतिरा | तिरः |
| | 9 | कृष्ट | कृष्ट |
| | 17 | स्रुचा | स्रुचा |
| 315 | 2 | रूरु | रुरु |
| 321 | 9 | श्चेतन्ति | श्चोतन्ति |
| | 14 | मर्यादारर्थौ | मर्यादार्थौ |
| | 20 | प्रकर्षणे | प्रकर्षेण |
| 322 | 2 | घियः | धियः |
| 323 | 1 | ऋष्मिभिः | ऋक्भिः |
| 326 | 21 | अन्ये | अन्यै |
| 329 | 6 | दैवैर्वा | देवैर्वा |
| | 7 | दैवै | देवै |
| | 10 | रीरिष | रीरिष |
| 337 | 26 | पितृ | पितृ |
| 340 | 25 | वार्पाणु | वार्पाणु |
| 341 | 5 | द्रुयामिदं | उच्यते । द्वयमिदं |
| | 6 | करोति । उच्यते । | करोति । |

| Page | line | for | read |
|---|---|---|---|
| 341 | 11 | दृश्थते | दृश्यते |
| 342 | 7 | प्रवर्तयिते | प्रवर्तयित्री |
| 343 | 12 | ऋषीणा | ऋषिणा |
| 344 | 1 | व्यूर्ष्वती | व्यूर्णवती |
| 346 | 11 | ह्र्यतं॒ | हर्यतं॒ |
| 348 | 3 | युवँयोरकं | युवयोरेकं |
| 352 | 7 | पर्वणाा | पर्वणा |
| 353 | 1 | दृध्वर्या- | दृध्वर्य्वा- |
| 354 | 4 | चतुर्थै | चतुर्थीं |
| 355 | 10 | भून्वेषां | भूत्वेषां |
| 356 | 19 | षड्भयः | षड्भ्यः |
| 358 | 7 | प्रायोजने | प्रयोजने |
| 359 | 21 | अ॒षसा॑ | अ॒पसा॑ |
| 365 | 21 | बाल | बालं |
| 366 | 12 | रित्यत्य | रित्यस्य |
| 367 | 11 | मर्यादाया | मर्याद्या |
| 368 | 21 | विश्ववो | विश्वतो |
| 369 | 15 | आभिश्रीः | अभिश्रीः |
| 375 | 17 | व्यय- | ञ्य |
| 379 | 17 | गृहीत्त | गृहीत |
| 385 | 8 | रुजो | रुजी |
| 389 | 6 | विचरति | चरति |
|  | 18 | वास्यदिषु | वास्यादिषु |
| 390 | 26 | त्बा॒ | त्वा॒ |
| 391 | 25 | सब्दार्थः | शब्दार्थः |
| 392 | 6 | निषिद्ेति | निपीदंति |
| 399 | 18 | मतिक्रामे | मतिक्रमामे |
| 405 | 4 | वृजेने | वृजने |
| 406 | 4 | प्रंवेचनं | प्रवाचनं |
| 407 | 16 | युच्छत् | युच्छन् |

| Page | line | for | read |
|---|---|---|---|
| 411 | 1 | ताभः | ताभिः |
| 413 | 7 | वत्यः | वस्यः |
| 414 | 11 | छेद्य | छेद्म |
| 415 | 7 | संस्तु | संस्कृ |
| 421 | 2 | स्वत्वात् | स्वत्वात् |
| 428 | 18 | प्रश्नयो | पृश्नयो |
| | 19 | एवा वा | एव वा |
| 434 | 4 | पूर्थिद्यः | पूर्भिद्यः |
| | 24 | यद्वा कक्षीवान्नुत। | यद्वां कक्षीवानुत। ऋ वे. ८. ९. १०, |
| 446 | 4 | व्युच्छन्ती | व्युच्छन्ती |
| | 11 | उणा | उस्रा |
| 451 | 19 | शोभना | शोभनां |
| 452 | 8 | शोभन | शोभना |
| 453 | 23 | ण्मन्तः | ष्मन्तः |
| 458 | 24 | पुङ्घि | प्रुङ्घि |
| 459 | 4 | मूहयुः | मूहथुः |
| 463 | 13 | उत्स्वात | उत्खात |
| | 21 | प्रोच्यच | प्रोच्य च एवमुवाच |
| 464 | 19 | नामतत् | नामैतत् |
| 466 | 5 | तदेतादि | तदेताद्वि |
| | | कष्मैव | काष्मैव |
| 476 | 6 | भूयान् स्यम् | भूयान् स्याम् |
| 478 | 27 | मनीययां | मनीयायां |
| 482 | 7 | पुनरुर्ज्जी | पुनरुज्जी |
| 484 | 20 | श्रुतेर्थोग्य | श्रुतेर्योग्य |
| 487 | 19 | हार्यः | हार्यम् |
| 489 | 20 | स्थनस्यायं | स्थानस्यायं |
| | 25 | इपेर्गत्य | इषेर्गत्य |
| 490 | 27 | संग्रामणां | संग्रामाणां |

| Page | line | for | read |
|---|---|---|---|
| 490 | 29 | दीप्तिमित्यर्थः | दीप्तामित्यर्थः |
| 491 | 2 | चक्रुस्यं | चक्रुत्यं |
| | 8 | जेषि | जेषे |
| | 14 | यै | यौ |
| | 17 | अशास्थ्येन | अशाठ्येन |
| 492 | 7 | परिपत्कत्वं | परिपक्वत्वं |
| | 10 | षष्ठी | षष्ठी |
| | 12 | गभ्यसः | रभ्यसः |
| 494 | 6 | याञ्चअकर्मा | याञ्चआकर्मा |
| | 21 | युक्तो | युक्तौ |
| 496 | 6 | क्रमेर्या | क्रमेर्वा |



# MADRAS UNIVERSITY SANSKRIT SERIES.

## WORKS ALREADY PUBLISHED.

| | Rs. | A. | P. |
|---|---|---|---|
| Ṛgvedānukramaṇī of Mādhavabhaṭṭa | 3 | 8 | 0 |
| Sphoṭasiddhi of Maṇḍanamiśra | 3 | 0 | 0 |
| Taittirīyaprātiśākhya with Māhiṣeyabhāṣya | 2 | 0 | 0 |
| Liṅgānuśāsana of Harṣavardhana | 1 | 8 | 0 |
| Uṇādisūtravṛtti of Śvetavanavāsin | 3 | 0 | 0 |
| Uṇādisūtravṛtti of Nārāyaṇa | 2 | 8 | 0 |
| Uṇādisūtras of Bhoja with the vṛtti of Daṇḍanātha and the Kātantra Uṇādi with the vṛtti of Durgasiṃha | 3 | 0 | 0 |
| Sāhityaratnākara (Bulletin) | 1 | 0 | 0 |
| Bṛhatī with Ṛjuvimalā (Tarkapāda) | 5 | 0 | 0 |
| Vājasaneyi Prātiśākhya with two commentaries | 4 | 0 | 0 |
| Ṛgvedabhāṣya of Skandasvāmin (First Aṣṭaka) | | | |

## WORKS IN THE PRESS.

Mīmāṃsābhāṣyapariśiṣṭa

Sarasvatīkaṇṭhābharaṇa of Bhoja

Uṇādisūtravṛtti—Daśapādī

Brahmasūtrabhāṣya with Prakaṭārthavivaraṇa

Nayaviveka

Ślokavārtika with the commentary of Uṃveka

——(o)——

## WORKS IN PROGRESS.

**( by Dr. C. Kunhan Raja )**

Fragments of the Ṛgvedabhāṣya by Skandasvāmin and Udgītha

Sāmaveda with the Bhāṣyas of Bharatasvāmin and Mādhava

Ṛgvedasūktanirukti by Mādhava (First Aṣṭaka)

Niruktasamuccaya of Vararuci (Bulletin)

Studies on Skandasvāmin, Mādhava and Udgītha

Vedic Commentators and Commentaries

Śaunaka—A Study

Sarvānukramaṇī with various commentaries ( Introductory portion ) and Nidānasūtravyākhya.

—— (o)——